# वीरशैवपारिभाषिकपदकोशः

सम्पादकाः

डा. एम्. शिवकुमार स्वामी
डा. सि. शिवकुमारस्वामी
विद्वान् डा. प्रभुस्वामी

# वीरशैवपारिभाषिकपदकोशः

सम्पादकाः

डा. एम्. शिवकुमार स्वामी
डा. सि. शिवकुमारस्वामी
विद्वान् डा. प्रभुस्वामी



जे एस् एस् ग्रन्थमाला
जे एस् एस् महाविद्यापीठम्
मैसूरु

**VĪRAŚAIVA PĀRIBHĀṢIKA PADAKOŚAH** - A Dictionary of Technical terms of Vīraśaivism in Sanskrit: Edited by Dr. M. Shivakumara Swamy, Dr. C. Shivakumaraswamy and Dr. Prabhuswamy and Published by JSS Granthamala, JSS Mahavidyapeetha, Mysore 570 004, Karnataka, India. Pages : xxiv + 910





Copies : 1000

First Edition : 2011

Price : Rs. **600/-**
**$ 15**



Printed at :
**Span Print,** No. 72, Karesandra,
24th 'A' Cross, Banashankari 2nd Stage,

## कृतज्ञता समर्पणम्

अयं ग्रन्थः जगद्गुरु श्री श्री शिवरात्रिराजेन्द्रस्वामीजी अन्ताराष्ट्रीयसंस्कृतसंशोधनाकेन्द्रस्य (मैसूरु) प्रकटनम् । अस्यै संस्थायै आर्थिकानुदानं दत्तवते, राष्ट्रीय संस्कृतसंस्थान्, नवदेहली, इत्यस्मै हार्दाः कृतज्ञताः समर्प्यन्ते ।

## ACKNOWLEDGEMENT

This Book is a publication of Jagadguru Sri Sri Shivarathri Rajendra Swamiji International Sanskrit Research Centre, Mysore and we are grateful to the Rashtriya Samskrutha Sansthan, New Delhi, which is extending financial assistance of this Centre.

सहयोगः

विद्वान् डा. प्रभुलिङ्गहेब्बाळ्
विद्वान् एच्.वि. नागराजराव्
प्रो. टि.आर्. महादेवय्यः
विद्वान् गुरुमल्लदेवरु
श्रीमती गौरी

# शुभाशिषः

वीरशैवधर्मस्तावत् भक्ति-ज्ञान-वैराग्यानि सम्यक् समावेश्यान्तरङ्गे सकलजीवात्मनां हितमेव भावयन् मानवधर्मत्वेन दृरीदृश्यते । स च धर्मः स्वेष्टलिङ्गपूजारूपैकदेवोपासनादिभिराध्यात्मिकांशैः सह कायक-दासोहात्मक नव्यसामाजिकदृष्टिमपि प्रसारयामास ।

सम्यग्ज्ञान-सदाचारयोर्मध्ये भेदं निवार्य लौकिकस्तरे स्थित्वाऽप्य-ध्यात्मस्तरे विहर्तुं शक्यत इति च दर्शयामास ।

एतादृशस्य वीरशैवधर्मस्य सदाचारसद्विचारयोः निश्चित-तात्त्विकाधारनिर्माणपूर्वकं निर्वचनाय ग्रन्थः कश्चनापेक्ष्यत इति मत्वा विद्वांसः केचन वीरशैवपारिभाषिकपदकोशान् कन्नडभाषायां रचयामासुः । एतादृश एव सैद्धान्तिकग्रन्थः कश्चन संस्कृतभाषायामपि निर्मीयते चेदन्ताराष्ट्रीयस्तरेऽपि वीरशैवस्याध्ययनं, संशोधनं, प्रसार-प्रचारकार्यं च साधयितुं शक्यत इत्येवं विचार्य वीरशैवाकरभूतान् संस्कृतग्रन्थानवलम्ब्य निर्मितोऽयं **वीरशैवपारिभाषिकपदकोशो** जे.एस्.एस्. ग्रन्थमालाद्वारा प्रकाशतां नीयते ।

बेङ्गलूरुविश्वविद्यालयस्य भूतपूर्वसंस्कृतप्राध्यापकानां डा.एम्. शिवकुमारस्वामिनाम् अधीक्षकत्वे विदुषां गणः कष्टसाध्यं वैदुष्यपूर्णं चेदं कार्यं निर्माय कृतकृत्यतां भजते ।

अस्य ग्रन्थस्य प्रकटनेन दार्शनिकसाहित्याभ्यासिनां संशोधकानां च भूरि प्रयोजनं भूयादिति हार्दमाशास्महे ।

**श्री शिवरात्रि देशिकेन्द्रमहास्वामिनः**

जगद्गुरु श्री वीरसिंहासन महासंस्थान मठः

# सन्देशः

वीरशैवधर्मसाहित्यं समृद्धमस्ति । कन्नडभाषायां संस्कृतभाषायां च शतशो ग्रन्था विलसन्ति । तेषु तात्त्विकचिन्तनानि, नैतिकादेशाश्च ओतप्रोताः। अपि च सामाजिकसाधनात्मकालोचनाश्च पुष्कलरूपेण व्याप्नुवन्ति । ताः खलु ज्ञानवाटिकाः । तत्र सर्वत्र अनुभवानुभावयोः मधुरो गन्धः सुगन्धः उन्मीलितः । स आघ्राणयोग्यः। तेन सुखम् अनुभवनीयम् । तदस्माकं जीवनस्य मूल्यं वर्धयिष्यति ।

अवश्यकर्तव्यं वाचनम् अध्ययनं च । तत्र सहकारी प्रस्तुतो ग्रन्थः **वीरशैवपारिभाषिकपदकोशः** । विशेषार्थे प्रयुक्तानि पदानि शतशः सहस्रशः सन्ति। यावद्यावत् तेषां पदानां परिचयो लभ्यते तावत्तावत् सैद्धान्तिकानां ग्रन्थानां सम्यगध्ययनं सुललितं भवति । तादृशानां पदानां सुन्दरः कोशोऽयम् । पदम्, पदस्य विशेषार्थः, तस्य पदस्य प्रयोगः, एवं तत्र तत्र आवश्यकानि विवरणानि । एतानि चतुरङ्गानि कोशस्य प्रयोजनम् अधिकीकुर्वन्ति ।

**श्री सिद्धेश्वरस्वामिनः**

ज्ञानयोगाश्रमः, बिजापुरम्

# प्रकाशकानां वचनम्

प्रदेशस्यास्य सर्वतोमुखम् अभिवृद्धिं सश्रमम् अभिलषत्सु गुरुपीठेष्वन्यतमभूतं मैसूरुमण्डले कपिलानद्यास्तीरे विराजमानं सुत्तूरु - जगद्गुरु-श्री वीरसिंहासन-महासंस्थानमठः तावदुज्ज्वलेनेतिहासेन विजृम्भते।

उपसहस्रवर्षेभ्यः प्राक् चोळचक्रेश्वरप्रार्थनानुसारम् आदिजगद्गुरु - श्रीशिवरात्रीश्वर-शिवयोगिभिः संस्थापितस्य सुत्तूरुजगद्गुरुपीठस्य दिव्यपरम्परायाम् आगतैर्महानुभावैर्लोककल्याणार्थं कृता भूरि-सेवाऽविस्मरणीया वर्तते। अस्य पीठस्याधिपतिषु केचन साहित्य-प्रकाशनप्रसारार्थं दत्तविशेषप्रोत्साहाः सन्तः साहित्यलोकं प्रत्यमूल्यं योगदानमकुर्वन्। मलेयमादेश्वरस्वामिभ्यः सदाश्रयं कल्पितवन्तः 'परमशिवाधिक्यचूडामणि'-ग्रन्थस्य व्याख्यातारश्च सिद्धनञ्जदेशिकेन्द्राः, 'अमुगि-देवय्यगळ-सांगत्यम्'-नाम्नः कन्नडग्रन्थस्य कर्तुः शिवलिङ्ग-देवस्य प्रेरकाः पोषकाश्च कपिनी-नञ्जुण्डदेशिकेन्द्राः, तोण्टद - सिद्धलिङ्गशिवयोगिनां समकालीनाः-कन्नडवचनकर्तारश्च घनलिङ्गि-शिवयोगिनः, 'शिवमन्त्रमहिमा' नाम्नीं कृतिं विरचितवन्तो मन्त्रमहर्षीति बिरुदाङ्किताः श्रीशिवरात्रीश्वरमहास्वामिनः, 'घनलिङ्गिदेवरवचनानि' - नामानं कन्नडग्रन्थं श्री गौरीशङ्करस्वमिनां 'अक्कमहादेवी' नामानं कन्नडग्रन्थं च सम्पादितवन्तो लोककल्याणकारिणः प्रातःस्मरणीयाः 'श्रीमन्महाराजराजगुरुतिलक' - बिरुदभाजः परमपूज्याः श्रीजगद्गुरु डा. श्रीशिवरात्रिराजेन्द्रमहास्वामिन इत्यादयः साहित्य - संस्कृतिपोषका भूत्वा कवि - कलाभिज्ञ-विदुषाम् आश्रयदातारोऽभवन्।

अनेन महापीठेन संस्थापितासु धार्मिक-शैक्षणिक-साहित्यपोषक-सांस्कृतिकसंस्थासु जगद्गुरुशिवरात्रीश्वरग्रन्थमाला तावदेकतमा। अनेकेषां महत्त्वशालिनां ग्रन्थानां प्रकाशिकेयं ग्रन्थमाला सम्प्रति 'वीरशैव-

पारिभाषिक पदकोश' नामानं संस्कृतग्रन्थमिमं प्रकाशयतीति महदिदं प्रमोदस्थानम् ।

इदं च प्रथमं स्मरणीयं यद् वीरशैवधर्मपारिभाषिकतां संस्कृतभाषायां व्याख्यां कारयित्वा तत्सम्बद्धतत्त्वानाम् अन्ताराष्ट्रीयक्षेत्रे विद्वज्जनेभ्यः परिचाययितुं यः श्रीचरणानां सङ्कल्पोऽस्ति स एवास्य ग्रन्थस्योदये कारणम्, इति । निश्चितशास्त्रीयपरिमितौ व्याख्यानाय प्रक्रियायाऽस्या अन्वयीकरणं तु प्रयासकार्यतया प्रत्यभासत। अस्य ग्रन्थस्य निर्माणे एकादशवर्षपर्यन्तस्य सुदीर्घकालस्य सश्रद्धं सामूहिकपरिश्रमो योजितः। १९९९ – तमे वर्षे आरब्धाया अस्या योजनायाः प्रथमे सोपाने अष्टात्रिंशद् (३८) ग्रन्थानां परिशीलनकार्यं निर्वोढुं पञ्चत्रिंशद् (३५) विदुषां प्रति विज्ञप्तिः प्रेषिता । तेषां विदुषां गणेन उपसप्तसहस्राणि (६९८३) पदपत्राणि (cards) सङ्गृहीतानि । तेषु संगृहीतेषु पदेषु कानिचन पदानि पुनरुक्तानि आसन् । तेषां निष्कासनं कृत्वा अवशिष्टानि उपचतुःसहस्रपदानि अकारादिक्रमेण वर्गीकृतानि। तेषां व्याख्यानं कारयितुं निर्णयः स्वीकृतः। कुन्दूरुमठीय-चरमूर्तिवर्याः पूज्याः डा.इम्मडिशिवबसवस्वामिनः, मैसूरुप्राच्य-विद्यासंशोधनसंस्थाया विद्वान् श्री एच्. वि. नागराजराव्-महोदयाः, श्री टि. आर्. महादेवय्यमहोदयाः, इत्येषां मार्गदर्शनानुसारं जगद्गुरु श्री श्री शिवरात्रिराजेन्द्रस्वामीजी अन्ताराष्ट्रीय–संशोधनाकेन्द्रस्य तदानींतन सहसंशोधकाभ्यां विद्वान् श्रीगुरुमल्लदेवरु महोदयेन श्रीमत्या गौरीमहाभागया च पदानाम् अकारादिवर्गीकरणपूर्वकं संङ्ग्रहः सज्जीकृतः ।

२००२ तमे वर्षे तस्य पारिभाषिकपदकोशस्य पदानां निर्वचनाय बेंगलूरु – चामराजेन्द्रसंस्कृतमहाविद्यालयस्य प्राध्यापकाः विद्वान् डा. प्रभुलिङ्गहेब्बाळ् महोदयाः नियुक्ता अभवन्। एकाकिभिस्तैरेव कार्यस्य निर्वाह्यत्वान्निरीक्षितेन वेगेन कार्यप्रवर्तनं न जातम् ।

तस्या योजनायाः कार्यं शीघ्रगत्या न प्रवर्तते इति विज्ञाय तत्कार्यं वेगेन प्रवर्तयितुं बेंगलूरुविश्वविद्यालयस्य भूतपूर्व संस्कृत प्राध्यापकानां डा. एम्.

शिवकुमारस्वामिनामाध्यक्ष्ये २००८ तमे वर्षे समितिरेका रचिताऽभवत् । तस्यां समितौ श्रीबसवेश्वरपदवीमहाविद्यालस्य संस्कृतप्राध्यापका डा.सि.शिवकुमारस्वामिनः, कन्नडनिघण्टुप्राज्ञाः श्री टि. आर्. महादेवय्यमहोदयाः, जे.एस्.एस्.पदवीपूर्वमहाविद्यालयस्य संस्कृता-ध्यापका डा. प्रभुस्वामिनश्चेति त्रयः सदस्या आसन् । डा. प्रभुस्वामिनः लेखनकार्यसहितं सम्पादनकार्यं निर्वहन्तः समितेः संयोजका अप्यभवन् । २००८ – तमवर्षस्य नवम्बरमासे आरब्धं निर्वचनकार्यं २०१० – तमवर्षस्य मे मासान्ते त्रिभिः सम्पादकैः समाप्तिं नीतम् ।

तदा परमपूज्यैः श्रीशिवरात्रिदेशिकेन्द्रमहास्वामिभिः पूज्यैः श्री सिद्धेश्वरस्वामिभिश्च कार्यं परिवीक्ष्य कन्नडवचनसाहित्ये प्रसिद्धानि कानिचन पदान्यपि कोशे सव्याख्यानम् आयोजयितुं सूचना दत्ता। तदनुसारं कार्यप्रवृत्ताः सम्पादकास्तानि पदान्यायोजयन् ।

एतादृशस्य बृहतो महतश्च ग्रन्थस्य रचनां कृतवद्भ्यो विद्वद्भ्यो जे.एस्.एस्. ग्रन्थमाला कृतज्ञतां समर्पयति ।

योजनाया अस्या प्रवर्तकेभ्य उभयस्वामिपादेभ्योऽस्माकं शिरसाष्टाङ्गप्रणामाः समर्प्यन्ते ।

पुस्तकस्यास्य मुद्रणकार्यं सम्यङ्निर्वोढेभ्यः स्प्यान्प्रिण्ट् निर्वाहकेभ्यः कृतज्ञताः वितीर्यन्ते ।

ग्रन्थोऽयं जगद्गुरु श्री श्री शिवरात्रिराजेन्द्रस्वामीजी अन्ताराष्ट्रीय संस्कृत संशोधनाकेन्द्रस्य (मैसूरु) समुत्कृष्टप्रकटनरूपेण प्रकाशतां नीयते । अस्य केन्द्रस्य स्थापनाकालादारभ्य एतावत्पर्यन्तम् अस्मै आर्थिकानुदानं दत्तवते राष्ट्रीयसंस्कृतसंस्थानाय ग्रन्थमालायाः सकाशात् हार्दाः कृतज्ञताः समर्प्यन्ते ।

विद्वत्पूर्णमिमं धार्मिककोशग्रन्थं पाठकाः प्रीतिविश्वासाभ्यां स्वागतीकुर्वन्तीति वयं प्रतीक्षामहे ।

# सम्पादकीयम्

विदितमेव समेषां विदुषां यच्छब्दानां कोशस्तत्तद् भाषाध्ययने तत्तद्भाषासाहित्याध्ययने च अत्यन्तं महत्त्वभूत इति। विशेषतया शास्त्राणामध्ययने तत्तच्छास्त्रसम्बद्धानां पारिभाषिकपदानां कोशोऽत्यन्तं सौकर्याय कल्पते। तादृशस्य पारिभाषिकपदकोशस्य परिशीलनेन तत्तच्छास्त्रस्य व्याप्तिरुद्देशश्च स्पष्टतया प्रतिभासेते। तस्य रचनार्थं तत्तच्छास्त्रे विद्यमानानामाकरभूतानां ग्रन्थानामावली क्रियते। अतस्तत्तच्छास्त्राध्ययने निरतानां कृते सा भवत्युपयुक्ताऽऽकरसामग्री। तेषां ग्रन्थानामध्ययनसमये तेषु प्रयुक्तानां पारिभाषिकपदानामर्थग्रहणाय कोशोऽयमत्यन्तमुपयुक्तो भवति। वीरशैवग्रन्थानामध्ययनसौकर्याय वीरशैवपारिभाषिकपदकोश उपयुक्ततां भजते निःसंशयमिति बुद्ध्या कृतोऽयं प्रयत्नः।

भारतीयसाहित्ये आप्राचीनकालादेष कोशरचनाप्रयत्नो दरीदृश्यते। तादृशप्रयत्नेषु प्रायः प्रथमस्तावन्निघण्टुः। यास्कश्च ऋग्वेदस्य पदानां कोशभूतं निघण्टुमादृत्य तेषां पदानामर्थं सनिरुक्ति व्याख्यातवान्। पदानामर्थविवरणे तत्तदर्थसमर्थनाय ऋग्वेदीयमन्त्राणां मन्त्रभागानां वा उदाहरणार्थमुल्लिख्य तत्रस्थानामन्येषां पदानामर्थमपि सनिरुक्ति निरूपितवान्। ततोऽपि पूर्वं कात्यायनादयः विद्वांसः ऋग्वेदादिवेदानां शब्दानुक्रमणिका, सूक्तानुक्रमणिका, देवतानुक्रमणिका, सर्वानुक्रमणिका इत्यादिस्वरूपान् कोशान् व्यरचयन्। तास्वनुक्रमणिकास्वर्थविवरणं न दत्तम्।

ऋग्वेदादिवेदसम्बद्धेषु ब्राह्मणेष्वर्थवादभागे वेदमन्त्राणां सनिष्पत्ति व्याख्यानमपि तत्र तत्र दृश्यते। एवमनुक्रमणिका ब्राह्मणोक्तसनिष्पत्ति-व्याख्यानपद्धतिश्चेत्युभयोः समाहारेण तत्रभवान् यास्को निरुक्तं निर्मितवानिति वक्तुं शक्यते।

"तमिमं समाम्नायं निघण्टव इत्याचक्षते" इति यास्कस्योक्त्या तस्मादपि पूर्वमनेके निघण्टव आसन्निति ज्ञायते। निरुक्ते तत्र तत्र उल्लिखितानां विदुषां नाम्नेदं सूचितं भवति यद् औपमन्यवः, पारस्करः, गार्ग्य इत्यादय आचार्याः निघण्टुकर्तार आसन्निति । प्रथमत वैदिकनिघण्टव एव विरचिता इति वक्तुं शक्यते । यास्कस्य निरुक्तं तावत् वैदिकनिघण्टोरेव भाष्यम् । अतः तत्पूर्वमेव निघण्टुः संगृहीत इति स्पष्टं भवति ।

दक्षिणप्रान्तवास्तव्येनार्वाचीनेन देवराजयज्वनाम्ना पण्डितेनापि वैदिक-निघण्टोः व्याख्यानमेकं विरचितमिति ज्ञायते। तत्र प्रमाणम् - "यज्वा रङ्गेशपुरीपर्यन्तग्रामवास्तव्यो विरचयति देवराजो नैघण्टुककाण्ड-निर्वचनम्" इति (श.कौ.,भा.६, पृ. २९४४)।

अनन्तरं नैके विद्वांसः वैदिकशब्दानामिव लौकिकशब्दानामपि कोशान् विरच्य संस्कृत-भाषाभ्यासिभ्य उपकृतवन्तः। तत्र शब्दानां वर्गीकरणं कृत्वा तत्तद्वर्गसम्बन्धिनां पर्यायपदानां लिङ्गनिर्देशपूर्वकं संगृह्य यत्कोशनिर्माणं कृतं तदेकः प्रकारः। अमरकवेर्नामलिङ्गानुशासनम्, हेमचन्द्रस्याऽभिधान-चिन्तामणिः, पुरुषोत्तमदेवविरचितो हारावलिः, त्रिकाण्डकोशश्च, केशवपण्डितस्य कल्पद्रुमकोशः इत्यादयस्तत्प्रकारकाः ।

वर्गक्रममननुसृत्य ककारादिवर्णान्तान्येकार्थपदानि संगृह्य (कैकम्, कद्विकम्, कत्रिकम् - इत्यादिरीत्या) हकारान्तपर्यन्तपदानि च लिङ्गनिर्देशपूर्वकं यत् कोशनिर्माणं कृतं तदन्यः प्रकारः। मेदिनीकोशः (नानार्थशब्दकोशः), विश्वप्रकाशः (महेश्वरवैद्यविरचितः), नानार्थरत्नमाला (इरुगप्पदण्डाधिनाथविरचिता), अनेकार्थसंग्रहः (हेमचन्द्रविरचितः), अनेकार्थसमुच्चयः (शाश्वत-विरचितः) - इत्यादयस्तत्प्रकारकाः ।

पर्यायपदानां वर्गीकरणम्, अनेकार्थकशब्दानां संग्रहश्चेत्युभयात्मकाः कोशा अपि कैश्चिद्विद्वद्भिः विरचितास्सन्ति। तेषु यादवप्रकाशाचार्यस्य वैजयन्तीकोशः प्रसिद्धः। शब्दार्थकौस्तुभः (प्रायौगिक संस्कृतकर्णाटक - शब्दकोशः) चक्रवर्ति - श्रीनिवासगोपालाचार्यैः विरचितः। तत्र षष्ठे भागे द्वितीयपरिशिष्टे त्रिसप्तति (७३) कोशानां नामानि दत्तानि। केषाञ्चनकोशानां संक्षिप्तविषय-निरूपणमपि दत्तम्। (पश्यत- पृ.२९४४-२९५७)।

एकोनविंशति-विंशतितमशतकयोर्मोनियर् विलियंस् इत्यादय आंग्ल - संस्कृतपण्डिता अकारादिक्रमेण संस्कृतपदानि संगृह्य तेषामर्थ-मांग्लभाषया न्यरूपयन्। एकैकस्यापि संस्कृतपदस्यानेकार्थान् सदृष्टान्तं व्याख्यातवन्तः। मोनियर् विलियंस् महोदयस्य संस्कृतांग्लकोशः प्रथमतः क्रिस्ताब्दौ द्विसप्तत्युत्तराष्टादशशततमे (क्रि.श.१८७२) वर्षे आक्स्फर्ड-विश्वविद्यालय-मुद्रणालयद्वारा मुद्रापितः। एष एव महोदय आंग्लभाषातः संस्कृतभाषान्तर-सौकर्याय आंग्लसंस्कृतकोशमपि व्यरचयत्। एवमेव वामन शिवराम आप्टे महोदयोऽपि संस्कृतांग्लकोशम्, आंग्ल-संस्कृतकोशं च निरमिमीत।

अन्यच्च कन्नडादिभारतीयभाषार्थैः सह नैके संस्कृतकोशा विरचिताः सन्ति। कर्णाटभाषायां तावत् चक्रवर्ति-श्रीनिवासगोपालाचार्यैर्निर्मितः शब्दार्थकौस्तुभो नाम संस्कृतकन्नड-शब्दकोशः कर्णाटेषु प्रसिद्धः।

एते कोशाः संस्कृतभाषायाः संस्कृतसाहित्यस्य चाभ्यासिनां कृतेऽत्यन्तमुपयुक्ताः। यद्यप्येतेषु केषाञ्चन शास्त्रीयपारिभाषिक-पदानामर्थास्तत्र तत्र सप्रयोगं निरूप्यन्ते, तथापि समग्रतया विविधशास्त्राणां पारिभाषिकपदानि अर्थसहितं नैव संगृहीतानि। अतो विविधशास्त्राणां पारिभाषिकपदानि प्रत्येकतया संगृहीतानि व्याख्यातानि च। तादृशेषु पारिभाषिकपदकोशेषु झलकीकर् महोदयेन संपाद्य, भण्डार्कर् - प्राच्य -

संशोधनसंस्थाद्वारा (बि.ओ.आर.ऐ., पुणे) प्रकाशितो न्यायकोशः, लक्ष्मणशास्त्री-जोशीमहाभागेन सम्पादितः, वाई-प्राज्ञपाठशाला - (महाराष्ट्र) - द्वारा प्रकटितश्च पूर्वमीमांसाकोशः, नरसिंहाचार् पूजार् महोदयेन सम्पादितः तिरुमल - तिरुपति - देवस्थानद्वारा लोकार्पितश्च द्वैतवेदान्तकोशस्य प्रथमभागः, वरदाचार् महोदयेन सम्पादितः मेलुकोटे संस्कृत - संशोधन - संसद् द्वारा प्रकाशितश्च चतुर्भागात्मको विशिष्टाद्वैतकोशः, आगमकोशः (प्रो.एस्.के. रामचन्द्रराव् महोदयेन विरचितः) इत्यादय इदानीं समुपलभ्यन्ते ।

वीरशैवसम्प्रदाये कन्नडवचनसाहित्यं परिशील्य कन्नडभाषायां संगृहीताः पारिभाषिकशब्दकोशाः विरचिताः सन्ति । तत्र फ.गु.हळकट्टि-महोदयेन संगृहीतो धारवाड - समाजपुस्तकालयद्वारा प्रकाशितश्च शिवानुभवशब्दकोशः (१९४३, १९७२), डा.एस्.विद्याशङ्कर - महोदयेन संगृहीतः कर्णाटक - सर्वकारस्य कन्नडसंस्कृति - विभागद्वारा प्रकाशितश्च वचनपरिभाषाकोशः (१९९३), (अयमेव कोशः पुनः डा.एन्.जि. महादेवप्पमहोदयेन परिष्कृतः कर्णाटक सर्वकारस्य कन्नडपुस्तकप्राधिकारद्वारा प्रकाशितश्च - २००१), डा.एस्.विद्याशङ्करमहोदयस्य प्रधानसम्पादकत्वे संगृहीतः, बेङ्गलूरु - बसवसमितिद्वारा प्रकाशितश्च वीरशैवपारिभाषिक-पदकोश इत्यादयः प्रसिद्धाः ।

वीरशैवमूलसंस्कृतग्रन्थानां परिशीलनद्वारा पण्डित - चन्द्रशेखरशर्मा हिरेमठ - महोदयैः (इदानींतनकाशी-ज्ञानसिंहासनाधीश्वर श्री जगद्गुरु डा. चन्द्रशेखरशिवाचार्य-महास्वामिनां पूर्वाश्रमनामभाग्भिः) संगृहीतः, भारतसर्वकारस्य वैज्ञानिक-तान्त्रिक-शब्दावल्यायोगद्वारा प्रकाशितश्च वीरशैवदर्शनकोशः (१९९९) समुपलभ्यते। (पश्यत - हिन्दीभाषायां विद्यमानः भारतीयदर्शनपरिभाषाकोशः खण्डः-२)। अयं च कोशः संक्षिप्तः

हिन्दीभाषाविवरणेन युक्तश्च। अस्मिन् कोशे मूलग्रन्थानां यद्यपि अध्यायादिसंख्योल्लेखो दीयते तथापि तत्तत्पारिभाषिकपदस्य प्रयोगनिदर्शनं वा तत्तद्विषयसम्बद्धमूलग्रन्थानामुल्लेखो वा न दृश्यते ।

प्रथमतया वीरशैव - संस्कृत - मूलग्रन्थानामवलोकनपूर्वकं पारिभाषिकपदानां प्रयोगनिदर्शनपूर्वकं तत्तत्पारिभाषिकपदसम्बंद्धमूल-ग्रन्थानामुल्लेखपूर्वकं च संस्कृतभाषायां निर्मितोऽयं वीरशैवपारिभाषिक-पदकोशः सर्वेषां विदुषामध्येतॄणां च कृते निर्मितोऽस्ति। अस्य कोशस्य योजनाव्यवस्थाभ्यां सह निर्माणाय मैसूरुनगरस्थस्य जगद्गुरु श्री शिवरात्रीश्वर महाविद्यापीठस्याध्यक्षैर्जगद्गुरु श्री श्री शिवरात्रिदेशिकेन्द्रमहास्वामिभिः जे.एस्.एस्.ग्रन्थमालाद्वारा प्रकटयितुं च सङ्कल्पः कृतः। अयं समाज-प्रेमिणां श्रीचरणानां महाननुग्रहः। एतद्ग्रन्थस्याविर्भावे आदितः समाप्तिपर्यन्तं सम्यग् मार्गदर्शनं दत्तवतः बिजापुरीयज्ञानयोगश्रमस्य निराभारि चरमूर्ति श्रीसिद्धेश्वर महास्वामिनः सगौरवं स्मरामः।

अस्मिन् कार्ये तावदादौ प्रकटितानां केषाञ्चन वीरशैवप्रतिपादकानां ग्रन्थानामावली केषाञ्चन विदुषां साहाय्येन निर्मिता। एकैकस्मिन् ग्रन्थे उपलभ्यमानानां पारिभाषिकपदानां चयनाय विद्यापीठस्य सञ्चालकैर्विदुषां नामावली सिद्धीकृता । तेभ्यः पुस्तकानि प्रेषयित्वा तत्तद् ग्रन्थे विद्यमानानां वीरशैवपारिभाषिकपदानां चयनं कृत्वा तत्तत्पदस्य प्रयोगदर्शनपूर्वकं अध्यायसंख्याद्युल्लेखपूर्वकं चार्थविवरणाय विज्ञप्तिः कृता। एवं प्रायः ३८ पुस्तकेभ्यः संगृहीतेषूपचतुःसहस्रपदेभ्य (४०००) उपषट्शताधिक-द्विसहस्रपदानां (२६००) पारिभाषिकशब्दत्वेन चयनं कृतमासीत्। अनन्तरमस्य कोशस्य सप्रयोगप्रदर्शनं सोल्लेखपूर्वकं च विषयं विलिख्य समग्रं कोशं निर्मातुं विद्वान् डा. प्रभुलिङ्ग हेब्बाल् महोदयो विद्यापीठेन प्रायः २००२ तमवर्षादारभ्य नियुक्तोऽभवत्। एतत्कार्यसिद्धये सर्वा व्यवस्था विद्यापीठेन कृता। तदारभ्य तेषां पारिभाषिकपदानामकाराद्यावली अंशतः

सिद्धीकृता आसीत्। पुनः पारिभाषिकपदत्वेन संगृहीतेभ्यः केषाञ्चन पदानां प्रयोगदर्शनपूर्वकं मूलग्रन्थभागोल्लेखपूर्वकं च अर्थविवरणं कृतम् । श्रीमता गुरुमल्लदेवरु महाभागेन, श्रीमत्या गौरी महाभागया च केषाञ्चन पदानां मूलाधाराः संगृहीता अभवन्। एतदन्तरे सिद्धानां पदानां विवरणादिकं परिशील्य श्री.टि.आर्. महादेवय्य महोदयः स्वीयानभिप्रायान् विद्यापीठाय विलिख्य प्रेषितवान्। काश्चन सूचनाऽपि दत्ताः। तदनुसारेण तावत्पर्यन्तं सिद्धानां पदानां परिशीलनाय केषाञ्चन विदुषां मण्डली रचिता।

परिशीलनमण्डलीद्वारा परिशीलितेषु उपाष्टशताधिकसहस्रपदेषु (१८००) उपपञ्चाशद्द्विशतं (२५०) शब्दाः डा. प्रभुलिङ्गहेब्बाळ् महोदयेन डा. प्रभुस्वामीमहोदयस्य सहायकत्वेन सव्याख्यानं सिद्धाः गणकीकृताश्चाऽभवन्। अनन्तरमेकवर्षपयन्तं शोधनकार्यस्य विराम आपतितः।

पुनः २००८ तमे वर्षे अक्टोबर् मासे परिशीलनमण्डल्या मेलनं बेङ्गलूरुनगरस्थे श्री जे. एस्. एस्. महाविद्यालये जे.एस्.एस्. प्रकाशनालयस्य निर्देशकानां श्री पूर्णानन्दमहोदयानामाध्यक्ष्ये केषाञ्चन सदस्यानामुपस्थितौ चायोजितम्। तस्मिन् सन्दर्भे डा. प्रभुलिङ्गमहोदयः स्वकीयकार्यभारनिमित्तेन पारिभाषिकशब्दकोशनिर्माणकार्यस्य न शक्यतेऽनुवर्तनमित्यभ्यधात्। तादृशेऽनिवार्यप्रसङ्गे एतत् पारिभाषिक-शब्दकोशनिर्माणकार्यं अस्माभिः (डा.एम्. शिवकुमारस्वामी, डा.सि. शिवकुमारस्वामी, डा. प्रभुस्वामी) तादृशकोशस्य महत्त्वदृष्ट्या स्वीकृतम्। समापितं कार्यमल्पमवशिष्टमधिकम् इत्यस्यां स्थितौ वयमिदं कार्यं अङ्ग्यकुर्म।

तदारभ्य प्रकटनपर्यन्तं सपरिश्रममुद्युक्तैरस्माभिरिमं पारिभाषिक-पदकोशमकारादिक्रमेण यथायोग्यं सज्जीकृतम्। तस्य शास्त्रानुसारमर्थं

विलिख्य तत्सम्बद्धविषये उपलब्धग्रन्थेषु ये ये विचाराः प्रतिपादितास्ते ते विचारा निरूपिताः सन्ति। तदनन्तरमुपरि निर्दिष्टानंशान् प्रमाणीकर्तुं मूलग्रन्थानामुल्लेखाः प्रस्तूयन्ते।

एकस्यैव पारिभाषिकपदस्य प्रयोगानुसारं ये ये विविधार्थाः दृश्यन्ते तेषामेकद्वित्र्यादिक्रमेण अर्थान् प्रस्तुत्य तत्तत् प्रमाणभूतानां मूलग्रन्थानां वाक्यानि दीयन्ते। विशेषतया येषां पारिभाषिकपदानां सन्दर्भे भेदाः सनिरूपणं सव्याख्यानं च प्रदर्शिताः पुनस्तेषां भेदानां प्रयोगोपलब्धिं दृष्ट्वा प्रत्येकतया तान् प्रस्तुत्य प्रयोगवाक्यं प्रदर्श्य तद्भेदसंबद्धं मूलपदं 'पश्यत' इति सूचनया दीयते।

मूलग्रन्थानामनुपलब्धौ तद्गतपारिभाषिकपदानामन्यत्रोल्लिखितानां स्वीकारे तेषां प्रयोगं प्रदर्श्य यस्मिन् ग्रन्थे तेषामुल्लेख उपलभ्यते तस्य ग्रन्थस्याध्यायादिसंख्यानिर्देशः क्रियते।

अस्मिन् पारिभाषिकपदकोशे उल्लिखितानां मूलग्रन्थानां संक्षिप्ताक्षराणि, अध्यायादिसंख्या, श्लोकवाक्यादिसंख्या च निरूप्यन्ते। अत्र पदानां लिङ्गनिर्देशः कंसयोर्न कृतः। परन्तु तेषां पदानां प्रथमाविभक्तियुक्तत्वेन निर्देशात् तेषां लिङ्गं स्वयमेव स्पष्टं भवति।

अत्रायमपि विषयः प्रस्तौतुं योग्यः। पूर्वं संगृहीतेषु शब्देषु सहस्राधिकशब्दाः पारिभाषिकपदत्वेन स्वीकर्तुमयोग्या आसन्। ते शब्दाः निष्कासिताः। पुनरवशिष्टानां शब्दानां समूलं सप्रयोगं च व्याख्यानसमये मूलग्रन्तेषूपलब्धान् उपनवत्यधिकैकशतशब्दान् (१९०) कोशे विनिवेश्य, तेषामपि समूलं सप्रयोगं च व्याख्यानं कृतम्।

केचन कन्नडवचनसाहित्यादिषूपलभ्यमानाः प्रसिद्धा वीरशैव-पारिभाषिका शब्दा अध्येतॄणां सौकर्याय अर्थविवरणसहितं प्रथमेऽनुबन्धे प्रत्येकतयाऽऽयोजिताः सन्ति। द्वितीयाऽनुबन्धे च संक्षिप्ताक्षरसूची च दत्ते।

अत्र प्रयुक्तानां सर्वेषां परिशीलनग्रन्थानां सूची तृतीयाऽनुबन्धे आयोजिता। तत्र तेषां ग्रन्थानां नामनिर्देशपूर्वकं तेषां यथायोगं कर्तुर्वा, सम्पादकस्य वा, उभयोर्वा नाम, प्रकाशनसंस्थाया नाम, प्रकाशन–वर्षश्चेत्यादयः प्रपञ्चिताः सन्ति।

अस्य वीरशैवपारिभाषिकपदकोशस्य निर्माणायऽऽदितः समार्गदर्शनं योजनां कारयित्वा तत्समाप्तिपर्यन्तं दत्तनिरन्तरावधानेभ्योऽस्मभ्य–मेतत्कार्यनिर्वहणाय सविश्वासमवकाशं कल्पितेभ्यश्च पूज्यपादेभ्यः श्री जगद्गुरुशिवरात्रिदेशिकेन्द्रमहास्वामिचरणेभ्योऽस्माकं हार्दाः कृतज्ञताः समर्प्यन्ते।

परोक्षरूपेण जे.एस्.एस्. महाविद्यापीठद्वारा एतद्ग्रन्थप्रकटनाय सुष्ठु व्यवस्थां कृतवन्तौ, संस्थायाः कार्यनिर्वाहककार्यदर्शी श्री बेट्टकेरूर् महोदयः, सहायककार्यदर्शी श्री एस्.पि.मञ्जुनाथमहोदयश्च अभिनन्दनीयौ।

एतत्कार्ये निरतेभ्योऽस्मभ्यं काले काले सकलसौकर्यं प्रकल्पिताभ्यां जगद्गुरु श्री शिवरात्रीश्वरप्रकटनविभागस्य उपनिर्देशकाभ्यां श्री पूर्णानन्द–महोदयाय श्री सदानन्दय्य महोदयाय चास्माभिः कृतज्ञताः समर्प्यन्ते।

अस्मिन् शोधकार्ये नैके विद्वांसः पदसंग्रहादिकार्यं निर्वाह्य, अल्पां वा महतीं वा सेवां अकुर्वन्। तेऽपि अस्माभिः स्मरणीयाः। अस्य कोशस्य अक्षरसंयोजनं सपरिश्रमं परिशोधनकार्यं च सम्यक् कृतवत्यै श्रीमत्यै सन्ध्यायै अस्माकं कृतज्ञताः समर्पणीयाः। अस्य कोशस्य मुद्रणकार्यं सुशोभनं सत्वरं च समापितेभ्यः 'स्प्यान् प्रिण्ट्' मुद्रणालयस्य व्यवस्थापकेभ्यः श्री नारायण महोदयेभ्यः अस्माकं कृतज्ञताः वितीर्यन्ते।

डा.एम्. शिवकुमार स्वामी
डा. सि. शिवकुमारस्वामी
विद्वान् डा. प्रभुस्वामी

# अक्षराद्यन्तसूची

# वीरशैवपारिभाषिकपदकोशः

# अ

## अ

१. प्रणवस्य अकार – उकार – मकाररूपत्रिविधाङ्गेषु प्रथमाङ्गम्।

**अकारो दक्षिणो ज्ञेयो वामगः स्यादुकारकः ।**

**मकारो मध्यगः प्रोक्तस्त्रिवर्णः प्रणवो भवेत् ।।**

(सू.आ., क्रि.पा., ४.७–८)

२. शिवः। अहम् इत्यत्र –

**अकारः शिव आख्यातो हकारः शक्तिरुच्यते ।**

(सि.शि., २०.३९)

३. ब्रह्मा ।

**पूर्वाऽस्य मात्रा ...... अकारः स ...... ब्रह्मा ......... ।**

(अथ.शिखा.,१.३)

**अकारो ब्रह्मरूपः स्यादुकारो विष्णुरूपकः ।**

(सू.आ.,क्रि.पा.,४.१५)

४. ब्रह्मबीजम्

**अकारो ब्रह्मबीजं स्यादुकारो विष्णुबीजकम् ।**

(सू.आ.,क्रि.पा.,४.१०)

(पश्यत – प्रणवः)

## अकल्पम्

१. शास्त्रोक्तविधीन् अननुसृत्य कृतं भस्म। इदं च कल्पादिषु चतुर्षु भस्मसु एकम् ।

**अन्यैरापादितं भस्माप्यकल्पमिति निश्चितम् ।**

**अन्यैः अमन्त्रज्ञैः सम्पादितं भस्म ।**

(सि.शि., तत्त्व.प्र., ७.१८; शि.त.र.,भा–३, ८.५.५७)

(पश्यत – भस्म)

२. अकल्पस्नानम्

कल्पस्नानादिषु चतुर्षु आग्नेयस्नानेष्वेकं स्नानम्। अकल्पभस्मना क्रियमाणं स्नानम् अकल्पस्नानम् ।

**स्नानं चतुर्विधं तत्र भवेत्कल्पादिभेदतः ।।**

**कल्पं चैवानुकल्पञ्च उपकल्पमकल्पकम् ।**

(शि.त.र.,भा–३, ८.५.३८–३९)

(पश्यत – आग्नेयस्नानम्, स्नानम् )

## अकायः

न विद्यते कायः यस्य सः अकायः । निर्देही । यद्यपि काययोगोऽस्ति परन्तु कायानुबन्धिव्यापारः नास्तीति अकायः। परयोगीत्यर्थः। जगदात्मत्वभावनात् देहाभिमानशून्यत्वाच्च शिवयोगी अकाय इत्युच्यते ।

**स पर्यगाच्छुक्रमकायमव्रणम् ।** (ई.उ., ८)

**औपचारिकदेहित्वात् जगदात्मत्वभावनात् ।**

**मायासम्बन्धराहित्याद् अकायो हि परः स्मृतः ।।**

**परस्य देहत्यागेऽपि न देहाश्रयविक्रिया ।**

**शिवस्येव यतस्तस्माद् अकायोऽयं प्रकीर्तितः ।।**

(सि.शि., १६.४३-४४)

**अकायो भक्तकायश्च मम कायस्तु भक्तिमान् ।**

(अ.वी.सा.सं.,२.३७)

स्कान्दे –

**अत्यन्तदृढया भक्त्या शिवतत्त्वैकभावया।**

**गतदेहादिसंसक्तिरकाय इति गीयते ।।**

(कै.सा.,वि.सं.,४७३)

(पश्यत – अकायस्थलम्)

## अकायस्थलम् ।

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम्। तत्र च माहेश्वरस्थलाश्रित-लिङ्गस्थलेष्वेकतमम् । नवविधप्रभेदेषु अन्यतमम् । माहेश्वरस्य लिङ्गकायमथनेन जायमानो निर्देहभावोऽकायस्थलम् इत्युच्यते ।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस ।**

**ततोऽकायस्थलं प्रोक्तं परकायस्थलं ततः ।**

(सि.शि., १६.२-३)

कैवल्योपनिषदि –

**न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिरस्ति ।।**

(कै.उ.,२२)

(पश्यत –अकायः, स्थलम्)

## अक्षमाला

१. रुद्राक्षमाला। जपमाला। जपवेलायां मन्त्रसंख्यापरिगणनाय उपयुज्यमाना रुद्राक्षमणिमाला।

**एवं या संस्कृता माला जपकर्मणि सर्वदा।**

**अभीष्टदा सदाऽत्यर्थं सा सर्वाघविनाशिनी।।**

**मध्यमानामिकाङ्गुष्ठैरक्षमालामणिं स्पृशेत्।**

**मध्यमायां न्यस्तमालां ज्येष्ठेनावर्तयेत् क्रमात्।।**

(शि.त.र.,भा-३, ८.६.६५-६६)

२. गुरुः, लिङ्गम्, अक्षमाला, मन्त्रः, भस्म - इत्येवं पञ्चविधशिवमुद्रास्वेका मुद्रा।

**गुरौ लिङ्गेऽक्षमालायां मन्त्रे भस्मनि पञ्चसु।।**

**एतासु शिवमुद्रासु शिववद्भक्तिमाचरेत्।**

(वा.शु.आ.,१०.७-८)

३. प्रवालादिरुद्राक्षान्तेषु दशविधेषु अक्षेषु एकतमैः निर्मीयमाणा अकारादिक्षकारान्ततत्तद्वर्णमूर्तिसङ्केतत्वेन भावनीया माला अक्षमालेति कथ्यते।

**तं गुहः प्रत्युवाच - प्रवालमौक्तिकस्फटिकशङ्खरजताष्टपदचन्दनपुत्रजीविकाब्जरुद्राक्षा इति आदिक्षान्तरमूर्तिसंविधानानुभावाः।**

(अक्ष.मा.उ., पृ.४८६)

## अक्षमालासंस्कारः

जपविधावुपयुज्यमानाऽक्षमाला सुसंस्कृता स्यात्, सा च सर्वाघनाशिनी सर्वाभीष्टदा च भवतु, इत्येतदर्थं क्रियमाणाक्षमालायाः संस्कारोऽक्षमालासंस्कारः। तद्यथा -

**प्रक्षाल्य पञ्चगव्येन तथा पञ्चामृतेन च ।।**

**संस्नाप्य तीर्थतोयेन शिवकुम्भस्थितेन च ।**

**सकृच्च मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः ।।**

**धूपदीपनिवेद्यादि दत्त्वा चाष्टशतं न्यसेत् ।**

**मूलमन्त्रजपात्पक्षाद्दण्डवत्प्रणमेद्बुधः ।।**

**एवं या संस्कृता माला जपकर्मणि सर्वदा ।**

**अभीष्टदा सदाऽत्यर्थं सा सर्वाघविनाशिनी ।।**

(शि.त.र.,भा-३, ८.६.६२-६५)

## अक्षरम्

१. न क्षरतीति अक्षरम् । भूतिः विभूतिः इत्यादिषु भस्मनो द्वादशनामसु एकतमम् ।

**अक्षरं तारकं भस्म द्वादशैतानि भस्मनः ।**

**पुण्यानि नामधेयानि ब्रह्मज्ञा मुनयो विदुः ।।**

(वी.ध.शि., पृ.१२३)

(पश्यत – भस्म)

२. परतत्त्वम् । परं ब्रह्म ।

**ओमित्येतदक्षरं परं ब्रह्म ।**

(वी.प्र.,पृ.४)

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**

(भ.गी.,८.३)

## अखण्डलिङ्गम्

लिङ्गप्रकारः । न खण्डं यस्मिन् तत् अखण्डम् = खण्डरहितम् । देशकालाभ्याम् अवच्छिन्नं सखण्डम् । तदनवच्छिन्नम् अखण्डं लिङ्गम्

अखण्डलिङ्गम्। इदञ्च इष्टलिङ्गादिषु दशविधेषु लिङ्गेषु अन्यतमम् । परं लिङ्गम् । तच्चैकं सत् भावलिङ्गम् प्राणलिङ्गम् इष्टलिङ्गमिति त्रिधा विभज्यते । तत्रैकैकस्य द्विविधत्वेन विभक्तानि आचारलिङ्गम्, गुरुलिङ्गम्, शिवलिङ्गम्, चरलिङ्गम्, प्रसादलिङ्गम्, महालिङ्गं चेति षड्लिङ्गानि चेति आहत्य (३+६) नव लिङ्गानि, तेषां मूलभूतं ऊर्ध्वलिङ्गमित्यपरनामयुक्तमखण्डलिङ्गं चेति लिङ्गानि दश ।

**अखण्डमेकं लिङ्गं स्यात् तदेव गुरुणा परम् ।**
**भावप्राणेष्टभेदेन त्रिधाभूतं नगात्मजे ।।**
**तत्रोर्ध्वलिङ्गाय नम इत्यखण्डलिङ्गमुच्यते ।**

(लि.धा.चं., पृ.७३–७४)

(पश्यत – दशलिङ्गानि)

## अगर्भजपः

१. षड्विधजपेष्वेकः । प्राणायामरहितः जपः ।

**प्राणायामेन रहितो ह्यगर्भजप उच्यते ।**

(चं.आ.,क्रि.पा., ८.६१)

२. पूरकरेचकाभ्यां सहितो जपः अगर्भजपः ।

**आद्यन्तयोरगर्भोऽपि प्राणायामः प्रशस्यते ।**

(पार.आ.,११.९०)

(पश्यत – जपः)

## अग्नितत्त्वपञ्चकम्

अग्निसम्बद्धानि पञ्चतत्त्वानि । इमानि च षट्त्रिंशत्तत्त्वेषु अन्तर्गतेषु पञ्चविंशतितत्त्वेषु अन्यतमभूतानि पञ्चतत्त्वानि । अग्नितत्त्वे इतरतत्त्वमेलनजातानि, इतरतत्त्वेषु अग्नितत्त्वमेलनजातानि इति तानि द्विधा ।

१. अग्नितत्त्वे इतरतत्त्वमेलनजातानि – श्रोत्रं, चक्षुः, जिह्वा, घ्राणं च ।

**तेजस्तेजोंऽशतश्चक्षुस्तेजोव्योमांशतः श्रुतिः ।**

**तेजोवाय्वंशतस्त्वक्स्याज्जिह्वा तेजोजलांशतः ।**

**तेजोभूम्यंशतो घ्राणमिति तैजसपञ्चकम् ।।**

(शि.त.र.,भा-२, १.७.५१-५२)

२. इतरतत्त्वेष्वग्नितत्त्वमेलनजातानि - बुद्धिः, उदानः, चक्षुः, रूपं, पादश्च ।

**नभो बुद्धिरुदानश्च मरुद्गौर्वह्निरेव च ।**

**पाथोरूपं धरा पादो वह्नेर्यत्तत्त्वपञ्चकम् ।।**

(शि.यो.प्र., ४.२२)

(पश्यत - पञ्चीकरणम्)

## अग्निहोत्रसमुद्भवम्

शिवाग्निजम् इत्यादिषु सप्तविधभस्मसु एकम्। अग्निहोत्रम् इति नामकेन अग्निना जन्यं भस्म । इदं च त्रैवर्णिकैः धार्यम् ।

**त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ।**

(क्रि.सा.,भा-२., ६.३४, पृ.२०)

## अघोरम्

पञ्चमुखभेदः। ईश्वरस्य सद्योजातादिषु पञ्चसु मुखेषु एकम्। अघोरमुखम्। अघोरमंत्रसंबद्धं मुखम्। पञ्चसु मध्यस्थमिदं प्रधानं दक्षिणाभिमुखञ्च ।

**सद्योजातं च प्रथमं वामदेवं द्वितीयकम् ।**

**अघोरं च तृतीयं तु तत्पुरुषं चतुर्थकम् ।।**

**ईशानं पञ्चमं प्रोक्तं मुखानि मम सर्वशः ।**

(वी.स.सं., १.२६-२७)

(पश्यत - अघोरः, पञ्चमुखानि)

## अघोरः

महेश्वरस्य सद्योजातादिपञ्चमूर्तिषु एका । अञ्जनसदृशवर्णाभः, रौद्ररूपः, चतुर्मुख-चतुर्बाहुयुक्तः, जटामकुटभूषितः, द्वादशनेत्रः, दंष्ट्राभयङ्करमुखयुक्तः, व्याघ्रचर्माम्बरधरः, व्याघ्रचर्मोत्तरीयकः, नूपुरसमायुक्तः, सर्वाभरणमण्डितः, दिव्यगन्धलिप्तदेहः, दिव्यपुष्पभूषितः, टङ्कशूलसमायुक्तः, वरदाभयमुद्रश्च अघोरः ।

**भिन्नाञ्जनसमप्रख्यमघोरं रौद्ररूपकम् ।।**
**चतुर्वक्त्रं चतुर्बाहु जटामुकुटमण्डितम् ।**
**द्वादशाक्षिसमायुक्तं दंष्ट्राकरालमास्यकम् ।।**
**व्याघ्रचर्माम्बरधरं व्याघ्रचर्मोत्तरीयकम् ।**
**दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम् ।।**
**टङ्कशूलसमायुक्तं वरदाभयसंयुतम् ।**

(वा.शु.आ.,७.५०-५३)

## अघोरमन्त्रः

अघोरमन्त्रः । घोर इत्यपि उच्यते । अघोरमुखविशिष्टपरशिवसम्बद्धः मन्त्रः । दक्षिणवक्त्रप्रतिपादको मन्त्रः । ईश्वरस्य सद्योजातादीनां पञ्चानां मुखानां सम्बद्धेषु पञ्चसु मन्त्रेषु (पञ्चब्रह्ममन्त्रेषु) अन्यतमः । अयञ्च हृदयसम्बद्धः । मन्त्रस्वरूपम् :-

**अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।**
**सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।**

(म.ना.उ.,१६.३)

**शोषयेत् पुरुषेणैव दहेत् घोरात् शिवाग्निना ।**

(सि.शि., ७.१५)

**अघोरमन्त्रात् दहेत् भस्मीकुर्यात् इत्यर्थः ।**

(सि.शि.तत्त्व.प्र, ७.१५)

## अघोरास्त्रम्

विद्याङ्गभूतमस्त्रं षड्विधम् – शिवास्त्रम्, पाशुपतास्त्रम्, ब्रह्मास्त्रम्, क्षुरिकास्त्रम्, व्योमास्त्रम्, अघोरास्त्रं चेति ।

**शिवास्त्रं पशुपत्यस्त्रं ब्रह्मास्त्रं क्षुरिकास्त्रकम् ।**
**व्योमास्त्रमित्यघोरास्त्रम् एतद्विद्याङ्गमीरितम् ।।**

(वा.शु.आ.,८.४५)

(पश्यत – अघोरास्त्रमन्त्रः)

## अघोरास्त्रमन्त्रः

अघोरास्त्रमन्त्रः – "प्रस्फुर–स्फुर–घोर–घोरतर–तनुरूप–चटचट–प्रचटप्रचट–कहकह–वमवम–घातयघातय – हुं – फट्–स्वाहा" इति ।

**प्रकारं च स्फुकारं च रकारं च स्फुकारकम् ।।**
**रकारं चैव विन्यस्य घोरं चैव तु घोरकम् ।**
**तकारं चैव विन्यस्य रकारं चैव विन्यसेत् ।।**
**तकारं नुकारं च रूकारं च पकारकम् ।**
**चटश्चैव चटश्चैव प्रचटः प्रचटस्तथा ।।**
**कहश्चैव कहश्चैव वमश्चैव वमस्तथा ।**
**घातय घातय ब्रूयात् ततो हुं फट् समायुतम् ।।**
**स्वाहाश्चैव समायुक्तं मन्त्रो हेतिरुदाहृतः ।**

(वा.शु.आ.,८.६०–६४)

## अङ्कुरशीलम्

सदाचारान्तर्गतत्वेनोक्तेषु अष्टशीलेष्वेकम् । गुरोः करुणया जातं, षडध्वन्यासशोभितं च मम शरीरमेव सर्वमूलप्रकृतिभूतं (कारणं) इति भावोऽङ्कुरं नाम शीलम् ।

**अङ्कुराख्यं प्रवक्ष्यामि बीजभूतं समासतः ।**
**गुरुकारुण्यकलितषडध्वन्यासशोभिता ।**
**तनुः स्वीया प्राकृतेति भावोऽङ्कुर इतीर्यते ।।**

(चं.आ.,क्रि.पा.,९.२३)

(पश्यत – सदाचारः)

## अङ्गम्

१. शिवज्ञानवान् जीवः । त्वंपदप्रतीतिविषयः । अयं च सद्रूपं ब्रह्मस्वरूपं विदित्वा ब्रह्मस्वरूपमेव प्राप्नोति ।

**ज्ञानमङ्गमिति प्राहुर्ज्ञेयं लिङ्गं सनातनम् ।**

(सि.शि., १२.४२)

**ज्ञानं शिवज्ञानवान् जीवः अङ्गम् अङ्गमिति प्राहुरित्यर्थः ।**

(सि.शि.तत्त्व.प्र.,१२ .४२)

**अमिति ब्रह्मसन्मात्रं गच्छतीति गमुच्यते ।**
**रूप्यतेऽङ्गमिति प्राज्ञैरङ्गतत्त्वविचिन्तकैः ।।**
**अनाद्यन्तमजं लिङ्गं तत्पदं परमं प्रति ।**
**यद् गच्छति महाभक्त्या तदङ्गमिति निश्चितम् ।।**

(कै.सा., वि.सं.,४७,४१; अ.सू.,४.४,२)

**लिङ्गं तत्पदमारव्यातमङ्गं त्वंपदमीरितम् ।**
**संयोगोऽसिपदं प्रोक्तम् अनयोरङ्गलिङ्गयोः ।।**

(अ.सू.५.२७)

(पश्यत – जीवः ; पिण्डः)

### अङ्गभेदः

अङ्गं त्यागाङ्गं भोगाङ्गं योगाङ्गम् इति त्रिधा। तत्र स्थूलशरीरं त्यागाङ्गमित्युच्यते, सूक्ष्मशरीरं भोगाङ्गमित्युच्यते, कारणशरीरं योगाङ्गमित्युच्यते ।

**अङ्गस्थलं त्रिधा ज्ञेयमाचार्यैः सूक्ष्मदर्शिभिः ।**

**योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं च द्वितीयकम् ।।**

**त्यागाङ्गं तु तृतीयं स्यादेवमेव त्रिधा भवेत् ।**

(अ.सू.,४.५-६)

**योगाङ्गं कारणं प्रोक्तं भोगाङ्गं सूक्ष्ममुच्यते ।**

**त्यागाङ्गं स्थूलमित्युक्तमेवं भेदोपभेदतः ।।**

(अ.वी.सा.सं., १.१५९-१६०)

(पश्यत – पिण्डः, त्यागाङ्गम्, भोगाङ्गम्, योगाङ्गम्)

२. शक्तिः ।

**शिवस्तु ब्रह्म चैवोक्तः शक्तिरेवाङ्गमुच्यते ।**

**शिवशक्तिसमायोगो जगत्सृष्ट्यर्थकारणम् ।।**

(शि.त.र.,भा-१, १.४.४९)

(पश्यत – शक्तिः)

## अङ्गतत्त्वम्

जीवः । न्यूनीभूतस्वप्रकाशतायां प्रतिस्फुरणगत्या प्रविष्टं शिवचैतन्यम् ।

**न्यूनीभूतस्वप्रकाशतायां तथैव प्रविष्टशिवचैतन्यमेव अङ्गतत्त्वं भवति ।**

(शि.मं., पृ.३८)

## अङ्गरूपः = अङ्गरूपकः

जीवः । जीवात्मा ।

**अङ्गरूपो हि जीवात्मा भवभावनियन्त्रितः ।**

(लिं.धा.चं. पृ. १७४)

**त्वमहंपदलक्ष्यार्थो जीवात्मा चाङ्गरूपकः ।**

(लिं.धा.चं., पृ.१७५)

(पश्यत – जीवः)

## अङ्गलिङ्गम्

अङ्गमेव लिङ्गम् । अङ्गलिङ्गयोः समावेशयुक्तम् ।

**अङ्गे लिङ्गं समारूढं लिङ्गे चाङ्गमुपस्थितम् ।**

**एतदस्ति द्वयं यस्य स भवेदङ्गलिङ्गवान् ।।**

(सि.शि.,१२.४३)

## अङ्गलिङ्गप्रतिष्ठादीक्षा

दीक्षाभेदः । शिष्यस्य वामहस्ते इष्टलिङ्गं संस्थाप्य, 'लिङ्गप्राणी भव' इत्युपदेशपूर्वकं पादतीर्थप्रसादौ दत्त्वा गुरुलिङ्गजङ्गमान् सम्यगर्चयेत्, अष्टावरणेषु, पञ्चाचारेषु च श्रद्धा करणीया – इत्युपदिश्य अङ्गलिङ्गप्रतिष्ठादीक्षा गुरुणा दीयते । अत्र प्रथमं प्राणायामं कृत्वा शुभ्रे वस्त्रे इष्टलिङ्गं बध्वा 'नमो ब्रह्मणे' इति मन्त्रोच्चारपुरस्सरं शिष्यस्य कण्ठे वा हस्ते वा तल्लिङ्गं धारयति । एषा एव अङ्गलिङ्गप्रतिष्ठादीक्षा ।

**मा भूया भौतिकप्राणी लिङ्गप्राणी भवेति च ।**

**शिष्यमादिश्य दद्याच्च पादतीर्थप्रसादकौ ।।**

**भूयोऽप्युपदिशेच्छिष्यं सद्गुरुः करुणानिधिः ।**

**माहेश्वरान् गुरुं लिङ्गं सम्यगर्चय नित्यशः ।।**

**अष्टस्वावरणेषु त्वं श्रद्धां कुरु प्रयत्नतः ।**

**प्रवर्तस्व महाबुद्धे पञ्चाचारेष्वपि क्रमात् ।।**

**इति सम्बोध्य भूयोऽपि प्राणानायम्य देशिकः ।**

**अङ्गलिङ्गप्रतिष्ठाख्यां दीक्षां शिष्यस्य धीमतः ।।**

**करिष्य इति सङ्कल्प्य लिङ्गं बद्ध्वा सुवाससा ।**

**नमो ब्रह्मण इत्येतं धृतिमन्त्रं समुच्चरन् ।।**

**शिष्यस्य कण्ठे हस्ते वा बध्नीयात् तदनन्तरम् ।**

**गुर्वन्तेवासिनोर्वासआच्छादकमनुत्सृजेत् ।।**

(का.आ.,क्रि.पा.,१.१२६-१३१)

## अङ्गलिङ्गिस्थलम्

स्थलभेदः । अङ्गलिङ्गिस्थलम् । एकोत्तरशतस्थलेष्वेकम्, अङ्गस्थल-गतप्राणलिङ्गिस्थलस्य पञ्चविधप्रभेदेषु च अन्यतमम्। तत्र च इदं पञ्चमं स्थलम्। ज्ञानमङ्गम्, शिवज्ञानवता जीवेन साक्षात्करणीयमित्यर्थः। यस्य तद् द्वयं विद्यते सः अङ्गलिङ्गीति कथ्यते । तत्सम्बद्धं स्थलम् ।

**प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम् ।**

**अङ्गलिङ्गिस्थलं चाथ क्रमादेषां भिदोच्यते ।।**

**ज्ञानमङ्गमिति प्राहु : ज्ञेयं लिङ्गं सनातनम् ।**

**विद्यते तद् द्वयं यस्य सोऽङ्गलिङ्गीति कीर्तितः ।।**

(सि.शि. १२.४-५, ४२)

## अङ्गलिङ्गवान्

अङ्गे लिङ्गं लिङ्गे चाङ्गं यस्य परस्परसमाविष्टं स अङ्गलिङ्गी ।

**अङ्गे लिङ्गं समारूढं लिङ्गे चाङ्गमुपस्थितम् ।**

**एतदस्ति द्वयं यस्य स भवेदङ्गलिङ्गवान् ।।**

(सि.शि., १२.४३)

(पश्यत - अङ्गलिङ्गिस्थलम्)

## अङ्गस्थलम्

स्थलभेदः । स्वशक्तिक्षोभेण परमात्मना ध्रियमाणयोरङ्गस्थलं लिङ्गस्थलमिति द्वयोः स्थलयोरेकम् ।

**स्वशक्तिक्षोभमात्रेण स्थलं तद् द्विविधं भवेत् ।**

**एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम् ।।**

(क्रि.सा., भा-३, पृ.१०६; अ.सू., २.१०; अ.वी.सा.सं.,भा-१, ७९)

**अङ्गस्थलभेदः**

इदं च स्थलं बहुधा विभक्तम् । तद्यथा –

१. **त्रिधा** – स्थलमिदं त्यागाङ्गं भोगाङ्गं योगााङ्गमिति भेदेन त्रिधा विभज्यते ।

**अङ्गस्थलं तथा प्रोक्तमाचार्यैः सूक्ष्मदर्शिभिः ।**

**योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गञ्च द्वितीयकम् ।।**

**त्यागाङ्गं च तृतीयं स्यादित्येवं त्रिविधं स्मृतम् ।।**

(क्रि.सा.,भा-३, पृ.१०६; अ.सू.,४.५)

(पश्यत – त्यागाङ्गम्, भोगाङ्गम्, योगाङ्गम्)

२. षोढा – स्थलभेदः पूर्वाक्तं त्रिविधमङ्गस्थलमेकैकमपि द्वैविध्यं प्राप्य षोढा भवति । तथाहि –

त्यागाङ्गं – भक्तस्थलम्, माहेश्वरस्थलमिति

भोगाङ्गं – प्रसादिस्थलम्, प्राणलिङ्गस्थलमिति

योगाङ्गं च – शरणस्थलम्, ऐक्यस्थलमित्यङ्गस्थलं षड्विधम् ।

**इत्येवं त्रिप्रकारैस्तत् प्रोक्तमङ्गस्थलं क्रमात् ।**

**प्रत्येकं पृथगर्थत्वात् साम्प्रतं प्रोच्यते द्विधा ।।**

**योगाङ्गमैक्यशरणस्थलमित्युभयं भवेत् ।**

**प्राणलिङ्गिप्रसादीति द्वयं भोगाङ्गमिष्यते ।।**

**माहेश्वरस्थलं भक्तस्थलमित्युभयं तथा ।**
**त्यागाङ्गं भवतीत्येवं प्रोच्यते पारमार्थिकैः ।।**

(अ.सू.,४.११-१३)

३. सिद्धान्तशिखामण्युक्तदिशा अङ्गस्थलानि भक्तस्थलाश्रितानि पञ्चदश, माहेश्वरस्थलाश्रितानि नव, प्रसादिस्थलाश्रितानि सप्त, प्राणलिङ्गिस्थला-श्रितानि पञ्च, शरणस्थलाश्रितानि चत्वारि, ऐक्यस्थलाश्रितानि चत्वारि चेत्याहत्य चतुश्चत्वारिंशत् ।

अ. भक्तस्थलम्

१. पिण्डस्थलम्, २. पिण्डज्ञानस्थलम्, ३. संसारहेयस्थलम्, ४. गुरुकारुण्यस्थलम्, ५. लिङ्गधारणस्थलम्, ६. विभूतिधारणस्थलम्, ७. रुद्राक्षधारणस्थलम्, ८. पञ्चाक्षरीजपस्थलम्, ९. भक्तमार्गक्रियास्थलम्, १०. उभयस्थलम्, ११. त्रिविधसम्पत्तिस्थलम्, १२. चतुर्विधसारायस्थलम्, १३. सोपाधिदानस्थलम्, १४. निरुपाधिदानस्थलम्, १५. सहजदानस्थलम् ।

आ. माहेश्वरस्थलम्

१. माहेश्वरप्रशंसास्थलम्, २. लिङ्गनिष्ठास्थलम्, ३. पूर्वाश्रयनिरसन-स्थलम्, ४. सर्वाद्वैतनिरसनस्थलम्, ५. आह्वाननिरसनस्थलम्, ६. अष्टमूर्ति-निरसनस्थलम्, ७. सर्वगतत्वनिरसनस्थलम्, ८. शिवजगन्मयस्थलम्, ९. भक्तदेहिकलिङ्गस्थलम् ।

इ. प्रसादिस्थलम्

१. प्रसादिस्थलम्, २. गुरुमाहात्म्यस्तलम्, ३. लिङ्गमाहात्म्यस्थलम्, ४. जङ्गममाहात्म्यस्थलम्, ५. भक्तमहात्म्यस्थलम्, ६. शरणमहत्त्वस्थलम्, ७. प्रसादमहत्त्वस्थलम् ।

ई. प्राणलिङ्गिस्थलम्

१. प्राणलिङ्गिस्थलम्, २. प्राणलिङ्गार्चनस्थलम्, ३. शिवयोग-समाधिस्थलम्, ४. लिङ्गनिजस्थलम्, ५. अङ्गलिङ्गिस्थलम् ।

उ. शरणस्थलम्

१. शरणस्थलम्, २. तामसनिरसनस्थलम्, ३. निर्देशस्थलम्, ४. शीलसम्पादनस्थलम्।

ऊ. ऐक्यस्थलम्

१. ऐक्यस्थलम्, २. आचारसम्पत्तिस्थलम्, ३. एकभाजनस्थलम्, ४. सहभोजनस्थलम्।

(सि.शि.,५.२७-३०; १०.४-६; ११.४-५; १२.४-५; १३.३-४; १४.३)

## अङ्गस्थलाश्रया शक्तिः

शक्तिभेदः। भक्तिरूपा इयं भवापहा, निर्वासना, शुद्धा, सूक्ष्मा, शोभना, सच्चिदानन्दरूपा, भुक्तिमुक्तिफलप्रदा च। लिङ्गाश्रितशक्तेः अस्याश्च न भेदः। निवृत्तिरूपयाऽनया प्रपञ्चविलयः। ऊर्ध्वमुखी चेयं निर्माया भक्तिरित्युच्यते। अनयैव भक्त्या उपासकस्य उपासकत्वं घटते।

**अङ्गस्थलाश्रया शक्तिर्भक्तिरूपा भवापहा।**
**यथा महानलज्वाला विभक्ता दीपिकाकृतिः।।**
**तथा माहेश्वरी शक्तिर्विभक्ता भक्तिरूपिणी।**
**ज्वाला तमस्विनी यस्माद् दीपिका सुप्रकाशिनी।।**
**तस्मात् सवासना शक्तिर्भक्तिर्निर्वासना मता।**
**भक्तिर्महत्तरा शुद्धा सुसूक्ष्मा शोभना परा।।**

(अ.सू.,२.२३-२५)

(पश्यत- लिङ्गस्थलाश्रया शक्तिः)

## अङ्गालेपः

अङ्गे कर्मलेपरहितः शिवयोगी। यः दिक्कालाद्यनवच्छिन्नं चिदानन्दमयं महत्स्वरूपं साक्षात्कृतवान् सः शिवयोगी। तस्य

शिवयोगिनोऽङ्गं कर्मलेपकं न भवतीत्यतः शिवयोगी अङ्गालेप इत्युच्यते। सः शिवयोगी धूमादिभिः नभो यथा न लिप्यते तथा सांसारिकैः पापकर्मभिः न लिप्यत इत्यर्थः।

**दिक्कालाद्यनवच्छिन्नं चिदानन्दमयं महत्।**
**यस्य रूपमिदं ख्यातं सोऽङ्गालेप इहोच्यते॥**
**समस्तजगदात्माऽपि संविद्रूपो महामतिः।**
**लिप्यते नैव संसारैर्यथा धूमादिभिर्नभः॥**

(सि.शि., २०.४२-४३)

## अङ्गालेपस्थलम्

एकोत्तरशतस्थलेषु एकम्। ऐक्यस्थलाश्रितनवविधलिङ्गस्थलेष्वेकतमम्। तत्र च इदं षष्ठं स्थलम्। अङ्गे कर्मलेपरहितस्य शिवयोगिनः स्थितिः स्थलम् अङ्गालेपस्थलम्।

**स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते।**
**अङ्गालेपस्थलं पश्चात् स्वपराज्ञास्थलं ततः।**

(सि.शि., २०.३-४)

(पश्यत – अङ्गालेपः)

## अचेतनः

पदार्थः द्विविधः, स्वतन्त्रः अस्वतन्त्रश्च। तत्र स्वतन्त्रः ईश्वरः। अस्वतन्त्रश्च चेतनः, अचेतनः इति द्विविधः। तत्र अचेतनो नाम ईश्वरात् अन्यः, जीवादपि भिन्नः चैतन्यरहितः जडः इत्यर्थः।

अपि च चेतनो द्विविधो नित्यमुक्तो नित्यसंसारी चेति। तत्र वीरनन्द्यादयः तथा एकाक्षरादयः प्रमथगणाश्च नित्यमुक्ताः। ये च सृष्टिस्थितिलयादिकर्तारो ब्रह्मविष्णुरुद्रादयो मनुष्यपर्यन्ताः नित्यसंसारिणः।

**पदार्थो द्विविधः स्वतन्त्रोऽस्वतन्त्रश्चेति। तत्र स्वतन्त्रो ह्यहमेव। अस्वतन्त्रश्चेतनोऽचेतनश्चेति द्विविधः, तत्रापि चेतनो नित्यमुक्त-नित्यसंसारिभेदाद्द्विविधः।**

**वीरनन्द्यादयस्तथैकाक्षरादयः प्रमथगणान्ताश्चेतना नित्यमुक्ताः। नित्यसंसारिणस्तु सृष्टिस्थित्यन्तकर्तारो ब्रह्मविष्णुमहेश्वरादयो मनुष्यान्ताः।।**

(वी.स.सं., पृ.२)

## अण्डजलिङ्गम्

अण्डं विश्वकारणं महालिङ्गम्। ततः जातं ब्रह्माण्डम् अण्डजम्। तच्च लिङ्गरूपम् इत्यतोऽण्डजलिङ्गमित्युच्यते। तस्य ज्ञानमपि अण्डजलिङ्गम्। इदमेव अण्डजस्थलमिति व्यवह्रियते।

**पीठिका पृथिवीलिङ्गमाकाशं सृष्टिकारणम् ।।**

**निस्सन्देहमिदं ज्ञानमण्डजं लिङ्गमीरितम्।**

(शि.त.र.,भा-३, ९.९, ३०-३१, क्रि.सा.,भा-३, २४, पृ.१२१)

(पश्यत - अण्डजस्थलम्)

## अण्डजस्थलम्

स्थलभेदः। महालिङ्गस्थलस्य पिण्डजस्थलम् अण्डजस्थलम् बिन्द्वाकाशस्थलमिति त्रिविधस्थलेषु अन्यतमम्। तत्र पृथिवी एव पीठिका। आकाशः एव लिङ्गम्। एवंरूपं पीठिकालिङ्गस्वरूपमेवाण्डजस्थलम्। इदमेव अण्डजलिङ्गमितीर्यते।

**महालिङ्गस्थलञ्चापि त्रिधा भिन्नं शृणु प्रिये।**

**पिण्डजं प्रथमं प्रोक्तमण्डजं च ततः परम् ।।**

**बिन्द्वाकाशं ततो ज्ञेयम् एषां लक्षणमुच्यते।**

(शि.त.र.,भा-३, ९.९.२८-२९; क्रि.सा.,भा-३, २४, पृ.१२१)

(पश्यत - अण्डजलिङ्गम्)

## अतिमार्गम्

रुद्रप्रणीतं शास्त्रम्।

**रुद्रप्रणीतं यच्छास्त्रमतिमार्गं तदीरितम् ।।**

**शिवप्रणीतं सिद्धार्थं शास्त्रमात्रं प्रकीर्तितम्।**

(शि.त.र.,भा-३.,९.४.२०-२१)

## अतिवर्णाश्रमाचाराः

वेदोक्ताः ब्राह्मणादिवर्णानां धर्माचाराः वर्णाचाराः। तथैव वेदोक्ताः ब्रह्मचर्याद्याश्रमाणां धर्माचाराः आश्रमाचाराः। वर्णाचाराः आश्रमाचाराश्च वर्णाश्रमाचाराः। तान् अतिक्रान्ताः वीरशैवानाम् अतिवर्णाश्रमाचाराः।

**"अतिवर्णाश्रमाचार इत्यत्र अतिक्रान्तः वर्णाश्रमाचारानिति" अत्यादयः क्रान्ताद्यर्थे द्वितीयया इति व्याकरणानुशासनमर्यादया शब्दार्थो योजनीयः। स च पूर्वोक्तधर्माचरणवत्सु सम्भवति।**

(वी.शै.उ., पृ. १६)

## अतिवर्णाश्रमी

वर्णाश्रमानतीत्याऽऽत्मस्वरूपेणावस्थितो महात्मा। ज्ञानी। स च गुरूणां गुरुः। स्वात्मदर्शनबलेन तस्य वर्णाश्रमाचारो गतप्रायः।

**योऽतीत्य स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान्।**

**सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदान्तवादिभिः ।।**

**अतिवर्णाश्रमी साक्षाद्गुरूणां गुरुरुच्यते।**

**यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ।।**

**स वर्णानाश्रमान्सर्वानतीत्य स्वात्मनि स्थितः ।।**

(वी.शै.उ., पृ.१३, १२, वि.सं.,४४, ४३)

**अतिवर्णाश्रमी मुण्डी प्राणलिङ्गाङ्गयोगभाक् ।**
**न धारयेच्छिरोवस्त्रमुष्णीषं वा न धारयेत् ।।**

(सू.आ.,क्रि.पा.,७.७५)

## अत्याश्रमः

आश्रमधर्मान् अतिक्रान्तानां वीरशैवानां व्रतविशेषः। एकान्ते उपविश्य समग्रीवाशिरःशरीरो भूत्वा, इन्द्रियनिग्रहं कृत्वा, स्वगुरुं नमस्कृत्य, हृत्पुण्डरीके अचिन्त्यमव्यक्तमनन्तरूपं शिवं ध्यायेत्। तत्र परमेश्वरं त्रिलोचनत्वादिविशिष्टत्वेनोमासहायत्वेन च ध्यायेत्। तादृशध्यानेन यो मुनिः सर्वकारणं परमात्मानं स्वात्मत्वेन भावयति सः अत्याश्रम इति कथ्यते।

**विविक्तदेशे च सुखासनस्थः शुचिस्समग्रीवशिरःशरीरः ।**
**अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ।।**
**हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।**
**अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।।**
**तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ।**
**उमासहायं परमेश्वरं प्रभुम् त्रिलोचनं नीलकण्ठं प्रशान्तम् ।।**
**ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ।।**

(कै.उवल्य उ. १-५, ६.७, पृ - ३४)

## अत्याश्रमम्

अत्याश्रमः। अत्याश्रमनामकं व्रतम्।

**अत्याश्रमं पाशुपतं शाम्भवं चेति यद् ध्रुवम् ।**
**कैवल्याथर्वकालाग्निरुद्रोपनिषदीरितम् ।**

(क्रि.सा.,भा-२, ८, पृ.९३)

(पश्यत -अत्याश्रमव्रतम्)

## अत्याश्रमव्रतम्

आश्रमधर्मान् अतिक्रान्तानां वीरशैवानां व्रतम्। भस्मरुद्राक्षलिङ्गानां धारणम्। शिवपूजनम् शिवध्यानं शिवभावसाधनञ्च अत्याश्रमव्रतम्। इदमेव पाशुपतव्रतम् शाम्भवव्रतम्, शिरोव्रतम् ऐश्वरव्रतम्, इत्यादिभिर्नामभिः व्यवह्रियते।

सौरसंहितायाम् –

**भस्मनोद्धूलनं तिर्यक्त्रिपुण्ड्रशिवपूजनम्।**
**प्राधान्येन पुराणानि प्रवदन्ति हि सादरम्॥**
**अत्याश्रमसमाख्यं यद्व्रतं पाशुपतं व्रतम्।**
**वेदान्तेषु समस्तेषु तत्सारतरमुत्तमम्॥**

(क्रि.सा.,भा–२, पृ.१०६)

**एतच्छिरोव्रतं प्राहुः केचिदत्याश्रमं बुधाः।**
**केचित्सद्व्रतमित्याहुः केचिच्छाम्भवमैश्वरम्॥**

(वी.स.सं. ६.२७. पृ–४३)

**होमदण्डजटाहीनमेतत्पाशुपतं व्रतम्।**

(क्रि.सा., भा.२, ८.३. पृ. ९३,)

(पश्यत – पाशुपतयोगः)

## अत्याश्रमी

वेदोक्तान् आश्रमधर्मान् अतिक्रान्तः वीरशैवः। अतिवर्णाश्रमी।

**अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्॥**

(वी.शै.उ., पृ.११. वि. सं – ३८)

**तस्मादविमुक्तमाश्रितो भवति अत्याश्रमी सर्वदा सकृद्वा जपेत्।**

(कै.उ.,२५)

**सुवर्णरत्नधान्यादिवस्तुवृद्ध्युपजीवनात् ।**
**अत्याश्रमी यदि चरेत् सोऽयं पातकिनां वरः ।।**
**जटाधारी शिखी मुण्डी पञ्चमुद्रासमन्वितः ।**
**स्त्रीसङ्गं कुरुते यस्तु स मद्द्रोही न संशयः ।।**
**अतिवर्णाश्रमी मुण्डी प्राणलिङ्गाङ्गयोगभाक् ।**
**न धारयेच्छिरोवस्त्रमुष्णीषं वा न धारयेत् ।।**

(सू.आ.,क्रि.पा.,७.७३–७५)

## अद्वैतम्

द्वितीयस्य भावः द्वैतम् । न द्वैतम् अद्वैतम् । ऐक्यस्थलम् । शिवजीवयोरैक्यस्थितिः । शिवजीवयोरभेदज्ञानम् । लिङ्गाङ्गसामरस्यम् । समरसभावः ।

**परनिर्वाणनिष्ठानां यद्भवेत्परमं पदम् ।**
**तदाहुः स्थलमद्वैतं शिवयोगैकतत्पराः ।।**

(अ.सू., २.९)

**मायाशक्तितिरोधानाच्छिवे भेदविकल्पना ।**
**आत्मनस्तद्विनाशे तु नाद्वैतात्किञ्चिदिष्यते ।।**

(सि.शि., १४.८)

**विविधानि मलान्याशु त्यजन्ति गुरुसन्निधौ ।**
**जीवः शिवः शिवो जीवः इति चाद्वैतवादिनः ।।**

(वी.उ., १.२७, पृ–८)

**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।**

(मा.का.,१७)

(पश्यत – ऐक्यः)

## अद्वैतभक्तिः

शिवोऽहमस्मीति अद्वैतवासनायुक्ता भक्तिः ।

**अद्वैतपदरूढा या भक्तिरद्वैतलक्षणा ।**

**सैवाद्वैताभिधाभक्तिः अन्या केवलकल्पिता ।।**

(अ.सू., ८.४६)

(पश्यत – भक्तिः)

## अद्वैतनिरसनस्थलम्

माहेश्वरस्थलाश्रितनवविधाङ्गस्थलेष्वेकतमम् । एकोत्तरशतस्थलेषु च अन्यतमम् । वागद्वैतनिरसनस्थलम् सर्वाद्वैतनिरसनस्थलमिति च व्यवहारः ।

पूजाकर्माद्युपपत्त्यर्थं पूज्यपूजकभावः अनिवार्यतया अपेक्ष्यते । अपि च तत्र भेदराहित्ये लिङ्गनिष्ठाविरोधोऽपि जायते । अतः ''क्रियाद्वैतं न कर्तव्यम्'' इत्युक्तरीत्या माहेश्वरः सर्वाद्वैतं निरस्येत् ।

**माहेश्वरस्थलं वक्ष्ये ययोक्तं शम्भुना पुरा ।**

**पूवाश्रयनिरासश्च तथादैतनिराकृतिः ।**

**पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।**

**पूजाकर्माद्यसम्पत्तेर्लिङ्गनिष्ठाविरोधतः ।।**

**सर्वाद्वैतविचारस्य ज्ञानाभावे व्यवस्थितेः ।**

**भवेन्माहेश्वरः कर्मी सर्वाद्वैतनिरासकः ।।**

(सि.शि., १०.४–५, ३७–३८)

**''एवं पूर्वाश्रमनिरस्तमाहेश्वरः लिङ्गं ज्ञात्वा तल्लिङ्गसुखं पृथग्वाचा व्यवहृते सति भिन्नत्वं प्राप्स्यतीति वाङ्निवृत्तौ सत्याम् अनन्तरं वागद्वैतनिरसनस्थलमित्युच्यते'' – इति ।**

(कै.सा.,पू.भा.,१.२, वि.सं.१६८)

(पश्यत – वागद्वैतनिरसनस्थलम्)

## अधिकार :

ज्ञानम्, ज्ञेयम्, अनुष्ठेयम्, अधिकारः, साधनम्, साध्यं चेति षडर्थेषु एकः। तत्र भस्म (एव अधिकृतम्) सर्वत्र अधिक्रियते। इत्यतः भस्म अधिकारपदेनोच्यते।

**ज्ञानं ज्ञेयमनुष्ठेयं अधिकारोऽथ साधनम् ।।**
**साध्यं चेति षडर्थानां सङ्ग्रहस्तेषु सङ्ग्रहः ।**
**गुरोरधिगतं ज्ञानं ज्ञेयं पाशः पशुः पतिः ।।**
**लिङ्गार्चनाद्यनुस्ठेयं भस्मैवाधिकृतं द्विजैः ।**

(शै.र.,भा-१, १.१०२-१०४, पृ-२६)

## अधिकारी

वीरशैवसिध्दान्तस्य अध्ययने अधिकारवान् साधकः। अयं च अधिकारी, विषयः, सम्बन्धः, प्रयोजनं चेति चतुर्षु अनुबन्धेष्वेकतमः। वित्तेषणा, पुत्रेषणा, दारेषणा इति ईषणत्रयवर्जितः, पञ्चाचारपरायणः, अष्टाङ्गयोगसाधकः, मुमुक्षुः, परिशुद्धान्तःकरणश्चाऽधिकारी इत्युच्यते।

**शास्त्रं तु वीरशैवानां षड्विधं स्थलभेदतः ।**
**धर्मभेदसमायोगादधिकारिविभेदतः ।।**

(सि.शि., ५.२३)

**अधिकारी स विज्ञेयः त्यक्तसर्वेषणः स्वयम् ।**
**अष्टाङ्गयोगवान् ज्ञानी पञ्चाचारपरायणः ।।**
**भक्तमाहात्म्यशुश्रूषुः चिकीर्षुर्मोक्षसाधनम् ।**
**गुरुशुश्रूषणरतः श्रुतवान् वीतकल्मषः ।।**

(क्रि.सा., भा-१.१.७, ८, पृ.११)

## अध्यात्मदीक्षा

वेधादीक्षान्तर्गतासु सप्तविधदीक्षास्वेकतमा। 'प्राणे लिङ्गं लिङ्गे प्राणं च निधायेष्टलिङ्गं निरीक्षमाणस्सन् सर्वदा लिङ्गप्राणी भव' इत्येवंरूप उपदेश अध्यात्मदीक्षेति कथ्यते।

**उपदिश्यैवमथ च दद्यादध्यात्मसंज्ञिताम् ॥**

**प्राणे लिङ्गं प्रतिष्ठाप्य लिङ्गे प्राणं निधाय च।**

**लिङ्गं निरीक्षमाणः सन् लिङ्गप्राणी सदा भव।**

(का.आ.,क्रि.पा.,१.१०४-१०५)

## अध्वा

महालिङ्गे सादाख्यानां प्रादुर्भावाद् उद्भूतसञ्चलनशक्तेः प्रवाहसाधन-भूतो मार्गः। स च शब्दाध्वा अर्थाध्वा इति द्विधा। उपविभागैः सह षोढा।

ते च - कलाध्वा, तत्त्वाध्वा, भुवनाध्वा, वर्णाध्वा, पदाध्वा, मन्त्राध्वा चेति। तत्र उत्तरोत्तरः अध्वा पूर्वपूर्वमध्वानमाश्रयते। तद्यथा - कलाध्वानमाश्रित्य तत्त्वाध्वावतिष्ठते। तत्त्वाध्वानमाश्रित्य भुवनाध्वावतिष्ठते। तमाश्रित्य वर्णाध्वा, तमाश्रित्य पदाध्वा, तमाश्रित्य च मन्त्राध्वा चावतिष्ठते।

**एतेषु च कलातत्त्वभुवनाख्यास्त्रयस्तु ॥**

**अध्वानोऽर्थस्वरूपाः स्युरथाध्वानस्ततः परे ।**

**मन्त्रवर्णपदात्मानस्त्रयः शब्दस्वरूपकाः ॥**

(शि.त.र.,भा-३, ९.३.८५-८६)

**तत्त्वाध्वानमुपाश्रित्य भुवनाध्वावतिष्ठते।**

**कलाध्वानं तु तत्त्वाध्वा भुवनाध्वा तु तं श्रितः ॥**

**त्रयोऽध्वानो वर्णपदमन्त्रात्मानो भवन्ति ये ।**

**ते वर्तन्ते भुवनजशरीराणां व्यपेक्षया ।।**

(शि.त.र.,भा-३. ९.३.८७-८८)

(पश्यत - षडध्वम्, षडध्वन्यासः, षडध्वशोधनम्)

## अनन्तरशैवम्

वीरशैवसदाचारसंग्रहोक्तदिशा सप्तशैवेस्वेकतमः । अनन्तरशैवेन आश्रयमाणं मतम् । अनादिशैवादिसप्तशैवेषु अन्यतमम् । परमात्मस्वरूपे भेदाभेदविवर्जितः सन् यः परमात्मानमर्चयति सः अनन्तरशैवः ।।

**शैवं सप्तिवधं ज्ञेयं .................... ।।**

**अनन्तरं पञ्चमंच ..................... ।**

**परेशस्य स्वरूपे यो भेदाभेदविवर्जितः ।**

**योऽसौ समर्चयेन्नित्यमनन्तरमितीरितम् ।।**

(वी.स.सं, ८.२, ४, ८)

## अनलाङ्गम्

आत्माङ्गम्, व्योमाङ्गम्, अनिलाङ्गम्, अनलाङ्गम्, जलाङ्गम्, भूम्यङ्गं चेति प्रवृत्तिक्रमेण षडङ्गानि । अनलाङ्गं नाम प्रसादिस्थलम्, यस्मिन् अहङ्कारहस्तेन शिवलिङ्गं पूज्यते ।

**अनलाङ्गमहंहस्तं शिवलिङ्गार्चने रतम् ।।**

**प्रसादिस्थलमित्याहुराचार्याः शिवशास्त्रिणः ।**

(अ.सू.,६.३८-३९)

## अनादिजङ्गमः

जङ्गमप्रभेदः । हृत्प्रणवपीठे विराजमानः जङ्गमः । अनादिभक्तस्य हृदि स्थितोऽनादिजङ्गमः । तत्र सः चिन्मण्डलत्रययुक्तप्रणवासनस्य मध्ये स्थितः निरञ्जनः ।

**भक्तस्य पश्चिमहृदि स्थितो योऽनादिजङ्गमः ।**

**तस्य स्वरूपमधुना समासेन प्रकाश्यते ।**

**पश्चादनादिभक्तस्य हृच्चित्पद्मान्तरे सदा ।।**

**चिन्मण्डलत्रयोपेतप्रणवासनमध्यगः ।**

**निरञ्जनस्तत्प्रणवस्वरुपोऽत्र निगद्यते ।।**

(शि.त.र.,भा-१, १.३.४३-४५)

## अनादिजङ्गमस्थलम्

स्थलभेदः। स्थलानि भक्तस्थलं, माहेश्वरस्थलं, प्रसादिस्थलं, प्राणलिङ्गिस्थलं, शरणस्थलं, ऐक्यस्थलं चेति षट्। एतानि च उपविभागैः सह एकोत्तरशतसंख्याकानि । अयं च विभागः सिद्धान्ताशिखामणिग्रन्थोक्तदिशा। सिद्धवीरशिवयोगिनस्तु अनादिवीरशैवसदाचारसङ्ग्रहे सप्तविंशतिस्थलानि प्रतिपादयामासुः। तेषु सप्तविंशतिस्थलेषु अनादिजङ्गमस्थलमेकम्। अनादिमध्यान्तरहितं शून्यतत्त्वं अनादिजङ्गमस्थलम्।

**शून्य शून्यं परं शून्यं निःशून्यं निष्कलं तथा ।**

**आदिमध्यान्तशून्यं च ह्यनादिजङ्गमस्थलम् ।।**

(अ.वी.सा.सं.,भा-१,३.९)

## अनादिपाशः

परमेश्वरस्य कार्यकलापस्य अन्ते जन्यः आणवपाशः अनादिपाशः इत्युच्यते। अयमेव अनाद्याणवपाशः। अयं च पाशः शैवदीक्षया प्रसादप्राप्त्या निवर्तते।

**अनादिराणवः पाशः स्वपाकान्ते महेशितुः ।**

**प्रसादप्राप्त्या शैवदीक्षयैव निवर्तते ।**

(शि.त.र,भा-३, ९.३.१०७-१०८)

## अनादिभक्तः

लिङ्गमनादिस्वरूपम्। तत्स्वरूपभूतो भक्तोऽनादिभक्तः। यस्मात् कारणात् स्वयं ब्रह्मभूतो भक्त आदिरहितो भवति, तस्मात् स अनादिभक्त इत्युच्यते।

**यदस्ति तत्परं ब्रह्म स्वयं नादिं भजेद्यतः।**

**तस्मादनादिभक्तोऽयमित्युक्तस्तत्त्ववेदिभिः ।।**

(शि.त.र,भा–१, १.३.१०)

## अनादिशैवम्

अनादिशैवस्य मतम्। सप्तविधशैवेष्वेकतमम्।

**अनादिशैवं प्रथममादिशैवं द्वितीयकम्।**

(वी.स.सं.,८.३)

(पश्यत – अनादिशैवः)

## अनादिशैवः

शैवभेदः। सप्तविधशैवेष्वेकतमः । शिव एव परं ब्रह्म, स एव अनादिशैवः। शिवगणा अपि अनादिशैवाः। 'अहमेव परशिवब्रह्म मत्तोऽधिको नास्ति' इति यो निश्चयेन भावयति सोऽप्यनादिशैवः ।

**अनादिशैवो मत्तोऽन्यो नास्ति लोकेषु कश्चन।**

(सू.आ.,क्रि.पा.,७.७)

**अनादिशैवः शम्भुः स्यादथ तस्य गणा अपि ।।**

(चं.आ.,क्रि.पा.,१०.५)

**अहमेव परं ब्रह्म मत्तः सर्वोत्तमो नहि।**

**इति निश्चितवान् योऽसौ सोऽनादिशैव उच्यते ।।**

(वी.स.सं., ८.५)

## अनाद्यविद्या

अखण्डे परशिवे जीवेश्वरजगदितिव्यवहारकारणभूतं जगत्प्रतीति-कारणञ्च तत्त्वम् अनाद्यविद्या। जीवानां परमात्मनः सकाशात् अंशत्वेन पृथग्भवने कारणम्।

**अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः।**

**अनाद्यविद्यामूला हि प्रतीतिर्जगतामियम्।**

(सि.शि.,५.३४, २०.२२)

## अनाहतचक्रम्

चक्रभेदः। तत्र च चतुर्थं चक्रम्। हृदयस्थितमेतत् प्रणवाकृतेः शिवस्य पूजास्थानम्। चक्रमिदं द्वादशदलात्मकम्। तत्र च लौल्यादयो गुणाः प्रत्येकमेकैकं दलमाश्रिताः।

**हृदयेऽनाहतं चक्रं शिवस्य प्रणवाकृतेः।**

**पूजास्थानं तदिच्छन्ति दलैर्द्वादशभिर्युतम्।।**

**लौल्यं प्रणाशः कापट्यं वितर्कोऽत्यनुतापिता।**

**आशा प्रकाशश्चिन्ता च समीहा समता तथा।।**

**क्रमेण दम्भो वैकल्यं विवेकोऽहङ्कृतिस्तथा।**

**फलान्येतानि पूर्वादिदलस्थस्यात्मनो जगुः।।**

(शि.त.र.,भा-३, ९.१.१३८-१४०)

(पश्यत – सप्तचक्राणि, षट्चक्राणि)

## अनिर्वाच्यम्

शब्दैः प्रतिपादयितुमशक्यं तत्त्वम्। तच्च शिवतत्त्वम्। तदेव परमं पदम्।

**निश्शब्दं तत्त्वमित्याहुरनिर्वाच्यं परं पदम् ।**
**भूतेन्द्रियादिप्रकृतेस्तत्त्वानां च लयात्मकम् ।।**

(शि.यो.प्र., २.४८)

## अनिलाङ्गम्

आत्माङ्गम्, व्योमाङ्गम्, अनिलाङ्गम्, अनलाङ्गम्, जलाङ्गम्, भूम्यङ्गं चेति षडङ्गानि। तत्र अनिलाङ्गं नाम प्राणलिङ्गिस्थलम्, यत्र मनोहस्तेन चरलिङ्गार्चनं क्रियते।

**अनिलाङ्गं मनोहस्तं चरलिङ्गार्चने रतम् ।।**
**प्राणलिङ्गिस्थलं साक्षादित्याहुः शिवधार्मिकाः ।**

(अ.सू.,६.३७-३८)

## अनुकल्पम्

१. अनुकल्पभस्म - कल्पम् अनुकल्पम् इत्यादिषु भस्मसु एकम्। अरण्यस्थं शुष्कं गोमयम् आनीय चूर्णीकृत्य विधिवत् दग्ध्वा सुसंस्कृतं भस्म।

**वनेषु गोमयं यच्च शुष्कं चूर्णीकृतं तथा ।**
**दग्धं चैवानुकल्पाख्यम् ... ।।**

(सि.शि., ७.१६)

**शुष्कं वनगतं यत्तु गोमयं चूर्णितं तथा ।।**
**निर्दग्धमनुकल्पाख्यमपाकादिगतं च यत् ।**

(शि.त.र.,भा-३, ८.५.५५-५६)

(पश्यत - भस्म)

२. अनुकल्पभस्मस्नानम्

भस्मस्नानं तावदाग्नेयस्नानमिति कथ्यते। कल्पस्नानम्, अनुकल्पस्नानम्, उपकल्पस्नानम्, अकल्पस्नानम्, इति चतुर्विधस्नानेष्वेकम्। अनुकल्पभस्मना क्रियमाणं स्नानम् अनुकल्पस्नानम्।

**भुक्तिमुक्तिदमाग्नेयं स्नानं शुद्धेन भस्मना ।**

**स्नानं चतुर्विधं तत्र भवेत्कल्पादिभेदतः ।।**

**कल्पं चैवानुकल्पश्च उपकल्पमकल्पकम् ।**

(शि.त.र.,भा-३, ८.५.३८-३९)

## अनुग्रहः

१. ईश्वरस्य सर्गादिपञ्चकृत्येष्वन्यतमम् । जीवस्य मोक्षानुग्रहः । तदनु गुरुकरुणया मोक्षप्राप्तिः ।

**अगाधसंशयाम्बोधितारकानुग्रहप्रद ।**

**परमज्ञानरूपत्वात् गुरुरेव परः शिवः ।।**

(वी.आ.चं.,पृ.५०)

**अत इन्द्रो निग्रहानुग्रहसमर्थः सः लिङ्गरुपः शिवो मा मां मेधयास्तृणोतु संयोजयत्विति पूर्वाचार्यैर्व्याख्यातम् ।**

(लि.धा.चं., पृ.१०८)

२. अक्रोधादिसप्तविधशीलेष्वेकम् । प्रसन्नता ।

**अक्रोधस्सत्यवचनं संविभागो दमः क्षमा ।**

**अनुग्रहश्च दानञ्च शीलमेतत्प्रशस्यते ।।**

(वी.मा.सं., ६.६७, पृ.१९४)

## अनुज्ञारूपनैवेद्यम्

लिङ्गोपभोगरूपनैवेद्यम् अनुज्ञारूपनैवेद्यं चेति द्वयोः नैवेद्ययोरेकतरम् । यदि पत्या स्वेष्टलिङ्गार्पितं भुक्तशेषं भार्यायै दीयते तदा पत्नी पुनः स्वेष्टलिङ्गायानिवेद्य स्वीकर्तुमनुज्ञास्तीति तस्याः विषये तत् अनुज्ञारूपनैवेद्यम् भवति । तीर्थस्यार्पणमपि तथा ।

**भर्तृशेषादिरूपस्य प्रसादस्य गुरोर्मम ।**

**तीर्थस्य चार्पणं प्रोक्तं अनुज्ञा रूपमेव हि ।।**

(का.आ.,क्रि.पा.,९.१३)

(अस्मिन् विषये कारणागमे क्रियापादे नवमपटले दशमश्लोकादारभ्य अष्टादशतमश्लोकपर्यन्तं विद्यमानं पार्वतीपरमेश्वरयोः संवादं पश्यत) ।

(पश्यत – लिङ्गोपभोगरूपनैवेद्यम्)

## अनुभवभक्तिः

षड्विधभक्तिष्वन्यतमा। तत्र च चतुर्था। प्रसादिस्थलसंस्थितावधान-भक्तिरेव स्वानुभवसम्बन्धेनानुभवभक्तिरूपेण परिवर्तते। तया भक्त्या प्राणलिङ्गिस्थलं प्राप्यते प्रसादिना।

**तत्रैव सुस्थिता भक्तिरवधानात्मिका शुभा ।।**
**स्वानुभूतिनिबन्धेन कीर्तिताऽनुभवात्मिका ।**
**प्राणलिङ्गिस्थलं चास्य तया भक्त्या समागतम् ।।**

(अ.सू.,५.७६-७७)

## अनुभावः

१. दीक्षा, शिक्षा, अनुभावः इति भक्तस्थलाश्रितशिक्षादित्रिविध गुरुस्थलेष्वेकम्। तत्र स्वकीयसुकृतार्जितैः प्राक्तनसंस्कारैः जन्यं ज्ञानम् अनुभावः। सिद्धान्तशिखामणौ अनुभावं ज्ञानमिति गृह्यते ।

**दीक्षा शिक्षानुभावश्च गुरुलिङ्गं त्रिधा भवेत् ।।**
**संस्कारैः प्राक्तनैर्देवि स्वकीयसुकृतार्जितैः ।**
**ज्ञानाधिक्यं भवेद्यत्तु स्वानुभावः स उच्यते ।।**

(सू.आ.,क्रि.पा.,८.१०, १३)

२. शिवजीवयोरैक्यस्थितिः। लिङ्गाङ्गसामरस्यम्। एतदेवोत्कृष्टोऽनुभावः।

**अकारो लिङ्गमेवोक्तं नुकारो जीव उच्यते ।**
**भावस्संयोग एवोक्तो अनुभावो निगद्यते ।।**

(प्र.गी.,१२२)

## अनुशैवम्

अनुशैवेन अनुस्रियमाणं मतम्। एककालं लिङ्गं वा जङ्गमान् यः अर्चयेद् यश्च नित्यं शिवध्यानपरः सोऽनुशैवः। तत्सम्बन्धिमतं भवेत्। कनिष्ठमेककालं लिङ्गं जङ्गमानपि सोऽर्चयति। नित्यं शिवध्यानपरः स ज्ञानाधिक्ये स्थितवान्। शान्त्यादि अभ्यासकौशलात् तस्य कर्म-काण्डोक्ताचरणं न विहितम्।

**अर्चयेदेककालं वा लिङ्गं मे जङ्गमानपि।**
**मम ध्यानपरो नित्यमनुशैवमतो भवेत्॥**
**ज्ञानेनाधिकता यस्य शान्त्याद्यभ्यासपाठनात्।**
**न तस्य कर्मबाहुल्यं ज्ञानमेवाधिकं परम्॥**

(पार.आ.,७.१४-१५)

सूक्ष्मागमोक्तदिशा क्षत्रियो वा वैश्यो वा दीक्षितः सन् अनुशैवो भवति। तस्य मतमनुशैवम्।

**अनुशैवा इति प्रोक्ता नृपा वैश्याश्च दीक्षिताः।**

(सू.आ.,क्रि.पा.,७.१३)

## अनुसन्धानम्

अन्तरङ्गे परमात्मधारणम्। उपासनम्। लिङ्गानुसन्धानम् इति यावत्।

**तन्मते देव धारणो भूयासमित्यत्र देवस्य परमात्मनो**
**धारणमन्तरनुसन्धानमुपासनमिति फलितम्।**

(लि.धा.चं., पृ.११०, श्लो.५)

## अन्तःकरणम्

१. पञ्चविंशतितत्त्वेष्वन्तर्भूतं मनोबुद्ध्यहङ्कारत्रितयम् अन्तःकरणम्। स्वशरीरस्य अवकाशे स्थित्वा बाह्यार्थानां सङ्कल्पनादिकार्यसाधकं करणम् अन्तःकरणम्। शरीरस्य अन्तःस्थितत्वात् जीवस्य बाह्यव्यवहारसाधन-

त्वाच्च एतदन्तःकरणमित्युच्यते। इदञ्च मनः, बुद्धिः, अहङ्कारः, इति त्रिविधम्।

**मनश्चाहङ्कारश्च बुद्धिश्चेति त्रितयमेतत् श्रोत्रादीन्द्रिय-वदस्माच्छरीराद्बहिर्निर्गत्य व्यापारमकृत्वा स्वशरीरस्यान्तरवकाशे स्थित्वा क्रियाप्रवर्तकत्वात् अन्तःकरणम्।**

(शै.सि.दी., पृ.२)

२. वृत्तिविशेषः - वृत्तिः अन्तःकरणस्य व्यापारः। मनोवृत्तिः, अहङ्कारवृत्तिः, बुद्धिवृत्तिरिति त्रिधा।

**क्रियाः प्रवर्तयन्त्यन्तः स्थित्वान्तः करणं ततः।**

(शि.त.र.,भा-३,९.३.१५)

मनोवृत्तिः

अर्थानां सङ्कल्पविकल्पनम्, श्रोत्रादीन्द्रियाणां बहिर्विषये प्रेषणञ्च मनसो वृत्तिः।

**सङ्कल्पनं तथाऽर्थानां श्रोत्रादीनां बहिः स्थितिः॥**

**प्रवर्तनञ्च विषये मनसो वृत्तिरिष्यते।**

(शि.त.र.,भा-३, ९.३.१५-१६)

अहङ्कारवृत्तिः

अभिमानः, पञ्चप्राणानां प्रेरणञ्च अहङ्कारवृत्तिः।

**अभिमानः प्रेरणञ्च वायूनां देहवर्तिनाम्॥**

**अहंकृतेर्गृणो ....................।**

(शि.त.र.,भा-३,९.३.१६,१७)

बुद्धिवृत्तिः

बुद्धेः गुणस्त्वध्यवसायकः। निश्चयकरणं बुद्धिवृत्तिः।

**अहंकृतेर्गुणो बुद्धेः गुणस्त्वध्यवसायकः।**

**इदं रजतमेवेति निश्चयोऽध्यवसायकः॥**

(शि.त.र.,भा-३, ९.३.१७)

## अन्तरात्मस्थलम्

एकोत्तरशतस्थलेष्वेकम्। तत्र च त्रिसप्ततितमम्। प्राणलिङ्गिस्थलाश्रित-नवविधलिङ्गस्थलेष्वेकतमम्। तत्र चेदं द्वितीयम्। अन्तरात्मनः जीवस्यारन्तरात्मत्वस्यवबोधस्थितिरन्तरात्मस्थलम्। यधपि जीवः देहे स्थित तथापि देहसङ्गविदूरः सन् स्वस्वरूपज्ञानत्वात् परमात्मभावयुक्तत्वात् सोऽन्तरात्मेति गीयते। प्रविविक्तस्वरूपाद् अहंभाववशान्मनुष्यत्वादि-भ्रान्तिर्भवेत्। यदा न स्वभावत मनुष्यत्वादिर्भ भ्रान्तिरिति ज्ञाने जाते सति जीवोऽन्तरात्मेति कथ्यते।

**स्थलानां नवकं प्रोक्तं प्राणलिङ्गिस्थलाश्रितम्।**
**आदावात्मस्थलं प्रोक्तमन्तरात्मस्थलं ततः॥**
**देहस्थितोऽप्ययं जीवः देहसङ्गविवर्जितः।**
**बोधात्परात्मभावित्वाद् अन्तरात्मेति कीर्तितः॥**
**अहङ्कारस्य सम्बन्धात् मनुष्यत्वादिविभ्रमः।**
**न स्वभाव इति ज्ञानादन्तरात्मेति कथ्यते॥**

(सि.शि., १८.२, १९, २१)

## अन्तरात्मा

जीवात्मा, अन्तरात्मा, परमात्मा इति त्रिविधेषु आत्मसु अन्यतमः। तत्र चायं मध्यस्थः।

**आत्मान्तरालवर्तित्वात् जीवात्मपरमात्मनोः।**
**योगादुभयधर्माणाम् अन्तरात्मेति कीर्तितः॥**

(सि.शि., १८.२०)

## अन्तर्यागः

अन्तर्यागः, बहिर्यागः इति द्विविधयागयोः अन्यतरः। तत्र ध्यानयज्ञः अन्तर्यागः। अयश्च शुद्धसाधनं मोक्षफलदायकश्च। अतोऽयमादरणीयः।

**अन्तर्यागवतां देवि हृदयस्थः सदाशिवः ।**
**गुरोर्लब्ध्वा परं ज्ञानं ध्यानयोगरतो भवेत् ।।**

(सू.आ.,क्रि.पा., ६.३१, ३३)

**ध्यानयज्ञः परःशुद्धः सर्वदोषविवर्जितः ।**
**तेनेष्ट्वा मुक्तिमाप्नोति बाह्यैः शुद्धश्च नाध्वरैः ।।**
**ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः ।।**
**अन्तर्यागोपचारेण यः पूजयति शङ्करम्**
**ध्यानयज्ञेन सततं स याति परमां गतिम् ।।**

(क्रि.सा., भा-३,२७, पृ.२१०-२११)

(पश्यत - यागः)

## अन्तर्लक्ष्यम्

हृदयाकाशमध्यस्थं दिव्यलिङ्गम् । ध्यानिरतयोगिनां लक्ष्यभूतत्वात् तदन्तर्लक्ष्यम् ।

**नान्तस्थं न बहिर्व्याप्तम् अपरोक्षस्वरूपकम् ।**
**आकाशाभ्यन्तराकाशमन्तर्लक्ष्यं तदेव हि ।।**

(शि.यो.प्र.,५.२)

## अन्तर्लिङ्गम्

सर्वभूतगुहान्तराले लिङ्गरूपेण संस्थितःशिवोऽन्तर्लिङ्गम् । अन्तरिन्द्रिययोग्यं लिङ्गम्।

**"लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीयम्" (हं.उ.,२) । अत्र लिङ्गे सुषुप्तिरिति हृदयान्तर्वर्तिनः शिवस्य लिङ्गरूपत्वं स्पष्टम् ।**

(लिं.धा.चं.,पृ.३३)

**शिवोऽन्तर्लिङ्गरूपेण स्थित इत्यर्थः ।**
**अन्तरिन्द्रिययोग्यं च ह्यन्तरं लिङ्गमुच्यते ।**

(क्रि.सा.,भा-२,४.२९, पृ.१७०)

## अन्तर्लिङ्गधारणम्

हृदयाकाशे विद्यमानं लिङ्गमन्तर्लिङ्गम्। तदेव ज्योतिर्लिङ्गम्। तस्य अनुसन्धानं ध्यानम् अन्तर्लिङ्गधारणम्। इदमेव च आभ्यन्तरलिङ्गधारणम् अन्तर्लिङ्गानुसान्धानम् अन्तर्लिङ्गोपासनमित्युच्यते। आधारचक्रे दहरे स्वर्णस्फटिकवैद्रुमवर्णयुक्तं शाम्भवं लिङ्गम् अन्तर्लिङ्गम्। तस्य निरन्तरानुसन्धानमेव अन्तर्लिङ्गधारणम्।

**आधारे दहरेऽव्यक्ते स्वर्णस्फटिकवैद्रुमं ।**
**निरन्तरानुसन्धानात् तदन्तर्धारणं विदुः ।।**

(सदा.उ.,पृ.३७८)

**आधारे हृदये वापि भ्रूमध्ये वा निरन्तरम् ।**
**ज्योतिर्लिङ्गानुसन्धानमान्तरं लिङ्गधारणम् ।।**
**आधारे कनकप्रख्यं हृदये विद्रुमप्रभम् ।**
**भ्रूमध्ये स्फटिकच्छायं लिङ्गं योगी विभावयेत् ।।**

(सि.शि.,६.३९-४०)

**एवमस्यामुपनिषदि ज्योतिर्लिङ्गानुसन्धानरूपान्तर्लिङ्गधारणं विधाय इष्टलिङ्गरूपबाह्यलिङ्गधारणमपि विधीयते ।**

(लि.धा.चं.पृ.३५)

(पश्यत - अन्तलिङ्गानुसन्धानम्, आभ्यन्तरलिङ्गधारणम्, अन्तलिंङ्गोपासनम्)

## अन्तर्लिङ्गानुसन्धानम्

अन्तर्लिङ्गधारणम्। अन्तर्लिङ्गोपासनम्। आभ्यन्तरलिङ्गधारणम्। हृदि शिवलिङ्गध्यानम् अन्तर्लिङ्गानुसन्धानम्

**अत्र हृदि ध्यानम् अन्तर्लिङ्गानुसन्धानम् ।**

(लिं.धा.चं., पृ.१८२)

**अन्तर्लिङ्गानुसन्धानम् आत्मविद्यापरिश्रमः ।**
**गुरूपासनशक्तिश्च कारणं मोक्षसम्पदाम् ।।**
**वैराग्यज्ञानयुक्तानां योगिनां स्थिरचेतसाम् ।**
**अन्तर्लिङ्गानुसन्धाने रुचिः बाह्ये न जायते ।।**

(सि.शि.,६.४३-४४)

## अन्त्यः

भूम्यादिबिन्द्वन्तानां षट्त्रिंशत्तत्त्वानां लयाश्रयत्वात् परशिवः अन्त्यः इत्युच्यते ।

**सर्वानुग्राहकः शम्भुः केवलं कृपया प्रभुः ।**
**मोचयेत् सकलान् जन्तून्नकिञ्चिदिहकारणम् ।।**
**लयः सर्वपदार्थानां अन्त्य इत्युच्यते बुधैः ।**

(सिं.शि.,१८.६१-६२)

## अन्त्यप्रसादः

सर्वान्त्यस्य परशिवस्य अनुभवः, साक्षात्कारः। स्वतन्त्रः सर्वानुग्राहकः शिवः केवलं कृपाविष्टः सन् सर्वान् जन्तून् पाशमुक्तान् कुर्यात्। इह पाशमोचनविषये शम्भोर्न किञ्चिदपि कारणमस्ति। सर्वानुग्रहकृत्यं तु तत्स्वभाव एव। तस्य सर्वान्त्यस्य शिवसाक्षात्कार एव प्रसादः । तद्वान् तदनुभवी ।

**आदिप्रसादनामाथ ततोऽप्यन्त्यप्रसादकम् ।**
**सर्वानुग्राहकः शम्भुः केवलं कृपया प्रभु ः ।**
**मोचयेत् सकलान्जन्तून्नकिञ्चिदिह कारणम् ।।**
**प्रसादोऽनुभवस्तस्य तद्वान् अन्त्यप्रसादवान् ।**

(सि.शि., १८.४,६१-६२)

(पश्यत – अन्त्यः)

## अन्त्यप्रसादिस्थलम्

प्राणलिङ्गिस्थलगतलिङ्गस्थलेष्वेकतमम्। एकोत्तरशतस्थलेषु चान्यतमम्। अन्त्यप्रसादं प्राप्तवतः स्थितिः अन्त्यप्रसादिस्थलम्।

न किञ्चिदपि दृश्यं कर्तव्यं वा इति मुक्तस्य या सुखस्फूर्तिका निश्चला स्थितिः वर्तते सा अन्त्यप्रसादिस्थलम्।

**स्थलानां नवकं प्रोक्तं प्राणलिङ्गिस्थलाश्रितान्।**

**आदिप्रसादनामाथ ततोप्यन्त्यप्रसादकम्।**

**न किञ्चिदपि मुक्तस्य दृश्यं कर्तव्यमेव वा।**

**सुखस्फूर्तिस्वरूपेण निश्चला स्थितिरुच्यते॥**

(सि.शि., १८.२,४, ६७)

## अन्त्यप्रसादी

अन्त्यस्य शिवस्य अनुभवप्रसादवान्।

**प्रसादोऽनुभवस्तस्य तद्वानन्त्यप्रसादवान्।**

(सि.शि.,१८.६२)

## अन्त्यशैवम्

सप्तशैवेष्वेकतमम्। अन्त्यशैवस्य मतम्। सूक्ष्मागमे तथा वीरशैवसदाचारसंग्रहे चोक्तम्। कुलालान् तत्पार्श्ववर्तिनश्च विहाय अन्यासां जातीनां शैवम् अन्त्यशैवम्।

**अन्यासामन्त्यजातीनां अन्त्यशैवं विधीयते॥**

(सू.आ.,क्रि.पा.,७.१४)

(पश्यत – अन्त्यशैवः)

## अन्त्यशैवः

१. अनादिशैवादिसप्तशैवेष्वन्यतमः । परमात्मनः लाञ्छनं दृष्ट्वा नमस्कृत्य यः निश्चिन्तो भवति शिवभक्तः सः अन्त्यशैवः ।

**परस्य लाञ्छनं दृष्ट्वा नमस्कृत्य सुनिश्चितः ।**
**अन्त्यशैव इति प्रोक्तः.......................।।**

(वी.स.सं.,८.१०)

२. कुलालादिभ्यः भिन्नः अन्त्यजातिमान् शैवः अन्त्यशैवः ।

**अन्यासामन्त्यजातीनां अन्त्यशैवं विधीयते ।**

(सू.आ.,क्रि.पा.,७.१४)

## अन्त्येष्टिविधिः

वीरशैवानां अन्त्येष्टिविधिर्नाम समाधिसंस्कारः ।

**शाम्भवीये व्रते चैव तदन्त्येष्टिविधावपि ।**
**अविश्वासपरो मूर्खो नरकान्न हि निःसरेत् ।।**

(मकुट., च.पा.,१.१४)

**शाम्भवानां मुमुक्षूणां संस्कारायैव चोदितः ।**
**पितृमेधे श्रूयतेऽसौ समाधिविधिरुत्तमः ।।**

(चं.आ.,च.पा.,१.११)

(पश्यत – शिवमेधः)

## अन्नशुद्धिः = आहारशुद्धिः

तत्त्वशुद्धेः उत्तेजिका आहारशुद्धिः । शिवाय समर्पितम् अन्नं विशुद्धमन्नमुच्यते । शुद्धान्नभोजनेन मनः प्रसादमाप्नोति ।

**आहारशुद्धौ सत्त्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्षः ।**

(छां.उ.,७.२६.२)

**अन्नशुद्ध्या हि सर्वेषां तत्त्वशुद्धिरुदाहृता ।**

**विशुद्धमन्नजातं हि यच्छिवाय समर्पितम् ।।**

**तदेव सर्वकालं तु भुञ्जानो लिङ्गतत्परः ।**

**मनःप्रसादमतुलं लभते ज्ञानकारणम् ।।**

(सि.शि.,११.९-१०)

## अप्

जगत्कारणभूतषट्त्रिंशत्तत्त्वानां मध्ये पृथिव्यादिपञ्चभूतेषु एकं जलतत्त्वम्। तस्य च शब्दः, स्पर्शः, रूपं चेति त्रयो गुणाः। रसस्तस्य विशेषगुणः।

**रूपं च साधारणगुणाः। रसस्तु विशेषगुणः।**

**..........अपां तु शब्दःस्पर्शश्च रूपकम् ।**

**साधारणगुणा एते रसो वैशेषिको गुणः ।।**

(शि.त.र.,भा-३, ९.३.२२-२३)

## अप्तत्त्वपञ्चकम् = (जलतत्त्वपञ्चकम्)

पञ्चविंशतितत्त्वेषु अप्तत्त्वपञ्चकमिति पञ्चतत्त्वानि दृश्यन्ते। जलतत्त्वे इतरतत्त्वमेलनजातानि, इतरतत्त्वेषु जलतत्त्वमेलनजातानीति तानि द्विधा।

१. जलतत्त्वे इतरतत्त्वमेलजातानि-शब्दः, स्पर्शः, रूपं, रसः, गन्धश्च।

**अप्सु स्वांशाद्रसोत्पत्तिः शब्दोऽप्सु गगनांशतः ।**

**अप्सु वाय्वंशतस्स्पर्शो रूपमप्सु तु तेजसः ।।**

**अप्सु भूम्यंशतो गन्ध इत्यप्सम्भूतपञ्चकम् ।**

(शि.त.र.भा-१, १.७.५३-५४)

२. इतरतत्त्वेषु जलतत्त्वमेलनजातानि चित्तम्, अपानः, जिह्वा, रसः, उपस्थश्च।

**चित्तं विष्णुपदं वायुरपानो रसनानलः ।**

**रसो जलमुपस्थो भूरपां तत्तत्त्वपञ्चकम् ।।**

(शि.यो.प्र.,४.२३)

(पश्यत–पञ्चीकरणम्)

## अपरनादः = अपरध्वनिः

शिवलिङ्गस्य परबिन्दुः, परनादः, अपरबिन्दुः, अपरनादश्चेति चतुर्विधभागेष्वेकतमः। अयं नादः ध्वनिरित्यपि कथ्यते। लिङ्गस्य अधस्तमभागभूतस्यापरबिन्दोरुपरि विद्यमानः भागः अपरनादः (ध्वनिः) इति कथ्यते।

**तदेव शिवलिङ्गं हि तल्लिङ्गं तु चतुर्विधम् ।**

**परबिन्दुः परो नादश्चापरो बिन्दुनादकौ ।।**

**अधः स्यादपरो बिन्दुस्तदूर्ध्वमपरोध्वनिः ।**

(चं.आ.,क्रि.पा.,३.१०–११)

## अपरबिन्दुः

शिवलिङ्गस्य चतुर्विधेषु भागेषु अपरबिन्दुरेकतमः। तत्र लिङ्गस्याधोभागः अपरबिन्दुरिति कथ्यते।

**परबिन्दु परो नादश्चापरोबिन्दुनादकौ ।**

**अधः स्यादपरो बिन्दुः ................।।**

(चं.आ.,क्रि.पा.,३.१०–११)

## अपरब्रह्म

ब्रह्म द्विधा, परमपरं चेति। भूतेन्द्रियान्तःकरणप्रधानविषयात्मकः महादेवः अपरब्रह्म।

**केचिदाहुर्महादेवमनादिनिधनं प्रभुम् ।**

**भूतेन्द्रियान्तःकरणप्रधानविषयात्मकम् ।।**

**अपरं ब्रह्म निर्दिष्टं ............. ।**

(क्रि.सा.,भा-१, २.४५-४६)

## अपरप्रणवः

परप्रणवः अपरप्रणवः इति द्विविधप्रणवयोः एकः। निर्मलशब्दस्वरूप-प्रणवः अपरप्रणवः ।

**परापरविभागेन प्रणवस्तु द्विधा मतः ।**

**अपरप्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।**

(शि.त.र.,भा-१, १.५.१०-११)

(पश्यत – प्रणवः)

## अपरा विद्या

परा विद्या अपरा विद्या चेति द्विविधविद्ययोः अन्यतरा। परमात्मतत्त्वप्रतिपादकविद्यायाः भिन्नभूता, धर्माधर्मप्रतिपादिका विद्या अपरा विद्या ।

**तत्रापरा, ऋग्वेदो, यजुर्वेदः, सामवेदोऽथर्ववेदः ।**

**शिक्षा कल्पो व्याकरणं निरुक्तछन्दोज्योतिषमिति ।।**

(मुं.उ., १.१.५)

(पश्यत – परा विद्या)

## अबीजदीक्षा

निर्बीजदीक्षा । दीक्षाभेदः ।

१. सबीजदीक्षा, अबीजदीक्षा, चिन्मयदीक्षेति साधारदीक्षायाः त्रिविधप्रभेदेष्वन्यतमः। भक्तिकाण्डोक्तदीक्षा अबीजदीक्षा । तत्र भक्तिकाण्डे उपयुक्ता दीक्षा अबीजदीक्षा ।

**सा दीक्षा त्रिविधा प्रोक्ता सोबीजाबीजचिन्मया ।।**

**यथाक्रमं कर्मभक्तिज्ञानकाण्डेषु ताः स्फुटाः ।।**

(शि.त.र.,भा-३, ९.७.८-९)

२. सबीजदीक्षा, निर्बीजदीक्षा इति क्रियावतीदीक्षायाः द्विविधप्रभेदयोः अन्यतरः । जननीपुत्रयोः सम्बद्धा दीक्षा । इयञ्च - सद्योनिर्वाणदादीक्षा, चिरनिर्वाणदादीक्षा इति द्विविधा ।

**क्रियावत्यथ सा द्वेधा निर्बीजा च सबीजका ।**

**तत्र निर्बीजका या सा जननीपुत्रयोर्वरम् ।।**

**अथ निर्बीजका दीक्षा प्रोक्ता सा द्विप्रकारिका ।।**

**एका निर्वाणदा सद्यो द्वितीयादेहपाततः ।**

(शि.त.र.,भा-३, ९.७.१७-१९)

इयञ्च साधारणजनसम्बद्धा दीक्षा ।

**बालबालिशवृद्धस्त्रीभोगभुक्त्यभिलाषिणाम् ।**

**भवेन्निर्बीजका दीक्षा समयाचारशुद्धिदा ।।**

(शि.त.र.,भा-३, ९.७.१९-२०)

(पश्यत - दीक्षा)

## अभिषेकदीक्षा

दीक्षासु एका ।

१. सप्तविधक्रियादीक्षास्वन्यतमा ।

२. सप्तविधशाक्तिपातदीक्षास्वेका ।

**स्वस्तिका कलशस्नानादभिषेकाह्वया च सा ।**

(शि.त.र-३, ९.७.३५)

(पश्यत - कलशाभिषेकदीक्षा)

## अमनस्ककला

ध्यातृध्येययोरैक्यजन्यमनोलयावस्था। ध्यातृरूपमात्मानं बिन्दुरूपं ध्येयञ्च गगनवन्निरालम्बकरणम्। द्वयोस्सामरस्यात् मनसः तत्र लयभूतत्त्वात् सा स्थितिः अमनस्ककला इत्युच्यते। जागरणातीता, जननमरणरहिता च।

**आत्मानं गगनं कृत्वा बिन्दुं कृत्वा तथैव च।**
**द्वयं समरसं कुर्याद् अमनस्ककला हि सा॥**
**स्वप्नजागरणातीतां मृतिजीवनवर्जिताम्।**
**स्वामिन् शिवामनस्काख्यां गमिष्यामः कथं वयम्॥**

(शि.यो.प्र., ५.४३-४४)

## अमनस्कयोगः

राजयोगस्य सांख्ययोगः, तारकयोगः, अमनस्कयोगः इति त्रिविधप्रभेदेषु एकः। योगसम्बध्दा (ध्यानसम्बध्दा) मानसिकी स्थितिः, अन्तर्मुद्रा। एतदन्तर्मुद्रायाः परिज्ञानराहित्यस्थितिः अमनस्कयोगः। योगस्य मनोलयस्थितिः। अयञ्च इतराभ्यां सांख्यतारकाभ्यां श्रेष्ठः।

**अन्तर्मुद्रापरिज्ञानादमनस्क इतीरितः।**
**श्लाघ्यस्सांख्यात्तारकोऽयममनस्कोऽपि तारकात्॥**

(शि.यो.प्र., १.११-१२)

(पश्यत – राजयोगः)

## अमूर्ततत्त्वम्

अन्तरङ्गबहिरङ्गव्याप्तं निराकारं ज्योतिर्मयं परतत्त्वम्।

**साभ्यन्तरङ्गबहिरङ्गममूर्ततत्त्वम् ज्योतिर्मयं पुरुषमक्षरतः पराख्यम्।**

(अ.सू., ३.३०)

## अमूर्तसादाख्यम्

पञ्चसादाख्येष्वेकतमम्। शिव एव सगुणो भूत्वा सादाख्यादिप्रभेदतः पञ्चविधः कथ्यते। आदिशक्तेः उद्भूतया शान्त्याख्यकलया केवलं लिङ्गं अमूर्तसादाख्यमित्युच्यते। तस्य प्रकाशः कोटिसूर्यसमः। तत् ज्योतिस्तम्भवत् स्थितम्, अमूर्तत्वादगोचरं श्रेष्ठं ज्योतिर्लिङ्गमेव तत्। तच्च शिवभक्तेन शुद्धेन मनसा साक्षाद् ध्येयम्।

**प्रथमं शिवसादाख्यममूर्तं च ततः परम्।**
**शान्त्याख्यकलयायुक्तमादिशक्तिसमुद्भवम्।**
**अमूर्तं केवलं लिङ्गं भानुकोटिप्रकाशकम्।।**
**तेजस्तम्भायमानं स्यादमूर्तत्वादगोचरम्।**
**ज्योतिर्लिङ्गं परं साक्षाद् ध्येयं शुद्धेन चेतसा।।**

(सू.आ.,क्रि.पा.,४.४२; १.३४-३५)

**आदिशक्तिदशांशेन ह्यमूर्तस्य समुद्भवः।**
**आदिशक्तेरमूर्तत्वाद् अमूर्तं चेति कीर्तितम्।।**
**सूर्यकोटिप्रतीकाशं ज्योतिस्तम्भाकृतिः स्थितम्।।**

(शि.त.र.,भा-१, १.६.२४-२५)

(पश्यत - पञ्चसादाख्यम्)

(शि.त.र.,भा-१, १.६.२४-२६ ; सू.आ.,क्रि.पा., १-३८-३९ ; वा.शु.आ.,१.५२-५५)

## अमृतीकरणम्

सर्वेषामपि जनानां हृदयं, शिरः, शिखा, कवचं, नेत्रे इति पञ्चस्थानेषु न-म-शि-वा-य-इति शिवाक्षराणां मध्ये क्रमशः एकैकाक्षरप्रतिष्ठापनम् अमृतीकरणम्।

**पञ्चानां हृदयादीनां नानावर्णजुषामपि ।**

**मद्वर्णतानुसन्धानममृतीकरणं हि तत् ।।**

(मकुट.,क्रि.पा., ५.८)

## अर्घ्यम्

षोडशोपचारेष्वन्यतमम् । अर्घताफलदायकत्वात् अर्घ्यम् ।

तच्च-सामान्यार्घ्यम्, विशेषार्घ्यम्, तिरोधानार्घ्यम्, पराङ्मुखार्घ्यम् - इति चतुर्धा ।

**सामान्यार्घ्यविशेषार्घ्यतिरोधानार्घ्यलक्षणम् ।।**

**अङ्गदैवत्यमर्घ्यं यत्सामान्यार्घ्यमुदीरितम् ।**

**विशेषार्घ्यमिति प्रोक्तं शिवाय विनिवेदितम् ।।**

**तिरोधानार्घ्यमुदितं विसर्जनविधानकम् ।**

**पराङ्मुखार्घ्यमित्येतच्चतुष्टयमुदीरितम् ।।**

(क्रि.सा.,भा-३,१५, पृ.४)

(पश्यत - तत्तदर्घ्यविवरणं तत्तत्स्थानेषु)

## अर्चना

परमात्मसाक्षात्कारकारणभूतेषु, अर्चनार्पणानुभावरूपत्रिविध-साधनेष्वन्यतमा । पूजा । आराधनम् । अर्चनार्पणयोर्नास्ति भिदा ।

**अर्चनार्पणयोर्भेदो नात्यन्तमिह विद्यते ।**

**क्रियाविशेषतो भेदः तयोरीषत्प्रकीर्त्यते ।।**

**अर्चनार्पणसापेक्षा वर्तते द्रव्यशुद्धये ।**

(शि.त.र.,भा-३, ९.८.१०७-१०८)

(पश्यत - अनुभावः, अर्पणम्)

## अर्चनभक्तिः

नवविधभक्तिष्वेकतमा । अर्चनं पूजनम् ।

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**

(सि.शि.,९.२)

(पश्यत – नवविधभक्तिः)

## अर्चाङ्गम्

स्थूलम्, सूक्ष्मं चेति द्वयोः समर्पणयोः स्थूलं तावत् अर्चाङ्गमित्युच्यते ।

**अर्चाङ्गं स्थूलमित्युक्तं सूक्ष्मं स्यादौपभोगिकम् ।।**

(चं.आ.,क्रि.पा.,५.३०)

(पश्यत – स्थूलसमर्पणम्, समर्पणम्)

## अर्थाध्वा

शब्दाध्वा अर्थाध्वा इति द्विविधाध्वनोः एकः । स च, कलाध्वा, तत्त्वाध्वा, भुवनाध्वा – इति त्रिधा ।

**एतेषु च कलातत्त्वभुवनाख्यास्त्रयस्तु ते ।।**

**अध्वानोऽर्थस्वरूपाः स्युः .............. ।**

(शि.त.र.,भा–३, ९.३.८५–८६)

(पश्यत – षडध्वा)

## अर्धचन्द्राकृतिः

अनाहतचक्रे विद्यमाना अर्धचन्द्रसदृशी आकृतिः । ॐ नमः शिवाय इति षडक्षरीमन्त्रस्य 'वा' कारस्य प्रतिनिधिरूप ईश्वरश्च तस्याः अधिदेवता ।

**शिकारःकुण्डलाकारो । वाकारश्चार्धचन्द्रकः ।**

**रुद्रश्च कुण्डलाकार अर्धचन्द्रे तथेश्वरः ।**

(शि.त.र.,भा–१, ५.१.२१, २२)

(पश्यत – अनाहतचक्रम्)

## अर्पणम्

भक्तादिस्थलेषु क्रियाशक्त्यादियुक्तेषु नासिकाद्यङ्गेषु स्थितेभ्यः सद्योजातादिस्वरूपकेभ्य आचारादिलिङ्गेभ्यः सद्भक्त्यादिभक्तिभिः चिदादि हस्तैः क्रियमाणं गन्धादिप्रसादनिवेदनम् अर्पणम् । तच्च ।

गन्धार्पणम्, रुच्यर्पणम्, रूपार्पणम्, स्पर्शार्पणम्, शब्दार्पणम्, सङ्कल्पार्पणम् इति षोढा ।

**षड्लिङ्गार्पणसद्भावे विशेषोऽस्ति शृणु प्रिये ।।**

**भक्तस्थले क्रियाशक्तियुते वै नासिकाङ्गगे ।**

**आचारलिङ्गसंज्ञेऽस्मिन् सद्योजातमुखात्मके ।**

**गन्धप्रसादं सद्भक्त्या चित्तहस्तेन चार्पयेत् ।।**

**माहेश्वरस्थले ज्ञानशक्तिके रसनाङ्गगे ।**

**गुरुलिङ्गाभिधे वामदेववक्त्रे विशेषतः ।**

**बुद्धिहस्तेन तु रुचिं निष्ठाभक्त्या समर्पयेत् ।।**

**स्थले प्रसादिसंज्ञेऽस्मिन्निच्छाशक्तिसमन्विते ।**

**दृगङ्गकेऽघोरमुखे शिवलिङ्गाभिधे पुनः ।**

**भक्त्यावधानया रूपमहङ्कारेण चार्पयेत् ।।**

**प्राणलिङ्गस्थले त्वादिशक्तियुक्ते त्वगङ्गके ।**

**चरलिङ्गाभिधे तत्पुरुषवक्त्रे दृढव्रतः ।**

भक्त्यानुभावया मनोहस्तेन स्पर्शमर्पयेत् ।।
शरणस्थले तु परया शक्त्या युक्ते श्रवोऽङ्गगे ।
प्रसादलिङ्गे त्वीशानमुखे शब्दप्रसादकम् ।
आनन्दभक्त्या सुज्ञानहस्तेनैव समर्पयेत् ।।
ऐक्यस्थले तु चिच्छक्तियुते वै मानसाङ्गगे ।
महालिङ्गे, परशिवमुखे सङ्कल्पमर्पयेत ।
सद्भावाभिख्यहस्तेन भक्त्या समरसाख्यया ।।
एवमङ्गं च लिङ्गं च भक्तिं शक्तिं तथा स्थलम् ।
मुखं हस्तं प्रसादं च ज्ञात्वा वै सम्यगर्चयेत् ।
एवमर्पणसद्भावं सर्वदैव समभ्यसेत् ।।

(का.आ.,क्रि.पा., ७.५१–६६)

इन्द्रियादागतं किञ्चित् यत्सुखं तच्छिवार्पितम् ।
तत्प्रसादं तु भोक्तव्यं तदिन्द्रियमुखेन च ।।
येन गन्धरसौ रूपस्पर्शशब्दरतिक्रियाः ।
एतेनैव विजानाति किमत्र परिशिष्यते ।।
एवं लिङ्गार्पितं सर्वं इति यो वेत्ति तत्त्वतः ।
सोऽश्नुते सकलान् भोगान् विपश्चित् ब्रह्मणा सह ।।
लिङ्गदेही सदात्मायं लिङ्गाचारो न लौकिकः ।
सर्वं लिङ्गमयं रूपं लिङ्गेन सममश्नुते ।।
सर्वाङ्गं लिङ्गमेव स्यात् अन्नपानाद्यमर्पितम् ।
प्रसादस्तृप्तिरेव स्यात् सर्वं लिङ्गमयं त्वतः ।।

(अ.सू., ७.६२–६६)

तत्र भक्तस्तावदाचारलिङ्गस्य क्रियाशक्तियुक्तस्य श्रध्दाभक्त्या सुचित्तहस्तेन गन्धपदार्थं धृत्वा नकारमन्त्रमनुस्मरन् घ्राणेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा परिणामी भवति।

माहेश्वरोऽपि गुरुलिङ्गस्य ज्ञानशक्तियुक्तस्य नैष्ठिकभक्त्या सुबुद्धिहस्तेन रसपदार्थं धृत्वा मकारमन्त्रमनुस्मरन् रसनेन्द्रियमुखे समर्प्य तत्प्रसादं स्वीकृत्य परिणामी भवति।

प्रसादी तु शिवलिङ्गस्य इच्छाशक्तियुक्तस्य अवधानभक्त्या निरहङ्कारहस्तेन रूपपदार्थं परिगृह्य शिकारमन्त्रमनुस्मरन् नेत्रेन्द्रिय-मुखे समर्प्य तत्प्रसादभोगी भूत्वा परिणामी भवति।

प्राणलिङ्गी तु औन्मुख्यशक्तियुक्तस्य जङ्गमलिङ्गस्य अनुभवभक्त्या सुमनोहस्तेन स्पर्शपदार्थं धृत्वा वकारमन्त्रमनुस्मरन् त्वगिन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा परिणामी भवति।

शरणस्तु पराशक्तियुक्तस्य प्रसादलिङ्गस्य आनन्दभक्त्या सुज्ञानहस्तेन शब्दपदार्थं धृत्वा यकारमन्त्रमनुस्मरन् श्रोत्रेन्द्रियमुखे समर्प्य तत्प्रसादं भुक्त्वा परिणामी भवति।

ऐक्यस्तु चिच्छक्तियुक्तस्य महालिङ्गस्य समरसभक्त्या सद्भावहस्तेन तृप्तिपदार्थं धृत्वा प्रणवमन्त्रमनुस्मरन् मनोमुखे समर्प्य तत्प्रसादतृप्तस्सन् परिणामी भवति।

(शि.मं., पृ. ४७; अ.सू., ७.२४, ३२-३४)

(पश्यत – समर्पणम्)

## अवगुण्ठनम्

१. भस्मधारणेषु अन्यतमम्। पञ्चब्रह्ममन्त्रेण पञ्चाक्षरमन्त्रेण वा अभिमन्त्रितेन भस्मना सजलेन सर्वाङ्गेषु अनुलेपनम् अवगुण्ठनम्। इदञ्च भस्मस्नानम् इत्युच्यते।

**भस्मना मन्त्रितेनैव सजलेनानुलेपनम् ।**

**अवगुण्ठनमाख्यातम् ...... ।।**

(चं.आ.,क्रि.पा., ६.४२)

(पश्यत – भस्मधारणम्)

२. शिवकवचेन शरीरस्याच्छादनमवगुण्ठनम् ।

**कवचेनाच्छादनं तु यत्तदेवावगुण्ठनम्**

(मकुट., क्रि.पा.,५.७)

## अवधानभक्तिः

अवधार्यते अत्र इत्यवधानम् । मनसः एकाग्रतायाः अवस्थानम् अवधानम् । मनसः एकाग्रताविशिष्टा भक्तिः अवधानभक्तिः । सर्वदा शिवभावस्य जागरणमिति यावत् । इयञ्च षड्विधभक्तिषु अन्यतमा । तत्र च तृतीयेयं प्रसादिस्थलसम्बद्धा, आरोहणक्रमे । अवरोहण क्रमे तु सा चतुर्थी ।

**चतुर्थी परमा भक्तिरवधानात्मिका मता ।**

(अ.सू.,४.२६)

## अवसरा पूजा

महती, गुर्वी, लघ्वी, अवसरा चेति चतुर्विधपूजास्वेकतमा । प्रातः-काले, मध्याह्ने, सायंकाले च भोजनमकुर्वन्नवसरां पूजां कुर्यादिति नियमः । अस्यां पूजायां पद्ममण्डलं विहितम्, तिस्रः वर्तिकाः, अष्टोत्तरशतं जपः, एकः दीपः, नीराजनत्रयम्, (दर्शनम्–अवसरम्–उत्तरम्) इत्यादीनि विहितानि ।

**महतीमुत्तमः कुर्याद् गुर्वीं मध्यम एव च ।**

**लघ्वीमशक्तः कुर्याच्च सायं मध्याह्नकालयोः ।।**

**अभोजने ह्यवसरा नियता प्रातरादिसु ।**

**षट्कालमर्चनां कुर्यात् त्रिकालमथवा बुधः ।।**
**पद्मं त्ववसराख्यायां ................ ।**
**तिस्रस्त्ववसरायां स्युर्वर्तिका विहिताः किल ।**
**लघ्व्यामवसरायां वा दीप एकः समीरितः ।**
**लघ्व्यामवसरायां चाप्यष्टोत्तरशतं जपेत् ।**
**दर्शनं त्ववसराभिरव्यमुत्तराभिख्यमित्यपि ।**
**नीराजनत्रयं प्रोक्तमवसरायां महामते ।।**

(मकुट., क्रि.पा.,३.३-६, ८-१०; का.आ.,क्रि.पा.,४.२७-२९, ३३)

**अस्याः विधिः** - अवसरपूजायां मण्डलं अर्थात् पद्ममण्डलं निर्मायानन्तरं दीपं प्रज्वालयेत् । देशकालसङ्कल्पपूर्वकं कलशं सम्यगर्चयेत् । अष्टोत्तरशतवारं षडक्षरमन्त्रं जपेत् । ''सर्वलिङ्गं स्थापयति '' इति मन्त्रेण हस्तमध्ये इष्टलिङ्गं विन्यस्य ''असौ योऽवसर्पति'' इति मन्त्रेण दर्शनाख्यं नीराजनं कुर्यात् । ''यो वै रुद्रः'' इति मन्त्रेण भस्मलेपनं कुर्यात् । ''एतावानस्यमहिमा'' इति मन्त्रेण पाद्यं समर्पयेत् । ''हंसः शुचिषद्'' इति मन्त्रेणार्घ्यम्, गायत्रीमन्त्रेणाचमनीयं च समर्प्य, ''नमस्सोमाय च'' इति मन्त्रेण इष्टलिङ्गस्य स्नानं च कारयेत् । स्नानजलं शिरसि सम्प्रोक्ष्य इष्टलिङ्गतीर्थं ''ऋतं सत्यं'' इति मन्त्रेण पिबेत् । ''अग्निरिति भस्म'' इत्यादिमन्त्रैरिष्टलिङ्गस्य भस्मलेपनं कुर्यात् । ''गन्धद्वारम्'' इति गन्धम्, ''आकाशात्'' इति मन्त्रेण अक्षतांश्च समर्पयेत् । ''निधनपतये नमः'' इति मन्त्रेण पुष्पाणि, ''त्रियम्बकम्'' इति मन्त्रेण बिल्वपत्रम्, ''यच्च व्योम'' इति मन्त्रेण धूपं च समर्पयेत् । ''न तत्र सूर्यो भाति'' इति मन्त्रेण महानीराजनं कुर्यात् । आचारादिलिङ्गानि मनसि ध्यायन् साधकः नैवेद्यं समर्पयेत् । 'ईशान' इति मन्त्रेण मन्त्रपुष्पं समर्प्य ''सोऽब्रवीद्'' इति मन्त्रेण वस्त्रेणेष्टलिङ्गमाच्छाद्य, ''अणोरणीयान्'' इति मन्त्रेण स्वशरीरे धारयेत् ।

(का.आ.,क्रि.पा.,६.२-१२)

## अवसानविधिः

पुनरावृत्तिरहितानां परमेश्वरोपासकानां जनानां कृते विहितः समाधिविधिरेव अवसानविधिः (देहावसानविधिः)। विधिर्भूमौ गोपनरूपः, न तु दहनरूपः।

**परमेशोपासकानामनावृत्तिमतां नृणाम्।**
**अवसानविधिः कार्यः समाधिविधिसंयुतः।**

(चं.आ., च.पा.,१.१२)

**लिङ्गाङ्गसङ्गिनां वत्स चानावृत्तियुजां सताम्।**
**समाध्युपस्कृतः प्रोक्तो ह्यवसानविधिः परः ।।**

(मकुट. आ.,च.पा.,१.१८)

## अवस्था

अवतिष्ठते अत्र = अस्यां स्थितौ इत्यवस्था स्थितिः। जीवस्य स्थितिविशेषः। इयञ्च पञ्चधा, षोढा इति द्विधा। तद्यथा।

१. **पञ्चधा –**

जाग्रत्, स्वप्नः, सुषुप्तिः, तुरीया, तुरीयातीता इति अवस्थाः पञ्च।

**जाग्रत्स्वप्नसुषुप्त्याख्या तुरीयं तदतीतकम्।**
**अवस्थापञ्चकम् ज्ञेयं सदाचार्योपदेशतः ।।**

(वी.ध.शि., ४, पृ. २५३)

२. **षोढा –**

जाग्रत्, स्वप्नः, सुषुप्तिः, तुरीयम्, तुर्यातीतम्, सहजम् इति अवस्थाः षट्।

**जाग्रत् स्वप्नसुषुप्तिश्च तुरीयञ्च षडेव च।**
**तुर्यातीतं च सहजं न किञ्चिच्चिन्तयेत्ततः ।।**

(शि.यो.प्र., ५–३०)

(आद्यास्तिस्रः अवस्था लौकिका लोकविश्रुताः। तुरीया (तुरीयम्), तुरीयातीता (तुर्यातीतम्), सहजम् इति तिस्र अलौकिका अवस्थाः। तत्र सामान्यतो इतरदार्शनिकास्तुरीयान्तं गृहीत्वा चतस्रः अवस्था अङ्गीकुर्वन्ति। वीरशैवास्तु ताभिः चतुर्भिः अवस्थाभिः सह जीवन्मुक्तस्थितिवाचिकां तुरीयातीतावस्थाम्, इतरे केचन सहजावस्थाञ्च विशेषतः प्रतिपादयन्ति।)

## अवाक्प्रणवः

पञ्चसु प्रणवेषु पञ्चमः अवाक्प्रणवः। वाग्रूपः सः शिवरूपः तुर्यातीतावस्थास्थायी च। स च तैलधारावत् अनवच्छिन्नदीर्घघण्टानिनादवत्।

**अवाग्जं पञ्चमं विद्यात्पञ्चप्रणवभेदकम्।**
**तुर्यातीते ह्यवाग्जं च शिवरूपं विनिक्षिपेत्॥**
**तैलधाराऽनवच्छिन्नदीर्घघण्टानिनादवत्।**
**अवाग्जं प्रणवस्याग्रं यस्तं वेद स वेदवित्॥**

(शि.त.र.,भा–१, १.५.१७,१९,२३)

(पश्यत – प्रणवः)

## अवाग्जः

अवाक्प्रणवः।

**अवाग्जं पञ्चमं विद्यात्पञ्चप्रणवभेदकम्।**

(शि.त.र.,भा–१, १.५.१७,१९)

(पश्यत – अवाक्प्रणवः)

## अवान्तरशैवम्

ये दीक्षिताः शूद्राः तेऽवान्तरशैवाः, सूक्ष्मागमोक्तदिशा।

**अवान्तराख्यशैवास्तु शूद्राश्चेद्दीक्षिता यदि।**

(सू.आ.,क्रि.पा.,७.१३)

सप्तशैवेषु एकः। पूर्वं शूद्रःसन् शिवदीक्षाप्राप्त्यनन्तरं परिगणितः शैवः।

**शूद्रोऽवान्तरशैवस्तु प्रोच्यते .... ।**

(शै.र.,भा-१,२.१६)

अवान्तरशैवैः अनुस्रीयमाणं मतम् अवान्तरशैवम्।

(पश्यत – शैवः)

(शैवरत्नकारे अङ्गीकृतेषु सप्तशैवेषु अनन्तरशैवस्य स्थाने अवान्तरशैवमिति नाम्ना प्रभेदो दर्शितः। पश्यत – शै.र., २.१-३)

## अविद्या = अविद्यातत्त्वम् = अविद्याशक्तिः

षट्त्रिंशत्तत्त्वेषु अन्यतमा। ज्ञातृताशक्तेः किञ्चिज्ज्ञत्वम्। अचेतनम्। कार्येण सह अविद्यमानम्। अविद्याशक्तिभेदेन जीवा बहुविधा भवन्ति। अविद्याकारणात् जगदिदं नानात्मकम्। इयञ्च तनुः, अज्ञानम्, मोहः, माया, अनृतम् इति पञ्चधा।

**ज्ञातृताशक्तिरेव किञ्चिज्ज्ञत्वलक्षणमविद्यातत्त्वम्।**

(शि.मं.,पृ.५३)

**विद्येति चेतनां प्राहुस्तथाऽविद्यामचेतनाम्।**

(क्रि.सा.,भा-१,२.४८)

**अविद्या सह कार्येण नाभूदस्ति भविष्यति।**

(लिं.धा.चं.,पृ.१८०)

**अविद्याशक्तिभेदेन जीवाः बहुविधाः स्मृताः ॥**

(सि.शि., ५.४५)

**तनुरज्ञानमोहौ च माया चानृतमेव च।**
**एवं पञ्चविधाऽविद्या सर्वजीवाश्रिता भवेत् ॥**

(शि.त.र.,भा-१, १.७.१७)

(पश्यत – विद्या)

## अविद्योपाधिकः

अविद्या उपाधिः यस्य सः अविद्योपाधिकः । जीवः । अङ्गम् ।

**सोऽविद्योपाधिको भूत्वा भवत्यङ्गस्वरूपवान् ।।**

(लिं.धा.चं., पृ.१७७-७८)

(पश्यत – अङ्गम्)

## अव्यक्तम्

भोक्ता, भोज्यम्, प्रेरयिता चेति त्रिविधेषु परशिवब्रह्मणः भेदेषु भोज्यम् अव्यक्तम् । व्यक्तं न भवतीति अव्यक्तम्। अत्यन्तं गूढं चैतन्यम् अव्यक्तमित्युच्यते । तच्च भोज्यम् जडम् इत्यपि व्यवह्रियते ।

**भोज्यमव्यक्तमित्युक्तं शुद्धतामसरूपकम् ।**

**अत्यन्तगूढचैतन्यं जडमव्यक्तमुच्यते ।।**

(सि.शि., ५.४३)

## अव्ययानि

न वीयन्ते न व्यपगम्यन्ते इति अव्ययानि। यान्यविनाभावतत्त्वानि विद्यन्ते तानि दशाव्ययानीति कथ्यन्ते । एतानि ज्ञानम्, विरागता, ऐश्वर्यम्, तपः, शक्तिः, क्षमा, धृतिः, स्रष्टृत्वम्, आत्मसम्बोधः, अधिष्ठातृत्वं चेति दश। नैतानि ईश्वराद् गच्छन्तीति भावः ।

**ज्ञानं विरागतैश्वर्यं तपः शक्तिः क्षमा धृतिः ।**

**स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च ।।**

**अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ।।**

(ब्र.पु., ३.४.२.२१८-२१९; कू.पु.,२.२०.३९-४० ; उल्लेखः - लिं.धा.चं.पृ.२३७)

## अशुद्धाध्वा

शुद्धाध्वतत्त्वम्, अशुद्धाध्वतत्त्वम्, मिश्राध्वतत्त्वमिति त्रिविधेषु अध्वतत्त्वेषु अन्यतमं तत्त्वम्। षट्त्रिंशत्तत्त्वान्तर्गतपृथिव्यादिप्रकृत्यन्तानि तत्त्वनि अशुद्धाध्वतत्त्वानि इत्युच्यन्ते।

**अशुद्धाध्वेति भूम्यादिप्रकृत्यन्तस्य नाम हि।**

(शि.त.र.,भा-३, ९.३.२९)

(पश्यत – शुद्धाध्वा। मिश्राध्वा)

## अशुद्धोपाधिः

अशुद्धोपाधिः, शुद्धोपाधिरिति द्विविधयोरुपाध्योरेकः । जीव-व्यवहारकारिणी मोहजनिका अविद्या अशुद्धोपाधिः। अविद्या एव अधोमायेति कथ्यते। सैव जीवस्य बहुविधत्वे कारणम्।

**अशुद्धोपाधिरप्येवं अविद्याऽश्रयमोहिनी।**

**अविद्याशक्तिभेदेन जीवा बहुविधाः स्मृताः।।**

(सि.शि., ५.४५)

(पश्यत – उपाधिः, अविद्या, शुध्दोपाधिः)

## अश्रौतलिङ्गम्

अश्रौतधर्मनिष्ठानां विहितं चिह्नम् अश्रौतलिङ्गम्। तच्च ऊर्ध्व त्रिपुण्ड्रादिकम्, न तु तिर्यक्त्रिपुण्ड्राऽदिकम्।

**अश्रौतधर्मनिष्ठानामश्रौतं लिङ्गमीरितम्।**

**अश्रौतमूर्ध्वपुण्ड्रादि न वै तिर्यक् त्रिपुण्डकम्।।**

(क्रि.सा.,भा-१, ४-२६१, २६३, पृ - १९१)

## अश्रौतशैवम्

श्रौतम् अश्रौतम् इति द्विविधशैवतन्त्रयोरेकम्। शिवसम्बद्धं श्रुतिसाराभिन्नं स्वतन्त्रं शैवतन्त्रम् अश्रौतशैवम्।

**श्रुतिस्मृत्यतिवर्तित्वादश्रौतमिति गीयते ।।**

(शै.र., भा-१, २.२३-२४)

(पश्यत – श्रौतशैवम्)

## अष्टप्रकृतयः

प्रकृतिः, बुद्धिः, अहङ्कारः, शब्दस्पर्शरूपरसगन्धतन्मात्राणि चाष्ट-प्रकृतयः ।

**प्रकृत्यग्रे ततो बुद्धिरहङ्कारो गुणात्मकः ।**
**पञ्चतन्मात्रमित्येते ह्यष्टौ प्रकृतयः स्मृताः ।।**

(क्रि.सा.,भा-१, ३.३१७)

(पश्यत – अष्टबन्धः – २)

## अष्टबन्धः

१. लाक्षा, धूपं (सर्जरसः), सिक्थं, कुरुविन्दं, गुग्गुलं, गैरिकं, गुडं, तैलश्चेति अष्टबन्धः ।

**लाक्षा सर्जरसः सिक्थं कुरुविन्दं च गुग्गुलम् ।**
**गैरिकं गुडतैले च त्वष्टबन्धमिति स्मृतम् ।।**

(वी.स.सं., १०.४६)

२. प्रकृतिः, बुद्धिः, अहङ्कारः, पञ्चतन्मात्राणि चाहत्य अष्टबन्धः ।

**प्रकृत्याद्यष्टबन्धेन निर्मुक्तो मुक्त उच्यते ।**

(क्रि.सा.,भा-१, ३.३१६)

## अष्टमूर्तिः

१. सोमः, सूर्यः, आत्मा, पृथिव्यादिपञ्चभूतान्यपि अष्टमूर्तय :। अष्टमूर्तिभिः विशिष्टः शिवः।

**पृथिव्याद्यष्टमूर्तित्वमीश्वरस्य प्रकीर्तितम्**

(सि.शि.,१०.५१)

२. सादाख्यसमुद्भूतानां द्विपञ्चाशन्मूर्तीनामू मध्ये अन्यतमभूताः ईश्वरस्य अष्टमूर्तयः। भूमिः जलम् अग्नि आकाशः सूर्यः चन्द्रः जीवात्मा चेत्यष्टमूर्तिषु क्रमेण भवः शर्वः रुद्रः भीमः महादेवः उग्रः सोमः महां श्चेत्यष्टरूपाणि शिवस्य।

**भूम्यां भवो जले शर्वश्चाग्नौ रुद्रस्तथैव च।**
**वायौ भीमो महादेवस्त्वाकाशे च दिवाकरे।।**
**उग्रः सोमः शशाङ्के च जीवात्मनि महान् स्मृतः।**
**एताः पशुपतेश्चाष्टमूर्तयः स्युरिति श्रुतिः।।**

(शि.त.र.,भा-१, १.५.५१-५२)

३. सदाशिवादयोऽप्यष्टमूर्तयः।

**सदाशिवो महादेवः कपाली नीललोहितः।**
**स्थाणुः साम्बः शङ्कराख्यो दक्षिणामूर्तिसंज्ञितः।।**
**एतेऽष्टमूर्तयः ......................।**

(शि.त.र.,भा-१,२.७.८९-९०)

## अष्टमूर्तिनिरसनस्थलम्

एकोत्तरशतस्थलेष्वेकम्, माहेश्वरस्थलाश्रितनवविधाङ्गस्थलेष्वेकतमम्। महादेवः शिवः परमात्मा पृथिव्यादेः अष्टमूर्तितः विलक्षणः वर्तते इति चिन्तनं यस्य सोऽष्टमूर्तिनिरासकः। तत्सम्बद्धं स्थलमू अष्टमूर्ति-निरसनस्थलम्।

**पृथिव्याद्यात्मपर्यन्तप्रपञ्चो ह्यष्टधा स्थितः ।**

**तनुरीशस्य चात्मायं सर्वतत्त्वनियामकः ।।**

**सर्वज्ञस्य महेशस्य नैकरूपत्वमिष्यते ।।**

**इति यश्चिन्तयेन्नित्यं पृथिव्यादेरष्टमूर्तितः**

**विलक्षणं महादेवं सोऽष्टमूर्तिनिरासकः ।।**

(सि.शि., १०.५१, ५३-५४)

## अष्टविद्येश्वराः

परमेश्वरम् परितः स्थित्वा तस्य सेवानिरताः अनन्तः, सूक्ष्मशिवः, उत्तमः, एकनेत्रः, एकरुद्रः, त्रिमूर्तिः, श्रीकण्ठः, शिखण्डी इत्येते अष्टविद्येश्वराः।

**आप्ताधिकारिणः केचित् अनन्तप्रमुखा अपि ।**

**अष्टौ विद्येश्वराः देवम् अभजन्त समन्ततः ।।**

**केचिदनन्तसूक्ष्मशिवोत्तमैकनेत्रैकरुद्रत्रिमूर्तिश्रीकण्ठशिखण्डि – संज्ञका अष्टविद्येश्वराः ।**

(सि.शि., ३.४४; तत्त्व.प्र)

(पश्यत – विद्येश्वराः)

## अष्टविधभाक्तिः

शिवभक्तजनवात्सल्यम्, शिवपूजायाः अनुमोदनम्, भक्त्या शिवार्चनम्, शिवार्थे क्रिया, शिवकथास्मरणे भक्तिः, स्वरनेत्राङ्गविकारः, नित्यं शिवस्मरणम्, शिवे प्रपत्तिः, इत्येता अष्टप्रकाराः भक्तयः ।

**भक्तिरष्टविधा ह्येषा सर्वशास्त्रेषु दृश्यते ।**

**तामहं कथयिष्यामि भवपाशविनाशिनीम् ।।**

**मद्भक्तजनवात्सल्यं पूजायाश्चानुमोदनम् ।**

**स्वयमभ्यर्चनं भक्त्या ममार्थे चाङ्गचेष्टनम् ।।**

**मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ।**

**ममानुस्मरणं नित्यं यच्च मामुपजीवति ।।**

(शै.र.,भा-१, ७.६३-६५)

## अष्टशीलानि

लिङ्गाचारादिपञ्चाचारेष्वेकतमस्य सदाचारस्यान्तर्गतत्वेनाष्ट-शीलान्युक्तानि । तानि-अङ्कुरशीलम्, उत्पन्नशीलम्, द्विदलशीलम्, प्रवृद्धशीलम्, सप्रकाण्डशीलम्, सशाखशीलम्, सपुष्पशीलम्, सफलशीलं चेति ।

**सदाचारोऽष्टशीलाढ्यः ............ ।**

(चं.आ.,क्रि.पा.,९.२०-२२)

(पश्यत – सदाचारः)

## अष्टावधानी

अष्टाभिरङ्गैः विशिष्टं योगसाधनम् अष्टावधानम् । आधारः, उड्डियानम्, जालन्धरः (इत्येते त्रिविधाः बन्धाः) पद्मासनाद्यासनानि, प्राकृतप्राणायामसहितः हंसमन्त्रः, नादश्रवणम्, केवलकुम्भकः, ध्यानम्, इत्येतानि अष्टाङ्गानि । तैर्युक्तोऽष्टावधानी ।

**बन्धत्रयेणासनबन्धनेन मन्त्रेण नादश्रवणेन योगी ।**

**भवेत्तथा केवलकुम्भकेन ध्यानेन चित्ताष्टविधावधानी ।।**

(शि.यो.प्र., ३.३३)

## अष्टाङ्गप्रणामः

उरः, शिरः, दृष्टिः, मनः, वाक्, पादौ, करौ, कर्णौ – एतैरष्टाभिः अङ्गैः क्रियमाणः प्रणामः । उपचारेष्वेकः ।

**उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।**

**पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टाङ्ग उच्यते ।।**

(लिं.धा.चं., पृ. ९०-९१)

(पश्यत – उपचारः)

## अष्टाङ्गमार्गः = अष्टाङ्गयोगः ।

यमः, नियमः, आसनम्, प्राणायामः, प्रत्याहारः, धारणम्, ध्यानम्, समाधिः, इत्येतैरष्टभिरङ्गैः सहितः हठयोगस्य मार्गोऽष्टाङ्गमार्ग इत्युच्यते । अयञ्च शिवयोगसाधकानां साधनम् ।

**भवेदष्टाङ्गमार्गेण मुद्राकरणबन्धनैः ।**

**तथा केवलकुम्भे वा हठयोगी वशानिलः ।।**

**अङ्गान्यष्ट हठस्यापि बाह्यान्यश्चान्तराणि च ।**

**यमादिभिरतोऽष्टाङ्गैर्देवपूजां समाचरेत् ।।**

**शिवयोगस्साधकानां साध्यस्तत्साधनं हठः ।**

**तस्मादादौ प्रयोक्तव्यं हठयोगमिमं शृणु ।।**

(शि.यो.प्र.,१.७; २.५,४)

## अष्टात्रिंशत्कलाः

ईशानः, तत्पुरुषः, अघोरः, वामदेवः, सद्योजातश्चेति पञ्चकलाब्रह्म प्रकीर्तिताः । तत्र ईशानस्य पञ्चकलाः, तत्पुरुषस्य चतुष्कलाः, अघोरस्याष्टौ कलाः, वामदेवस्य त्रयोदशकलाः, सद्योजातस्याष्टौ कलाश्चेत्याहत्य अष्टात्रिंशत् कलाः ।

**ईशानस्य पञ्चकलाः**

ईशानः सर्वविद्यानाम् – (१), ईश्वरः सर्वभूतानाम् – (२), ब्रह्माधिपति ब्रह्मणोऽधिपतिः ब्रह्मा – (३), शिवो मे अस्तु – (४),

सदाशिवोम् – (५)। शशिनी कला, अङ्गदाकला, इष्टदाकला, मरीचिकला, ज्वलिनी कला चेत्यत्र क्रमेण पञ्चकलानां नामानि।

**तत्पुरुषस्य चतुष्कलाः**

तत्पुरुषाय विद्महे – (१), महादेवाय धीमहि – (२), तन्नो रुद्रः – (३), प्रचोदयात् – (४)। अत्र शान्तिकला, विद्याकला, प्रतिष्ठाकला, निवृत्तिकला चेति क्रमेण चतुष्कलानां नामानि।

**अघोरस्याष्टौ कलाः**

अघोरेभ्यः – (१), अथ घोरेभ्यः – (२), घोर – (३), घोरतरेभ्यः – (४), सर्वेभ्यः – (५), सर्वशर्वेभ्यः – (६), नमस्ते अस्तु – (७), रुद्र रूपेभ्यः – (८)। तामसीकला, मोहाकला, क्षुधाकला, निद्राकला, मृत्युकला, मायाकला, अभयाकला, जराकला – इति अष्टानां कलानामत्र क्रमेण नामानि।

**वामदेवस्य त्रयोदशकलाः**

वामदेवाय नमः – (१), ज्येष्ठाय नमः श्रेष्ठाय नमः – (२), रुद्राय नमः – (३), कालाय नमः – (४), कल – (५), विकरणाय नमः – (६) बल – (७), विकरणाय नमः – (८), बलाय नमः – (९), प्रमथनाय नमः – (१०), सर्वभूतदमनाय नमः (११), मन – (१२), उन्मनाय नमः (१३)।

राजसीकला, रक्षाकला, रतिकला, पालिनीकला, कामाकला, संयमिनीकला, क्रियाकला, बुद्धिकला, ब्राह्मणीकला, धात्रीकला, भ्रामिणीकला, मोहिनीकला, ग्रामिणीकला चेत्यत्र क्रमेण त्रयोदशकलानां नामानि।

**सद्योजातस्याष्टौ कलाः**

सद्योजातं प्रपद्यामि – (१), सद्योजाताय वै नमो नमः – (२), भवे – (३), अभवे – (४), नातिभवे – (५), भवस्व मां – (६), भव – (७), उद्भवाय नमः – (८)। सिद्धिकला, ऋद्धिकला, द्युतिकला, लक्ष्मीकला,

मेधाकला, शान्तिकला, स्वधाकला, धृतिकला चेत्यत्र क्रमेण अष्टकलानां नामानि ।

**ईशानः पुरुषश्चैव अघोरो वामदेवकः ।**
**सद्योजातश्च पञ्चैते कलाब्रह्म प्रकीर्तिताः ।।**
**ईशानस्य कलाः पञ्च पुरुषस्य चतुष्कलाः ।**
**अघोरस्य कलाश्चाष्टौ वामदेवे त्रयोदश ।।**
**सद्यस्याष्टकला ज्ञेया अष्टत्रिंशत् कला स्मृताः ।**

(वा.शु.आ.,७.१९-२१; २१-३५; शिवा.सौ., पृ.२२०-२२२)

## अष्टावरणानि

भवदोषेभ्यो रक्षकाणि शिवभक्तस्य अष्टकवचानि अष्टावरणानि । तानि च-गुरुः, लिङ्गं, जङ्गमः, प्रसादः, पादोदकम्, विभूतिः, रुद्राक्षः, मन्त्रः इति ।

**गुरुर्लिङ्गं जङ्गमश्च तीर्थं चैव प्रसादकः ।**
**भस्मरुद्राक्षमन्त्राश्चेत्यष्टावरणसंज्ञिताः ।।**
**इमानि शिवभक्तानां भवदोषततेः सदा ।**
**निवारणैककार्याणि ख्यातान्यावरणाख्यया ।।**

(चं.आ.,क्रि.पा.,२.२-३)

(पश्यत - आवरणानि)

## अष्टाविंशतिसंहिताः

अष्टाविंशतिशिवागमाः अष्टाविंशतिसंहिताः । ताश्च - कामिकम्, योगजम्, अचिन्त्यम्, कारणम् , अजितम्, दीप्तम्, सहस्रम्, अंशुमत्, सुप्रभेदम्, विजयम्, निःश्वासम्, स्वायंभुवम्, अनलम्, वीरम्, रौरवम्, मकुटम्, विमलम्, चन्द्रज्ञानम्, बिम्बम्, प्रोद्गीतम्, ललितम्, सिद्धम्, सन्तानम्, शर्वोक्तम्, पारमेश्वरम्, किरणम्, वातुलं च ।

**कामिकं योगजमचिन्त्यं कारणं त्वजितं तथा ।।**

**दीप्तं सूक्ष्मं सहस्रं च अंशुमत् सुप्रभेदकम् ।**

**विजयं चैव निःश्वासं स्वायम्भुवमथानलम् ।।**

**वीरं च रौरवं चैव माकुटं विमलं तथा ।**

**चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा ।।**

**सिद्धं सन्तानशर्वोक्तं पारमेश्वरमेव च ।**

**किरणं वातुलन्त्वेता अष्टाविंशतिसंहिताः ।।**

(शि.त.र.,भा–१, १.१.५९–६२)

(पश्यत – आगमाः)

## अष्टोपचाराः

उपचारभेदाः । पृथिव्यादिपञ्चभूतसम्बद्धैः सद्योजातादिमन्त्रैः पृथिव्यादिपञ्चभूतानाम् ईश्वरार्पणम्, सङ्गीतनर्तनवाद्यैः ईश्वरतोषणञ्च अष्टोपचाराः इत्युच्यन्ते ।

**पार्थिवाद्यैश्च सद्यादिपञ्चमन्त्रैः समर्चनम् ।**

**पञ्चोपचारमित्युक्तं ब्रह्मणा परमेष्ठिना ।।**

**सङ्गीतवाद्यनृत्तैरुपचाराष्टकं मुने ।**

(शि.त.र.,भा–३, ८.७.४४–४५)

## अस्वतन्त्रः

स्वतन्त्रः, अस्वतन्त्रश्चेति द्विविधपदार्थयोरेकः । स च पुनः चेतनः, अचेतनश्च इति द्विविधः ।

**पदार्थो द्विविधः । स्वतन्त्रः अस्वतन्त्रश्चेति ।**

**अस्वतन्त्रश्चेतनोऽचेतनश्चेति द्विविधः ।**

(वी.स.सं.१, पृ.२)

(पश्यत – पदार्थः)

## अहम्

अकारः शिवः, हकारः शक्तिश्च। शिवशक्तिसमायुक्तं ब्रह्मतत्त्वम्। सोपाधिकं चैतन्यतत्त्वम्।

**अकारः शिव आख्यातो हकारः शक्तिरुच्यते।**
**शिवशक्तिमयं ब्रह्म स्थितमेकमहंपदे।।**

(सि.शि. २०.३९)

## अहङ्कारः

षट्त्रिंशत्तत्त्वेषु एकः। मनः, बुद्धिः, अहङ्कारः इति त्रिविधेषु अन्तःकरणेषु अन्यतमम्। स बुद्धिजन्यः सात्त्विकः, राजसः, तामसश्चेति त्रिधा। तत्र सत्त्वगुणप्रधानः सात्त्विकः। स च तैजसः। रजोगुणप्रधानः राजसः। स च वैकारिकः। तमोगुणप्रधानः तामसः। स च भूतादिः।

**एतेषु बुद्धितत्त्वात्स्यादहङ्कारस्त्रिरूपवान्।**
**सात्त्विको राजसश्चेति तामसश्चेति भेदतः।।**
**सत्त्वेनोत्कृष्टभावो यः स तैजस इहोच्यते।।**
**वैकृतो रजसोत्कृष्टो भूतादिस्तमसाधिकः।**

(शि.त.र.,भा-३, १.३.१८-१९,९-७-३९-४१)

**अहङ्कारजन्यतत्त्वानि**

बुद्धिजन्याद् अहङ्कारात् षोडशतत्त्वानाम् उत्पत्तिः। तत्र,

१. तैजसाहङ्कारात् मनसः, पञ्चज्ञानेन्द्रियाणाञ्च उत्पत्तिः।

**तैजसादप्यहङ्काराद्मनोबुद्धीन्द्रियाणि च।**

(शि.त.र.,भा-१, १.७.४१)

२. वैकारिकाहङ्कारात् पञ्चकर्मेन्द्रियाणम् उत्पत्तिः।

**पञ्चकर्मेन्द्रियाणि स्युरहङ्कारात्तु वैकृतात्।**

(शि.त.र., भा-१, १.७.४२)

३. भूतादेरहङ्कारात् पञ्चतन्मात्राणामुत्पत्तिः ।

**अहङ्काराच्च भूतादेर्जाता तन्मात्रसंहतिः ।**

(शि.त.र.,भा-१, १.७.४२)

## अहङ्कारहस्तः

चित्तहस्तः, बुद्धिहस्तः, मनोहस्तः, ज्ञानहस्तः, भावहस्तः, अहङ्कारहस्तः इत्येवंविधेषु हस्तेषु एकः । ऐक्यादीनां स्थलानां सम्बद्धानां षण्णां महालिङ्गादीनाम् अर्चनोपयोगिनः भावहस्तादयः । तत्र प्रसादिस्थलसम्बद्धस्य शिवलिङ्गस्यार्चने उपयुज्यमानः हस्तः अहङ्कारहस्तः ।

**प्रसादिनस्तथा हस्तो ह्यहङ्कार उदीर्यते ।।**

**अनलाङ्गमहं हस्तं शिवलिङ्गार्चने रतम् ।।**

**प्रसादिस्थलमित्याहुराचार्याः शिवशास्त्रिणः ।**

(अ.सू., ६.३३;८.३९)

प्रसादिस्थले इच्छाशक्तिसमन्विते दृष्ट्यङ्गे अघोरमुखे शिवलिङ्गाभिधे अवधानया भक्त्या रूपपदार्थमहङ्कारहस्तेनार्पयेत् ।

**स्थले प्रसादिसंज्ञेऽस्मिन् इच्छाशक्तिसमन्विते ।**

**दृगङ्गकेऽघोरमुखे शिवलिङ्गाभिधे पुनः ।**

**भक्त्याऽवधानया रुपमहङ्कारेण चार्पयेत् ।।**

(का.आ.,क्रि.पा.७.६२)

(पश्यत – हस्ताः)

## अहन्ता

देशकालोत्तीर्णत्वेन परमा शिवाभिन्नशक्तिमयी च अहन्ता । सा एव सप्तदशीया चित्कला ।

**"कला सप्तदशी ज्ञेया स्वान्तर्लीनचराचरा"** इत्यागमोक्तेः, **"प्रत्यवमर्शात्मासौ चितिः स्वरसवाहिनी परावाग् या आद्यन्त-प्रत्याहारवर्णगणा सत्यहन्ता सा"** इति पञ्चाशिखाशास्त्रस्थित्या क्षकारस्य कषयोगरूपत्वेन हकारस्यैवान्त्यत्वात् .... शिवात्मकम् अहं परामर्शरूपचित्क्रियासामरस्यलक्षणहृदयबीजे तादात्म्येन तिष्ठतीत्यर्थः।

**अहन्तां परमां प्राप्य शिवशक्तिमयीं स्थिरां**
**ब्रह्मभूयं गतो योगी विश्वात्मा प्रतिभासते ।।**

(सि.शि.,२०.४०; तत्त्व.प्र.,२०.४१)

## अहिंसादीक्षा

मन्त्रदीक्षान्तर्गतसप्तविधदीक्षास्वेकतमा। आत्मवत् सर्वाणीमानि भूतानीति सम्भाव्य मा हिंसीरित्युपदेशरूपा दीक्षा अहिंसादीक्षा इत्युच्यते।

**इत्यादिश्य ततो दद्यादहिंसासंज्ञितां गुरुः ।।**
**सर्वाणीमानि भूतान्यप्यात्मवत् परिभावयन्।**
**मा हिंसीरित्युपादिश्य लिङ्गनिष्ठामुपादिशेत्।**

(का.आ.,क्रि.पा.,१.११४-११५)

# आ

## आकाशम्

षट्त्रिंशत्तत्त्वेष्वेकम्, पञ्चभूतेषु चान्यतमम्। शब्दगुणकम् आकाशम्। अवकाशदायकत्वाद् आकाशः। व्यापकम्। एकस्यैव तस्य उपाधिभेदेन हृदयाकाशादिव्यवहारः। इदञ्च बुद्धितत्त्वस्य कारणम्। अब्दैकगुणकमाकाशम्।

(शि.मं., पृ.५४)

**अवकाशमशेषाणां भूतानां सम्प्रयच्छति।**

**आकाशः परमेशस्य शासनादेव सर्वगः॥**

(चं.आ.,क्रि.पा.,१.२२)

**इन्द्रियाणां तु सर्वेषामवकाशप्रदत्वतः।**

**हृदयाकाश इत्येतत् प्रोच्यते मुनिसत्तमैः॥**

(अ. सू., ६.१८)

**आकाशे शब्द एवैको न वर्णात्मा प्रतिध्वनिः।**

**द्वाविंशतेः परस्यास्य बुद्धितत्त्वस्य कारणम्॥**

(शि.त.र.,भा-३,९.३.२५)

(पश्यत - आकाशतत्त्वपञ्चकम्, पञ्चीकरणम्)

## आकाशचक्रम्

चक्रभेदः। आकाशस्थितमेतत् नवमम्। तच्च नादबिन्दुकलाख्य-वर्णत्रयाणां कूटेनेकरूपम्, महामेरोरुपरि दिव्यलिङ्गपीठस्वरूपं च। तत्र स्थितस्य

षोडषदलकमलस्य मध्ये निर्विकल्पानन्ददात्रीं सकलव्यापारविमुखत्वेन परमशून्यामूर्ध्वशक्तिं ध्यायेत्।

**आकाशचक्रं नवमं प्रशस्तं त्रिकूटकं पूर्णगिरेश्च पीठम्।**

**तत्रोर्ध्वशक्तिं सुखदां सुशून्यां ध्यायेद्द्वयाष्टारसरोजमध्ये ।।**

(शि.यो.प्र., ३.१६)

(पश्यत – चक्राणि)

## आकाशतत्त्वपञ्चकम्

आकाशतत्त्वसम्बद्धानि पञ्चतत्त्वानि। तानि च षट्त्रिंशत्तत्त्वेषु अन्तर्गतानि। आकाशतत्त्वे पृथिवीजलतेजोवायुतत्त्वमेलनाज्जातानि, पृथिवीजलतेजोवायुतत्त्वेषु आकाशतत्त्वमेलनाज्जातानीति आकाशतत्त्वपञ्चकम् द्विधा।

१. आकाशे पृथिव्यादिचतुर्णां तत्त्वानां मेलनात् जातानि ज्ञानं, मनः, बुद्धिः, चित्तम्, अहङ्कारश्च इति पञ्चतत्त्वानि।

**व्योम्नि व्योमांशतो ज्ञानं व्योम्नि वाय्वंशतो मनः ।।**

**व्योम्नि तेजोंऽशतो बुद्धिर्व्योम्नि चित्तं जलांशतः ।**

**व्योम्नि क्षमांशादहङ्कार इत्याकाशपञ्चकम् ।।**

(शि.त.र.,भा–१,१.७.४८–४९)

२. पृथिव्यादि चतुर्षु तत्त्वेष्वाकाशतत्त्वमेलनाज्जातानि ज्ञानं, समानवायुः, श्रोत्रं, शब्दः, वाक् इति पञ्चतत्त्वानि।

**ज्ञातृत्वमन्तरिक्षं च समानो वायुरेव च ।**

**श्रोत्रमग्निर्ध्वनिर्वारिवाग्भूःखे तत्त्वपञ्चकम् ।।**

(शि.यो.प्र., ४.२०)

(पश्यत – पञ्चीकरणम्)

## आगन्तुकशिष्यः

वंश्यः आगन्तुकश्च इति द्विविधशिष्ययोर्मध्ये एकः। अवंश्यः, विभिन्नवंशसम्बद्धः शिष्यः आगन्तुकशिष्य इत्यर्थात् ज्ञायते।

**वंश्यः आगन्तुकश्चेति द्विविधः शिष्य उच्यते।**

(वी.स.सं.,१४.२)

(पश्यत – शिष्यः)

## आगमाः

इदमन्वर्थं नाम। अत्रत्यम् एकैकमप्यक्षरम् एकैकमर्थं प्रतिबोधयति। तद्यथा – आ = आगत्य (ईश्वरस्य सद्योजातादिमुखान्निःसृत्य), ग = गताः (गिरिजायाः मुखङ्गताः), म = मताः (वासुदेवेन विज्ञाताः) इत्यागमाः। तन्त्रमिति आगमानाम् अपरं नामधेयम्। शैवागमाः, पाशुपतागमः, सोमागमः, लाकुलागमः, इत्येवम् आगमाः अनेकधा। क्रियापादः, योगपादः, चर्यापादः, ज्ञानपादः इत्येवम् आगमानां चत्वारः पादाः। पशुः, पतिः, पाशः, माया, दीक्षा, कुण्डलिनी इति षट्पदार्था आगमेषु प्राधान्येन प्रतिपादिताः।

**त्रिपदार्थं चतुष्पादं प्राह तन्त्रं जगत्पतिः।**

**आगताः शिव वक्त्रेभ्यो गताश्च गिरिजामुखम्।**

**मताश्च वासुदेवेन यत्तदागमनामकाः।।**

**क्रियापादो योगपादश्चर्याज्ञानाख्यपादकौ।**

**नानाविधेष्वागमेषु पादश्चत्वार ईरिताः।।**

**पतिः कुण्डलिनी माया पशुः पाशस्ततः परम्।।**

**दीक्षेति च पदार्थाः षडागमेषु प्रकीर्तिताः।**

(शि.त.र.,भा–१, १.१.७७; १.२.३५–३६, ४१–४२)

**आगमानां विभिन्नवर्गीकरणम् –**

आगमाः अनेके। शैवपाशुपतादिभेदेन आगमा बहुधा प्रोक्ताः।

**आगमाः बहुधा प्रोक्ताः समस्तार्थावबोधकाः।**

(सू.आ.,क्रि.पा., १.१२)

**आगमाः बहुधा प्रोक्ताः शिवेन परमात्मना।**

**शैवं पाशुपतं सोमं लाकुलश्चेति भेदतः।।**

(सि.शि., ५.९)

**द्विधा –**

वेदविरोधिनः वेदाविरोधिनश्चेति द्विधा। तौ एव वैदिकारोवैदिकभेदौ इति वक्तुं शक्यते।

**आगमाः द्विविधाः ज्ञेयाः वेदानामविरोधिनः।।**

**विरोधिनश्च ............................।**

**यदि वेदोक्तमेव स्याद्वैदिकं परमार्थतः।**

**अवैदिकत्वात् सर्वेषामननुष्ठेयता भवेत्।**

(क्रि.सा. भा–१, उपोद्घातम् १४–१५,१७,१८, पृ.३)

**चतुर्धा –**

शैवः, पाशुपतः, सोमः, लाकुल इति चतुर्धा।

**शैवं पाशुपतं सोमं लाकुलं चेति भेदतः।।**

(सि.शि., ५.९)

**अष्टाविंशतिधा –**

(पश्यत – अष्टाविंशति संहिताः)

## आग्नेयस्नानम्

वारुणम्, मानसम्, मान्त्रम् इत्येवं विविधप्रकारेषु स्नानेषु एकम्। भस्मना क्रियमाणं स्नानम् आग्नेयस्नानम्। भस्म च कल्पम्, अनुकल्पम्, उपकल्पम्, अकल्पम् इति चतुर्विधम्। अत एव आग्नेयस्नानमपि

कल्पस्नानम्, अनुकल्पस्नानम्, उपकल्पस्नानम्, अकल्पस्नानम् इति चतुर्विधम् । अग्नेः सर्वभस्मीकरणत्वमिव भस्मस्नानस्य सर्वमलापहारकत्वम् । तस्मात्तस्य आग्नेयमिति व्यवहारः । पापविमोचनम्, शिवलोकप्राप्तिश्च अस्य स्नानस्य फलम् । इदञ्च यतिभिः अनुष्ठीयते ।

**भस्मना विहितं स्नानमिदमाग्नेयमुत्तमम् ।**

(सि.शि. ७.२३)

**भुक्तिमुक्तिदमाग्नेयं स्नानं शुद्धेन भस्मना ।**
**स्नानं चतुर्विधं तत्र भवेत्कल्पादिभेदतः ।।**
**कल्पं चैवानुकल्पञ्च उपकल्पमकल्पकम् ।**

(शि.त.र.,भा-३, ८.५.३८-३९)

**अग्नेः सर्वभस्मकत्वेन एतदाग्नेयस्नानं सकलमलापहम् इति मुख्यमित्यर्थः ।**

(सि.शि.,तत्त्व.प्र., ७.२३)

**तस्मादेतच्छिवस्नानमाग्नेयं यस्समाचरेत् ।**
**भवेत्पापाच्च निर्मुक्तः शिवलोके महीयते ।।**

(शि.त.र.,भा-३, ८.५.६७)

**आग्नेयं भस्मना स्नानं यतिभिस्तु विधीयते ।**

(सि.शि. ७.२५-२७)

## आचमनम्

दशोपचारेष्वेकः उपचारः । धार्मिकविधिषु शुध्यर्थं मन्त्रपूर्वकं क्रियमाण उपचारः । दक्षिणहस्तपुटे जलं गृहीत्वा ओष्ठाभ्याम् उपस्पृश्याऽभिषेकपात्रे विसर्जनं तस्य क्रमः।

**आचामेदाचमनतः शम्भुः सन्तुष्टतामियात् ।**

(क्रि.सा.,भा-३, पृ.७)

(पश्यत – उपचारः)

## आचारः

सम्यक्ज्ञानस्य साधनभूतम् आचरणम् आचारः। आचारः एव सर्वेषां जन्तूनां सर्वस्वम्। आचारः सर्वेषा भूषणम् । आचाररहितो मनुष्यः निन्दनीयो भवति । अयञ्चाचारः बहुविधः। तत्र प्राधान्येन सविशेषः निर्विशेषः इति द्विधा। सविशेषस्तु लिङ्गाचारः, सदाचारः, भृत्याचारः, शिवाचारः, गणाचार इति पञ्चधा। निर्विशेषेपि नित्याचारः, नैमित्तिकाचारः, काम्याचारः, नित्यनैमित्तिकाचारः, नित्यकाम्याचार इति पञ्चधैव। तत्र लिङ्गाचारादयः पञ्च वीरशैवैरङ्गीकृताः प्रसिद्धाः पञ्चाचाराः।

**आचार एव सर्वेषामलङ्काराय कल्प्यते ।**
**आचारहीनः पुरुषो लोके भवति निन्दितः ।।**

(सि.शि.१६.१३)

**आचारः परमो धर्मः आचारः परमं धनम् ।**
**आचारः परमा विद्या आचारः परमा गतिः ।।**
**लिङ्गाचारः सदाचारो भृत्याचारस्तथैव च ।**
**शिवाचारो गणाचारः सर्वे श्रुतिषु दुर्लभाः ।।**
**पञ्चाचारा महात्मानो लिङ्गसारेषु सज्जनाः ।**
**सर्वलोकेषु सूक्ष्मायां सुलभो गुणमुख्यकृत् ।।**

(शै.र.,भा-२, १७.१११-११४, १४२-१४३)

**लिङ्गाचारः सदाचारः शिवाचारस्तथैवे च ।**
**भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः ।।**

(चं.आ., क्रि.पा.,१.४)

**सदाचारा बहुविधाः प्रमाणैरुपवर्णिताः ।**
**संक्षेपतः पञ्चविधाः आचाराः निर्विशेषकाः ।।**
**नित्यं नैमित्तिकं काम्यं नित्यनैमित्तिकं तथा ।**

**नित्यकाम्यमिति प्राहुः पञ्चधाशास्त्रकोविदाः ।।**

**सविशेषाः सदाचाराः आगमैरूपपादिताः ।**

**पञ्चाचाराः वीरशैवैः सादरं स्वीकृताःसदा ।।**

(क्रि.सा.भा-२.,५.९-१०)

(पश्यत – पञ्चाचाराः)

## आचारलिङ्गम्

आचारलिङ्गम्, गुरुलिङ्गम्, शिवलिङ्गम्, चरलिङ्गम्, प्रसादलिङ्गम्, महालिङ्गम् इति षड्विधेषु लिङ्गेषु एकम्। इदञ्च इष्टलिङ्गस्य प्रभेदभूतयोः गुरुलिङ्गम्, आचारलिङ्गम् इति द्वयोर्लिङ्गयोरन्यतरम्। एतच्च ईश्वरस्य सद्योजातमुखस्वरूपम्। आचारलिङ्गस्य स्थलं सदाचारः नियताचारः गणाचारश्चेति त्रिधा।

**इष्टन्तु गुरुलिङ्गाख्यमाचाराख्यं द्वयं भवेत् ।।**

**आचारलिङ्गमाख्यातं सद्योजातमुखात्मकम् ।**

(चं.आ.,क्रि.पा., ३.२७-२८)

**स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।**

**सदाचारस्तु नियतो गणाचारस्तथापरः ।।**

(सू.आ., क्रि.पा., ८.६)

## आचारलिङ्गपूजकः (आचारपूजकः)

शिवाचारपरवान् लिङ्गपूजैकतत्परः आचारलिङ्गपूजकः। अयञ्च, आचारलिङ्गमोही, आचारलिङ्गप्रसादी, आचारलिङ्गभक्तः, आचारलिङ्गपूजकः, आचारलिङ्गवीरः, आचारलिङ्गप्राणी इत्येवं षड्विधेषु आचारलिङ्गभक्तेषु अन्यतमः।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**

**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

**अन्यपूजां परित्यज्य लिङ्गपूजैकतत्परः ।**

**शिवाचारपरो यस्तु स स्यादाचारपूजकः ।।**

(सू.आ.,क्रि.पा., ८.३७, ४०; शि.त.र.,भा-३, १.१.५१)

(पश्यत – शिवाचारः, आचारलिङ्गभक्तः)

## आचारलिङ्गप्रसादी

शुचित्वाशुचित्वग्राह्याग्राह्यादिभेदरहितः पूर्णज्ञः आचारलिङ्गप्रसादी। आचारप्रसादकः इत्यापि अस्य व्यवहारः। अयश्च आचारलिङ्गमोही इत्येवमादिषु षड्विधेषु आचारलिङ्गभक्तेषु अन्यतमः ।

**शुचित्वमशुचित्वं चेत्यादिसन्देहवर्जितः ।**

**ग्राह्याग्राह्यादिरहितः स्यादाचारप्रसादकः ।।**

(सू.आ.,क्रि.पा.,८.४२; शि.त.र.,भा-३, १.१.५३)

(पश्यत – आचारलिङ्गभक्तः)

## आचारलिङ्गप्राणी

स्वयं शिवभक्तिनिन्दारहितः सन् परकृतनिन्दाश्रवणेनापि विदूरः आचारलिङ्गप्राणी। अयश्च आचारलिङ्गमोहीत्यादिषु षड् विधेषु आचारलिङ्गभक्तस्य प्रभेदेषु एकः ।

**परैः कृतामीशनिन्दां शृणुयान्न कुत्रचित् ।**

**इति योऽस्ति स आचारलिङ्गप्रणीति कथ्यते ।।**

(सू.आ.,क्रि.पा.,८.४३; शि.त.र,भा-३, १.१.५४)

(पश्यत – आचारलिङ्गभक्तः)

## आचारलिङ्गभक्तः

आचारलिङ्गस्य भक्तः आचारलिङ्गभक्तः। स च आचारलिङ्गमोही, आचारलिङ्गप्रसादी, आचारलिङ्गभक्तः, आचारलिङ्गपूजकः, आचारलिङ्गवीरः, आचारलिङ्गप्राणी, इति षोढा। तथा च आचारलिङ्गभक्तः आचारलिङ्गभक्तस्यैव

षड्विधप्रभेदेषु अन्यतमोऽपि। तत्र विरुद्धाचारवर्जितः सन् शिवाचारनिरतः आचारलिङ्गभक्तः। मोहवान् आचारलिङ्गप्रसादी। शिवलिङ्गपूजैकतत्परः शिवाचारवान् आचारलिङ्गपूजकः। प्राणापायेऽपि शिवाचारसंरक्षकः आचारलिङ्गवीरः। परकृतभक्तिनिन्दाश्रवणात् विदूरः आचारलिङ्गप्राणी।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान्।**
**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः।**
**एवमाचारलिङ्गेऽपि षट्भेदास्सम्भवन्ति हि।**
**पूर्वाचारं परित्यज्य शिवाचारं समाश्रितः।**
**आचारलिङ्गभक्तः स्याद्विरुद्धाचारवर्जितः॥**

(सू.आ.,क्रि.पा.,८.३७,३९; शि.त.र.,भा-३, ९.९.४.५०)

## आचारलिङ्गमोही

षड्विधेष्वाचालिङ्गभक्तेष्वन्यतमः। कलत्रादौ अन्याचारेषु च मोहरहितः शिवाचारमोहवान् आचारलिङ्गमोही।

**मोहं त्यजेत्कलत्रादौ मोही ह्याचार एव हि॥**
**शिवाचारविरुद्धांश्च त्यजेदपि सुतादिकान्।**
**स एवाचारमोही स्यादन्याचारविवर्जितः॥**

(सू.आ.,क्रि.पा.,८.३८; शि.त.र.,भ-३,९.९.४८-४९)

(पश्यत - आचारलिङ्गभक्तः)

## आचारलिङ्गवीरः

षड्विधेष्वाचारलिङ्गभक्तेष्वन्यतमः। प्राणत्यागप्रसङ्गे समापतितेऽपि स्वस्य आचारस्य अपरित्यागी आचारलिङ्गवीरः।

**अपि प्राणात्यये देवि! स्वाचारं न परित्यजेत्।**
**आचारलिङ्गवीरः स्यादाचारैकपरायणः॥**

(सू.आ.,क्रि.पा., ८.४१; शि.त.र.,भा-३, ९-९-५२, पृ-१९९)

(पश्यत - आचारलिङ्गभक्तः)

## आचारलिङ्गस्थलम्

अस्य भक्तस्थलमिति प्रसिद्धं नाम। लिङ्गस्थलस्य षट्सु स्थलेषु इदं प्रथमं स्थलम्। कैवल्यसारकाराणां मते स्थलमिदं "गुरुस्थलम् लिङ्गस्थलम्, जङ्गमस्थलम्" इति त्रिविधम्। तच्च पुनः एकैकमपि त्रिविधं भवतीति आहत्य नवधा। तत्र दीक्षागुरुस्थलम्, शिक्षागुरुस्थलम्, ज्ञानगुरुस्थलम् इति त्रीणि गुरुस्थलस्य प्रभेदभूतानि। क्रियालिङ्गस्थलम्, भावलिङ्गस्थलम्, ज्ञानलिङ्गस्थलं चेति त्रीणि लिङ्गस्थलस्य प्रभेदानि। स्वयस्थलम्, चरस्थलम्, परस्थलम् इति त्रीणि जङ्गमस्थलस्य अङ्गभूतानि। इमानि च नवस्थलानि एकोत्तरशतस्थलेषु अन्तर्भूतानि।

**भक्तोपास्यमानाचारलिङ्गमेव गुरुलिङ्गजङ्गमरूपेण त्रिविधं भवति। पुनस्तदेव प्रत्येकं प्रत्येकं त्रिविधं त्रिविधं भवति ।।**

(कै.सा.,उ.भा.,२.१; वि.सं.,३७०)

(पश्यत – भक्तस्थलम्)

## आचारसम्पत्तिस्थलम्

ऐक्यस्थलाश्रितेषु चतुर्षु अङ्गस्थलप्रभेदेषु एकम्। एकोत्तरशतस्थलेषु च अन्यतमम्। शिवेनैकभावनया शिवत्वं प्राप्तवान् शिवलिङ्गैक्यः जीवन्मुक्तः सन् देहवानपि सूतकादिभिः स्वकीयैराचारैः न लिप्यते। कुत इति चेत्– लिङ्गैकनिष्ठचित्तवृत्तीनां मनस्विनां शिवाद्वैतपरिज्ञाने स्थिरीभूते सति कर्मणा किं प्रयोजनं कृतेनाकृतेन वा, न किञ्चित्प्रयोजनमित्यर्थः।

**ऐक्यस्थलमिदं प्रोक्तं चतुर्धा मुनिपुङ्गव।**
**ऐक्यमाचारसम्पत्तिरेकभाजनमेव च ।।**
**शिवैकभावनापन्नशिवत्वो देहवानपि।**
**देशिको हि न लिप्येत स्वाचारैः सूतकादिभिः ।।**

**शिवाद्वैतपरिज्ञाने स्थिरे सति मनस्विनाम् ।**

**कर्मणा किंनु भाव्यं स्यादकृतेन कृतेन वा ।।**

(सि.शि.,१४.३, १६-१७)

## आचार्यः

तत्त्वज्ञानी, सदाचारसम्पन्नः, शास्त्रवित्, शास्त्राचारसम्पन्नः, तत्प्रेरकश्च । अयमेव गुरुः ।

**आचिनोति च शास्त्रार्थान् आचारे स्थापयत्यपि ।**

**स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ।।**

**संसारतिमिरोन्माथिशरच्चन्द्रमरीचयः ।**

**वाचो यस्य प्रवर्तन्ते तमाचार्यं प्रचक्षते ।।**

(सि.शि., १५.९, १४)

(पश्यत – गुरुः)

## आज्ञाचक्रम्

योगसम्बद्धेषु चक्रेषु एकम् । भ्रूमध्यस्थमिदं त्रिदलात्मकम्, सुषुम्नायाः मूलस्थलञ्च। अस्य च त्रयाणां दलानां फलन्तु सत्त्वरजस्तमसाम् आविर्भावः । वाक्सिद्धिदे अस्मिन् चक्रे दीपशिखाकारं ज्ञानलोचनं ध्यायेत् ।

**भ्रूमध्ये त्रिदलं चक्रमाज्ञासंज्ञं फलानि तु ।**

**आविर्भावास्सत्वरजस्तमसां क्रमशो मताः ।।**

(शि.त.र.,भा-३, ९.१.१४५)

**भ्रूचक्रं सप्तमं त्वेकनालकन्दं सुवाक्प्रदम् ।**

**ध्यायेद्दीपशिखाकारं तन्मध्ये ज्ञानलोचनम् ।।**

(शि.यो.प्र., ३.३-१४, पृ-७६)

(पश्यत – चक्रम्, सप्तचक्राणि, षट्चक्राणि)

## आज्ञादीक्षा

सप्तविधासु क्रियादीक्षासु एका। सदाचारम् अपरित्यज्य प्रवर्तस्व इत्येवंविधा गुरोराज्ञा एव आज्ञादीक्षा।

**परित्यज्य सदाचारं मा प्रवर्तस्व सर्वदा।**

**इत्याज्ञादीक्षयादिश्य ततस्त्वेवं वदेत् गुरुः ।।**

(का.आ., क्रि.पा., १.४४; चं.आ.,क्रि.पा., ९.१२)

(पश्यत – दीक्षा, क्रियादीक्षा)

## आणवम् = आणवमलम्

आणवम्, मायिकम्, कार्मिकम् इति प्रसिद्धेषु त्रिविधेषु मलेषु एकम्। परशिवस्येच्छाशक्तिसङ्कोच एव आणवमलः। अस्य आवरणेन जीवः स्वकीयं विभुत्वं विस्मृत्य "अपूर्णोऽस्मि" इति स्वात्मानमणुत्वेन भावयति। इदञ्च कारणशरीरगतम्। एतच्च सिद्धाणवम्, त्याज्याणवम्, मलाणवम्, गुणाणवम्, योगाणवम् इति पञ्चधा। तत्र आत्मनि अनात्मताबुद्धिः सिद्धाणवम्। अनात्मनि आत्मताबुद्धिः त्याज्याणवम्। जीवे आत्मताबुद्धिः मलाणवम्। अविद्यायाम् आत्मताबुद्धिः गुणाणवम्। जाग्रदवस्थायां प्राणादिदशवायवः अविद्याशबलं (अविद्याप्रपञ्चम्) सततं यदुद्बोधयन्ति तच्च योगाणवम् इत्युच्यते।

**जायेत चित्रिमं लोके आणवं पञ्चधा भवेत्।**

**सिद्धाणवं त्याज्यमानं मलाणवं गुणाणवम् ।।**

**योगणवमिति प्राहुः प्रमथाः तत्त्वपारगाः।**

**आहुः सर्वगुणोपेतं पञ्चाणवमितीरितम् ।।**

**आत्मन्यनात्मताबुद्धिः सिद्धाणवमिति स्मृतम्।**

**अनात्मन्यात्मताबुद्धिः त्याज्याणवमिति स्मृतम् ।।**

**जीवे आत्मवताबुद्धिः मलाणवमितीरितम्।**

**अविद्यायां तथा बुद्धिः आत्मसाधनसाधिता ।।**

**गुणाणवमिति ख्याता सा तन्त्रप्रकृतिः स्मृता ।**

**अविद्याशबलं जाग्रे प्राणादिदशवायवः ।**

**उद्बोधयन्ति सततं योगाणवमिति स्मृतम् ।**

(वीर.आ.उ., १.१५-२१)

**''स्वतन्त्रप्रकाशान्महेश्वराद्विच्छिन्नत्वेन, मायाक्रान्तत्वात् 'नाहमीश्वरः' इति आत्मन्यनात्मताज्ञप्तिराविर्भवति ; तथैव अनात्मनि देहादावात्मताज्ञप्तिश्च । एतद्द्वयमाणवम्'' ।**

(शि.मं., पृ.५३)

(पश्यत – मलम्, सिद्धाणवाद्याणवमलप्रभेदाश्च प्रत्येकतया)

## आत्मनिवेदनम्

नवविधभक्तिष्वन्यतमा। परमात्मनि गुरौ च स्वात्मसमर्पणम् आत्मनिवेदनम् ।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।**

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**

(सि.शि., ९.२)

(पश्यत – नवविधभक्तिः)

## आत्मप्रासादः

पञ्चप्रासादमन्त्रेष्वेकतमः ।

**आदिप्रासाद इत्युक्तः आत्मप्रासाद उच्यते ।।**

(वा.शु.आ.,५.४५)

(पश्यत – प्रासादमन्त्रः)

## आत्मभोगः

स्वकीयभोगः । शरीरहितम्, मनस्तृप्तिः, आत्मतृप्तिश्चेति त्रयमपि आहत्य आत्मभोग इति कथ्यते । वीरशैवे यद्यद्द्रव्यं स्वकीयशरीरादि सुखार्थं प्राप्यते तत्सर्वमपि शिवाय समर्प्य अनुभोक्तव्यम् । तेनात्मविशुद्धिः जायते ।

**यद्यदात्महितं वस्तु तत्तत्सर्वं शिवार्पितम् ।**

(शि.र., उल्लेखः – सि.शि.,तत्त्व.प्र.,११.११)

**आत्मभोगाय नियतं यद्यद् द्रव्यं समाहितम् ।**
**तत्तत् समर्प्य देवाय भुञ्जीतात्मविशुद्धये ।।**

(सि.शि.,११.११)

## आत्मलिङ्गम्

परतत्त्वम् । परशिवः । आत्मलिङ्गेष्टलिङ्गयोः संयोगात् मुमुक्षोः शरीरं शिवमयं भवति । **'आत्मलिङ्गाय नमः'** इत्युक्तदिशा कारणशरीराश्रितं भावलिङ्गमेव तत् ।

(म.ना.उ., १४.१०)

**योगाग्निप्लुष्टकायस्य त्वात्मलिङ्गेष्टलिङ्गयोः ।**
**संयोगात्मोक्षकाले तु मुमुक्षोः सा तनुः शिवा ।।**

(लिं.धा.चं., पृ.२६५)

**आत्मलिङ्गाय नम इति कारणशरीराधिष्ठितभावलिङ्गस्येति ।**

(लिं.धा.चं., पृ.७६–७७)

(पश्यत – लिङ्गम्)

## आत्मविद्या

मुक्तिसाधकम् आत्मतत्त्वविज्ञानम् । इदश्च अत्याश्रमिभिः सम्पाद्यते । आत्मविद्या तपसः मूलम् । तच्च ब्रह्मज्ञानरहस्यात्मकम् । यज्ञादिभिः

सम्पादितैः पुण्यैः योगसिद्धिः प्राप्यते। योगेन ज्ञानं, ज्ञानान् मुक्तिः। इदं च अत्याश्रमिभ्य उपदेष्टव्यम्। न त्वन्येभ्यः।

**आत्मविद्या तपोमूलं तद्ब्रह्मोपनिषत्परम्।**
**यज्ञदानादिभिः पुण्यैर्योगसिद्धिर्भविष्यति ।।**
**योगात्संजायते ज्ञानं ज्ञानान्मुक्तिर्न कर्मणा।**
**अत्याश्रमिभ्यः शान्तेभ्यो वक्तव्यं ब्रह्मवेदनम्।**
**नाप्रशान्ताय दातव्यं नापुत्राय कदाचन ।।**

(वे.सा.वी.चिं.,उ.खं.,५.६४-६५)

## आत्मस्थलम्

प्राणलिङ्गिस्थलाश्रितेषु नवसु लिङ्गस्थलेषु एकम्। एकोत्तरशतस्थलेषु च अन्यतमम्। गुरूपदेशद्वारा जीवभावं विहाय शिवभावेन स्थितिः आत्मस्थलमित्युच्यते।

**आदावात्मस्थलं प्रोक्तमन्तरात्मस्थलन्ततः।**
**जीवभावं परित्यज्य यदा तत्त्वं विभाव्यते।**
**गुरोश्च बोधयोगेन तदाऽत्मायं प्रकीर्तितः ।।**

(सि.शि.,१८.२, ५)

(पश्यत – स्थलम्)

## आत्मा

१. परमात्मा। सकलचराचरव्याप्तं शिवतत्त्वम्। लिङ्गतत्त्वम्। अनिर्वाच्यः अयं जननादिरहितः ज्ञानादिसाधनगम्यश्च।

छान्दोग्योपनिषदि –

**एष आत्मा अपहतपाप्मा विरजो विमृत्युः।**
**विशोकोऽविजिगुप्सोऽपिपासुः सत्यकामः सत्यसङ्कल्पः ।।**

(कै.सा.,वि.सं.५८४)

**सोऽयमात्मा महादेवो लिङ्गरूपो महेश्वरः ।**

(लिं.धा.चं. पृ.१७७)

**अवाच्यात्मस्वरूपाय शिवभावप्रदायिने ।**

(अ.सू., ८.९१)

**सत्येन लभ्यस्तपसा ह्येष आत्मा ।**

**सम्यगज्ञानेन ब्रह्मचर्येण नित्यम् ।।**

(मुं.उ. ३-१-५)

२. जीवात्मा । देहान्तर्भाविनिराकारतत्त्वम् । चेतनः । प्राणः । सकलजीवराशीनाम् अन्तर्भूतः शिवांशः । जीवः । कर्मफलभोगी ।

**जीवभावं परित्यज्य यदा तत्त्वं विभाव्यते ।**

**गुरोश्च बोधयोगेन तदात्मायं प्रकीर्तितः ।।**

**वालाग्रशतभागेन सदृशो हृदयस्थितः ।**

**अश्नन् कर्मफलं सर्वमात्मा स्फुरति दीपवत् ।।**

(सि.शि., १८.५-६)

## आत्माङ्गम्

आत्माङ्गम्, व्योमाङ्गम्, अनिलाङ्गम्, अनलाङ्गम्, जलाङ्गम्, भूम्यङ्गं चेति षडङ्गानि । आत्माङ्गं नाम ऐक्यस्थलम् यस्मिन् भावहस्तेन महालिङ्गार्चनं क्रियते ।

**ऐक्यस्य भावो हस्तः स्यादेवमेवोत्तरोत्तरम् ।**

**आत्माङ्गं भावहस्तं स्यान्महालिङ्गार्चने रतम् ।।**

**ऐक्यस्थलमिति प्राहुः साक्षाद्वेदान्तपारगाः ।**

(अ.सू.,६.३५-३६)

## आदित्याः

अदितेः अपत्यानि पुमांसः आदित्याः । शिवशासनादेव एतेषां प्रवर्तनम् ।

**धाता मित्रोऽर्यमा रुद्रः वरुणः सूर्य एव च ।**

**भगो विवस्वान् पूषा च सविता दशमः स्मृतः ।।**

**एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ।।**

(श.कौ.,पृ.३०९, इत्यत्र उद्धृतः श्लोकः)

**आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा ।**

**खेचरा ऋषयः सिद्धाः भोगिनो मनुजा मृगाः ।।**

(चं.आ., क्रि.पा., १.३८)

## आदिप्रासादमन्त्रः

पञ्चप्रासादमन्त्रेष्वेकतमः ।

**तत्त्वप्रासाद इत्युक्तः आदिप्रासाद उच्यते ।**

(वा.शु.आ.,५.४१)

(पश्यत – प्रासादमन्त्र)

## आदिप्रसादिस्थलम्

आदिप्रसादिसम्बद्धं स्थलं आदिप्रसादिस्थलम् एकोत्तरशतस्थलेषु एकम् । प्राणलिङ्गिस्थलस्य लिङ्गस्थलगतनवविधप्रभेदेषु अन्यतमम् । सर्वाधिष्ठानभूतस्य शम्भोः प्रसादं प्राप्तवतः प्राणलिङ्गिनः स्थलम् आदिप्रसादिस्थलम् ।

**स्थलानां नवकं प्रोक्तं प्राणलिङ्गस्थलाश्रितम् ।**

**आदिप्रसादनामाथ ततोऽप्यन्त्यप्रसादकम् ।**

(सि.शि., १८.२, ४)

(पश्यत – आदिप्रसादी)

## आदिप्रसादी

आदिप्रसादी, अन्त्यप्रसादी, सेव्यप्रसादी इति त्रिविधप्रसादिषु प्रथमः। त्रिविधप्रसादिनः एव त्रिविधप्रसादलिङ्गानि इति कथ्यन्ते। सर्वाधिष्ठानभूतस्य शम्भोः प्रसादं सम्प्राप्य निर्विकारपदे स्थितवान् प्राणलिङ्गी आदिप्रसादी इत्युच्यते ।।

**सर्वाधिष्ठातृकः शम्भुरादिस्तस्य प्रसादतः ।**

**आदिप्रसादीत्युक्तोऽयं निर्विकारपदे स्थितः ।।**

(सि.शि., १८.५६)

(पश्यत – आदिप्रसादिस्थलम्)

## आदिशक्तिः

यदा शिवः सर्वतत्त्वानां सृष्ट्यर्थं ध्यानं कृतवान् तदा जातासु पराशक्त्यादि शक्तिषु एका। पराशक्तेः सहस्रांशात् जायमाना इयञ्च शिवसादाख्यस्य मूलम् । शान्तिकला एव आदिशक्तिः । नादोऽपि तथा ।

**सृष्ट्यर्थं सर्वतत्त्वानां जगदुत्पत्तिकारणम् ।**

**ध्यायमानात्ततो देवि पराशक्तिरजायत ।।**

**आदिशक्तिस्ततो जाता पराशक्त्यंशभेदतः ।**

(सू.आ.,क्रि.पा.,१.१९–२०)

**तच्छक्तेस्तु सहस्रांशादादिशक्तिसमुद्भवः ।।**

(शि.त.र.,भा–२, १.४.५०)

**शुद्धश्च शिवसादाख्यं सर्वतत्त्वालयं परम् ।**

**शान्त्याख्यकलायुक्तं आदिशक्तिसमुद्भवम् ।।**

(सू.आ.,क्रि.पा.,१.४०)

**शान्तिरेवादिसंज्ञिता ।**

(अ.सू.,३.२५)

**.... नादश्चैवादिरुच्यते ।**

(वा.शु.आ.,२.१२)

(पश्यत – शक्तिः)

## आदिशैवाः

शैवभेदः। महेशस्य सद्योजातादिषु पञ्चसुवक्त्रेषु पञ्चाक्षरीमन्त्रोपदेशपूर्वकं दीक्षिताः कौशिकाद्याः पञ्चमहर्षयः आदिशैवाः। तेषां वंशे सञ्जाताश्च शिवद्विजाः इत्युच्यन्ते। आदिशैवास्तु ईश्वरस्य प्रतिष्ठायाम् उत्सवेषु स्नापनादिषु आचार्यत्वेन अधिकृताः।

**आदिशैवास्तु विज्ञेयाः कौशिकाद्या महर्षयः ।।**
**कौशिकः कश्यपश्चैव भरद्वाजात्रिगौतमाः ।**
**आदावेते महेशस्य पञ्चवक्त्रेषु दीक्षिताः ।।**
**गुरोर्मुखाद्दीक्षिता हि तद्गोत्राश्चान्यगोत्रिणः ।**
**आगमान्तोक्तविधिना शाम्भवव्रतसेविनः ।।**
**वेधामनुक्रियाभिख्यदीक्षात्रयविधानतः ।**
**लिङ्गत्रयपरिस्फूर्जदङ्गत्रितयशोभिनः ।।**
**आदिशैवा इति भुवि निगद्यन्ते बृहस्पते ।।**
**महेशस्य प्रतिष्ठायामुत्सवे स्नपनादिषु ।**
**आचार्यत्वे ह्यधिकृता आदिशैवा जगन्नुताः ।।**

(चं.आ., क्रि.पा., १०.६–१०)

**तेषां ऋषीणां वंशेतु जाताश्चैव शिवद्विजाः ।**

(शै.र.,भा–२, २.४–५)

**पञ्चाक्षरीदीक्षितो यः स आदिशैवउच्यते ।**

(वी.स.सं., ८.६)

(पश्यत – शिवद्विजाः)

## आदिशैवम्

आदिशैवैः अनुस्त्रीयमाणं मतम् ।

**अनादिशैवं प्रथममादिशैवं द्वितीयकम् ।**

(चं.आ.,क्रि.पा.,१०.४)

(पश्यत – आदिशैवाः)

## आधारचक्रम्

आज्ञादिषु योगसम्बद्धेषु चक्रेषु एकतमम् आधारचक्रम्। इदमेव मूलाधारचक्रमित्युच्यते। चतुर्दलात्मकमिदं गुदलिङ्गयोर्मध्ये स्थितम्। परमानन्दः, सहजानन्दः, वीरानन्दः, योगानन्दश्च एतेषां चतुर्णां दलानां फलम् । अस्मिन्नेव चक्रे विद्यते कुण्डलिनीनाम्नी योगशक्तिः ।

**आधारचक्रवेद्याय आणवज्ञानमूर्तये ।**

(वी. उ., ४.१११)

**कञ्जस्य चाध आधारं ........... ।**

(वा.शु.आ.,९.१८)

**गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।।**

**परमः सहजस्तद्वदानन्दो वीरपूर्वकः ।**

**योगानन्दश्च तस्य स्यादैशान्यादिदले फलम् ।।**

**अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ।**

**आब्रह्मरन्ध्रमृजुतां नीतेयममृतप्रदा ।।**

(शि.त.र.,भा-३, ९.१.१३१-१३३)

(पश्यत – कुण्डलिनी, षट्चक्राणि, सप्तचक्राणि)

## आधिदैविकम्

आधिदैविकम्, आधिभौतिकम्, आध्यात्मिकम् इति त्रिविधदुःखेषु एकम् । तत्र ग्रहयक्षादिसम्भवं दुःखम् आधिदैविकम् इत्युच्यते ।

**आधिदैविकमाख्यातं ग्रहयक्षादिसम्भवम् ।**

(सि.शि., ५.७०)

(पश्यत – दुःखत्रयम्)

## आधिभौतिकम्

आधिदैविकमित्यादिषु त्रिविधेषु दुःखेषु एकम्। राजादिभूतजन्यं दुःखम् आधिभौतिकम् ।

**आधिभौतिकमेतद्धि दुःखं राजादिभूतजम् ।**

(सि.शि., ५.६९)

(पश्यत – दुःखत्रयम्)

## आध्यात्मिकम्

आधिदैविकमित्यादिषु त्रिषु दुःखेषु एकम्। तच्च बाह्यम् आभ्यन्तरश्चेति द्विविधम्। तत्र शरीरसम्बद्धं शारीरं दुःखं बाह्यम्। मनस्सम्बद्धश्च मानसं दुःखम् आभ्यन्तरम्। वातपित्तादिजन्यं बाह्यम्। रागद्वेषादिजन्यम् आभ्यन्तरम् । इदश्च आन्तरमित्युच्यते ।

**आध्यात्मिकं द्विधा प्रोक्तं बाह्याभ्यन्तरभेदतः ।**
**वातपित्तादिजं दुःखं बाह्यम् आध्यात्मिकं मतम् ।।**
**रागद्वेषादिसम्पन्नम् आन्तरं परिकीर्त्यते ।।**

(सि.शि., ५.६८–६९)

(पश्यत – दुःखत्रयम्)

## आनन्दः

१. परशिवस्य सत् चित् आनन्दः इति त्रिविधेषु स्वरूपेष्वेकम् ।

**आनन्दो ब्रह्मेति व्यजानात् ।**

(तै.उ.,३.६.६)

**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः ।**

(सि.शि., १.१)

२. सुखम्। तच्च परम् अपरश्चेति द्विविधम्। तत्र परम् एकम्। तच्च परानन्दः इत्युच्यते। अपरश्च अपरानन्दः इत्युच्यते। तच्च मोहजीवितलौकिकभेदेन त्रिविधम्। तत्र अङ्गनादिजन्यः आनन्दः मोहजः। भक्ष्यभोज्यादिजनितः जीवितः। स्तुतिकीर्त्यादिजन्यः लौकिकः।

**आनन्दो द्विविधः प्रोक्तो ह्यपरः पर इत्यपि ।**

**अपरस्त्रिविधः प्रोक्तो मोहजीवितलौकिकैः ।।**

**अङ्गनापुत्रपौत्रादिजनितो मोहजः स्मृतः ।**

**भक्ष्यभोज्यादिजनितो ह्यानन्दो जीवितः स्मृतः ।।**

**स्तुतिकीर्त्यादिसञ्जातो लौकिकानन्द उच्यते ।**

**सर्वेषामपि जन्तूनां मोक्षानन्दः परस्स्मृतः ।।**

(वी.ध.शि., पृ.२५६)

३. भक्तिः। षट्स्थलाश्रितासु षड्विधासु भक्तिषु अन्यतमा । इयं शरणस्थलसम्बद्धा।

**प्रसादलिङ्गसंयुक्तमङ्गं हि शरणस्थलम् ।।**

**तत्र प्रतिष्ठिता साक्षात् भक्तिरानन्दरूपिणी ।**

**तत्र स्वानुभवाकारा भक्तिरानन्दयोगतः ।**

**प्रोक्तानन्दात्मिका भक्तिरिति वेदान्तवेदिभिः ।।**

(अ.सू., ५.६८-६९, ६७)

## आनन्दद्रव्यम्

आत्मोपभोगयोग्यानां त्रिविधद्रव्याणामेकतमम्। तृप्तिरेवानन्दद्रव्यम्। तदानन्दद्रव्यमात्माङ्गाय अर्थात् कारणशरीराय समर्पणीयम्। भावलिङ्गे आनन्दद्रव्यार्पको जीवः प्राज्ञ इत्युच्यते।

**आत्मोपभोगजातानि द्रव्याणि त्रिविधानि हि ।।**

**स्थूलाख्यं प्रविविक्ताख्यमानन्दाख्यमिति त्रिधा ।**

**आनन्दस्तु भवेत्तृप्तिरेवमेव पृथक् क्रमात् ।**

**आत्मसङ्गमयं साक्षादानन्दार्पणमुच्यते ।**

**आत्माङ्गार्पणमेवात्र तृप्तिरित्यभिधीयते ।।**

**भावलिङ्गे सदा प्राज्ञ आनन्दार्पक उच्यते ।**

(अ.सू.,७.९-१४)

(पश्यत – त्रिविधद्रव्याणि)

## आन्तरलिङ्गम्

चित्ते धार्यमाणं चिद्रूपं लिङ्गम् ।

**चिद्रूपं परमं लिङ्गं शाङ्करं सर्वकारणम् ।**

**यत्तस्य धारणं चित्ते तदान्तरमुदाहृतम् ।**

(सि.शि., ६.३१)

**अन्तरिन्द्रिययोग्यश्च ह्यान्तरं लिङ्गमुच्यते ।।**

(क्रि.सा.,भा-१, ४.२९)

## आभ्यन्तरभक्तिः

बाह्यभक्तिः आभ्यन्तरभक्तिः इति द्विविधभक्त्योः मध्ये एका भक्तिः । लिङ्गे प्राणं समाधाय मनः स्थिरं कृत्वा क्रियमाणम् आभ्यन्तरलिङ्गस्य ध्यानम् । यस्मिन् सा विद्यते तस्य जीवनं दग्धबीजवत् । पुनर्जन्मरहितमिति यावत् ।

**सा भक्तिः द्विविधा ज्ञेया बाह्याभ्यन्तरभेदतः ।**

**बाह्या स्थूलान्तरा सूक्ष्मा वीरमाहेश्वरादृता ।।**

**लिङ्गे प्राणं समाधाय प्राणे लिङ्गं तु शाम्भवम् ।**

**स्वस्थं मनस्तथा कृत्वा न किञ्चिच्चिन्तयेद्यदि ।।**

**साभ्यन्तरा भक्तिरिति प्रोच्यते शिवयोगिभिः ।**

**सा यस्मिन् वर्तते तस्य जीवनं भ्रष्टबीजवत् ।।**

(सि.शि., ९.६, ८–९)

(पश्यत – भक्तिः)

## आभ्यन्तरलिङ्गधारणम्

बाह्यलिङ्गधारणम् आभ्यन्तरलिङ्गधारणम् इति द्विविधयोः लिङ्गधारणयोर्मध्ये एकम्। आभ्यन्तरलिङ्गस्य = चिद्रूपस्य लिङ्गस्य, चित्ते = हृदये, धारणम् आभ्यन्तरलिङ्गधारणम्। इदमेव आन्तरलिङ्गधारणम्, अन्तर्लिङ्गधारणम्, अन्तर्लिङ्गानुसन्धानम्, इत्यादिभिः नामभिः व्यवह्रियते। आधारे हृदये भ्रूमध्ये वा ज्योतिर्लिङ्गस्यानुसन्धानमपि कथ्यते आन्तरलिङ्गधारणम् इति। आत्मविद्यापरिश्रमः, गुरुपासनशक्तिश्चेति द्वाभ्यां सहाऽन्तर्लिङ्गानुसन्धानमपि मोक्षसम्पदः कारणम्।

**लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकैः ।**

**बाह्याभ्यन्तरश्चेति मुनिभिः मोक्षकाङ्क्षिभिः ।।**

**चिद्रूपं परमं लिङ्गं शाङ्करं सर्वकारणम् ।**

**यत्तस्य धारणं चित्ते तदान्तरमुदाहृतम् ।**

**आधारे हृदये वाऽपि भ्रूमध्ये वा निरन्तरम् ।**

**ज्योतिर्लिङ्गानुसन्धानम् आन्तरं लिङ्गधारणम् ।।**

**अन्तर्लिङ्गानुसन्धानं आत्मविद्यापरिश्रमः ।**

**गुरूपासनशक्तिश्च कारणं मोक्षसम्पदाम् ।।**

**वैराग्यज्ञानयुक्तानां योगिनां स्थिरचेतसाम् ।**

**अन्तर्लिङ्गानुसन्धाने रुचिः बाह्ये न जायते ।।**

(सि.शि., ६.३०–३१; ३९, ४३–४४)

## आयत्तदीक्षा

सप्तविधासु क्रियादीक्षासु एका दीक्षा। वामहस्ते इष्टलिङ्गं संस्थाप्य अर्चयित्वा शिष्यमुद्दिश्य "इदमवलोकय" इत्युपदेशात्मिका दीक्षा। आयत्ता इत्यपि व्यवहारः।

**स्वस्तिकारोहणं भूतिपट्टमायत्तमेव च।**
**स्वायत्तमिति सप्तैताः क्रियादीक्षान्तरा मताः ।।**
**इष्टलिङ्गं समादाय वामहस्तेऽभिपूज्य च।**
**सौम्येतल्लिङ्गमीक्षस्वेतीष्टलिङ्गं प्रदर्शयेत् ।।**

(का.आ.,क्रि.पा., १.४३, ८९; चं.आ., क्रि.पा., ९.१२)

**आचार्यो लिङ्गमादाय समभ्यर्च्य यथाविधि।**
**शिष्यस्यालोकनं सम्यगायत्ता परिकीर्तिता ।।**

(शि.त.र.,भा-३,९.७.३७)

(पश्यत - दीक्षा)

## आराधना

आराध्यते इति आराधनम्। वीरशैवमते आराधनं द्विधा त्रिधा च प्रदर्श्यते चन्द्रज्ञानागमे । (अ) १. एकोद्दिष्टम् २. पार्वणश्चेति आराधनद्वैविध्यम्, (आ) १. नित्यम् २. नैमित्रिकम् ३. काम्यश्चेति त्रैविध्यञ्च प्रदर्शितम्। तत्र एकोद्दिष्टं पार्वणश्चेति आराधनद्वयं नित्यादिषु त्रिषु आराधनेषु परिगण्यते। तथाहि - प्रतिसंवत्सरं प्रत्यमावास्यं विशेषतः महालये च क्रियमाणं पार्वणम्, दैनन्दिनं नियतोपाधिकञ्च आराधनम् नित्यम्।

सङ्क्रान्ति - ग्रहण - तत्त्वसंयोजन सन्दर्भेषु क्रियमाणम् एकोद्दिष्टं वृद्धिसंज्ञकञ्च आराधनं नैमित्तिकम्। चतुर्दशमन्वन्तराणां प्रथमतिथौ, चतुर्युगाणामारम्भतिथौ च क्रियमाणम् आराधनं काम्यम्।

मकुटागमे गुह्याद्यधिकृतम्, निराभार्यधिकृतम् साङ्कल्पिकश्चेति आराधनं त्रिविधमित्युक्तम्। तत्र निराभार्याधिकारिकमाराधनं वीरशैवैः अनुष्ठेयमित्युक्तम्। आराधनेषु माहेश्वरपूजा (जङ्गमपूजा) विधेया। इयमेव जङ्गमपूजा कारणिकाराधनमिति शैवागमेषु उच्यते।

**एकोद्दिष्टं पार्वणञ्चेत्युक्तमाराधनं द्विधा।**
**नित्यं नैमित्तिकं काम्यमिति तत्त्रिविधं पुनः ।।**
**आब्दिकं दार्शिकं चैव तन्महालयसंज्ञकम्।**
**दैनन्दिनं च नियतोपाधिकं नित्यमुच्यते ।।**
**सङ्क्रान्तौ ग्रहणे चोक्तं तत्त्वसंयोजनं तथा।**
**एकोद्दिष्टं वृद्धिसंज्ञं नैमित्तिकमुदाहृतम् ।।**
**मन्वादौ च युगादौ च तथा लभ्येषु प्रायशः।**
**योगेषु क्रियते यत्तत् काम्यमित्यभिधीयते ।।**

(चं.आ.,च.पा., ५.२५-२८)

गुह्याद्यधिकृतं चैव निराभार्याधिकारिकम् साङ्कल्पिकमिति तथा प्रोक्तमाराधनं त्रिधा ।।

**वर्जयित्वैव कर्तव्यं निराभार्याधिकारिकम्।**
**माहेश्वरोऽर्चनीयः स्यान् मुख्य आराधने स्मृतः ।।**
**विश्वे देवे देवान् रक्षकञ्च त्यागमावाहनादकम्।**
**त्यक्त्वा सङ्कल्पमात्रेण कारुण्यानां विधीयते ।।**

(मकुट.,च.पा., ८.२३, २६, २४)

(पश्यत - नवाराधनम्)

## आवरणानि

आव्रियते अनेन इति आवरणम्। आवरणानि च गुरुः इत्यादीनि।

**निवारणैककार्याणि ख्यातान्यावरणाख्यया ।।**

(चं.आ.,क्रि.पा.,२.३; पार.आ.,७.५५)

(पश्यत - अष्टावरणानि)

## आवाहनम्

आवाहनम्, व्यापकस्य परमात्मनः देशान्तररूपावाहनस्या-सम्भव्यत्वात् भक्तस्य भावनानुसारं विशिष्टे लिङ्गे विशिष्टायां प्रतिमायां वा परमात्मनो योऽभिव्यञ्जनं तदेवावाहनम्।

**देशान्तरप्रप्तिरूपावाहनं व्यापकस्य मे।**
**न सम्भवेत् तथापि स्यात् कर्तुर्भावनया परम्॥**
**लिङ्गाद्यभिमते देशे यदभिव्यञ्जनं मम।**
**तदेवावाहनमिति भावयस्व महामते॥**

(का.आ.,क्रि.पा.,५.३-४)

## आशौचम्

आशौचं नाम सूतकम्। शाम्भवव्रतनिष्ठानामाशौचसङ्गतिः नास्तीति मतमेकं विद्यते। देहधारणयोगेन संसारिणामाशौचमस्तीति अन्यं मतमस्ति। शाम्भवव्रतेन शुद्धानामाशौचसम्पर्कः कथम्? इति संशय अस्तिति विचारः क्रियते। शाम्भवव्रतपालनेन शुद्धानां शिवपूजायां निरतानां मुक्तियोग्यानां मरणहेतुकमाशौचं असम्भाव्यम्। तेषामन्यप्राणिदोषप्रकाशाभावादित्येकपक्षः। परन्तु तेषां संसारसम्बद्धशरीरयुक्तत्वात्, जननमरणकारणाभ्यामाशौचं विद्यते एव। संसारयोगाभावात् केवलं संन्यासिनां तन्नास्तीत्यपरः पक्षः। एवमाशौचस्य संसारसम्पर्कः कारणम्। संसारसम्पर्कात् वीरशैवव्रतीनामाप्याशौचमस्तीति निश्चितम्। पक्षद्वयमपि मकुटागमे उक्तम्।

यथोक्तं तत्रैव नैमित्तिकानाम्, नित्यानाम्, इतरेषां च कर्मणां विषये दीक्षितानां यथा तत्तत्कर्माचरणे आशौचं नास्ति तथा शिवपूजादिक्रियासु तन्नास्ति, तत्रापि दीक्षासामर्थ्ययोगात्।

तत्रैव जातकं मृतकं चेति आशौचद्वैविध्यम्। अल्पम्, अधिकम्, अपूर्णम्, पूर्णं चेति आशौचचातुर्विध्यं चोक्तम्। तत्र अल्पं अल्पकालिकम्, अधिकम् अधिककालिकम्, अपूर्णं त्रिरात्रादिकम्, पूर्णं च दशाहादिकम्।

**शाम्भवव्रतशुद्धानां मत्सेवाभिरतात्मनाम् ।**
**मुक्तिभाजां तनुत्यागहेतुकाशौचसङ्गमः ।।**
**यद्यप्यसम्भाव्य एव प्राणिदोषाप्रकाशनात् ।।**
**तथापि तेषां संसारसम्बद्धतनुयोगिनाम् ।**
**देहोत्पत्तिविनाशोत्थमाशौचमिह विद्यते ।।**
**यतीनां तद्धि संसारयोगाभावान्न युज्यते ।**
**तस्मात् संसारसम्पर्को हेतुराशौचसङ्गतेः ।।**
**आशौचे विद्यमानेऽपि नान्तरायोऽर्चनस्य तु ।**
**मदर्चाविघ्नविच्छेत्री दीक्षासामर्थ्ययोगतः ।।**
**नैमित्तिकानां नित्यानामन्येषां कर्मणां पुनः ।**
**आशौचमूलसङ्कोचस्तुल्य एव ह्यदीक्षितैः ।।**
**जातकं मृतकं चेति ह्याशौचं द्विविधं स्मृतम् ।**
**तच्छतुर्धाऽल्पमधिकमपूर्णं पूर्णमित्यपि ।।**
**अल्पकालिकमल्पं स्यादधिकं कालतोऽधिकम् ।**
**अपूर्णं स्यात् त्रिरात्रादि दशाहादि तु पूर्णकम् ।।**

(मकुट., च.पा.,१०., ५-९, ११-१२; चं.आ.,च.पा.,६.२-३, १३-१७)

(पश्यत - सूतकम्)

## आसनम्

योगस्य अष्टसु अङ्गेषु एकम् । योगप्रसिद्ध पद्मासनस्वस्तिकासन सिद्धासनगोमुखासनगरुडासनवीरासनादीनि हठयोगप्रदीपिकाद्युक्तरीत्या वेदितव्यानि । आसनसिद्धौ प्राणायामसिद्धिः ।

**पद्मासनस्वस्तिकासनसिद्धासनगोमुखासनवीरासनादि पातञ्जल-योगप्रसिद्धं हठयोगप्रदीपिकाद्युक्तरीत्या वेदितव्यम्। सत्यासनजये प्राणायामसिद्धिः ।**

(वी.आ.चं.,पृ.०५)

**सिद्धाम्बुजस्वस्तिकमुक्तवीरभद्राहिभुक् सिंहगवां मुखानि ।**

**सुखासनञ्चैव समङ्क्तिानि ततो दशेमानि वरासनानि ।।**

**स्वस्वरूपे सदाकालमासन्नत्वं सुखासनम् ।**

**सर्ववस्तुन्युदासीनभाव आसनमुच्यते ।।**

(शि.यो.प्र., २.१३; ४.६)

## आह्निकम्

आह्निकं नाम दिनचर्या। भक्तैः अहर्निशि ये ये विधयः विहिताः तेषामाचरणं करणीयमिति नियमः । ब्राह्मे मुहूर्ते उत्थानम्, नेत्रयोरिष्टलिङ्गस्य स्पर्शनम्, बहिर्विधिः, दन्तधावनम्, द्वादशगण्डूषाः, स्नानम्, भस्मस्नानम्, भस्मोद्धूलनम्, त्रिपुण्ड्रधारणम्, प्रातः मध्याह्ने सायं च शिवपूजा, षडक्षरमन्त्रजपः इत्यादि उत्थानादारभ्य शयनपर्यन्तं क्रियमाणानां धर्माचरणानां समाहार आह्निकशब्देन व्यवह्रियते ।

**शाम्भवव्रतनिष्ठानां शैवानां प्रयतात्मनाम् ।**

**अह्निकं श्रोतुमिच्छामि विधानं ब्रूह्यशेषतः ।।**

(चं.आ.,क्रि.पा.,११.२)

**आह्निकं तु प्रवक्ष्यामि शाम्भवानामनुत्तमम् ।**

(मकुट., क्रि.पा.,२.२)

(पश्यत – चं.आ.,क्रि.पा., एकादशपटलः; मकुटः., क्रि.पा., द्वितीयपटलः । अनयोः पटलयोः वीरशैवानामाह्निकं सप्रपञ्चं निरूपितम्)

## आह्वाननिरसनस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । माहेश्वरस्थलाश्रित-नवविधाङ्गस्थलेष्वेकम् । लिङ्गपूजानिरतः सर्वाद्वैतनिरासकः शुद्धो माहेश्वरः स्वकीयेष्टलिङ्गे साक्षात् शिवे पुनः शिवं न आवाहयेत् इति विधीयमानं स्थलम् । यदा शिवकलायुक्तमिष्टलिङ्गं श्रीगुरुणा दीयते तदारभ्य

तत्रेष्टलिङ्गे शिवस्तिष्ठति । अतः तत्र शिवस्याह्वानेन किमपि प्रयोजनं नास्ति, इति कारणादत्र आह्वाननिरसनमुक्तम् ।

**माहेश्वरः शैव इव पूजार्थं शिवलिङ्गे शिवं नाऽवाहयेदिति आह्वाननिरसनस्थलं कथयति ।**

(सि.शि.तत्त्व.प्र., १०.४६ भूमिका)

**लिङ्गार्चनपरः शुद्धः सर्वाद्वैतनिरासकः ।**
**स्वेष्टलिङ्गे शिवाकारे न तमावाहयेच्छिवम् ।।**
**यदा शिवकलायुक्तं लिङ्गं दद्यान्महागुरुः ।**
**तदारभ्य शिवस्तत्र तिष्ठत्याह्वानमत्र किम् ।।**

(सि.शि.,१०.४६-४७)

# इ

## इच्छाशक्तिः

यदा शिवः सर्वतत्त्वानां सृष्ट्यर्थं ध्यानं कृतवान् तदा जातासु पराशक्त्यादि शक्तिषु एका । आदिशक्तेः सहस्रांशाज्जायमाना इयं विद्यारूपा ।

**सृष्ट्यर्थं सर्वतत्त्वानां जगदुत्पत्तिकारणम् ।**
**ध्यायमानात्ततो देवि पराशक्तिरजायत ।।**
**आदिशक्त्यंशतस्साक्षादिच्छाशक्तेः समुद्भवः ।**

(सू.आ.,क्रि.पा.,१.१९,२१)

**इच्छाशक्तिश्च विद्या स्यात् .......... ।**

(अ.सू.,३.२५)

**तच्छक्तेस्तु सहस्रांशादिच्छाशक्तिसमुद्भवः ।**

(शि.त.र.,भा-१, १.४.५१)

**शक्तिरिच्छेति विज्ञेया ............ ।**

(वा.शु.आ.,२.१२)

(पश्यत – शक्तिः)

## इदन्ता

इदन्ता नाम चराचरात्मकजगत्स्वरूपिणी ।

**इदन्ता हव्यहोमेन विश्वहोमीति कथ्यते ।।**

(सि.शि., १४.३८)

## इन्द्रियानुग्रहस्थलम्

एकोत्तरशतस्थलेषु एकम्। तत्र चतुष्षष्टितमम्। प्रसादिस्थलाश्रित नवविधलिङ्गस्थलेषु चान्यतमम्। शिवयोगिनः दर्शनात् इन्द्रियाणाञ्च विवेकतः प्राप्यमाणः इन्द्रियाणाम् अनुग्रहस्थितिः इन्द्रियानुग्रहस्थलम्।

**कायानुग्रहणं पूर्वमिन्द्रियानुग्रहं ततः ।।**

**दर्शनात् परकायस्य करणानां विवेकतः ।**

**इन्द्रियानुग्रहः प्रोक्तः सर्वेषां तत्त्ववेदिभिः ।।**

(सि.शि., १७.२, १४)

(पश्यत – स्थलम्)

## इष्टलिङ्गम्

सुजनानमनुग्रहेच्छया शिवस्वरूपमखण्डं महालिङ्गं भावलिङ्गादि त्रैविध्यमभजत। तत्र अवरोहक्रमेण इष्टलिङ्गं तृतीयम्। तच्च दृष्टिकलया ग्राह्यं सकलं च। पुनस्तद् इष्टसिद्धिकरम् अनिष्टपरिहारकं च। तस्मात् तदिष्टलिङ्गम्। यदा षडङ्गस्थलसम्बन्धार्थं भावादिलिङ्गानि द्विविधं द्विविधम् अभवन्, तदेष्टलिङ्गम् आचारलिङ्गं गुरुलिङ्गं चेति द्वैविध्यं प्राप्तं सत्

भक्तस्थल–माहेश्वरस्थलाभ्यां सम्बद्धमभवत्। इष्टलिङ्गम् एव परशिवः नित्यं पूजनीयः। अस्य लिङ्गस्य स्थूललिङ्गमित्यपरं नाम। इष्टलिङ्गात् जातयोः लिङ्गयोः आचारलिङ्गं सद्योजातमुखस्वरूपम्, गुरुलिङ्गं वामदेवमुखस्वरूपं च। उभयात्मकमिदं लिङ्गं तावत् स्थूलतनुसम्बद्धम्, क्रियादीक्षाद्वारा तत्रस्थ कार्मिकमलं निष्कास्य श्रीगुरुः तत्र धारयति। प्राणलिङ्गं ध्यायन्, भावलिङ्गं भावयन् तयोरनुसन्धानपूर्वकमिष्टलिङ्गं पूजयेदिति नियमः।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया।**
**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम्॥**
**तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं मतम्॥**
**सकलं दृक्कलाग्राह्यमिष्टलिङ्गं प्रकीर्तितम्।**
**इष्टसिद्धिकरं सम्यगनिष्टपरिहारकम्॥**
**भावादिलिङ्गत्रितयं द्विविधं द्विविधं भवेत्।**
**इष्टं तु गुरुलिङ्गाख्यमाचाराख्यं द्वयं भवेत्॥**
**आचारलिङ्गमाख्यातं सद्योजातमुखात्मकम्।**
**गुरुलिङ्गं तथा वामदेव वक्त्रात्मकं भवेत्॥**
**इष्टं स्थूलतनोः प्रोक्तं .................।**
**तनुत्रयगतानादि मलत्रममिदं गुरुः।**
**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत्॥**
**पूजयन्निष्टलिङ्गं तु निध्यायन् प्राणलिङ्गकम्।**
**भावयन् भावलिङ्गं वै मृत्युपाशांच्छिनत्ति सः॥**

(चं.आ.,क्रि.पा.,३.२३, २५–२८, ४५, ४७–४८; अ.सू.,३.५–१५)

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम्।**
**इष्टलिङ्गमिदं स्थूलं यद्बाह्ये धार्यते तनौ॥**

(सि.शि.,६.४९)

**यदेव गुरुणा दत्तमिष्टलिङ्गं विधारितम् ।**

**सज्जिकास्थापितं तत्तु भक्तियुक्तः प्रपूजयेत् ।।**

(शि.त.र.,भा-३,८.७.४)

(पश्यत – लिङ्गम्)

## इष्टलिङ्गपदोदकम्

गुरुलिङ्गजङ्गमपादोदकानि इति त्रीणि पादोदकानि। तत्र लिङ्गपादोदकमेव इष्टलिङ्गपादोदकम्। इदमेव शिक्षापादोदकमित्युच्यते। गुरोः जङ्गमस्य चालाभे इष्टलिङ्गपादोदकमेव गुर्वादिपादोदकमिति भावयन् स्वीकुर्यादिति नियमः।

**पादतीर्थं त्रिधा शम्भोः गुरुजङ्गमयोरपि ।**

**शिक्षा दीक्षा ज्ञानमिति त्रिसंज्ञं तद्भवत्यहो ।।**

**गुरोश्चरस्य चालाभे इष्टलिङ्गपदोदकम् ।**

**लब्ध्वा गुर्वादिपादोदं भावयेन्मनसा तत् ।।**

(चं.आ.,क्रि.पा.,५.५-७)

## इष्टलिङ्गस्थलम्

इष्टलिङ्गस्थलम्, भावलिङ्गस्थलम्, प्राणलिङ्गस्थलम् इति लिङ्गस्थलस्य त्रिविधेषु प्रभेदेषु एकम्। बहिरिन्द्रियग्राह्यमिदम् इष्टावाप्तिकरम् अनिष्टपरिहारकञ्च। इदञ्च गुरुलिङ्गस्थलम्, आचारलिङ्गस्थलमिति द्विधा।

**लिङ्गस्थलं त्रिधा ज्ञेयं तद्भेदो वर्ण्यते क्रमात् ।।**

**प्रथमं भावलिङ्गं स्यात् द्वितीयं प्राणलिङ्गकम् ।**

**तृतीयमिष्टलिङ्गं स्यादित्येतत्त्रिविधं स्मृतम् ।।**

**सकलं दृक्कलाग्राह्यमिष्टलिङ्गस्थलं महत् ।**

**इष्टावाप्तिकरं साक्षादनिष्टपरिहारकम् ।।**

**इष्टमर्थं स्वभक्तानामनुयच्छति सर्वदा ।**

**तदिष्टलिङ्गमित्याह तस्मादाथर्वणी श्रुतिः ।।**
**गुरुलिङ्गं तथाचारलिङ्गमित्युभयस्थलम् ।**
**इष्टलिङ्गं भवत्येव सत्यमुक्तमिदं मया ।।**
(अ.सू.,३.५-६, ८-१०,२०; अ.वी.सा.सं.,भा-१, १.१११-११२, ११५, ११६, १२२)

(पश्यत – इष्टलिङ्गम्)

# ई

## ईशः

शिवः । ईश्वरः । जगतः प्रभुः । बन्धमोक्षयोः नियन्ता च ।
**ईशः शिवो बन्धमौक्षौ तद्वशे निष्ठतो ध्रुवम् ।।**
(चं.आ., क्रि.पा., १.४४)

**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।**
**ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ।।**
(श्रुति.सा.,पृ.१७)

**परिवेष्टितारमीशं ज्ञात्वामृतास्ते भवन्ति ।**
(वी.प्र., पृ.२, श्लो. २२)

## ईशत्वम्

१. ईशस्य सहजं माहात्म्यम् ।
**यत्र विश्राम्यतीशत्वं स्वाभाविकमनुत्तमम् ।**
**नमस्तस्मै महेशाय महादेवाय शूलिने ।।**
(सि.शि., १.७)

२. अलौकिकशक्तियुक्तासु अष्टसिद्धिषु एका । सूर्यादिप्रेरकशक्तिः ।

**अणिमाद्याखिला भोगा तव लीलाविजृम्भिताः ।**

**षड्भिर्हता विकृतिभिरतो मामेव संश्रयेत् ।।**

(पार.आ., २०.७४)

**अष्टैश्वर्यप्रदा पूजा योगाद्यं स्वर्गसाधनम् ।**

**पापहारी जपः प्रोक्तो ज्ञानं ध्यानं च मोक्षदम् ।।**

(सू.आ.,क्रि.पा., ६.२९)

**अणिमा महिमा चैव गरिमा लघिमा तथा ।**

**प्राप्तिः प्राकाम्यमीशत्वं वशित्वश्चाष्टसिद्धयः ।।**

(अ.को.,१.४२१)

## ईशानम्

शिवस्य पञ्चसु मुखेषु एकम् । पञ्चब्रह्मसु एकम् ।

**ईशानं पञ्चमं प्रोक्तं मुखानि मम सर्वशः ।**

(वी.स.सं., १.२६.२७)

**पञ्चब्रह्मपरं विद्यात् सद्योजातादिपूर्वकम् ।**

**दृश्यते श्रूयते यच्च पञ्चब्रह्मात्मकं स्वयम् ।।**

(पं.ब्र.उ.,२१)

(पश्यत – पञ्चमुखानि)

## ईशानः

सद्योजातादि पञ्चमूर्तिषु एका । स्फटिकवर्णः, जटामकुटभूषितः, चतुर्वक्त्रयुक्तः, द्वादशनेत्रः, चतुर्भुजयुक्तः, सर्वलक्षणसम्पन्नः, शुक्लाम्बरधरः, शुक्लोत्तरीयवस्त्रधरः, टङ्कशूलसमायुक्तः, वरदाभयसम्पन्नः, सर्वावयवसंयुक्तः, सर्वाभरणमण्डितः, दिव्यगन्धानुलिप्तशरीरः, दिव्यपुष्पालङ्कृतश्च ईशानः ।

**ईशानं स्फटिकाभं स्यात् जटामकुटमण्डितम् ।**

**चतुर्वक्त्रसमायुक्तं द्वादशाक्षिसमन्वितम् ।।**

**चतुर्भुजसमायुक्तं सर्वलक्षणसंयुतम् ।**

**शुक्लाम्बरधरं सौम्यं शुक्लवस्त्रोत्तरीयकम् ।।**

**टङ्कशूलसमायुक्तं सर्वाभरणभूषितम् ।।**

**दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम् ।**

(वा.शु.आ.,७.६०-६३)

## ईशानमन्त्रः

शिवस्य पञ्चमुखसम्बद्धेषु पञ्चब्रह्ममन्त्रेषु एकः ।

**ईशानः सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधि-पति र्ब्रह्मा शिवो मे अस्तु सदाशिवोऽम् ।।**

(म.ना. उ., १९)

## ईश्वरः

१. षट्त्रिंशत्तत्वेषु एकम्, चतुर्थं तत्त्वम्। शुद्धाध्वतत्त्वेषु एकतमम् सदाशिवतत्त्वजन्यंसत्त्वगुणोपाधिचैतन्यम् ।

**ततः परं त्रयास्त्रिंशमुदितं तत्त्वमैश्वरम् ।**

(शि.त.र.,भा-३, ९.३.४१; शै.सि.दी.,पृ.४)

**परतत्त्वमयोपाधिब्रह्मचैतन्यमीश्वरः ।।**

(सि.शि., ५.४०)

२. शिवशक्तितेजोजन्यसदाशिवादिपञ्चमूर्तिषु एकः । अयं सदाशिवजन्यः पवनस्थश्च ।

**सदाशिवादीश्वरोऽपि सम्भूतः पवने स्थितः ।।**

(शि.यो.प्र.,१.२३)

**ईश्वरः पवनो देवो ... ।**

(श्रुति.सा., पृ.१५)

(पश्यत – षट्त्रिंशत्तत्त्वानि)

## ईषणात्रयम्

पुत्रेषणा, वित्तेषणा, प्रतिष्ठेषणा चेति ईषणात्रयम् ।

**ईषणात्रयनिर्मुक्तो नित्यमेकान्तसेवनः ।**

(पार.आ.,६.२३)

# उ

## उड्डीयणबन्धः

हठयोगसम्बद्धेषु आधारबन्धः, उड्डीयणबन्धः, जालन्धरबन्धः इति त्रिषु बन्धेषु एकः । अयञ्च नाभेश्च ऊर्ध्वाधोभागयोः परस्परमेलनात्मको बन्धः । जरारोगनाशकश्च ।

**अधश्चोर्ध्वञ्च नाभेर्यो बन्धनं कुरुते बलात् ।**

**उड्डीयणमसौ बन्धो रुग्जरामृत्युनाशनम् ।।**

(शि.यो.प्र.,२.५१)

## उत्तमभक्ताः

सूक्ष्मागमोक्तदिशा चतुर्विधभक्तेष्वेकतमाः

**भक्ताश्चतुर्विधा लोके नानालक्षणसंयुताः ।**

**कनिष्ठा मध्यमाश्चैवमुत्तमा उत्तमोत्तमाः ।।**

(सू.आ.,क्रि.पा.,९.४)

(पश्यत – चतुर्विधभक्ताः)

## उत्तमोत्तमभक्ताः

सूक्ष्मागमानुसारेण चतुर्विधभक्तेष्वेकतमाः ।

**भक्ताश्चतुर्विधा लोके नानालक्षणसंयुताः ।**
**कनिष्ठा मध्यमाश्चैवमुत्तमा उत्तमोत्तमाः ।।**

(सू.आ.,क्रि.पा., ९.४)

(पश्यत – चतुर्विधभक्ताः)

## उत्पन्नशीलम्

सदाचारान्तर्गतत्वेनोक्तेष्वष्टशीलेष्वेकम् ।

**शीलमुत्पन्नमित्युक्तम् ..................... ।**

(चं.आ.,क्रि.पा.,९.२४)

(पश्यत – सदाचारः)

## उत्तमा भक्तिः

उत्तमा, मध्यमा, कनिष्ठा डति त्रिविधभक्तिष्वेकतमा । इष्टलिङ्गाज्जङ्गमः श्रेष्ठः इति धिया जङ्गमकेन्द्रीकृता अतिशयभक्तिः उत्तमा भक्तिः ।

**चरेऽधिका स्वेष्टलिङ्गात् उत्तमा भक्तिरुच्यते ।**

(चं.आ.,क्रि.पा.,४.३१)

(पश्यत – भक्तिः)

## उद्धूलनम्

भस्मधारणप्रकारेषु अन्यतमम् । पञ्चब्रह्ममन्त्रेण पञ्चाक्षरमन्त्रेण वा भस्म अभिमन्त्र्य विना जलं तेन च भस्मना आपादशिखं सर्वाङ्गेषु प्रोक्षणम् उद्धूलनम् ।

**पञ्चभिर्ब्रह्मभिर्वापि मूलमन्त्रेण वा पुनः ।**
**संमन्त्र्य निर्जलं भस्म तेन लिम्पेत् सुसंयुतः ।।**
**सर्वाङ्गमापादशिखमुद्धूलनमिदं स्मृतम् ।।**

(चं.आ., क्रि.पा., ६.४१)

**नमः शिवायेति भस्म कृत्वा सप्ताभिमन्त्रितम् ।**

**उद्धूलयेत् शरीरं तु त्रिपुण्ड्रं चापि धारयेत् ।।**

(सि.शि., ७.२९; शि.त.र.,भा-३, ८.५.७१-७२)

## उन्मनी

सङ्कल्पविकल्परहिता स्थितिः, भावयोगः। तत्र स्थितस्य अवस्था उन्मनी।

**भावयोगमसङ्कल्पविकल्पास्पदमद्भुतम् ।**

**सम्प्राप्तो यस्तस्य भवेदवस्था सोन्मनी हि या ।।**

(शि.यो.प्र., ५.२०)

## उपकल्पम्

१. उपकल्पभस्म ।

भस्मोत्पादनपद्धतिमनुसृत्य विभक्तेषु चतुर्षु भस्मप्रकारेषु एकतमम्। आपणादिगतं भस्म आनीय चूर्णीकृत्य वस्त्रेण संशोध्य पुनर्गोमूत्रेण पिण्डीकृत्य विधिवत् दग्ध्वा कृतं भस्म ।

**.................. आपणादिगतं तु यत् ।**

**वस्त्रेणोत्तरितं भस्म गोमूत्राबद्धपिण्डितम् ।**

**दग्धं प्रागुक्तविधिना भवेत् भस्मोपकल्पकम् ।।**

(सि.शि., ७.१७-१८; शि.त.र.,भा-३, ८.५.५६)

२. उपकल्पस्नानम् ।

आग्नेयस्नानभेदः। उपकल्पभस्मना क्रियमाणं स्नानम् उपकल्पस्नानम् ।

**स्नानं चतुर्विधं तत्र भवेत्कल्पादिभेदतः ।।**

**कल्पं चैवानुकल्पं च उपकल्पमकल्पकम् ।**

(शि.त.र.,भा-३, ८.५.३९)

(पश्यत – आग्नेयस्नानभेदः)

## उपचारः

देवतागुरुज्येष्ठसन्निधौ क्रियमाणा सेवा, परिचर्या, सुश्रूषा, पूजा, उपचार इत्युच्यते। गुहोक्तदिशा स च त्रिधा, पञ्चधा, अष्टधा, दशधा, षोडशधा, चतुर्विंशतिधा, द्वात्रिंशद्धा इत्येवम् अनेकधा।

**उपचारास्त्रयः प्रोक्ताः पञ्चाष्टौ दश षोडश।**

**द्वात्रिंशच्च चतुर्विंशत्युपचाराः गुहोदिताः ।।**

(शि.त.र.,भा–३, ८.७.४२, शै.र.,भा–१, ६.१)

**वैदिकेषु तु मन्त्रेषु लिङ्गादेवौपचारिकात्।**

**तेषु तेषूपचारेषु वेदमन्त्रा नियोजिताः ।।**

(का.आ.,क्रि.पा.,८.७)

**उपचारभेदाः**

१. **त्रिधा** – स्नानम्, पूजा, नैवेद्यं च त्रयः उपचाराः।

**स्नानं पूजा च नैवेद्यमुपचारास्त्रयः स्मृताः।**

(शि.त.र.,भा–३, ८.७.४३)

२. **पञ्चधा** – पूर्वोक्तत्रिभिः सह प्रदक्षिणनमस्कारौ योज्येते चेदुपचाराः पञ्च।

**प्रदक्षिणनमस्कारौ पञ्चैते सम्प्रकीर्तिताः ।।**

पूर्वोक्तपञ्चभिः सद्यादि पञ्चब्रह्ममन्त्रैः क्रियमाणैः सह सङ्गीतवाद्य–नृत्यान्यायोज्यन्ते चेत् अष्टावुपचाराः।

३. **अष्टधा** – पूर्वोक्तैः पञ्चभिः सह सङ्गीतं वाद्यं नृत्तं चेति त्रयाणां योजनेऽष्टौ।

**पार्थिवाद्यैश्च सद्यादिपञ्चमन्त्रैः समर्चनम्।**

**पञ्चोपचारमित्युक्तं ब्रह्मणा परमेष्ठिना ।।**

**सङ्गीतवाद्यनृत्तैस्तैरुपचाराष्टकं मुने।**

(शि.त.र.,भा–३, ८.७.४४–४५)

४. **दशधा** – अर्घ्यम्, पाद्यम्, आचमनम्, मधुपर्कः, आचमः, गन्धः, अक्षतम्, धूपम्, दीपः, नैवेद्यं चेति दशोपचाराः ।

**अर्घ्यं पाद्यं चाचमनं मधुपर्काचमौ तथा ।।**

**गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ।**

(शि.त.र.,भा–३, ८.७.४५–४६)

५. **षोडशधा** – आवाहनम्, आसनम्, पाद्यम्, अर्घ्यम्, आचमनम्, स्नानम्, वस्त्रम्, चामरः, यज्ञोपवीतम्, गन्धः, पुष्पम्, धूपम्, दीपः, नैवेद्यम्, प्रदक्षिणा, नमस्कारः इति षोडशोपचाराः ।

**आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ।।**

**स्नानमाचमनं वस्त्रं तथाचामोपवीतके ।**

**आचामो गन्धपुष्पे च धूपदीपनिवेदनम् ।।**

**प्रदक्षिणनमस्कारावात्मन्यारोपणं ततः ।**

**उपचाराः षोडशोक्ताः स्कन्देनैते महात्मना ।।**

(शि.त.र.,भा–३, ८.७.४६–४८)

६. **चतुर्विंशतिधा** – आवाहनम्, आसनम्, पाद्यम्, अर्घ्यम्, आचमनीयम्, स्नानम्, वस्त्रम्, यज्ञोपवीतम्, अक्षतः, गन्धः, पुष्पम्, धूपम्, दीपः, नैवेद्यम्, फलम्, ताम्बूलम्, स्तुतिः, प्रदक्षिणा, नमस्कारः, शय्या, सङ्गीतम्, वाद्यम्, नृत्तम्, आत्मारोपणं चेति चपतुर्विंशत्युपचाराः ।

**आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ।**

**स्नानं वस्त्रं चोपवीतमक्षता गन्धपुष्पकम् ।।**

**धूपं दीपं च नैवेद्यं फलं ताम्बूलकं स्तुतिः ।**

**प्रदक्षिणनमस्कारौ शय्यासङ्गीतवाद्यकम् ।।**

**नृत्तं चात्मारोपणं च चतुर्विंशति इत्यमी ।**

(शि.त.र.,भा–३, ८.७.४९–५१)

७. **द्वात्रिंशद्धा** – आवाहनम्, आसनम्, पाद्यम्, अर्घ्यम्, आचमनीयम्, स्नानम्, वस्त्रम्, यज्ञोपवीतम्, भूषणम्, अनुलेपनम्, तिलाक्षताः, पुष्पम्, धूपम्, दीपः, नैवेद्यम्, मुखवासनम्, नीराजनम्, दर्पणम्, फलम्, प्रदक्षिणम्, ताम्बूलम्, नमस्कारः, स्तुतिः, पुराणपठनम्, छत्रम्, व्यजनम्, चामरम्, शय्या, सङ्गीतम्, नृत्तम्, वाद्यम्, आत्मारोपणं चेति द्वात्रिंशदुपचाराः ।

**आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ।।**
**स्नानं वस्त्रं चोपवीतं भूषणं चानुलेपनम् ।**
**तिलाक्षताः पुष्पधूपदीपनैवेद्यकानि च ।।**
**मुखवासननीराजदर्पणं च फलानि च ।**
**प्रदक्षिणं च ताम्बूलं नमस्कारस्तुती तथा ।।**
**पुराणपठनं छत्रं व्यजनं चामरं तथा ।**
**शय्या सङ्गीतनृत्तं च वाद्यानि च ततः परम् ।।**
**आत्मन्यारोपणं चेति द्वात्रिंशदुपचारकाः ।**

(शि.त.र.,भा–३, ८.७.५१–५५)

एवमितरेऽपि भेदाः प्रपञ्चिताः शिवतत्त्वरत्नाकरे ।।

## उपपञ्चमाः

परमात्मनः ईशानमुखसम्भूतस्य पञ्चवक्त्रगणेश्वरस्य पञ्चपुत्राः पञ्चमाः। तत्पुत्राश्च उपपञ्चमाः । एकैकपञ्चमस्य द्वादशपुत्रा इत्येवंरीत्या षष्टि उपपञ्चमाः भवन्ति । पञ्चमानां नामानि तत्पुत्राणां चोपपञ्चमानां नामानि च अधस्ताद् दत्तानि ।

१. मखारिपञ्चमस्य – शताङ्गः, प्रमुखः, शर्करः, वृषभः, सहस्राक्षः, सधर्मः, विषमः, मोचकः, वृकभेदी, कुञ्जरारिः, शेषः, शिखिवहश्चेति ।

२. कालारिपञ्चमस्य – केशराक्षः, मृगारिः, नाकेशः, ऋषः, शिलाङ्गः, शृङ्गशीर्षः, चेलाम्बरः, कुहासनः, शतभुक्, बहुजिह्वः, नागदन्तः, फणश्च ।

३. पुरारिपञ्चमस्य – अग्निभुक्, कर्मकारी, जाबालः, निर्झरः, निःशूलः, शशाङ्कः, ललाटाक्षः, अक्षरः, पादः, विकटाङ्गः, शिलादः, हरिन्मुखश्च ।

४. स्मरारिपञ्चमस्य – सहस्रशीर्षः, पीताङ्गः, नगमाली, निराशनः, यमद्युतिः, सप्ताङ्गः, लताङ्गः, मृत्युनासनः, नतनुः, घोटवक्त्रः, निरोगी, अभयश्च ।

५. वेदारिपञ्चमस्य – पश्चाद्दृष्टिः, पुष्टास्यः, गिरिवक्त्रः, गोमुखः, सुवर्णनखः, पद्माङ्घ्रिः, दशाननः, वंशाननः, उग्रदेहः, शतपदः, सहस्रस्कन्दः, त्रिवदनश्च ।

(वी.स.सं.,५.१५-१७, २२-२४, २९-३१, ३६-३७, ४२-४४)

## उपमादीक्षा

सप्तविधासु क्रियादीक्षासु एकतमा। पुरातनानाम् आचारसदृशम् आचारं कुरु इत्येवंरूपः उपदेशः उपमादीक्षा ।

**पुरातनकृताचारसदृशं कुर्विति स्फुटम् ।**
**उपमादीक्षयादिश्य शिष्यपापापनुत्तये ।।**

(का.आ.,क्रि.पा.,१.४५)

(पश्यत – क्रियादीक्षा)

## उपसूत्राणि

पड्विडिः, वृष्टिः, लम्बनम्, मुक्तागुच्छम्, पञ्चवर्णम्, इति पञ्चमहासूत्राणि वीरशैवानाम् । एकैकस्य सूत्रस्य द्वादश – द्वादश उपसूत्राणि उक्तानि तेषां नामानि–

**पड्विडेः** – पुराणम्, पञ्छकन्था, षडङ्गी, सुरगी, महिषी, दिगम्बरः, वेणी, भित्तिः, मारटः, नाटिः, शौरी, सुत्तूरम् ।

**वृष्टेः** – कार्बोन्नः, स्वर्णकन्था, सिंगी, मसणिः, कुठारः, भैत्री, कठारः, चामरी, कवाटः, कुक्षिकन्था, ज्वलत्कन्था, शृङ्गिः ।

**लम्बनस्य** – त्रिपुटी, रज्जुकन्था, भस्मी, कार्पासः, रौप्यम्, चन्द्रगुण्डः, मृत्कन्था, अलकः, वसनः, मुण्डिः, खड्गी ।

**मुक्तागुच्छस्य** – गोणिकन्था, दन्ती, जठरः, त्रिगुणिः, केशकन्था, ललाटः, व्याघ्रकन्था, लोचनः, भगिनी, जालकन्था, नटनः, बोदडिः ।

**पञ्चवर्णस्य** – कम्बालिः, ऋषभः, गोचरः, रज्जुकन्था, पञ्चमुखः, वीटिः, दशमुखः, गगनम्, मुसडी, लगुडी, शिथिली, पशुपतिः ।

**उपसूत्राणि लिख्यन्ते महासूत्रे भवान्ति च ।**

(वी.स.सं.,२.१-१३)

**महासूत्राश्च ये प्रोक्ताः उपसूत्राश्च द्वादश ।।**

**तेषां तेषां पृथक् सन्ति सूत्राणां महतामपि ।**

(पाशु. आ., २.१४३-१४४)

## उपस्थम्

कर्मेन्द्रियेषु एकतमं जननेन्द्रियम् । उपस्थकमित्यपि व्यवहारः ।

**रेतोमूत्रपरित्यागक्रियासाधनमुपस्थकम् ।**

(शि.मं., पृ.५४)

## उपाङ्गषट्कम्

सर्वज्ञतादि परमेश्वरस्य षडङ्गानि प्रधानाङ्गषट्कम्। तदनन्तरम् उपाङ्गषट्कमुक्तम् । यथा – भक्तिः, कर्मक्षयः, बुद्धिः, विचारः, दर्पसंक्षयः, सम्यग्ज्ञानं चेति । उपाङ्गषट्कमेव स्थलषट्कमित्युक्तम् ।

**अथ वक्ष्ये विशेषं ते शृणुष्वैकमनाः शिवे ।**

**उपाङ्गषट्कमपरं भक्त्यादि परमं पदम् ।।**

**भक्तिः कर्मक्षयो बुद्धिर्विचारो दर्पसंक्षयः ।**

**सम्यग्ज्ञानमिति प्रोक्तं स्थलषट्कं मम प्रियम् ।।**

(पार. आ.,६.४०-४१)

**भक्त्याद्युपाङ्गलक्षणानि –**

१. **भक्तिः** – यथा कामी व्यभिचारिण्यामनुरक्तः, यथा च लब्धे निधौ दरिद्रस्य मनः अनुरक्तः, एवं विषयस्नेहरहितः शुद्धसात्विकः परमेश्वरे अनुरक्तः। तादृशी अनुरक्तिरेव भक्तिरिति कीर्त्यते ।

**कामुकस्य यथा जारकान्तायामभिवेशनम् ।**

**यथैव लब्धे च निधौ दरिद्रस्य मनस्तथा ।।**

**अस्पृष्टविषयस्नेहो यो मोहः शुद्धसात्त्विकः ।**

**मयीश्वरे महादेवि सद्भक्तिरभिधीयते ।।**

(पार.आ.,६.४२-४३)

२. **कर्मक्षयः**–पूर्वजन्मन आगतानि दुष्टवासनानुगुणानि प्राकृतानि कर्माणि प्रस्तुतजन्मनि कृतानि च तानि भक्तिमयी शक्तिः नाशयति। एष एव कर्मक्षयः ।

**दुर्वासनानुबन्धीनि कर्माणि प्रकृतानि च ।**

**कृता भक्तिमयी शक्तिः सा नाशयति तान्यपि ।।**

(पार.आ.,६.४८)

३. **बुद्धिः** – नष्टेषु कर्मबन्धेषु विषयविमुखा स्थिरा निर्मला च परमात्मनि या मतिः सा बुद्धिः। यस्य तादृशी शङ्करे निर्मला बुद्धिः स भक्तः भ्रमरकीटन्यायेन शिवमुपैति ।

**कर्मबन्धेषु नष्टेषु बुद्धिः स्वच्छा भवत्यथ ।**

**संत्यक्तविषया देवि स्थिरा मयि परात्मनि ।।**

**यस्यास्ति निर्मला बुद्धिरधीशे मयि शङ्करे ।**

**स मामुपैति भ्रमरकीटन्यायेन सुन्दरि ।।**

(पार.आ.,६.४९-५०)

**४. विचारः** – सद्बुद्धिविशिष्टः भक्तः गुरूपदिष्टवाक्यार्थं हृदि चिन्तयति हिताहितविवेकं च विचार्य निश्चिनोति । स एव विचारः । गुरूपदिष्टविचारं विना किमपि प्रयोजनं नास्ति । विचारेणैव सर्वं शुभाशुभं ज्ञातुं शक्यते ।

**तया गुरूक्तवाक्यार्थचिन्तनं निश्चयो हृदि ।**

**हिताहितविवेकस्य विचारः स उदाहृतः ।।**

**विना गुरूक्तवाक्यार्थविचारं न प्रयोजनम् ।**

**विचारेणैव जानाति सकलं च शुभाशुभम् ।।**

(पार.आ.,६.५४-५५)

**५. दर्पसंक्षयः** – एवं गुरूपदिष्टशास्त्रविचारेण अखिलविश्वेश्वर इति शिवस्वरूपे ज्ञाते भक्तस्य गर्वनाशो भवति । स एव दर्पसंक्षयः ।

**एवं विचारिते शास्त्रे ज्ञात्वा मामखिलेश्वरम् ।**

**स्वरूपमपि जानाति तस्य स्याद् गर्वसंक्षयः ।।**

(पार.आ.,६.५६)

**६. सम्यग्ज्ञानम्** – दर्पसंक्षये सति शीघ्रमेव सम्यग्ज्ञानं जायते । तेन भक्तः सर्वप्राणिष्वात्मानमपि शिवे पश्यति । प्राणिनः आत्मा, परमात्मा चेति त्रिषु प्रत्ययेषु यः ऐक्यं पश्यति स सम्यग्ज्ञानी उच्यते । चराचरात्मकं जगदपि परमात्मभूतं स्वकीयं स्वरूपमिति यो भावयति स सम्यग्ज्ञानी ।

**निरस्तदर्पसम्बद्धः शिवज्ञानरतो भवेत् ।**

**तेन शीघ्रं गिरिसुते सम्यग्ज्ञानं ततो भवेत् ।।**

**येन भूतान्यशेषेण द्रक्ष्यत्यात्मन्यथो मयि ।**

**प्रत्ययत्रितयैकेन सम्यग्ज्ञानी स चास्म्यहम् ।।**

**चराचरात्मकं सर्वं भावयन् परमात्मनः ।**
**मम रूपं महेशानि सम्यग् ज्ञानी स उच्यते ।।**

(पार.आ.,६.५७-५९)

| उपाङ्गषट्कम् | अङ्गषट्कम् | स्थलम् |
| --- | --- | --- |
| १. भक्तिः | सर्वज्ञता | भक्तस्थलम् |
| २. कर्मसंक्षयः | तृप्तिः | माहेश्वरस्थलम् |
| ३. बुद्धिः | अनादिबोधः | प्रसादिस्थलम् |
| ४. विचारः | स्वतन्त्रता | प्राणलिङ्गिस्थलम् |
| ५. दर्पसंक्षयः | अलुप्तशक्तिः | शरणस्थलम् |
| ६. सम्यग्ज्ञानम् | अनन्तशक्तिः | ऐक्यस्थलम् |

**यद्भक्तस्थलमित्याहुस्तत्सर्वज्ञत्वमुच्यते ।**
**यन्महेश्वरकं नाम सा तृप्तिर्मम शाङ्करि ।।**
**यत्प्रसादाभिधं स्थानं तद्बोधो मे निरङ्कुशः ।**
**यत्प्राणलिङ्गकं नाम तत्स्वातन्त्र्यमुदाहृतम् ।।**
**यदस्ति शरणज्ञानमलुप्ताशक्तिरुच्यते ।**
**यदैक्यस्थानमूर्ध्वस्थं शक्त्यनन्तेशिता मम ।।**
**उपाङ्गषट्कमेतद्धि भक्तादिस्थलषट्ककम् ।**
**भक्तादिसर्वज्ञत्वादि भक्त्यादि क्रमशः शिवे ।।**
**यस्य सर्वज्ञता भक्तिर्या तृप्तिः कर्मसंक्षया ।**
**अनादिबोधो या बुद्धिर्विचारो मे स्वतन्त्रता ।।**
**अलुप्तशक्तिरिति या सा च मे गर्वसंक्षया ।**
**अनन्तशक्तिरिति मे सम्यग्ज्ञानं ददाति सा ।।**

(पार.आ.,६.३४-३६, ६०-६२)

(पश्यत – स्थलषट्कम्)

## उपाचार्याः

वीरशैवानां गृहेषु धार्मिककार्यानुष्ठापकाः पञ्चविधाः आचार्याः । ते च मठार्यः, गणार्यः, स्तावरार्यः, कौमार्यः, मालार्यः इति ।

**लोकेऽस्मिन् जगतामीश उपाचार्याश्च सन्ति वै ।**
**कौमार्यः स्तावरार्यश्च मठार्यश्च गणार्यकः ।**
**मालार्यश्चेति विख्याताः पञ्चोपाचार्यनामकाः ।।**

(वी.स.सं., ४.२-३)

## उपाधिः

१. उपाधिः शुद्धोपाधिः, अशुद्धोपाधिः इति द्विधा। तत्र परशिवाश्रिताऽमोहकारिणी परा माया शुद्धोपाधिः । जीवाश्रितामोह-कारिणी जीवभेदकारिणी च अविद्या अशुद्धोपाधिः। अशुद्धोपाधेः संमिश्रोपाधिरिति नामान्तरम् ।

**उपाधिः पुनराख्यातः शुद्धाशुद्धविभेदतः ।**
**शुद्धोपाधिः परा माया स्वाश्रयामोहकारिणी ।।**
**अशुद्धोपाधिरप्येवम् अविद्याऽश्रयमोहिनी ।**
**अविद्याशक्तिभेदेन जीवा बहुविधाः स्मृताः ।।**

(सि.शि., ५.४४-४५)

२. पुनः उपाधिस्त्रिविधः। किञ्चित्सत्वरजोपाधिः, अत्यन्त-तामसोपाधिः, परतत्त्वमयोपाधिश्चेति । तत्र किञ्चित् सत्त्वरजोपाधिः भोक्ता । अत्यन्ततामसोपाधिः भोज्यम्, परतत्त्वमयोपाधिरीश्वरः, ब्रह्मचैतन्यमिति यावत् ।

**किञ्चित्सत्त्वरजोरूपं भोक्तृसंज्ञकमुच्यते ।**
**अत्यन्ततामसोपाधिर्भोज्यमित्यभिधीयते ।।**
**परतत्त्वमयोपाधि ब्र्ह्मचैतन्यमीश्वरः ।।**

(सि.शि.,५.४०)

## उपाधिकभस्म

पञ्चब्रह्ममन्त्रन्यासादिसम्बन्धात् सुसंस्कृतात् अग्नेः सकाशात् समुत्पन्नं भस्म उपाधिकं भस्म। सोपाधिकभस्म इत्यपि अस्य व्यवहारः। शिवागमप्रवीणाः उपाधिकं भस्म, सोपाधिकं भस्मेत्याहुः।

**शिवाग्न्यादिसमुत्पन्नं मन्त्रन्यासादियोगतः।**

**तदुपाधिकमित्याहुर्भस्मतन्त्रविशारदाः।।**

(सि.शि., ७.३; तत्त्व.प्र.)

(पश्यत – निरुपाधिकभस्म, सापाधिकभस्म)

## उपाधिदानस्थलम् (सोपाधिदानस्थलम्)

एकोत्तरशतस्थलेषु एकम्। तत्र च त्रयोदशतमम्। इदञ्च भक्तस्थलाश्रितपञ्चदशाङ्गस्थलेषु अन्यतमम्। फलाभिसन्धिपूर्वकं क्रियमाणं दानम् उपाधिदानम्। तादृशदानयुक्तस्य चतुर्विधसारायस्थलसम्पन्नस्य भक्तस्य स्थितिः उपधिदानस्थलम्। एतच्च सोपाधिदानस्थलमित्यपि व्यवह्रियते।

**फलाभिसन्धिसंयुक्तं दानं यद्विहितं भवेत्।**

**तत् सोपाधिकमाख्यातं मुमुक्षुभिरनादृतम्।।**

(सि.शि., ९.८१)

## उपांशुजपः

वाचिकः, उपांशुः, मानसः, इति त्रिविधजपेषु एकतमः। पार्श्वस्थैः यथा न श्रुतो भवति तथा किञ्चिदधरपुटं स्पृष्ट्वा मन्दमभिधीयमानः मन्त्रोच्चारः उपांशुजपः इत्युच्यते।

**जिह्वामात्रपरिस्पन्दादीषदुच्चारितोऽपि वा।**

**अपरैरश्रुतः स्वेन श्रुतश्चोपांशुरुच्यते।।**

(चं.आ.,क्रि.पा., ८.५८; पार. आ., ११.८६–८७)

**जपस्तु त्रिविधः प्रोक्तः वाचिकोपांशुमानसः ।**

**ईषत्स्पृष्ट्वाधरपुटं यो मन्दमभिधीयते ।।**

**पार्श्वस्थैरश्रुतस्सोऽयम् उपांशुः परिकीर्तितः ।।**

(सि.शि., ८.२७, २८–२९)

## उपासगकम्

उपास्यस्थलम्, उपासकस्थलम् इति द्विविधयोः स्थलयोः एकम् । तत्र अङ्गस्थलम् उपासकम् इत्युच्यते ।

**उपास्योपासकत्वेन स्वयमेव द्विधा भवेत् ।**

**लिङ्गस्थलमुपास्यं स्यादङ्गस्थलमुपासकम् ।**

(अ.सू.,२.१३)

## उपासना

जीवात्मपरमात्मनोरेकीभावः । अद्वैतस्थितिः । लिङ्गाङ्गसंयोगः ।

**उपासनैव संयोगः संयोगो द्वैतसंलयः ।**

**द्वैतस्य विलयश्चैव निवृत्तिः परिकीर्तिता ।।**

**निवृत्तिस्सैव विश्रान्तिर्विश्रान्तिः परमं सुखम् ।।**

(अ.सू., ५.६६–६५)

## उपास्यम्

लिङ्गस्थलाङ्गस्थलयोर्मध्ये लिङ्गस्थलमुपास्यस्थलम् ।

**लिङ्गस्थलमुपास्यं स्यात् ..................... ।।**

(अ.सू.,२.१३)

(पश्यत – उपासकम्)

## उभयस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । भक्तस्थलान्तर्गत-पञ्चदशाङ्गस्थलेष्वेकतमम् । **"यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ"** इति श्वेताश्वतरोपनिषद्वाक्यानुसारं शिवगुर्वोः भेदरहितत्वप्रतिपादकस्थलम् । अत्र लिङ्गगुर्वोः समानभक्त्या अर्चनं करणीयत्वेन विधीयते । गुरोः पूजनेन (लिङ्गरूपः) शिवः पूजितः भवति । तयोर्मध्ये परमार्थतः न कोऽपि भेदः दृश्यते ।

**अत्र भक्तस्थले...अवान्तरस्थलानि पञ्चदशेत्याहुः । तानि कानि इत्यत्र–पिण्डतेत्यादि । ... गुरुलिङ्गार्चनरूपोभयस्थलम् ... चेति ... पञ्चदशस्थलानि शिवभक्तस्य ।**

(सि.शि., तत्त्व.प्र., ५.३०)

**एवं सद्भक्तिस्थलसम्पन्नस्य भक्तस्य देहप्राणरूपकर्तृ-भृत्यत्वसम्बन्धो यथा इत्याकाङ्क्षायामनन्तरं उभयस्थलमित्युच्यते ।**

(कै.सा.,वि.सं.,१११)

**गुरोरभ्यर्चनेनापि साक्षादभ्यर्चितः शिवः ।**
**तयोर्नास्तिभिदा किञ्चिदेकत्वात् तत्त्वरूपतः ।।**

(सि.शि.,९.५१)

## उमापतिः

लीलया उमासङ्गतः शिवः ।

**लीलया सङ्गतः साक्षादुमापतिरितीरितः ।**
**लीलया रहितः साक्षात्स्वयम्भूरिति कथ्यते ।।**

(शि.त.र.,भा–१, १.४.४८)

(पश्यत – स्वयंभूः)

# ऊ

## ऊर्ध्वलिङ्गम्

अखण्डलिङ्गम्।

**ऊर्ध्वाय नमः। ऊर्ध्वलिङ्गाय नमः॥**

(म.ना.उ., १४.२)

**तत्रोर्ध्वलिङ्गाय नम इत्यखण्डलिङ्गमुच्यते।**

(लिं.धा.चं. पृ.७४, पं - ४)

# ए

## एकभाजनस्थलम्

एकोत्तरशतस्थलेषु त्रिचत्वारिंशत्तमम्। ऐक्यस्थलाश्रितचतुर्विधाङ्गस्थलेषु एकतमम्। शिवैकतां प्राप्तस्य साधकस्य सर्वात्मकशिवाद्वैतस्थितिः। विश्वं शिवमयम् इति भावनायुक्तस्य शिवैक्यस्य शिवैकाश्रयत्वात् स्थलमिदमेकभाजनमिति कथ्यते। स्वस्य सर्वस्य जगतः शिवस्य चाद्वैतभावनात् शिवैक्यः शिवप्रसाद एव मम प्रसाद इति प्रसादैक्यबुद्धिं भजते।

**विश्वं शिवमयं चेति सदा भावयतो धिया ।**
**शिवैकभाजनात्मत्वादेकभाजनमुच्यते ।।**
**स्वस्य सर्वस्य लोकस्य शिवस्याद्वैतदर्शनात् ।**
**एकभाजनयोगेन प्रसादैक्यमतिर्भवेत् ।।**

(सि.शि., १४.२८-२९)

## एकविंशतिदीक्षाः

गुरुणा शिष्याय दीयमानानां त्रिविधदीक्षाणाम् अवान्तरभूताः दीक्षाः । तत्र क्रिया - (कायोपदेश) - दीक्षायाः सप्त, मन्त्र -(मनोपदेश)- दीक्षायाः सप्त, वेधा -(प्राणोपदेश)- दीक्षायाः सप्त इत्येवम् आहत्य एकविंशतिदीक्षाः । तद्यथा -

१. क्रियादीक्षायाम्

| | |
|---|---|
| १. आज्ञादीक्षा | २. उपमादीक्षा |
| ३. कलशाभिषेकदीक्षा | ४. स्वस्तिकारोहणदीक्षा |
| ५. विभूतिपट्टदीक्षा | ६. आयतदीक्षा |
| ७. स्वायतदीक्षा | इति सप्त । |

(का.आ.,क्रि.पा., १.४३, चं.आ.,क्रि.पा.,९.१२)

२. मन्त्रदीक्षायाम्

| | |
|---|---|
| १. एकाग्रमतिदीक्षा | ५. लिङ्गनिष्ठादीक्षा |
| २. दृढव्रतदीक्षा | ६. लिङ्गमनोलयदीक्षा |
| ३. पञ्चेन्द्रियार्पणदीक्षा | ७. सद्योमुक्तिदीक्षा |
| ४. अहिंसादीक्षा | इति सप्त । |

(का.आ.,क्रि.पा., १.११०-१११)

३. वेधादीक्षायाम्

| | |
|---|---|
| १. समयदीक्षा | ५. अध्यात्मदीक्षा |
| २. निस्संसारदीक्षा | ६. तत्त्वविशोधिनीदीक्षा |

३. निर्वाणदीक्षा ७. तत्त्वबोधदीक्षा

४. तत्त्वदीक्षा इति सप्त ।

(का.आ.,क्रि.पा., १.९६–९७; चं.आ.,क्रि.पा.,९.१३)

(पश्यत – प्रत्येकमुपमादिदीक्षाः)

## एकस्थलम्

एकञ्च तत् स्थलम् एकस्थलम् । सृष्ट्यादिकारणं शिवतत्त्वम् । तच्चैकं सत् लिङ्गाङ्गभेदेन अनेकधा प्रतीयत इति एकस्थलम्, मठाकाशादिभेदेऽपि महाकाशस्यैकत्ववत् ।

**महद्घटप्रभेदेन यथाकाशं प्रतीयते ।**

**प्रतीयते तथा चैकस्थलं लिङ्गाङ्गभेदतः ।।**

(कै.सा.,वि.सं.,३१)

(पश्यत – स्थलम्)

## एकाग्रमतिदीक्षा

मन्त्रदीक्षान्तर्गतसप्तविधदीक्षास्वेकतमा । इष्टलिङ्गादन्यद्वस्तु न प्रेक्षस्व इत्येवंरूप उपदेश एकाग्रमतिदीक्षेति कथ्यते ।

**इष्टलिङ्गात् परं वस्तु शिष्य त्वं नावलोकय ।**

**इत्येकाग्रमतिं दत्त्वा दीक्षां दद्याद् दृढव्रताम् ।।**

(का.आ.,क्रि.पा.,१.११२)

## एकादशतत्त्वानि

रुद्रजातानि कलाद्येकादशतत्त्वानि । तानि च कला, अविद्या, रागः, कालः, नियतिः, भावकः, बोधकः, ईश्वरः, सदाशिवः, शक्तिः, शिवश्च ।

**तत्त्वान्यनेन रुद्रेण जातानीत्युच्यते शृणु ।।**

**कलाऽविद्या च रागश्च कालो नियतिरेव च ।**

**भावको बोधकश्चैव ईश्वरश्च सदाशिवः ।।**

**शक्तिश्च शिव इत्युक्तं तत्त्वमेकादशं स्मृतम् ।।**

(शि.त.र.,भा-१, १.७.१०-१२)

## एकादशधर्माः

सत्यम्, क्षमा, दया, शौचम्. नियमः, मृदुता, तपः, त्यागः, ब्रह्मचर्यम्, सन्तुष्टिः, ऋजुता - इति एकादशधर्माः ।

**धर्मा एकादश प्रोक्ता भक्तानां शुभवाञ्छिनाम् ।।**

(वी.स.सं.,७.१२)

(पश्यत - धर्माः)

## एकादशरुद्राः

सादाख्यसमुद्भवद्विपञ्चाशन्मूर्तिष्वन्यतमाः । कलाद्येकादशतत्त्वोत्पादकाः । ते च -

**शिवो महेश्वरः शम्भुः श्रीकण्ठो भव ईश्वरः ।।**

**महादेवः पशुपतिर्नीलकण्ठो वृषध्वजः ।**

**परमेश इमे रुद्राः एकादश समीरिताः ।।**

(शि.त.र.,भा.१,१.६.६१-६२ पृ. ५५)

(पश्यत - एकादशतत्वानि)

१. चन्द्रज्ञानागमे डा. एम्. शिवकुमारस्वामिभिः कृतायां टिप्पण्यां एकादशरुद्राणां नामानि एवं संगृहीतानि - अजः, एकपात्, अहिर्बुध्न्यः, पिनाकी, अपराजितः, त्र्यम्बकः, महेश्वरः, वृषाकपिः, शम्भुः, हरः, ईश्वरश्च (चं.आ.,क्रि.पा., १ - ३; म.भा.,आ.पर्व.६७; भाग., ६.६)

२. शब्दार्थकौस्तुभः इति संस्कृत-कन्नड शब्दकोशे एकादशरुद्राणां नामानि एवं परिगणितानि - अजैकपात्, अहिर्बुध्न्यः, विरूपाक्षः, सुरेश्वरः जयन्तः, बहुरूपः, त्र्यम्बकः, अपराजितः, वैवस्वतः, सावित्रः, हरश्च ।

(श.कौ.,५, पृ. २२९४)

## एकादशवक्त्ररुद्राक्षः

रुद्राक्षविशेषः। एकादशवक्त्ररुद्राक्षोऽयं एकादशरुद्राणां प्रतीकः। स एषः शिरसा धार्यः।

**एकादशास्यो रुद्राक्षो रुद्रः एकादशस्मृतः ।।**
**शिरसा धारयेन्नित्यं तस्य पुण्यफलं शृणु ।**
**धेनुकोटिसहस्रस्य दत्तस्य फलमश्नुते ।।**

(शि.त.र.,भा-३, ८.६.२८-२९ पृ. २२)

**एकादशमुखश्चाक्षं रुद्रैकादश दैवतम् ।**
**तदिन्द्रदैवतं प्रोक्तं सदा सौभाग्यवर्धनम् ।।**

(चं.आ., क्रि.पा, ७.३५)

## एकोत्तरशतस्थलम्

पिण्डादि ज्ञानशून्यान्तं, भक्तादि षट्स्थलान्तर्गतत्वेन अङ्ग-लिङ्ग-स्थलभेदानुसारेण स्वीकृतानि अवान्तरस्थलान्याहत्य एकोत्तरशतस्थलानि भवन्ति।

**वीरशैवमहातन्त्रमेकोत्तरशतस्थलम् ।**

(सि.शि.,१.३०)

**पिण्डादिज्ञानशून्यान्तमेकोत्तरशतस्थलम् ।**

(क्रि.सा.,भा-१, पृ.११, श्लो.६)

(पश्यत - स्थलानि)

**अङ्गस्थलानि (४४)**

भक्तस्थले पञ्चदश - १. पिण्डस्थलम्, २. पिण्डज्ञानस्थलम्, ३. संसारहेयस्थलम्, ४. गुरुकारुण्यस्थलम्, ५. लिङ्गधारणस्थलम्, ६. भस्मधारणस्थलम्, ७. रुद्राक्षधारणस्थलम्, ८. पञ्चाक्षरीजपस्थलम्, ९. भक्तमार्गक्रियास्थलम्, १०. उभयस्थलम्, ११, त्रिविधसम्पत्तिस्थलम्, १२. चतुर्विधसारायस्थलम्, १३. सोपाधिदानस्थलम्, १४. निरुपाधि-दानस्थलम्, १५. सहजदानस्थलं चेति

माहेश्वरस्थले नवधा–१६. माहेश्वरप्रशंसास्थलम्, १७. लिङ्ग-निष्ठास्थलम्, १८. पूर्वाश्रयनिरसनस्थलम्, १९. अद्वैतनिरसनस्थलम्, २०. आह्वाननिरसनस्थलम्, २१. अष्टमूर्तिनिरसनस्थलम्, २२. सर्वगत्व-निरसनस्थलम्, २३. शिवजगन्मयस्थलम्, २४. भक्तदेहिकलिङ्गस्थलं चेति।

प्रसादिस्थले सप्त – २५. प्रसादिस्थलम्, २६. गुरुमाहात्म्यस्थलम्, २७. लिङ्गमाहात्म्यस्थलम्, २८. जङ्गममाहात्म्यस्थलम्, २९. भक्तमाहात्म्य-स्थलम्, ३०. शरणमाहात्म्यस्थलम्, ३१. प्रसादमाहात्म्यस्थलं चेति।

प्राणलिङ्गिस्थले पञ्च – ३२. प्राणलिङ्गिस्थलम्, ३३. प्राण-लिङ्गार्चनस्थलम्, ३४. शिवयोगसमाधिस्थलम्, ३५. लिङ्गनिजस्थलम्, ३६. अङ्गलिङ्गिस्थलं चेति।

शरणस्थले चत्वारि – ३७. शरणस्थलम्, ३८. तामसनिरसनस्थलम्, ३९. निर्देशस्थलम्, ४०. शीलसम्पादनस्थलं चेति।

ऐक्यस्थले चत्वारि – ४१. ऐक्यस्थलम्, ४२. आचारसम्पत्ति स्थलम्, ४३. एकभाजनस्थलम्, ४४. सहभोजनस्थलं चेति।

**लिङ्गस्थलानि ५७**

भक्तस्थले नव – ४५. दीक्षागुरुस्थलम्, ४६. शिक्षागुरुस्थलम्, ४७. ज्ञानगुरुस्थलम्, ४८. क्रियालिङ्गस्थलम्, ४९. भावलिङ्गस्थलम्, ५०. ज्ञानलिङ्गस्थलम्, ५१. स्वयस्थलम्, ५२. परस्थलम्, ५३. चरस्थलं चेति।

माहेश्वरस्थले नव – ५४. क्रियागमस्थलम्, ५५. भावागमस्थलम्, ५६. ज्ञानागमस्थलम्, ५७. सकायस्थलम्, ५८. अकायस्थलम्, ५९. परकायस्थलम्, ६०. धर्माचारस्थलम्, ६१. भावाचारस्थलम्, ६२. ज्ञानाचारस्थलं चेति।

प्रसादिस्थले नव – ६३. कायानुग्रहस्थलम्, ६४. इन्द्रियानुग्रह-स्थलम्, ६५. प्राणानुग्रहस्थलम्, ६६. कायार्पितस्थलम्, ६७. करणार्पितस्थलम्, ६८. भावार्पितस्थलम्, ६९. शिष्यस्थलम्, ७०. शुश्रूषुस्थलम्, ७१. सेव्यस्थलं चेति।

प्राणलिङ्गिस्थले नव – ७२. आत्मस्थलम्, ७३, अन्तरात्मस्थलम्, ७४. परमात्मस्थलम्, ७५. निर्देहागमस्थलम्, ७६. निर्भावागमस्थलम्, ७७. नष्टागमस्थलम्, ७८. आदिप्रसादिस्थलम्, ७९. अन्त्यप्रसादि-स्थलम्, ८०. सेव्यप्रसादिस्थलं चेति ।

शरणस्थले द्वादश – ८१. दीक्षापादोदकस्थलम्, ८२. शिक्षापादोदकस्थलम्, ८३. ज्ञानपादोदकस्थलम्, ८४. क्रियानिष्पत्तिस्थलम्, ८५. भावनिष्पत्तिस्थलम्, ८६. ज्ञानिष्पत्तिस्थलम्, ८७. पिण्डाकाशस्थलम्, ८८. बिन्द्वाकाशस्थलम्, ८९. महाकाशस्थलम्, ९०. क्रियाप्रकाशस्थलम्, ९१. भावप्रकाशस्थलम्, ९२. ज्ञानप्रकाशस्थलं चेति ।

ऐक्यस्थले नव – ९३. स्वीकृतप्रसादिस्थलम्, ९४. शिष्टोदनस्थलम्, ९५. चराचरलयस्थलम्, ९६. भाण्डस्थलम्, ९७. भाजनस्थलम्, ९८. अङ्गालेपस्थलम्, ९९. स्वपराज्ञस्थलम्, १००. भावाभावलयस्थलम्, १०१. ज्ञानशून्यस्थलं चेति ।

(पश्यत – सि.शि. परिच्छेदाः ५–२०)

## एकोद्दिष्टविधानम्

मृतव्यक्तेः षोडशाराधनक्रमे तत्त्वसंयोजनप्रक्रियान्तर्गतत्वेन एकोद्दिष्टविधानं विधीयते । तेन तस्य रुद्रत्वं प्राप्यते । तत्त्वसंयोजनविधिना च महेशत्वं प्राप्यते। तत्त्वसंयोजनसिद्ध्यर्थमेकोद्दिष्टं कथ्यते। अत्र विश्वे देवानाम् आवाहनं नास्ति, अधिश्रवणकीर्तने न स्तः। एवमेव प्रदक्षिण-विसर्जनसीमान्तगमनकार्याणि न सन्ति। द्वादशे दिने तत्त्वसंयोजनं करणीयमस्ति । तत्पूर्वमेव एकादशे दिने एकादशाहानाम्न्या आराधनया सह एकोद्दिष्टविधानं विधीयते ।

**आराधनं ततः कार्यं दिव्यरूपवतः पितुः ।**

**एकोद्दिष्टविधानेन रुद्रत्वं भवति ध्रुवम् ।।**

**तत्त्वसंयोजनेनैव महेशत्वं पुनर्भवेत् ।।**

**अकृत्वा षोडशविधिं न कार्यं तत्त्वयोजनम् ।**
**द्वादशेऽह्नि पितुस्तत्त्वसंयोजनचिकीर्षुणा ।।**
**अवश्यं हि विधेयानि षोडशाराधनान्यपि ।**
**एकोद्दिष्टविधानेन तत्त्वसंयोगसिद्धये ।।**
**क्रियते यदेकमुद्दिश्य चैकोद्दिष्टं प्रकीर्तितम् ।**
**विश्वे देवावाहनं च नाभिश्रवणकीर्तनम् ।।**
**प्रदक्षिणविसर्गे वा सीमान्तगमनं न हि ।।**

(चं.आ.,च.पा.,४.१५, २७-२९; मकुट., च.पा.,६.८-९)

# ऐ

## ऐक्यः

भक्तादिषट्स्थलानामन्तिममैक्यस्थलं सम्प्राप्तवान् । लिङ्गाङ्ग-सामरस्यवान् । शिवतत्त्वविलीनवान् । परिशुद्धात्मा ।

**ऐक्यस्तु चिच्छक्तियुक्तस्य महालिङ्गस्य समरसभक्त्या सद्भाव-हस्तेन तृप्तिपदार्थं धृत्वा प्रणवमन्त्रमनुस्मरन् मनोमुखे समर्प्य तत्प्रसात्तृप्तस्सन् परिणामी भवति ।**

(शि.मं., पृ - ४७, पं-२१)

**निर्धूतमलसम्बन्धो निष्कलङ्कमनोगतः ।**
**शिवोऽहमिति भावेन निरूढो हि शिवैक्यताम् ।।**

(सि.शि.,१४.५)

**एवंविधसतिपतिभावनिवृत्याविर्भावनिराभासस्सन् विकल्प-वैमुख्येन सर्वं शिवात्मकमिति विमृशन् शिखिकर्पूरसंयोगवत् अन्तर्मुखमहालिङ्गैकलोलीभूत एवैक्यः ।**

(वी.ध.शि., पृ.३२)

**शिवजीवोभयभ्रान्तिरहितश्चैक्य उच्यते ।**

(सू. आ., क्रि.पा, ८.३५)

## ऐक्यस्थलम्

स्थलभेदः । भक्तादिषट्स्थलेषु एकम्। तत्र चान्तिममिदम् ।

ऐक्यस्थलभेदः -

**१. अङ्गस्थलानि चत्वारि**

१. ऐक्यस्थलम्, २. आचारसम्पत्तिस्थलम्, ३. एकभाजनस्थलम्, ४. सहभोजनस्थलम्

(सि.शि.,१४.३)

**२. लिङ्गस्थलानि नव**

१. स्वीकृतप्रसादिस्थलम्, २. शिष्टोदनस्थलम्, ३. चराचरलयस्थलम्, ४. भाण्डस्थलम्, ५. भाजनस्थलम्, ६. अङ्गालेपस्थलम्, ७. स्वपराज्ञस्थलम्, ८. भावाभावविनाशस्थलम्, ९. ज्ञानशून्यस्तलम्

(सि.शि.,२०.२-५)

(पार. आ, ६.२६)

## ऐक्यस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । ऐक्यस्थलान्तर्गत चतुर्विधाङ्गस्थलेष्वेकतमम् । इन्द्रियविषयेभ्यः प्राप्यमाणे सुखलेशे विरक्तः सन् निर्मलचित्तः शिवानन्दमथे महासमुद्रे तादात्म्यभावेन प्रविष्टस्य ऐक्यस्येदं लिङ्गैक्यस्थलम् । आणवादिमलसंपर्करहितः निष्कलङ्कमनोभावनान्, शिवोऽहंभावे नितरां मग्नःसन् शिवयोगी शिवैक्यतां भजते ।

ऐक्यस्थलमिदं प्रोक्तं चतुर्धा मुनिपुङ्गव ।
ऐक्यमाचारसम्पत्तिरेकभाजनमेव च ।।
विषयानन्दकणिका निस्पृहो निर्मलाशयः ।
शिवानन्दमहासिन्धुमज्जनादैक्यमुच्यते ।।
निर्धूतमलसंबन्धो निष्कलङ्कमनोगतः ।
शिवोऽहमितिभावेन निरूढो हि शिवैक्यनाम् ।।

(सि.शि.,१४.३-५)

## ऐक्याङ्गम्

ज्योतिर्मये लिङ्गे परमात्मनि सर्वं समर्प्य स्थितस्य भक्तस्य स्थितिः।
ऐक्याङ्गं भाजि लिङ्गे महति हृदिमुखे चिन्महाशक्तियुक्ते
नित्यं भावेन हस्तेन च समरसभक्तिप्रयुक्तः स्वयं सन् ।
ज्ञातव्यं चार्पयित्वा विमलमतिरवश्यं समर्प्यार्पणीयम्
तस्माल्लब्धं विशुद्धं धनतरपरिणामप्रसादं भजेत ।।

(अ.सा.सं., भा.१, १.१६१, पृ.५४)

# ओ

## ओम् = ॐकारः

प्रणवः। शिवात्मकः। तेजोबीजम्। सर्वेषां मन्त्राणां मूलम्। अकारोकारमकारसंयोगजन्यः मङ्गलार्थप्रतिपादकमन्त्रः। शिवः, ब्रह्म

मुक्तिस्वरूपं इत्येवं अनेके प्रणवार्थाः। तत्र एकैकमप्यक्षरं एकैकमर्थं प्रतिबोधयति। प्रणवेन युक्तः पञ्चाक्षरीमन्त्रः षडक्षर इत्युच्यते।

ओंकारः प्रणवश्चैव ब्रह्मज्ञानं शिवात्मकम्।
तेजोबीजं निष्कलं स्यात्तारकं निष्कलात्मकम्॥
ओंकारप्रभवं सर्वं त्रैलोक्यं सचराचरम्।
प्रणवो हि परं ब्रह्म प्रणवः परमं पदम्॥

(शि.त.र.,भा-१,१.५.२६, ३०)

ओंमित्येकारं ब्रह्म वदन्ति सर्वयोगिनः।

(वा.शु.आ., ६.१०)

मन्त्रन्यासादिभूतेन प्रणवेन महामनोः।
प्रबोध्यते महादेवः केवलश्चित्सुखात्मकः॥
प्रणवेनैकवर्णेन परब्रह्म प्रकाश्यते।
अद्वितीयं परानन्दं शिवाख्यं निष्प्रपञ्चकम्॥
परमात्ममनुर्ज्ञेयः सोऽहंरूपः सनातनः।
जायते हंसयोर्लोपादोमित्येकाक्षरो मनुः।
प्रणवेनैव मन्त्रेण बोध्यते निष्कलः शिवः।
ओंकारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः।
शैवागमेषु वेदेषु षडक्षर इति स्मृतः॥

(सि.शि., ८. १८-२१, १७)

अकारो ब्रह्मबीजं स्यादुकारो विष्णुरुच्यते।
मकारो रुद्रबीजं च तेषां देहात्मकः शिवः॥
अकारः प्रकृतिश्चैव ह्युकारः पुरुषात्मकः।
तन्नियन्ता मकारः स्यान्नादः साक्षात्सदाशिवः॥
इच्छाशक्तिरकारः स्यात्क्रियाशक्तिरुकारकः।

ज्ञानशक्तिर्मकारः स्यान्नादः साक्षात्परः शिवः ।।
अकारो रक्तवर्णश्च श्यामलः स्यादुकारकः ।
मकारः स्फटिकाभः स्याद्वर्णातीतः शिवाक्षरः ।।
अकारो राजसः प्रोक्तः उकारस्तामसात्मकः ।
मकारः सात्विको ज्ञेयो नादः स्यात्त्रिगुणात्मकः ।।
अकारो ब्रह्मरूपः स्यादुकारो विष्णुरूपकः ।
रुद्रात्मको मकारः स्यादोंकारस्तु सदाशिवः ।।
नादः परशिवो ज्ञेयः पञ्चदेवात्मकः स्मृतः ।
अकारः स्थापयेद्बिन्दुजाग्रत्स्थाने वरानने ।।
स्वप्नस्थमथ जानीयादुकारं नादरूपकम् ।
सुषुप्तिस्थं मकारञ्च कलारूपं विनिर्दिशेत् ।।
ॐकारो मम देहः स्यात् ...........
प्रणवः सर्वतत्त्वानां बीजं कारणकारणम् ।।
तस्मादयं महामन्त्रः सर्वस्यजगतः प्रभुः ।
.............. ज्ञानात्मा प्रणवः स्मृतः ।।
ॐकारः सर्वमन्त्राणां मन्त्रराट् परिकीर्तितः ।
पञ्चाक्षरयुतो देवि साक्षात्सायुज्यकारणम् ।।

(सू.आ.क्रि.पा,४. १०-१६, ३६, ५२,५३, ५५, ५८)

उच्चारयन्ति यमिनः शिवसङ्गमाय
वामादिशक्तिसहितं सकलस्य हेतुम् ।
देवादिजन्मविलयस्थितिभूमिभूतम्
उच्चारयामि हृदयं प्रणवं तथाऽन्तम् ।।

(वा.शु.आ, ६.१)

(नादः=हकारः)

**ओंकारस्य पञ्चभेदाः**

प्रणवस्य पञ्चभेदाः–साकल्यं शाम्भवं सौख्यं सावश्यं सायुज्यं चेति। एते पञ्चप्रणवाः सदाशिवस्य पञ्चमुखोद्भूताः। अ–उ–म–ह– साकल्यम् ; अ–उ–म–ह–ई – शाम्भवम् ; अ–उ–म–ह–इ – सौख्यम् ; अ–उ–म–ह–ए–सावश्यम् ; अ–उ–म–ह–औ – सायुज्यम्।

**प्रणवः पञ्चभेदः स्यात् तद्भेदं शृणु षण्मुख।**
**साकल्यं शाम्भवं सौख्यं सावश्यं सायुजं तथा।।**
**एते वै पञ्चभेदास्तु पञ्चवक्त्रेषु चोद्भुताः।**
**अकारश्चोकारश्च मकरश्च त्रिधा भवेत्।।**
**त्रितयान्तर्गतं नादं चतुर्थं मुक्तिकारणम्।**
**साकल्यमिति विज्ञेयं पूर्ववक्त्रात्तु जायते।**
**चतुर्थस्वरसंयुक्तं शाम्भवं दक्षिणानने।।**
**तृतीयस्वरसंयुक्तं सौख्यं वै पश्चिमानने।।**
**एकादशकलोपेतं सावश्यं सौम्यवक्त्रके।**
**गुह्यं चतुर्दशोपेतं सायुज्यं चोर्धवक्त्रके।।**

(वा.शु.आ., ६.४–१५)

अयञ्च प्रणवः साकल्यम्, शाम्भवम्, सौख्यम्, सावश्यम्, सायुज्यम् इति पञ्चधा। ईश्वरस्य सद्योजातादिषु पञ्चवक्त्रेषु इमे च पञ्चविधाः प्रणवाः सञ्जाताः।

**सर्वमन्त्रेषु मुख्योऽयमाद्यः प्रणव ईरितः ।**
**सर्वेषामेव मन्त्राणां मातृस्थानमितीरितम्।।**
**सोऽयं पञ्चविधः प्रोक्तः साकल्यादिप्रभेदतः।**
**साकल्यं प्रथमं प्रोक्तं शाम्भवन्तु द्वितीयकम्।।**
**सौख्यं तृतीयमित्युक्तं सावश्यं च चतुर्थकम्।**

**सायुज्यं पञ्चमं प्रोक्तं भेदमेषां शृणु क्रमात् ।।**

**सद्यादिपञ्चवक्त्रेषु जातं प्रणवपञ्चकम् ।**

(सू.आ, क्रि.पा.,४.४-६)

साकल्यादिभेदानां लक्षणानि तत्रैव उपलभ्यन्ते (सू.आ, क्रि.पा.,१९-२३)

# औ

## औपासनाग्निजम्

भस्मभेदः । औपासनाग्निना जातं भस्म गृहस्थैः धार्यम् ।

**औपासनसमुत्पन्नं गृहस्थानां विशिष्यते ।**

(क्रि.सा., भा-२, ६.३५)

## औपभोगिकम्

समर्पणं द्विविधम्, स्थूलं सूक्ष्मञ्चेति तत्र सूक्ष्ममेव औपभोगिकमिति कथ्यते। शब्दादिविषयाणां मूलभावेन समर्पणं स्थूलं भवति। इदं तावत् अर्चाङ्गम्। शब्दादिविषयाणां पुनः भावरूपेण समर्पणं सूक्ष्मम्। इदं सर्वशान्तिकम्। येनेन्द्रियेण विषय उपभुज्यते तदिन्द्रियगते लिङ्गे समर्पणं सूक्ष्मं भवति।

**शब्दादि विषया यत्र भावेनैव न चान्यथा।**

**समर्प्यते रूपमेव तद्धि स्थूलं प्रकीर्तितम्।।**

**अर्चाङ्गं स्थूलमित्युक्तं सूक्ष्मं स्यादौपभोगिकम्।**

**पदार्थभोगावसरे शब्दादीनां विभागतः।।**

**समर्पणं हि तत्सूक्ष्ममिदं स्यात् सार्वकालिकम्।**

**यदा येनेन्द्रियेणैव विषयो ह्युपभुज्यते।**

**तदिन्द्रियगते लिङ्गे ह्यर्पणं सूक्ष्ममीरितम्।।**

(चं.आ., क्रि.पा., ५.२९-३१)

## औपाधिकम्

लिङ्गविशेषः। शिरोग्रीवादिषु यदिष्टलिङ्गरूपेण धार्यते तत् औपाधिकं लिङ्गम्। तद्भिन्नं यत् ज्योतिर्लिङ्गरूपेण दहाम्भोजे ध्यायते तत् सूक्ष्मम्।

**भक्तानुग्रहार्थमौपाधिकपरिच्छिन्नेष्टलिङ्गरूपेणाननशिरोग्रीवासु सूक्ष्मज्योतिर्लिङ्गरूपेण गुहारूपदहराम्भोजे...योजयितुं शक्यत्वात्।**

(लिं.धा.चं., पृ.४४-४५)

# क

## कनिष्ठभक्ताः

सूक्ष्मागमोक्तदिशा चतुर्विधभक्तेष्वेकतमाः।

**भक्ताश्चतुर्विधा लोके नानालक्षणसंयुताः।**

**कनिष्ठा मध्यमाश्चैवमुत्तमा उत्तमोत्तमाः।।**

(सू.आ.,क्रि.पा.,९.४)

(पश्यत – चतुर्विधभक्ताः)

## कनिष्ठा भक्तिः

जङ्गमापेक्षया स्वेष्टलिङ्गे अधिका या भक्तिःसा कनिष्ठा भक्तिः।

**चरे न्यूना स्वेष्टलिङ्गात् कनिष्ठा भक्तिरुच्यते।**

(चं.आ.,क्रि. पा.,४.३२)

## कन्था

कन्था नाम भिक्षाचरणं कुर्वता जङ्गमेन स्कन्धतः लम्बमानं स्यूतम्।

**शिवसूत्रेण तां कन्थां बद्ध्वा आवगुणान्वितः।**

**तस्य शिष्यस्य हृन्मध्ये देवदेवं सदाशिवम्।।**

(वी.आ.उ.,पृ.२४, उलो.३१७)

## करणम्

मनोबुद्धिचित्ताहङ्काराः चत्वारि अन्तरिन्द्रियाणि (अन्तः करणचतुष्टयम्), मनोवाक्कायरूपं त्रिकरणम्, नेत्रादिपञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि च 'करण' शब्देन कथ्यन्ते।

**आसञ्जनं समस्तानां करणानां परात्परे ।**

(सि.शि.,१७.३९)

## करणार्पणम्=करणार्पितम्

कायार्पणम्, करणार्पणम्, भावार्पणमिति त्रिविधार्पणेष्वेकम्।

करणमालम्ब्य भुज्यमानस्य विषयसुखस्य शिवे समर्णणम्।

**आसञ्जनं समस्तानां करणानां परात्परे।**

**शिवे यत् तदिदं प्रोक्तं करणार्पितमागमे।।**

(सि.शि., १७.३९)

**करणार्पितमाख्यातं ततो भावार्पितं मतम्।**

(सि.शि.,१७.३)

## करणार्पितस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। प्रसादिस्थलसम्बद्धेषु नवविध-लिङ्गस्थलेष्वेकतमम्।

(पश्यत-पूर्वोक्तं. सि.शि., १७.३९)

**शरीरे अर्पितमुखापन्नलिङ्गं प्रसादिनः**
**अन्तःकरणे अर्पितमुखं प्राप्तस्थितिः।**

(कै.सा.,उ.भा-३, वि.सं.,५२५)

## करणार्पकः

यद्यत् करणमवलम्ब्य यत् विषयजं सुखं भुज्यते तत् शिवलिङ्गे समर्प्य यः भुङ्क्ते सः करणार्पकः।

**यद्यत्करणमालम्ब्य भुङ्क्ते विषयजं सुखम्।**
**तत्तच्छिवे समर्प्यैष करणार्पक उच्यते ।।**

(सि.शि., १७.४०)

## करपीठपूजा=करपीठार्चनम्

कररूपपीठे इष्टलिङ्गं संस्थाप्य विधीयमाना लिङ्गपूजा । बाह्य-पीठार्चनात् करपीठार्चनं श्रेष्ठम्।

**लिङ्गधारिणां करपीठपूजायाः साधितत्त्वेन......।**

(लिं.धा.चं., पृ.२२९)

**बाह्यपीठार्चनादेतत् करपीठार्चनं वरम्।**

(सि.शि., ६.५५)

## करन्यासः

"विद्यामयो देहः सम्पादनीयः" इति भौतिकशरीरम् अमृतपावन-भावनया विद्यामयं कृत्वा करशुद्धिपुरस्सरं करन्यासं कुर्यादिति नियमः ।

**अन्तर्देहं प्रविष्टं तं ध्यात्वा हृदयपङ्कजे ।**
**पुनश्चामृतवर्षेण सिञ्चेत् विद्यामयं वपुः ।।**

**पुनः कुर्यात् करन्यासं करशुद्धिपुरस्सरम् ।।**

(चं.आ.,क्रि.पा.,११.३१-३२)

**एषः करन्यासक्रमः-**

नं सद्योजाताय कनिष्ठिकाभ्यां नमः ।

मं वामदेवाय अनामिकाभ्यां नमः ।

शिं अघोराय मध्यमाभ्यां नमः ।

वां तत्पुरुषाय तर्जनीभ्यां नमः ।

यं ईशानाय अङ्गुष्ठाभ्यां नमः ।

## करस्थलम्

शिवलिङ्गधारणस्थलेष्वेकम्। शिवलिङ्गधारणस्थलानि च शिरः, उदरं, वक्षःस्थलं, करस्थलञ्च।

**मूर्ध्नि वा कण्ठदेशे वा कक्षे वक्षस्थलेऽपि वा।**
**कुक्षौ हस्तस्थले वापि धारयेल्लिङ्गमैश्वरम्।।**

(सि.शि.,६.५२)

स्कान्दे शङ्करसंहितायाम् -

**कृत्वा निधेहि सततं लिङ्गवस्त्रेण वेष्टितम्।**
**मस्तके कन्धरे कुक्षौ वक्षस्यथ करस्थले।।**

(लि.धा.चं., पृ.४५)

## कर्तृलिङ्गम्

कर्तृसादारव्यम् । अस्याधिदेवता ईश्वरः। अत एतत्कर्तृलिङ्गम्।

**एवं तदैश्वरं रूपं लिङ्गं कर्त्राभिधानकम्।**
**एवं तदैश्वरं प्रोक्तं कर्तृलिङ्गमिहोच्यते।**

(सू.आ.,क्रि.पा.,१.४२)

(तत्स्वरुपस्य विवरणार्थं पश्यत- सू.आ.,क्रि.पा.,१.४४-४७; शि.त.र.,भा-१,६.३५-३८)

## कर्तृसादाख्यम्

सादाख्यभेदः। ज्ञानशक्तेर्दशांशेन जन्यं तत्त्वम्। ज्ञानकर्तृस्वभावात्कर्तृनाम्ना व्यवह्रियते। जगत्कारणभूतमिदं स्थूलं दीर्घं च दिव्यलिङ्गम्। अस्याधिदेवता ईश्वरः। अतश्चैतत्कर्तृलिङ्गमित्युच्यते।

(पश्यत–कर्तृलिङ्गम्)

**ज्ञानशक्तिदशांशेन कर्तृसादाख्यमुद्भवम्।**

(शि.त.र.,भा–१,१.६.३२)

(पश्यत – सादाख्यम्, षट्सादाख्यानि)

## कर्म

क्रियते अनेन (करणे) इति, क्रियायाः भाव इति वा कर्म।

१. सुखदुःखकारणीभूतं पूर्वजन्मकृत्यम्। अदृष्टम्। ललाटरेखा। कर्मवशाज्जीवानामवस्थान्तरप्राप्तिः वैषम्यंच। कर्मफलभोगाच्च तत्क्षयः। आत्मज्ञानिनां नैव कर्मफललेपः।

**चक्रनेमिक्रमेणैव भ्रमन्ति शरीरिणः।**
**जात्यायुर्भोगवैषम्यकारणं कर्म केवलम्।।**

(सि.शि., ५.४९)

**न कर्म लिप्यते नरे।**

(ई.उ.,२)

२. मलं, माया, कर्म, बिन्दुः, तिरोधानमिति पञ्चपाशेष्वेकम्।

**.......................पाशः कर्ममलादिकम्।**

(सू.आ,क्रि.पा, ५.२०; चं.आ., क्रि.पा,१.११)

**कार्मस्तु पाशश्चिद्ज्ञानयोगसन्यसनैश्च वा।**
**भोगेन तदभावे वा क्षीणभावं समश्नुते।।**

(शि.त.र.,भा–३,९.३.१०८–१०९)

३. आणव–मायीय–कार्मिकेति मलत्रये एकतमम्।

**दीयते लिङ्गसम्बन्धः क्षीयते च मलत्रयम्।**

(का.आ., क्रि.पा., १.१२)

**तनुत्रयगतानादिमलत्रयमिदं गुरुः।**

(चं.आ, क्रि.पा, ३.४७)

४. शिवार्चनादिकमपि कर्म। तत् त्रिविधम्– बाह्यम्, आभ्यन्तरम्, बाह्याभ्यन्तरञ्चेति। अन्यगोचरं शिवपूजादि कर्म बाह्यम्।

अन्येभ्यः अगोचरं केवलं स्वसंवेद्यं कर्म आभ्यन्तरम्। मनसः लिङ्गसक्तत्वे बाह्याभ्यन्तरं कर्म।

**अन्यात्मविदितं बाह्यं शम्भोरभ्यर्चनादिकम्।**
**तदेव तु स्वसंवेद्यं अभ्यन्तरमुदाहृतम्।।**
**मनो महेशप्रवणं बाह्याभ्यन्तरमुच्यते ।।**

(सि.शि., ९.२०)

## कर्मकाण्डः

कर्मकाण्डः, ज्ञानकाण्डः, भक्तिकाण्डेष्वेकतमः । तत्र अहं धर्माधर्मकर्मणां समस्तानां कर्ता, इत्यभिमानेन युक्तत्वं कर्मकाण्ड इत्युच्यते।

**अहं कर्ता समस्तस्य धर्माऽधर्मस्य कर्मणः ।**
**इत्यनेनाभिमानेन कर्मकाण्डोऽयमुच्यते ।।**

(अ.सू.,८.२०)

(पश्यत – ज्ञानकाण्डः, भक्तिकाण्डः)

## कर्मक्षयः

महेश्वरस्योपाङ्गषट्के एकतमः ।

**भक्तिः कर्मक्षयः ........................ ।**

(पार.आ.,६.४१)

(पश्यत – उपाङ्गषट्कम्)

## कर्ममलम्=कार्ममलम्

मलभेदः। शुभाशुभवासनामयम्।

**शुभाशुभवासनारुषितं कार्ममलम्।**

(शि.मं.,पृ.५२)

(पश्यत–कर्म, कार्मिकमलम्)

## कर्मयज्ञः

तपः, कर्म, जपः, ध्यानं चेति पञ्चयज्ञेष्वेकतमः। कर्म च इह शिवार्चनम्। न तु यागादिकम्।

**कर्मयज्ञस्तपोयज्ञो...पञ्चयज्ञ इमे स्मृताः।**

(सू.आ, क्रि.पा, ६.२६)

**शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते।**

(पार.आ, १७.८१; सि.शि., ९.२२)

**तद्भेदः–**

सकामनिष्कामभेदात् द्विधा। सकामकर्मयज्ञेन पूजकः कामान् भुङ्क्त्वा पुनर्जन्मावाप्नोति। निष्कामकर्मयज्ञेन पूजकः परं ज्ञानं लब्ध्वा मोक्षमवाप्नोति।

**सकामे तु फलं भुङ्क्त्वा जायेत भुवि पूर्ववत्।**
**निष्कामेऽपि परं ज्ञानं लब्ध्वा मोक्षमवाप्नुयात्।।**

(सू.आ, क्रि.पा, ६.२७)

**कर्मयज्ञो द्विधा प्रोक्तः कामाकामविभेदतः।।**
**कामान् कामितरो भुक्त्वा कामासक्तः पुनर्भवेत्।**
**अकामो रुद्रभवने भोगान् भुक्त्वा ततश्चुतः।।**

(शै.र,भा–२, १२.८–९)

## कर्मसादाख्यम्

पञ्चसादाख्येष्वेकतमम्। क्रियाशक्तिदशांशजन्यसदाशिवतत्त्वम्। क्रिया च कर्म। अत एतत्कर्मसादाख्यम्। नियतिकलायुक्तं नादबिन्दुसमायुतं रूपं कर्मसादाख्यम्। जगत्सृष्टेः कारणभूतम्, संयोगभावस्य तत्त्वं कर्मसादाख्यम्। तदिदं पञ्चसादाख्यसंयोगरूपम्। कर्त्रादिसादाख्यचतुष्कं निष्कलम्। कर्मसादाख्यं तु सकलम्। एतस्मादेव सादाख्यात् पञ्चविंशतिलीलामूर्तिविशिष्टमहेश्वरः समजायत।

**निवृत्तिकलया युक्तं क्रियाशक्तिसमुद्भवम्।**
**नादबिन्दुसमायुक्तं लिङ्गं सृष्ट्यादिकारणम्।।**
**क्रियाविशेषतत्त्वाख्यं कर्मरूपमुदीरितम्**

(सू.आ, क्रि. पा., १.४३- ४४)

**क्रियाशक्तिदशांशेन कर्मसादाख्यसमुद्भवम्।।**
**क्रिया कर्मेति विज्ञेया तस्मात्कर्मेति नामतः।**
**योनिलिङ्गप्रकारेण जगत्सृष्ट्यर्थकारणम्।**
**तथा संयोगभावस्य तत्त्वं कर्मेत्युदाहृतम्।।**

(शि.त.र.,भा-१,१.६.३९-४०, ४४)

(पश्यत - सादाख्यम्, षट्सादाख्यानि)

## कलशाभिषेकदीक्षा

क्रियादीक्षान्तर्गतसप्तदीक्षास्वेकतमा। पञ्चब्रह्मसङ्केतरूपेभ्यः पञ्चकलशेभ्यः पवित्रजलमादाय शिष्यमस्तकस्योपरि सिञ्चनमेव सा।

**आज्ञोपमा च कलशाभिषेकाख्या ततः परम्।**

(चं.आ.,क्रि. पा., ९.१२.; का. आ., क्रि.पा.,१. ४३)

## कला

षट्त्रिंशत्तत्त्वेष्वन्यतमम्। तत्र सप्तमं तत्त्वम्। जगत्सृष्टिकारण-भूतनादबिन्दुकलातत्त्वेष्वेकम्। नादबिन्दुकलाभेदात् लिङ्गभेदः। कला च नादबिन्दुसंयोगप्रतीकः।

**बिन्दुनादकलाभेदाल्लिङ्गत्रयमुदाहृतम्।।**

(अ.सू., ३.१५)

**बिन्दुश्शक्तिश्शिवो नादः कला संयोग एव च।**

(वी.प्र.,६०,श्लो.१)

**कलाभेदः**

सा च कला पञ्चधा षड्विधेऽति द्विविधा। पञ्चधानिवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता ।

**षड्विधा** – निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता, शिान्त्यतीतोत्तरा। एताः षट् कलाः आचारादि षड्लिङ्ग सम्बद्धाः।

**निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च।**
**शान्त्यतीतकलेत्येताः स्थिताःब्रह्मादिमूर्तिषु।।**

(शि.यो.प्र., १.२६)

षड्विधशक्तयः षट्स्थलेषु समावेशिताः। आचारलिङ्गम्, गुरुलिङ्गम्, शिवलिङ्गम्, चरलिङ्गम्, प्रसादलिङ्गम्, महालिङ्गश्चेति षड्विधलिङ्गानि क्रमशः भक्तादि स्थलाश्रितानि। तल्लिङ्गसम्बद्धाः शक्तयः। तासां शक्तीनां शान्त्यतीतादिकलास्वरूपमुक्तम्।

**शान्त्यतीतोत्तरा नाम चिच्छक्तिरिति कीर्तिता।**
**शान्त्यतीता पराशक्तिः शान्तिरेवादिसंज्ञिता।।**
**इच्छाशक्तिश्च विद्या स्यात् प्रतिष्ठा ज्ञानरूपिणी।**
**निवृत्तिः स्यात् क्रियाशक्तिरिति पर्यायसङ्गतिः।**

(अ.सू., ३.२४–२६)

**सा स्वतन्त्रप्रकाशताशक्तिरेव क्रमादेषु लिङ्गेषु षड्रूपतामगमत्।**

(शि.मं.,पं.४-११)

## कलाध्वा

जगति सादाख्यप्रकटनवेलायां जायमानसञ्चलनप्रवाहको मार्गः। मन्त्राध्वा, पदाध्वा, वर्णाध्वा, भुवनाध्वा, कलाध्वा, चेति षडध्वस्वेकः अर्थरूपः।

**निवृत्तिप्रमुखाः पञ्च कलाध्वेति समीरिताः।**
**अर्थरूपं कलाध्वानं मेढ्रे न्यसेत्तदनन्तरम् ।।**

(शि.त.र.,भा-३, ९.३.८५; का.आ.,१.६७-६८, ७९-८१)

## कलाब्रह्म

मूर्तिब्रह्म, तत्वब्रह्म, भूतब्रह्म, पिण्डब्रह्म, कलाब्रह्मेति पञ्चब्रह्मतत्त्वेष्वेकतमम्। ईश्वरस्य पञ्चमुखानि।

ईशानादिसद्योजातपर्यन्तं पञ्चब्रह्म कलाब्रह्म इत्युक्तम् । ईशानादि पञ्चब्रह्ममन्त्रेषु ईशानस्य पञ्च, पुरुषस्य चतस्रः, अघोरस्य अष्टौ, वामदेवस्य त्रयोदश, सद्योजातस्य अष्टौ इत्याहत्य अष्टत्रिंशत् कलाः ज्ञाताः । तस्मात् ईशानादीनां कलाब्रह्म इत्यभिधानम् ।

**ईशानः पुरुषश्चैव अघोरो वामदेवकः ।**
**सद्योजातश्च पञ्चैते कलाब्रह्म प्रकीर्तिताः ।।**
**ईशानस्य कलाः पञ्चपुरुषस्य चतुष्कलाः ।**
**अघोरस्य कलाश्चाष्टौ वामदेवे त्रयोदश ।।**
**सद्यस्याष्टकला ज्ञेयाः अष्टत्रिंशत्कला स्मृताः ।**

(वा.शु. आ.,७.१९-२१)

## कल्पम्

१. भस्मभेदः। शास्त्रोक्तप्रकारेण गोमयमानीय अग्निना दग्ध्वा कृतं भस्म।

**यथा शास्त्रोक्तविधिना गृहीत्वा गोमयं नवम्।**

**सद्येन वामदेवेन कुर्यात् पिण्डमनुत्तमम्।**

**शोषयेत् पुरुषेणैव दहेद् घोराच्छिवाग्निना।**

**कल्पं तद् भस्म विज्ञेयम्....।।**

(सि.शि.,७.१५-१६;शि.त.र.,भा-३, ८.५.५५)

चतुर्विध भस्मसु कल्पं श्रेष्ठम्। **कल्पादिषु चतुर्षु कल्पभस्म उत्कृष्टम्।** शिष्टत्रिविधभस्म कल्पभस्मालाभात् अङ्गीकरणीयमित्यर्थः।

**एषामादिममुत्कृष्टमन्यत् सर्वमभावतः।**

(सि.शि., ७.१४)

२. कल्पादि चतुर्विधस्नानेष्वेकम् । कल्पभस्मन क्रियमाणं स्नानम् ।

**स्नानं चतुर्विध तत्र भवेद् कल्पादिभेदतः ।**

(शि.त.र.,भा-३, ८.५.३८)

(पश्यत – आग्नेयस्नानम्)

## कामदम्

भस्मभेदः। परिशुद्धभूतले पतितं गोमयं संस्कृत्य प्राप्तं भस्म कामदम्।

**शान्तिकं पौष्ठिकं भस्म कामदं च त्रिधा भवेत्।**

**सुशुद्धे भूतले दैवात् पतितं गोमयं तु यत्।**

**प्रासादेन दहेदेवमेतत् कामदमुच्यते।।**

(चं.आ., क्रि.पा., ६.३१-३३;क्रि.सा.,भा-२, ६.६-९)

## काम्यम्

१. नित्यम्, नैमित्तिकम्, काम्यम् इति त्रिविधकर्मस्वेकम्।

२. नित्यम्, नैमित्तिकम्, काम्यम्, नित्यनैमित्तिकम्, नित्यकाम्यम् इति पञ्चविधकर्मस्वन्यतमम्। प्रायश्चित्तेन सहितं, फलापेक्षया क्रियमाणं पुत्रकामेष्ट्यादिकं कर्म काम्यम्।

**नित्यनैमित्तिकं काम्यं नित्यनैमित्तिकं तथा।**
**नित्यकाम्यमिति प्राहुः पञ्चधा शास्त्रकोविदाः।।**
**प्रायश्चित्तेन सहितमनुष्ठानं पुनः सतः।**
**काम्यं कर्म समाख्यातं पवित्रेष्ट्यादिकं बुधैः।।**

(क्रि.सा.,भा–२, ५.२०–२१, पृ.२)

## काम्यगुरुः

हितादिषण्णां गुरूणां मध्ये काम्यगुरुः एकतमः। तदुक्तं किरणागमे–

**हितः काम्यो निषिद्धश्च वाचकः सूचकस्तथा।**
**स काम्यगुरु इत्युक्तः तज्ज्ञानं यः प्रयच्छति ।।**

(वी.ध.शि.,२, पृ.१३७)

(पश्यत – षड्विधगुरुः)

## काम्यदानम्

नित्यादित्रिविधदानान्यतमम्। फलापेक्षया क्रियमाणं दानम्।

**नित्यं नैमित्तिकं काम्यं दानं त्रिविधमुच्यते।**
**दानं तु काम्यमाख्यातं मुनिभिर्धर्मचिन्तकैः।**

(वी.प्र., श्लो. ३.१२,पृ.१४८)

इदमेव सिद्धान्तशिखामणौ सोपाधिकदानमित्युच्यते।

**फलाभिसन्धिसंयुक्तं दानं यद्विहितं भवेत्।**
**तत् सोपाधिकमाख्यातं मुमुक्षुभिरनादृतम्।।**

(सि.शि., ९.८१)

## कायानुग्रहस्थलम्

लिङ्गस्थलभेदः। प्रसादिस्थलसंश्रितनवविधलिङ्गस्थलेषु प्रथमम्।

ज्ञानाचारसम्पन्नः शिवयोगी स्वकायं दर्शयन् लोकाननुगृह्णति । अतः स एव कायानुग्रहनामा भवति । तस्य स्थलं कायानुग्रहस्थलम् ।

**स्थलभेदा नवप्रोक्ताः प्रसादिस्थलसंश्रिताः ।**

**कायानुग्रहणं पूर्वं.........................।।**

**अनुगृह्णाति यल्लोकान् स्वकायं दर्शयन्नसौ ।**

**तस्मादेष समाख्यातः कायानुग्रहनामकः ।।**

(सि.शि.,१७.२,५)

## कायार्पणम् = कायार्पितम्

कार्यार्पणम्, करणार्पणम्, भावार्पणमिति त्रिविधार्पणेष्वेकतमम् । देहाभिमानस्य त्याग एव कार्यार्पितम्।

**त्यागो देहाभिमानस्य कायार्पितमदाहृतम् ।।**

(सि.शि.,१७.३४)

(पश्यत – अर्पणम्)

## कायार्पणस्थलम् = कायार्पितस्थलम्

प्रसादिस्थलाश्रितनवविधलिङ्गस्थलेषु चतुर्थम् । शिवयोगिनः शिवस्यार्चने देहाभिमानस्य त्यागः कायार्पितमिति कथ्यते । कायार्पितस्य स्थलं कायार्पितस्थलम् ।

**स्थलभेदा नव प्रोक्ताः प्रसादिस्थलसंश्रिताः ।**

**प्राणानुग्रहणं पश्चात् ततः कायार्पितं मतम् ।**

**शिवस्य पररूपस्य सर्वानुग्राहिणोऽर्चने ।**

**त्यागो देहाभिमानस्य कार्यार्पितमुदाहृतम् ।।**

(सि.शि.,१७.२-३,३४)

## कायिकी सेवा

कायिकी, वाचिकी, मानसी चेति त्रिविधसेवासु एकतमा। कायेन विधीयमाना शिवलिङ्गपूजा कायिकीसेवा।

**सा पुनर्भिद्यते त्रेधा मनोवाक्कायसाधनैः।**
**जपादि वाचिकी सेवा कर्मपूजा च कायिकी।**

(सि.शि., ६.१६)

## कारकगुरुः

हितादिषड्गुरुष्वेकतमः । तदुक्तं किरणागमे –

**हितः काम्यो निषिद्धश्च वाचकस्सूचकस्तथा ।**
**कारकश्चेति भेदेन षोढा विद्वद्भिरीरिताः ।।**
**परब्रह्मपरं ज्ञानमुपदिश्य यथाविधि ।**
**करोति शिष्यं ब्रह्मैक्यं सः कारकगुरुर्भवेत् ।।**

(वी.ध.शि.,२, पृ.१३७)

(पश्यत – षड्विधगुरुः)

## कारणशरीरम्

स्थूलम्, सूक्ष्मम्, कारणमिति त्रिविधशरीरान्यतमम्। कारणतनुः। कारणाङ्गम् । कारणदेहः । कर्मानुरूपत आत्मभोगार्थमुपलब्धं शरीरम्। तच्च योगाङ्गमित्युच्यते। मूलात्मरूपमिदम् इतरशरीरेषु चैतन्यमुत्पादयति। इतरशरीरगतानुभवसङ्ग्राहकमिदं सकाले अनुभवान् पुरत उपस्थापयति ।

**शरीरं त्रिविधं ज्ञेयं स्थूलं सूक्ष्मं च कारणम् ।**
**स्थूलं तु भोगदं प्रोक्तं सूक्ष्ममिदमिन्द्रियभोगदम् ।।**
**कारणं त्वात्मभोगार्थं जीवकर्मानुरूपतः ।।**

(क्रि.सा.,भा–१, ३.३२०, पृ.१५६)

**योगाङ्गं कारणं प्रोक्तं भोगाङ्गं सूक्ष्ममुच्यते।**
**त्यागाङ्गं स्थूलमित्युक्तं एवं भेदोपभेदतः।।**

(अ.सू., ४.८)

वेधादीक्षया कारणशरीरगतम् आणवमलं सन्दह्य तत्र भावलिङ्गं स्थापपति श्रीगुरुः।

**तनुत्रयगतानादिमलत्रयमिदं गुरुः।**
**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत्।।**

(चं.आ.,क्रि.पा., ३.४७; का. आ., क्रि.पा., १.१०)

## कार्ममलम्=कार्मिकमलम्

मलभेदः। शुभाशुभवासनामयम्। स्थूलशरीरगत कार्ममलं क्रियादीक्षया संदह्य तत्र इष्टलिङ्गं स्थापयति श्रीगुरुः।

**शुभाशुभवासनारुषितं कार्ममलम्।**

(शि.मं., पृ.५३)

**शुभाशुभानुष्ठानमयं कार्ममलम्।**

(प्र.हृ.क्षे.रा.,सूत्रं- ९)

## कालशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडश-शुद्धिष्वेकतमा । लिङ्गाराधनं कालसिद्धिः ।

**शिवलिङ्गाराधनं यत् कालशुद्धिः समीरिता।**

(चं.आ.,क्रि.पा.,९.४७)

(पश्यत – षोडशशुद्धयः)

## कालारिः

परमेश्वरस्य ऊर्ध्वमुखात् (ईशानमुखात्) सम्भूतस्य पञ्चमुख-गणेशस्य मुखोद्भूतेषु पञ्चपञ्चमेष्वेकतमः । तत्र च द्वितीयः । तस्य

उज्जयिनीपीठसम्बद्धनन्दिगोत्रम्, दारुकशाखा, वृष्टिसूत्रम्, मरुळाराध्यः मूलगुरुः, मायापञ्चाक्षरी मन्त्रः। (ओं–ह्रां–ह्री–ह्रूं–ह्रैं–नमःशिवाय)। अतिवर्णाश्रमी, गृहस्थः, इष्टलिङ्गार्चनपरश्च सः।

**पञ्चास्यमुखसम्भूता यतः सर्वे ततोऽधिकाः।**
**पञ्चमाः सर्ववर्णेभ्यो मद्भक्ता मत्प्रियाः सदा ।।**
**अतः परं प्रवक्ष्यामि कालारेर्लक्षणं शृणु।**
**कालारिः पञ्चमाख्यस्य नन्दिगोत्रं प्रकीर्तितम् ।।**
**तच्छाखा दारुका नाम प्रवरो द्व्यक्षरो मतः।**
**तत्सूत्रं वृष्टिकाख्यं स्यान्मूलवर्णो मकारकः ।।**
**कलशस्तस्य ताम्रश्च आराध्यो मरुळो मतः।**
**मायापञ्चाक्षराख्यश्च नववर्णो महामनुः।।**
**ह्रां ह्रीं ह्रूं ह्रैं नमः शिवाय।**
**अतिवर्णिगृहस्थः स्यादिष्टलिङ्गार्चनापरः ।।**

(वी.स.सं.,५.७,१८–२१)

## काष्ठशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडश-शुद्धिष्वेकतमा।

**काष्ठं व्रतस्थैः संग्राह्यं काष्ठशुद्धिः समीरिता।**

(चं.आ.,क्रि.पा.,९.३८)

(पश्यत – षोडशशुद्धयः)

## कीर्तनभक्तिः

नवविधभक्तिष्वेका। शिवस्तोत्रकरणम् शिवस्तुतिकरणम्कीर्तनभक्तिः।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम्।**

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।**

**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना।**

(सि.शि.,९.२-३)

## कुण्डलिनी शक्तिः

एषा प्राणरूपिणी मूलाधारस्थिताया इडापिङ्गलमध्यवर्तिन्याः सुषुम्नानाड्या अधोथागे कुण्डल्याकारेण स्थिता । इयमेव ब्रह्मशक्तिरित्युच्यते।

**तत्र कुण्डलिनीशक्तिं सर्वसिद्धिप्रदां स्मरेत् ।।**

(शि.यो.प्र.,३.१०)

**इडा वहति वामे च पिङ्गला याति दक्षिणे ।**

**इडापिङ्गलयोर्मध्ये सुषुम्ना सुखरूपिणी ।।**

(शि.यो.प्र.,३.१३ व्याख्याने)

**अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपञ्चके ।**

(शि.त.र.,भा-३, ९.१.१३३; अ.सू., ३.२६)

## कूटाङ्गम्

चराचरात्मकं जगत् परमेश्वरस्याङ्गम् । अङ्गेश्वरस्यास्याङ्गभेदः षडात्मकः, शिवाङ्गादारभ्य सामान्याङ्गपर्यन्तम् । तत्र कूटाङ्गं तृतीयम् ।

**कूटाङ्गं च तृतीयं स्यात् .............. ।।**

(वा.शु.आ.,८.६)

## कूटाङ्गमन्त्रः

चराचरात्मकं जगत् परमेश्वरस्याङ्गम् । अस्य परशिवस्य अङ्गभेदः षडात्मकः, शिवाङ्गादारभ्य सामान्याङ्गपर्यन्तम् । एतैरङ्गैः सम्बद्धाः मन्त्राः तत्तदङ्गमन्त्राः । तत्र कूटाङ्गमन्त्रः तृतीयः। आकारः (द्वितीयस्वरः), ईकारः (चतुर्थस्वरः), ऊकारः (षष्ठःस्वरः), ऐकारः (द्वादशस्वरः), औकारः

(चतुर्दशस्वरः), विसर्गश्च – इत्येतेषां कूटाक्षरेण क्षकारेण योजयित्वा प्रत्यक्षरं अनुस्वारयुक्तं क्रियते चेत् कूटाङ्गमन्त्रः भवति । (क्षां–क्षीं–क्षूं–क्षैं–क्षौं–क्षः) ।

**प्रथमस्य द्वितीयं तु चतुर्थं पञ्चमान्तकम् ।**
**रुद्रान्तं रुद्रतुर्याणं अन्तं कूटाक्षरेण युक् ।।**
**बिन्दुनादसमायुक्तं कूटाङ्गमिदमीरितम् ।**
**एवं कूटाङ्गमित्युक्तं .....................।।**

(वा.शु.आ.,८.२८–२९)

## केवलकुम्भकः

प्राकृतः, केवल वैकृतः, कुम्भकश्चेति त्रिविधप्राणायामेष्वेकः। स च पूरक क्रमप्रकारं दीर्घोच्छ्वासं स्वीकृत्य मुखं नासिकारन्ध्रौ च दक्षिणहस्ताङ्गुलीभिः पिधाय रेचकं विहाय क्रियमाणः वायोर्निग्रहः। अनेन केवलकुम्भकयोगेन शिवयोगसमाधिं सम्प्राप्य ब्रह्मरन्ध्रे शम्भुं विभावयेत् इति शिवयोगविदः कथयन्ति।

**प्राणायामस्त्रिधा प्रोक्तः प्राकृतवैकृतस्तथा ।**
**ताभ्यां विना जृम्भतेऽसौ केवलः कुम्भकः स्वयम् ।।**

(शि.यो.प्र., २.२२)

(पश्यत – प्राकृतः प्राणायामः)

## कैवल्यम्

केवलस्य आत्मनः भावः कैवल्यम्। मोक्षः। विविच्यज्ञानात् कैवल्यप्राप्तिः।

**विवेकख्यातिलाभेन कैवल्यं पदमश्नुते ।।**

(शि.त.र.,भा–३, ९.५.४४)

## कौमार्यः

वीरशैवमतस्य पञ्चसूपाचार्येषु अन्यतमः। मठार्यः, गणार्यः स्तावरार्यः, मालार्यश्चेति इतरे उपाचार्याः। एते गणकुमाराः इति प्रसिद्धाः।

**वैवाहादिकमाङ्गल्ये सर्वेषु पुण्यकर्मसु ।।**

**लोकेऽस्मिन् जगतामीश उपाचार्याश्च सन्ति वै।**

**कौमार्यस्तावरार्यश्च मठार्यश्च गणार्यकः।।**

**मालार्यश्चेति विख्याताः पञ्चोपाचार्यनामकाः।**

(वी.स.सं, ४.४,२-३)

(पश्यत – उपाचार्याः)

## क्रिया

शिवपूजा ।

**शिवो हि परमः साक्षात् पूजा तस्य क्रियोच्यते।**

(सि.शि., १६ . ५)

## क्रियागमः

शिवपूजारूपक्रियाप्रधानैरागमैः प्रतिपादित्वाद् अयं क्रियागम इत्युच्यते।

**शिवो हि परमः साक्षात् पूजा तस्य क्रियोच्यते।**

**तत्परा आगमा यस्मादुक्तोऽयं क्रियागमः।।**

(सि.शि., १६.५)

## क्रियागमस्थलम्

एकोत्तरशतस्थलेष्वेकम्। माहेश्वरस्थलसम्बद्धनवविधलिङ्गस्थल-प्रभेदेषु चान्यतमम्। शिवपूजारूपक्रियाप्राधान्यविशिष्टस्थलम् ।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस ।**

**क्रियागमस्थलं पूर्वम्......।।**

(सि.शि., १६.२)

(पश्यत – क्रियागमः)

## क्रियादीक्षा

क्रियादीक्षा, मन्त्रदीक्षा, वेधादीक्षा चेति त्रिविधदीक्षास्वन्यतमा।

**सा दीक्षा परमा शैवी त्रिधा भवति निर्मला ।**

**एका वेधात्मिका साक्षादन्या मन्त्रात्मिका मता ।**

**क्रियात्मिका परा काचित्........।।**

(का.आ, क्रि. पा, १.१३)

कलशस्थापना, स्वस्तिकमण्डलरचना, शिष्यस्य हस्तमस्तकादि-संस्कारविधिसमेता इष्टलिङ्गसंस्कारधारणोपेता क्रिया क्रियादीक्षेति कथ्यते।

**कुण्डमण्डलिकोपेता क्रिया दीक्षा क्रियोत्तरा ।**

(सि.शि., ६.१५)

**कुण्डमण्डलकोपेता क्रियादीक्षेति कथ्यते ।**

(वी.स.सं.,११.११, पृ.१४७)

**भेदाः** – अस्यां दीक्षायां आज्ञा, उपमा, कलशाभिषेकः, स्वस्तिकारोहणम् भूतिपट्टम्, आयत्तम्, स्वायत्तश्चेति सप्तभेदाः विद्यन्ते ।

**आज्ञोपमा च कलशैरभिषेकस्ततः परम् ।**

**स्वास्तिकारोहणं भूतिपट्टमायत्तमेव च ।**

**स्वायत्तमिति सप्तैताः क्रियादीक्षान्तरा मताः ।।**

(चं.आ., क्रि.पा., ९.१२; का.आ., क्रि.पा., १.४३)

## क्रियानिष्पत्तिस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । शरणस्थलगतद्वादश विधलिङ्गस्थलेष्वेकतमम् । परब्रह्मणि अद्वैतभक्त्या एकीभूते ज्ञान-पादोदकसम्पन्ने शिवयोगिनि रज्जौ सर्पत्ववत् क्रियानिष्पत्तिः कल्पितैव दृश्यते । तस्मात् तादृशः शिवयोगी क्रियानिष्पत्तिमान् भवति । तत्सम्बद्धं स्थलं क्रियानिष्पत्तिस्थलम् । तस्य शिवयोगिनः सर्वाणि कर्माणि जन्महेतवः न भवन्ति दग्धबीजवत् ।

**शरणस्थलमाश्रित्य स्थलद्वादशकं मया ।**
**ज्ञानपादोदकं चाथ क्रियानिष्पत्तिकं ततः ।।**
**परकाये क्रियापत्तिः कल्पितैव प्रकाशते ।**
**रज्जौ भुजङ्गवद् यस्मात् क्रियानिष्पत्तिमानयम् ।।**
**ज्ञातिनां यानि कर्माणि तानि नो जन्महेतवः ।**
**अग्निदग्धानि बीजानि यथा नाङ्कुरकारणम् ।।**

(सि.शि.,१९.२,३,२९-३०)

## क्रियापादः

आगमानां क्रिया-चर्या-ज्ञान-योगेति चतुष्पादेष्वेकः । अत्रात्मानां नित्यकर्मपशुताक्षयशिवताभिव्यक्त्यादिविषयाः यत्र प्रतिपाद्यन्ते सः क्रियापादः।

**क्रियापादो योगपादश्चर्याज्ञानाख्यपादकौ ।**
**नानाविधेष्वागमेषु पादश्चत्वार ईरिताः ।।**
**क्रियापादे नित्यकर्माण्यात्मनां पशुताक्षयः।**
**शिवताया अभिव्यक्तिरित्यादिप्रतिपाद्यते ।।**
**श्रीकण्ठेशोपदिष्टार्थाः श्वेताद्याः अष्टविंशतिः।**

(शि.त.र.,भा-१,१.२.३६-३८)

## क्रियाप्रकाशस्थलम्

एकोत्तरशतस्थलेष्वेकम्। शरणस्थलाश्रितलिङ्गस्थलेष्वेकतमम्।

**शरणस्थलमाश्रित्य स्थलद्वादशकं मया।**

**दीक्षापादोदकं ...क्रियायाश्च प्रकाशनम्।।**

(सि.शि.,१९.२-५)

१. महाकाशस्वरूपः शिवयोगी एव तत्स्वरूपां क्रियां प्रकाशयतीति क्रियाप्रकाशवान् भवति। तत्सम्बद्धं स्थलं क्रियाप्रकाशस्थलम्।

**शिवस्य परिपूर्णस्य चिदाकाशस्वरूपिणः।**

**अत्मत्वेनानुसन्धानात् क्रियाद्योतवान् यमी।।**

(सि.शि.,१९.७६)

२. अत्यन्तमुत्तमभावेन निर्मलात्मानां शिवयोगिनां या क्रियायाः निवृत्तिरुक्ता सा क्रियाप्रकाशनम् इत्युच्यते।

**अतीवोत्तमभावेन प्रसन्नविमलात्मानां ।**

**या चोदिता निवृत्तिस्स्यात् सा क्रियायाः प्रकाशिता ।।**

(शि.र.,कै.सा, २५, पृ.१३७-इत्यत्रोदाहृतम्)

## क्रियार्पणम्

क्रियार्पणम्, ज्ञानार्पणं चेति लिङ्गार्पणयोरेकतरम् । भक्तेन याः क्रियाः द्रव्यशुद्ध्यर्थं करणीयाः ताः सर्वाः शिवार्पणबुद्ध्या कर्तव्याः। यानि यानि द्रव्याणि शिवाय समर्प्यन्ते तानि बन्धनाय वा मोक्षाय वा न भवन्ति, परन्तु शिवप्रसादायैव भवन्ति । इयं च वीरशैवानां समुन्नता स्थितिः ।

**क्रियार्पणं वदाम्यत्र साम्प्रतं द्रव्यशुद्धये ।**

**या या क्रिया विधातव्या प्रस्तुता जायते पुरा ।।**

**तां तां कुर्यान्महादेवसमर्पणधिया सुधीः ।**

**शिवार्पितानि द्रव्याणि न बन्धाय न मुक्तये ।।**

**साक्षाच्छिवप्रसादायैवेति शैवी परा स्थितिः ।**

(अ.सू.,७.६-८)

## क्रियालिङ्गम्

क्रियालिङ्गम्, भावलिङ्गम्, ज्ञानलिङ्गं चेति त्रिविधलिङ्गेष्वेकम्।

बाह्यसत्क्रियासम्बद्धम् इष्टलिङ्गं हि तत् । गुरोः विशेषज्ञानयोगेन यत्र क्रिया विलीयते तत् क्रियालिङ्गमित्युक्तम्।

**गुरोर्विज्ञानयोगेन क्रिया यत्र विलीयते।**

**तत् क्रियालिङ्गमाख्यातं सर्वैरागमपारगैः।।**

(सि.शि.,१५.३०;मरितोण्टदार्यविरचित तत्त्वप्रदीपिकायां क्रियार्थकमिष्टलिङ्गमित्युक्तम्।)

## क्रियालिङ्गस्थलम्

एकोत्तरशतस्थलेष्वेकम्।भक्तस्थलाश्रितनवविधलिङ्गस्थलेष्वेकतमम्।

**आदौ नवस्थलानीह भक्तस्थलसमाश्रयात्।**

**दीक्षागुरुस्थलपूर्वं.....क्रियालिङ्गस्थलं ततः।**

(सि.शि.,१५.४-५)=तत्रोक्तदिशा शिवयोगी एव क्रियालिङ्गम्। तत्क्रियालिङ्गसम्बद्धं स्थलं क्रियालिङ्गस्थलम्।

## क्रियावती दीक्षा

वेधादीक्षा, मान्त्रीदीक्षा, क्रियादीक्षा चेति दीक्षात्रैविध्यं प्रसिद्धम्। अन्यत्र ज्ञानवती, क्रियावती चेति दीक्षा द्विधा इत्युक्ता।

**समासाच्च द्विधैवेयं दीक्षा तज्ज्ञैरिहेष्यते।**

**एका भवेज्ज्ञानवती क्रियावत्यपरा स्मृता।।**

(शि.त.र.,भा-३, ९.७. १४-१५)

इज्याग्नियुक्ता क्रियादीक्षा एव क्रियावती दीक्षा। एषा द्विधा निर्बीजा सबीजा चेति।

**इज्यानलवती या तु क्रियाकौशलसम्भवा।।**

(शि.त.र.,भा-३, ९.७. १६)

जननीपुत्राभ्यां दीयमाना समयाचारशुद्धिप्रदा या दीक्षा सा निर्बीजदीक्षा। विद्वद्भ्यां समर्थाभ्यां साधकाचार्याभ्यां दीयमाना या दीक्षा सा सबीजा दीक्षा।

**क्रियावत्यथ सा द्वेधा निर्बीजा च सबीजका।**
**तत्र निर्बीजका या सा जननीपुत्रयोर्वरम्।।**
**सबीजा च भवेद्दीक्षा साधकाचार्ययोरपि।**
**भवेन्निर्बीजका दीक्षा समयाचारशुद्धिदा।**
**विदुषां च समर्थानां सबीजा च परिकीर्तिता।।**

(शि.त.र.,भा-३, ९.७. १७-१८, २०)

(पश्यत-क्रियादीक्षा)

## क्रियाविश्रान्तिः

सर्वासां क्रियाणामात्मनः लिङ्गार्पितत्वात् जीवात्मन्येव ताः सुखरूपतया विश्रान्तिं प्रपद्यन्ते। इयमेव क्रियाविश्रान्तिर्यथा पारमार्थिकैरुच्यते। इयमेव निस्संशयं सम्यग्ज्ञानं यच्च साक्षात् शिव एव इति वेदनम्। तादृशेन वेदनेनैवाप्तकामो जीवात्मा इष्टार्थं प्राप्यानन्दी भवति। आप्तकामस्यात्मनः ये च बाह्याः स्वेच्छाचारास्ते सर्वे स्वस्मिन्नेव नाशं गच्छेयुः।

**अस्यात्मनः क्रिया सर्वा लिङ्गार्पिततया स्थिताः।**
**स्वास्मन्नेव स्वयं यान्ति विश्रान्तिं सुखलक्षणाम्।।**
**प्रोच्यते परमार्थज्ञैः क्रियाविश्रान्तिरित्यतः।**
**क्रियाविश्रान्तिरेवात्र सम्यग्ज्ञानं न संशयः।।**

**सम्यग्ज्ञानमयं साक्षाच्छिव एवेति वेदनम् ।**

**वेदनेनैव तेनायमाप्तकामः सुखी भवेत् ।।**

**आप्तकामस्य सुखिनः कामाचारा बहिर्मुखाः ।**

**प्रवृत्ता लौकिकाः सर्वे प्रययुर्नाशमात्मनि ।।**

(अ.सू.,८.२-५)

## क्रियाशक्तिः

शक्तिभेदः ।

१. अकारः उकारः मकारश्चेति त्रिवर्णात्मकस्य ओङ्कारस्य घटकत्वेन तिस्रः शक्तय उक्ताः । तत्र अकार इच्छाशक्तिः, उकारः क्रियाशक्तिः, मकारश्च ज्ञानशक्तिः। तिस्रः एताः परमात्मनः शक्तयः ।

**इच्छाशक्तिरकारः स्यात् क्रियाशक्तिरुकारकः।**

**ज्ञानशक्तिर्मकारः स्यात् नादः साक्षात् परःशिवः।**

(सू.आ., क्रि.पा., ४.१२)

२. परमात्मा सृष्ट्यर्थं सर्वतत्त्वानां यदा अचिन्तयत् तदा पञ्चशक्तयः अजायन्त। तत्र क्रियाशक्तिः ज्ञानशक्त्यंशभेदेन अजायत। एवं पराशक्तिः, आदिशक्तिः, इच्छाशक्तिः, ज्ञानशक्तिः, क्रियाशक्तिरित्येतेषु पञ्चशक्तिष्वेकतमा ।

**सृष्ट्यर्थं सर्वतत्त्वानां जगदुत्पत्तिकारणम् ।**

**योगिनायुपकाराय स्वेच्छयाऽचिन्तयच्छिवः ।**

**ध्यायमानात्ततो देवि पराशक्तिरजायत ।।**

(सू.आ., क्रि.पा., १.१९-२०,२२)

३. सादाख्यपञ्चके कर्मसादारव्यं क्रियाशक्तिसमुद्भवमित्युच्यते ।

**निवृत्तिकलयाभुक्तं क्रियाशक्तिसमुद्भवम् ।**

(सू.आ., क्रि.पा.,१.४३)

४. शिवतत्त्वात् बिन्दुः कुण्डलिनीशक्तिरूपः। बिन्दोः नादः, नादात् शक्तिः, शक्तेः शब्दः, शब्दात् वाग्भवः, वाग्भवात् कलाक्षराणि, कलाक्षरेभ्यः विकलाक्षराणि इति सन्दर्भे वाग्भवमेव क्रियाशक्तिरित्युक्तम्।

**वाग्भवं स्यात् क्रियाशक्तिः ...............।**

(वा.शु.आ., २.१३)

५. भक्तादि-ऐक्यान्तषट्स्थलेषु षट्शक्तयः समाहिताः सन्ति। षट्शक्तय एव षट्कलाः । तत्र निवृत्तिकला एव क्रियाशक्तिः। सा एव आचारलिङ्गसम्बद्धभक्तस्थले समाविष्टा।

**निवृत्तिः स्यात् क्रियाशक्तिः .............. ।**

(अ.सू.,३.२६)

## क्षारम्

पञ्चविधभस्मसु अन्यतमम् । आपदां क्षारणात् (नाशकरत्वात्) क्षारमिति व्यवहारः । सुशीलागोमयेन जातम् ।

**क्षारणादापदां क्षारम् ।**

(बृ.जा.उ.,१.१५)

**क्षरणात् क्षारमापदाम्।**

(सि.शि., ७.५)

**तत्पुरुषाद्वायुस्तस्माच्छान्तिस्तस्याः श्वेतवर्णा सुशीला तस्याः गोमयेन क्षारं जातम् ।**

(बृ.जा.उ., १.१३)

क्षारं शिवस्य तत्पुरुषमुखाज्जातम् ।

**तत्पुरुषात्क्षार नाम च।**

(सि.शि., ७.९)

## क्षुरिकास्त्रम्

**विद्याङ्गे विद्यमानेषु षडस्त्रेष्वेकतमम् ।**

**............... ब्रह्मास्त्रं क्षुरिकास्त्रकम् ।**

(वा.शु.आ.,८.४५)

(पश्यत – क्षुरिकास्त्रमनुः)

## क्षुरिकास्त्रमनुः

विद्याङ्गे विद्यमानेषु षडस्त्रमन्त्रेष्वेकतमः । शिकारः, छिकारः, क्षुकारः, रिकारः, काकारः, स्त्राकारः, यकारः, फट्कारश्चेति क्षुरिकास्त्रमन्त्रः । (शि–छि–क्षुरिकास्त्राय फट्)

**शिकारः प्रथमं बीजं छिकारस्तु द्वितीयकम् ।**

**क्षुकारस्स्यात् तृतीयं च रिकारश्च चतुर्थकम् ।।**

**काकारः पञ्चमं बीजं स्त्राकारः षष्ठ वर्णकम् ।**

**यकारः सप्तमं बीजं फट्कारश्चाष्टमं भवेत् ।।**

**क्षुरिकास्त्रमनुश्चाष्टवर्णोऽयं स्याद् रसप्रदः ।**

(वा.शु.आ.,८.५४–५६)

## क्षेत्रशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडश शुद्धिष्वेकतमा ।

**क्षेत्रं भक्तिपरैर्ग्राह्यं क्षेत्रशुद्धिः प्रकीर्तिता ।**

(चं.आ.,क्रि.पा.,९.३४)

(पश्यत – षोडशशुद्धयः)

# ख

## खेचरीमुद्रा

परमात्मसाक्षात्कारसहकारिषु योगसम्बद्धासु ध्यान-खेचरी-षण्मुख-शाम्भवीति चतसृषु मुद्रास्वेका । नासिकाग्रमेकाग्रदृष्ट्या संदृष्ट्वा ध्यानासक्तस्य श्रूयमाणप्रणवनादानुसन्धानास्थिता निश्चला स्थितिः ।

**लक्ष्यलीनमनसाऽनिलेन यो वर्ततेऽचलिततारया भवेत् ।**
**खेचरीयमथ सैव शाम्भवी मुद्रया ........।।**

(शि.यो.प्र.,५.३.)

# ग

## गणः

शिवगणः । सृष्ट्यादौ शिवांशसम्भूतानां शिववत् सर्वशक्तिकानां विश्वसृष्टिस्थितिलयसमर्थानां प्रमथानां वर्गः । एते प्रमथा एव शिवगणाः इत्युच्यन्ते ।

**नमश्शिवाय शाम्भाय सगणाय स्वयम्भुवे ।**
**इत्येवं प्रार्थितः शम्भुर्ब्रह्मणा विश्वयोनिना ।**

**ससर्जात्मसमप्रख्यान् सर्वगान् सर्वशक्तिकान् ।।**

**प्रमथान् विश्वनिर्माणप्रलयापादनक्षमान्।।**

(सि.शि., २.१,२५–२६)

## गणाचारः

१. शरणैरनुस्त्रीयमाणेषु लिङ्गाचार – सदाचार – गणाचार भृत्याचार–नामकेषु पञ्चाचारेषु एकः चतुर्थश्च । शिवनिन्दायाः शिवाचारदूषणस्य च असहमाननियमः। गणाचारान्तर्गतत्वेन चतुःषष्टिशीलानि उक्तानि ।

**लिङ्गाचारः सदाचारश्शिवाचारस्तथैव च ।**

**भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः ।।**

**शिवस्य शिवभक्तस्य शिवधर्मादिकस्य च ।**

**न शृणोति च यन्निन्दां स गणाचार उच्यते।**

(चं.आ., क्रि.पा., ९.४,८)

**गुरुलिङ्गादिविषयं न श्राव्यं दूषणं यदि ।**

**श्रुतवान् शिक्षयामीति गणाचारः स हि स्मृतः।।**

(क्रि.सा.,भा–३, पृ.१२०)

**सर्वोत्तमे गणाचारे सद्यः सिद्धिकरे परे ।**

**शीलानि तु चतुःषष्टि वर्तन्ते तानि संशृणु ।।**

(चं.आ.,क्रि.पा.,९.५२)

(पश्यत – चतुःषष्टिशीलानि)

२. अचारलिङ्गस्य सदाचारः, नियताचारः, गणाचारः इति त्रिविधाचारेष्वेकः।

**स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।**

**...................गणाचारस्तथाऽपरः ।।**

**गुरुलिङ्गादिविषये न श्राव्यं दूषणं यदि ।**

**श्रुतं तान् शिक्षयामीति गणाचारः स हि स्मृतः ।।**

(सू.आ.,क्रि.या., ८.६,९)

## गणार्यकः

वीरशैवमतस्य पञ्चसूपाचार्येष्वन्यतमः ।.

**कौमार्यस्तावरार्यश्च मठार्यश्च गणार्यकः ।**

(वी.स.सं., ४.२)

(पश्यत– उपाचार्याः)

## गणेश्वरः

गणस्य नेता, प्रमथानां प्रमुखः। यथा रेणुकः ।

**गणेश्वरेण कथितमगस्त्याय पुनः क्षितौ ।**

(सि.शि., १.२९)

## गवां वर्णाः

नन्दा, भद्रा, सुरभिः, सुशीला, सुमना इति पञ्चगवां वर्णाः क्रमेण कपिलः, कृष्णः, धवलः, धूम्रः, रक्तश्च उक्ताः।

**कपिला कृष्णा च धवला धूम्रा रक्ता तथैव च।।**

**नन्दादीनां गवां वर्णाः क्रमेण परिकीर्तिताः।**

(सि.शि., ७.७-८)

**कपिलवर्णा नन्दा, कृष्णवर्णा भद्रा, धूम्रवर्णा सुरभिः, श्वेतवर्णा सुशीला, रक्तवर्णा च सुमनाः।**

(बृ.जा.उ., १.१०-१४)

**(पश्यत – भस्म)**

## गव्यम्

गोः सकाशात् आगतम्। गवोत्पन्नं द्रव्यम्।

**अथ वक्ष्ये विशेषेण पञ्चगव्यविधिक्रमम् ।**

(वा.शु.आ.,अ.सा.,३, पृ.३७९)

(पश्यत–पञ्चगव्यम्)

## गायत्री

१. गायत्री नाम एकं छन्दः। वेदेषु प्रयुक्तम्।

२. एतस्मिन् छन्दसि विश्वामित्रेण दृष्टा सवितृदेवताकः मन्त्रः। गायत्री छन्दसि दृष्टत्वात् अस्य सावित्री मन्त्रस्य गायत्रीमन्त्र इति नामान्तरम्।

**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।**

(ऋ.वे., ३.६२.१०)

(पश्यत–सन्ध्योपासनम्)

## गुणत्रयम्

सुखदुःखविमोहकारणम्। तच्च सत्त्वम्, रजः, तम इति त्रयम्। तत्र सत्त्वगुणः सुखमुत्पादयति, रजस्तु दुःखम्, तमश्च मोहमुत्पादयति। एते त्रयो गुणाः त्रयोदशतत्त्वभूतस्य प्रकृतितत्त्वस्य घटकाः। अत्र प्रकृतिरपि शक्तिस्वरूपा एव। अत एव गुणत्रयात्मिका शक्तिरिति वाक्येन प्रकृतिरेव विमृश्यते। सा तु परशिवब्रह्मण्यविनाभावेन स्थिता। अत एव सनातनी।

**गुणत्रयात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी।**

(सि.शि.,५.३९)

परतत्त्वे शुद्धचैतन्ये भोक्तृत्वम्, भोज्यत्वम्, प्रेरकत्वं च गुणत्रयभेदेनैव कल्प्यन्ते। वस्तुत्रयस्यास्य कल्पनं गुणवैषम्याद्भवति। किञ्चित् सत्त्वतमोमिश्रितात् रजोगुणात् भोक्तृसंज्ञकं वस्तु उत्पद्यते। तदेव

जीवचैतन्यम्। अत्यन्ततामसगुणोपेतं वस्तु भोज्यं इत्युच्यते। परतत्त्वमयं वस्तु ब्रह्मचैतन्यं प्रेरकत्वेन गीयते। महेश्वर एव प्रेरकः।

**गुणत्रयविभेदेन परतत्त्वे चिदात्मनि।**
**भोक्तृत्वं चैव भोज्यत्वं प्रेरकत्वं च कल्पितम्।।**
**गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी।**
**तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा।।**
**किञ्चित् सत्त्वरजोरूपं भौक्तृसंज्ञकमुच्यते।**
**अत्यन्ततामसोपाधिर्भोज्यमित्यभिधीयते।**
**परतत्त्वमयोपाधिर्ब्रह्मचैतन्यमीश्वरः।।**

(सि.शि.,५.३८-४०)

एतान्येव त्रीणि वस्तूनि क्रमशः पशुः, पाशः, पतिश्चेति शैवागमेषु प्रसिद्धानि। ब्रह्मादिसर्वजीवाः पशवः। शिवः पतिः। कर्ममलादिकं पाशः।

**ब्रह्मादिस्तम्बपर्यन्तं पशवः परिकीर्तिताः।**
**शिवः पतिरिति प्रोक्तः पाशः कर्ममलादिकम्।।**

(सू.आ.,क्रि.पा., ५.२०)

## गुणाणवम्

आणवमलभेदः। सिद्धाणवम्, मलाणवम्, त्याज्याणवम्, गुणाणवम्, योगाणवश्चेति पञ्चभेदेष्वेकतमम्। अविद्यायामात्मबुद्धिः।

**अविद्यायां तथाबुद्धिरात्मसाधनसाधिका।।**
**गुणाणवमिति ख्याता सा तन्त्रप्रकृतिः स्मृता।**

(वी.आ.चं., १.१६-२०, पृ.३)

(पश्यत-आणवम्)

## गुरुः

अष्टावरणेषु प्रथमावरणम्। शिष्याय इष्टलिङ्गं प्रदाय अनुग्राहकः। शिष्यचित्तापहारकः। परमानन्दभासकः, स गुणवान् प्राज्ञः, तत्त्ववित्, मुक्तिदश्च । भस्मरुद्राक्षादिभिः शोभितः शुद्धदेहः स शिवस्वरूपी। गुरुरेव लिङ्गम्। स एव च जङ्गमः। गुरुरेषः हस्तमस्तकसंयोगेन शिष्यस्य ब्रह्मरन्ध्रगतचित्कलां संलक्ष्य स्थूलशरीरे इष्टलिङ्गम्, सूक्ष्मशरीरे प्राणलिङ्गम्, कारणशरीरे भावलिङ्गं च स्थापयति। गुरुः दीक्षागुरुः, शिक्षागुरुः, मोक्षगुरुरिति त्रिविधः।

**गुरुश्च गुणवान् प्राज्ञः परानन्दावभासकः।**
**तत्त्वविच्छिवसम्पन्नः मुक्तिदो न तु चापरः।।**
**एकमूर्तिस्त्रयो भागाः गुरुर्लिङ्गं च जङ्गमः।**

(चं.आ.,क्रि.पा., २.४८, ५.१५)

**यो गुरुः स शिवः प्रोक्तः यः शिवः स गुरुः स्मृतः।**

(चं.आ., क्रि.पा.,२.७)

**तनुत्रयगतानादिमलत्रयमिदं गुरुः।**
**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत्।।**

(चं.आ., क्रि.पा., ३.४७)

**दीयते परमं ज्ञानं क्षीयते पाशबन्धनम्।**
**यया दीक्षेति सा तस्यां गुरुर्दीक्षागुरुः स्मृतः।।**
**दीक्षागुरुरसौ शिक्षाहेतुः शिष्यस्य बोधकः।**
**प्रश्नोत्तरप्रवक्ता च शिक्षागुरुरितीर्यते।।**
**सम्यग्ज्ञानप्रदः साक्षादेष ज्ञानगुरुः स्मृतः।।**

(सि.शि.,१५.७,१२,२१)

## गुरुकारुण्यस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। अङ्गस्थलगतभक्तस्थलस्य पञ्चदशप्रभेदेष्वन्यतमं चतर्थञ्च। संसारजुगुप्सानन्तरं स्वस्वरूपसाक्षात्कारार्थं गुरुसन्निधिं प्राप्य तदनुग्रहेण दीक्षापूर्वकं लिङ्गधारणस्य स्थलं गुरुकारुण्यस्थलम्। इदमेव दीक्षास्थलमिति नामान्तरेण ज्ञायते।

**दीक्षालिङ्गधृतिश्चैव विभूतेरपि धारणम् ।**

**इति शुद्धेन शिष्येण प्रार्थितः परमो गुरुः ।।**

**शक्तिपातं समालोक्य दीक्षया योजयेदमुम् ।**

(सि.शि.,५.२८; ६.१०-११)

## गुरुपादोदकम्

पादोदकस्य प्रभेदः। गुरोः पादाभ्यां जलधारापूर्वकं संगृहीतं पवित्रं जलं गुरुपादोदकम्। गुरुपादोदकस्य शिक्षापादोदकमिति नामान्तरम्।

**पादतीर्थं त्रिधा शम्भोर्गुरुजङ्गमयोरपि ।**

**दीक्षाशिक्षाज्ञानमिति त्रिसंज्ञं तद् भवत्यहो।।**

(चं.आ., क्रि.पा., ५.५)

एतञ्च स्थूलशरीरं शुद्धीकरोति।

**शोषणं पापपङ्कस्य दीपनं ज्ञानतेजसः।**

**गुरोः पादोदकं चित्रं संसारद्रुमनाशनम्।।**

(चं.आ., क्रि.पा., ५.२६)

**अविद्यामूलनाशाय जन्मकर्मनिवृत्तये।**

**ज्ञानवैराग्यसिद्ध्यर्थं गुरोः पादोदकं पिबेत्।।**

(क्रि.सा.,भा-३, २८.१४,पृ.२१९)

(पश्यत – पादोदकम्)

## गुरुप्रसादः

गुरुप्रसादः, लिङ्गप्रसादः, जङ्गमप्रसादः इति त्रिविधप्रसादेष्वेकः। गुरोः स्पर्शेण अनुगृहीतः प्रसादः गुरुप्रसादः। गुरुप्रसादस्य शद्धप्रसाद इति नामान्तरम्।

**गुरुलिङ्गजङ्गमानां भुक्तशेषःप्रसादकः।**

**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्त्यैकसाधनः।**

(चं.आ.,क्रि.पा., ५.२०-२१)

(पश्यत-प्रसादः)

## गुरुप्रसादी = गुरुलिङ्गप्रसादी

भक्तविशेषः। गुरुमोही, गुरुभक्तः, गुरुपूजकः, गुरुवीरः, गुरुप्रसादी, गुरुप्राणी चेति षड्विधगुरुभक्तेष्वेकतमः। गुरुवाक्यैकपालकः गुरुप्रसादी।

**यो वै न लङ्घयेद्देवि कदाचिद्गुरुशासनम्।**

**स वै गुरुप्रसादी स्यान्निवृत्तेतरशासनः।।**

(सू.आ., क्रि.पा.,८.४९; क्रि.सा.भा-३,२४,पृ.१२२,श्लो.१३;शि.त.र,भा-३,९.९.४५)

## गुरुप्राणी = गुरुलिङ्गप्राणी

भक्तविशेषः। अन्यसेवा त्यागपूर्वकं , गुरुलिङ्गैकसेवातत्परः भक्तः गुरुप्राणी भक्तः।

**सेवामन्यां परित्यज्य गुरुलिङ्गैकसेवकः।**

**वर्तते यः स्थिरतरो गुरुप्राणी स हि स्मृतः।।**

(सू.आ.,क्रि.पा.,८.५०;शि.त.र.भा-३,९.९.४६;क्रि.सा.भा-३,पृ.१२३ )

## गुरुभक्तः = गुरुलिङ्गभक्तः

१. गुरुभक्तः, लिङ्गभक्तः, जङ्गमभक्त इति त्रिविधभक्तेष्वन्यतमः।

**गुरुभक्तो लिङ्गभक्तश्चरभक्तस्तथैव च।**

**एवं भेदसमायुक्तः स भक्तः त्रिविधो भवेत्।।**

(शि.त.र.,भा-३,९.९.३९, )

२. षड्विधगुरुभक्तेषु एकतमः। सकलान् बान्धवान् त्यक्त्वा गुरुलिङ्गैकबान्धवो भूत्वा हर्षतत्परो गुरुभक्तः।

**लौकिकान् बान्धवान् त्यक्त्वा गुरुलिङ्गैकबान्धवः।**

**हर्षपूर्णो महादेवि स गुरुभक्त इति स्मृतः।।**

(सू.आ.,क्रि.पा.,८.४६;शि.त.र.,भा-३,९.९.४२;क्रि.सा.,भा-३, पृ.१२२)

## गुरुमाहात्म्यस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। अङ्गस्थलगतप्रसादिस्थलस्य सप्तप्रभेदेषु चान्यतमम्। गुरुरूपस्य हरस्य महात्म्यप्रतिपादकं स्थलम्। सर्वासां सिद्धीनां कारणम्। महादेव एव गुरुरूपेण उपस्थितः।

**प्रसादिस्थलमादौ तु गुरुमाहात्म्यकं ततः।**

**गुरुरेवात्र सर्वेषां कारणं सिद्धिकर्मणाम्।**

**गुरुरूपो महादेवो यतः साक्षादुपस्थितः ।।**

(सि.शि.,११.४,१९)

## गुरुलिङ्गम्

षट्स्थलसम्बद्धेषु आचारलिङ्ग–गुरुलिङ्ग–शिवलिङ्ग–जङ्गमलिङ्ग–प्रसादलिङ्ग–महालिङ्गाख्यषड्विधलिङ्गेष्वेकं गुरुरूपम् लिङ्गम्। प्रथमम् इष्टप्राणभावाख्यं त्रिविधं लिङ्गम्। तत्र इष्टादिलिङ्गानि पुनः प्रत्येकेन द्विविधं

भवन्ति। तत्र इष्टलिङ्गम् आचारलिङ्गम्, गुरुलिङ्गश्चेति द्विविधं जातम्। गुरुलिङ्गं तु महेश्वरस्थलसम्बद्धं भवति।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया।**
**प्रथमं भावलिङ्गं तु द्वितीयं प्रणलिङ्गकम्।**
**तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं मतम्।।**
**भावादिलिङ्गत्रितयं द्विविधं द्विविधं भवेत्।**
**भावलिङ्गं महालिङ्गप्रसादाभिख्यकं द्वयम्।।**
**प्राणलिङ्गं तथा चरशिवलिङ्गद्वयं भवेत्।**
**इष्टं तु गुरुलिङ्गाख्यमाचाराख्यं द्वयं भवेत्।।**

(चं.आ.,क्रि.पा.,३.२३,२६-२७; अ.सू.,३.५-६,२.,३२)

गुरुलिङ्गस्योपासकत्वेन माहेश्वरः गुरुलिङ्गसम्बद्धः। अतः माहेश्वर-स्थलाख्यमङ्गस्थलं क्रियाशक्तिप्रभावेन गुरुलिङ्गस्थलं आश्रयते।

**तदुपासकरूपत्वान्माहेश्वर महास्थलम्।**
**गुरुलिङ्गस्थले तस्मिन्क्रियाशक्तिप्रभावतः।।**

(अ.सू.,३.४२)

इदं गुरुलिङ्गं दीक्षा-शिक्षा-अनुभावश्चेति त्रिधा भवति।

**दीक्षाशिक्षानुभावश्च गुरुलिङ्गं त्रिधा भवेत्।**

(सू.आ.,क्रि.पा.,८.१०;क्रि.सा.,भा-३, पृ.११९,पं.३२)

**स्वज्ञानशक्तिविभवोत्थितकर्तृतत्त्वं**
**सर्वोपदेशविधितन्त्रकृतप्रतिष्ठम्।**
**तेजोनिधिं परमपारसुखाम्बुराशिं**
**बुद्धे पदे विनिहितं गुरुलिङ्गमाहुः।**

(अ.सू.,३.३२)

## गुरुपूजकः = गुरुलिङ्गपूजकः

षड्विधगुरुलिङ्गभक्तेष्वन्यतमः। विनान्यदेवतापूजां गुरुलिङ्गमात्रपूजकः।

**पूजामन्यां परित्यज्य गुरुलिङ्गैकपूजकः।**
**इति निष्ठापरो यस्तु गुरुपूजक उच्यते।।**

(सू.आ.,क्रि.पा.,८.४७)

## गुरुलिङ्गस्थलम्

इष्टलिङ्गभेदः। आचारलिङ्गम् गुरुलिङ्गं चेति स्थलद्वये द्वितीयः। आचारादिलिङ्गषट्स्थलेष्वपि द्वितीयम्।

**गुरुलिङ्गं तथाचारलिङ्गमित्युभयस्थलम्।**
**इष्टलिङ्गं भवत्येव सत्यमुक्तमिदं मया।।**

(अ.सू.,३.२०)

महेश्वरस्थलसम्बद्धानि लिङ्गस्थलानि गुरुलिङ्गस्थलान्येव।

क्रियागमस्थलम्, भावागमस्थलम्, ज्ञानागमस्थलम्, सकायस्थलम्, अकायस्थलम्, परकायस्थलम्, धर्माचारस्थलम्, भावाचारस्थलम्, ज्ञानाचारस्थलश्चेति तानि नव।

(सि.शि.,१३.२-४)

**परजङ्गमैकशरणत्वेन कृतकृत्यस्य माहेश्वरस्य शरणभूत परजङ्गममेव गुरुः स्वस्यैव नवविधस्थलत्वेन चोपास्यत्वं प्रतिपादयितुं तदधिकारिणो माहेश्वरस्य आगमलिङ्गत्रैविध्येन व्रतशीलाचार-निष्ठरूपादिकं माहेश्वरस्थलप्रतिपादिताचारनिष्ठत्वेनैव लिङ्गनिष्ठा-न्वितत्वं कायलिङ्गत्रैविध्यावग्रहणं पूर्वाश्रयाद्यष्टमूर्त्यन्तनिरासकत्वं चाचारलिङ्गत्रैविध्येन सर्वगतनिरासकत्वं च शिवजगन्मयत्वं च प्रतिष्ठाप्य तस्मिन् लिङ्गे भक्तदेहिकलिङ्गमिति निश्चयमधिगम्य नवविधगुरुलिङ्गविचारः कर्तव्यः।।**

(कै.सा.,उ.भा.,२. वि.सं.,४४)

## गुरुलिङ्गार्चनस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। अङ्गस्थलगतभक्तस्थलस्य पञ्चदशप्रभेदेषु च अन्यतमम्। 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति श्वेताश्वतरोपनिषदुक्त्यनुसारेण (श्वे.उ.,६.२३) गुरुलिङ्गोभयभक्तिपूर्वकं गुरोरभ्यर्चनादेव लिङ्गार्चनं सम्पद्यते। इत्येवंरूपोपदेशपरं स्थलं गुरुलिङ्गार्चनस्थलम् । इदमेव स्थलमुभयस्थलमिति प्रसिद्धम्।

**भक्तमार्गक्रिया चैव गुरोर्लिङ्गस्य चार्चनम्।**
**गुरोरभ्यर्चनेनापि साक्षादभ्यर्चितः शिवः।**
**तयोर्नास्ति भिदा किञ्चिदेकत्वात् तत्त्वरूपतः।।**

(सि.शि., ५.२९, ९.५१)

## गुरुवीरः = गुरुलिङ्गवीरः

गुरुलिङ्गभक्तेष्वयतमः। गुरूक्तप्रकाराचारवान् गुरूपदेशानुसारं आचारवान् इत्यर्थः।

**गुरूपदिष्टमेवाथ समाचारणमाचरन्।**
**यश्च त्यक्तेतराचारो गुरुवीरः स उच्यते।।**

(सू.आ.,८.४८;शि.त.र.,भा-३,९.९.४४,१८;क्रि.सा.,भा-३, २४)

## गुर्वीपूजा

"उत्तमो महतीं कुर्यात्, गुर्वीं मध्यम एव च" इति प्रस्तावेन गुर्वीपूजा विधीयते । अस्यां पूजायां भद्रमण्डलं रचनीयम् । दीपद्वयं वा दीपचतुष्कं वा विधीयते । एकादश नीराजनानि अपेक्षितानि । दर्शनम्, मज्जनम्, अवसरम्, माङ्गल्यम्, कर्पूरम्, शृश्रृङ्गारम्, महानीराजनम्, आनन्दम्, असंख्यातम्, सानुरागम्, ताम्बूलं चेति तेषां नामानि । अष्टादश षट्त्रिंशद्वा वर्तिका उक्ताः । दशशतं मूलमन्त्रं जपेत् ।

**पूजा हि त्रिविधा प्रोक्ता गुर्वी च महती लघुः ।।**
**गुर्व्यां महत्यामपि च भद्रं तत्त्वं हि मण्डलम् ।।**

**तिस्रस्त्ववसरायां स्युर्वर्तिका विहिताः किल ।**
**षट्त्रिंशदष्टादश वा गुर्वर्चायां समीरिताः ।।**
**अष्टोत्तरशतं वाऽपि त्रिशतं वा सहस्रकम् ।**
**गुर्व्यां महत्यामपि च वर्तिका ज्वालयेदपि ।।**
**लघ्व्यामवसरायां वा दीप एकः समीरितः ।**
**चत्वारो वा तथा द्वौ वा महत्यां च गुरावपि ।।**
**गुर्व्यां महत्यामपि च मूलं दशशतं जपेत् ।।**
**सानुरागं च ताम्बूलाभिख्यं पूर्वोदितैः सह ।**
**एकादश महत्यां च गुर्व्यां नीराजनानि हि ।।**

(मकुट.क्रि.पा.,३.२, ५-९,१३)

गुर्वीपूजायाः क्रमः प्रत्येकतया नोक्तः । मण्डलाद्यनेकविषये गुर्वी - महत्योः साम्यं दृश्यते । अतः महापूजायां यः क्रम उक्तः स एवात्र विहित इति भावयितुं शक्यते ।

(पश्यत-पद्ममण्डलम्, महापूजाक्रमः)

## गृहशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन षोडशशुद्धय उक्ताः। तत्रैका गृहशुद्धिः ।

**वेश्म भक्तैः परिग्राह्यं गृहशुद्धिः समीरिता ।**

(चं.आ.,क्रि.पा.,९.३५)

(पश्यत – षोडशशुद्धयः)

## गोत्रसमुद्भवाः

रेणुकः, दारुकः, शङ्खुकर्णः, धेनुकः (धेनुकर्णः), विश्वकर्णश्चेति पञ्चगोत्रसमुद्भवाः।

**रेणुको दारुकश्चैव शङ्खुकर्णश्च धेनुकः।**
**विश्वकर्णश्च पञ्चैते पञ्चगोत्रसमुद्भवाः।।**

(वी.स.सं.,१.२९)

## गोत्रसंस्कृतिः

गोत्राणि नाम शिवगोत्राणि । तानि च परस्परसम्बन्धकारणानि। तत्र या भयभक्तिः वर्तते सा गोत्रसंस्कृतिः।

**गोत्राणि शिवगोत्राणि तत्र सम्बन्धकारणम्।**
**भयभक्तिपरा तत्र कथ्यते गोत्रसंस्कृतिः।।**

(शै.र., भा-२, १७.१९४)

## गोत्राधिकारिणः

वीरः, नन्दी, वृषभः, भृङ्गी, स्कन्द इति एते पञ्चगोत्राधिकारिणः।

**वीरो नन्दी वृषश्चैव भृङ्गी स्कन्दस्तथैव च।**
**मत्स्वरूपाः समुत्पन्नाः पञ्चगोत्राधिकारिणः।।**

(वी.स.सं.,१.२८)

## गोमयम्

१. भस्मोत्पादने मूलवस्तु गोमयम्।

**गुणत्रयमिदं धेनुर्विद्याऽभूद्गोमयं शुभम्।**
**मूत्रं चोपनिषत्प्रोक्तं कुर्याद्भस्म ततः परम् ।।**

(चं.आ.,क्रि.पा., ६.५)

२. पञ्चगव्येष्वेकतमम्।
(पश्यत-पञ्चगव्यम्)

## गोमुखम्

शैवागमोक्तपञ्चसूत्रघटितलिङ्गस्य लिङ्गोच्चता, लिङ्गविस्तारः, लिङ्गस्थौल्यं, पीठविस्तारः, गोमुखश्चेति पञ्चविधरचनाविन्यासेष्वेकम्।

**लिङ्गवृत्तसमं पीठं दीर्घं विस्तारमुन्नतं ।**
**तदर्धं गोमुखं चैव पञ्चसूत्रं प्रकीर्तितम् ।।**

(मकुट.,क्रि.पा.,४.४६)

## गोलकन्यासः

साधकेन आत्मरक्षणार्थं क्रियमाणः न्यासः गोलकन्यास इत्युच्यते। अस्य न्यासस्य क्रमः- हृदये, मुखे, अंसयोः, ऊर्वोः, कण्ठे, नाभौ, पार्श्वयोः षडक्षरमन्त्रस्य न्यासः करणीयः। पुनः पृष्ठे, हृदये, मस्तके, मुखे, अक्ष्णोः, भुजयोः, सन्दिषु, अग्रहस्तयोः तमेव मन्त्रं न्यसेत् । अनन्तरं शिरसि, वदने, हृदये, उदरे, ऊर्वोः, पादयोः, कण्ठे च अभयेष्टवरदानमुद्राः विन्यसेत् । ततः मुखे, अंसयोः, हृदये, पादयोः, ऊर्वोः, उदरे च क्रमेण षडक्षरमन्त्रस्य षड्वर्णान् यथावत् विन्यसेत् । एवमेव शिरसि, ललाटे, उदरे, अंसयोः, हृदये च पुनस्तान् विन्यसेत् । स्थाणुस्वरूपाय, ज्योतिर्लिङ्गामृतात्मने, चतुर्मूर्तिः छायारूपशरीराय, शम्भवे नमः इति नमस्कारान् विधाय शिवं मनसि ध्यायेत्।

कुर्वीत गोलकन्यासं रक्षायै तदनन्तरम् ।
हृदि वक्त्रांसयोरूर्वोः कण्ठे नाभौ द्विपार्श्वयोः ।।
पृष्ठे हृदि ततो मूर्ध्नि वदने नेत्रयोर्न्यसेत् ।
दोषोः सन्धिषु साग्रेषु विन्यसेत् तदनन्तरम् ।।
शिरोवदनहृत्कुक्षिसोरुपादद्वये शिवे ।
हृदि वक्त्राम्बुजे कण्ठे मृगाभयवरेष्टदाः।।
वक्त्रांसहृत्सु पादोरुजठरेषु क्रमान्न्यसेत् ।
मूलमन्त्रेषु मन्त्रार्णान् यथावत् देवि विन्यसेत् ।।
मूर्ध्नि फालोदरांसेषु हृदये तान् पुनर्न्यसेत् ।
पश्चादनेन मन्त्रेण कुर्वीत व्यापकं सुधीः ।।
नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने ।
चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शम्भवे ।
एवं न्यस्तशरीरोऽसौ चिन्तयेन्मां महेश्वरि।।

(पार.आ.,११.५०-५५)

# घ

## घटपञ्चकम्

शिवागमोक्तं सद्योजातादि पञ्चब्रह्मसङ्केतरूपं कलशपञ्चकमेव घटपञ्चकम्। पञ्चसूतकरहितं कलशपञ्चकमेव घटपञ्चकम्।

**घटपञ्चकसंयुक्तां शिवागमपरिष्कृताम्।**

**पञ्चसूतकवार्जिताम् पञ्चब्रह्मान्वितां विद्यां।**

(वी.आ., उ.४.५९७)

## घण्टिकालिङ्गमूलम्

चक्रभेदः। जिह्वाया अधोभागस्थितं घण्टिकालिङ्गमूलम् । तच्च दन्तानामूर्ध्वभागे प्रसिद्धं राजदन्तकम् । तस्मिन् षष्ठचक्रे अमृतत्वसिद्ध्यर्थं बिन्दुस्वरूपं ध्यायेत् ।

**षष्ठं च घण्टिकालिङ्गमूलं तद्राजदन्तकम् ।**

**ध्यायेत्तद्दशनाद्वारं तत्र शून्यं सुसिद्धये ।।**

(शि.यो.प्र.,३.१३)

(पश्यत–चक्राणि)

## घनलिङ्गम्

ज्योतिर्मयमखण्डमिन्द्रियातीतं ज्ञानोपलब्धममृतं सृष्टिरूपपरिणामस्य मूलकारणं पराशक्त्या समुत्पन्नं सादाख्यतत्त्वं उपाधिरहितञ्च प्रसादघनलिङ्गमिति कथयन्ति।

**ज्योतिर्मयं निजमखण्डमतीन्द्रियार्थं**
**ज्ञानोपलब्धममृतं परिणामबीजम् ।**
**सादाख्यतत्त्वमुदितं परया स्वशक्त्या**
**प्राहुः प्रसादघनलिङ्गमुपाधिहीनम् ।।**

(अ.सू.,३.२९)

# च

## चक्राणि

ध्यानमुद्रापूर्वकध्यानगोचराणि योगसम्बद्धानि चक्राणि। तानि च षोढा, सप्तधा, नवधा, दशधा इति विविधप्रकाराणि।

**षोढा** – १.मूलाधारम्, २. स्वाधिष्ठानम्, ३. मणिपूरकम्, ४. अनाहतम्, ५. विशुद्धिः, ६. आज्ञा चेति ।

**सप्तधा** – १. मूलाधारम्, २. स्वाधिष्ठानम्, ३. मणिपूरकम्, ४. अनाहतम्, ५. विशुध्दिः, ६. आज्ञा, ७. सहस्रारम् ।

**नवधा** – १. मूलाधारम्, २. स्वाधिष्ठानम्, ३. मणिपूरकम्, ४. अनाहतम्, ५. विशुद्धिः, ६. घण्टिकालिङ्गमूलम्, ७. आज्ञा(भ्रूचक्रम्), ८. निर्वाणचक्रम्, ९. आकाशचक्रम्।

**ध्यानस्थलेषु सर्वेषु नवचक्राणि योगिभिः।**
**श्रेष्ठानि तानि कथ्यन्ते वक्ष्यामः शृणु ते वयम्।।**

(शि.यो.प्र.,३.७–१६)

**दशधा** – १. मूलाधरम्, २. स्वाधिष्ठानम्, ३. मणिपूरकम्, ४. अनाहतम्, ५. विशुध्दिचक्रम्, ६. ललनाचक्रम्, ७. अज्ञाचक्रम्, ८. मनश्चक्रम्, ९. सोमचक्रम्, १०. सहस्रपत्रचक्रम्।

(शि.त.र.,भा–३.९.१. १३१–१५१; वा.शु.आ.,६.२६;अ.सू., ६.४७–५४)

## चतुःपीठम्

शृङ्गाटकमेव चतुःपीठम् । शब्दद्वारभूते श्रोत्ररन्ध्रे गन्धद्वारभूते नासिकारन्ध्रे च भ्रूमध्यस्थाने समायोगं प्राप्य चतुःपीठं भवन्ति ।

**शब्दद्वारे गते यत्र गन्धद्वारे तथैव च ।**

**समायोगे चतुःपीठं श्रृङ्गाटकसुसंज्ञितम् ।।**

(शि.यो.प्र.,२.३६)

(पश्यत–त्रिकूटम्, शृङ्गाटकम्, त्रिवेणीयोगस्थलम्, त्रिवेणीसङ्गम–स्थलम्)

## चतुर्दशभुवनानि=चतुर्दशलोकाः

अतलादि चतुर्दशभुवनानि। तानि च अतलम्, वितलम्, सुतलम्; प्रतलम्, तलातलम्, रसातलम्, पातालम्; भूलोकः, भुवर्लोकः, सुवर्लोकः, महर्लोकः, जनलोकः, तपोलोकः, सत्यलोक इति। चतुर्दशलोकानां पिण्डेऽन्तर्भावः। तद्यथा–

**पादाधस्त्वतलं विद्यात्पादोर्ध्वं वितलं तथा।**

**जङ्घयोस्सुतलं ज्ञेयं प्रतलं जानुनोर्द्वयोः।।**

**तलातलमथोर्वोस्तु गुह्यस्थाने रसातलम्।**

**पातालं कटिसन्धौ तु पादादौ लक्षयेद्बुधः।।**

**भूलोको नाभिमध्ये तु भुवर्लोको हृदि स्थितः।**

**स्वर्लोकः कण्ठदेशे तु महर्लोकस्तु तालुके।।**

**जनलोकस्तदूर्ध्वं तु तपोलोको ललाटके।**
**सत्यलोकः शिरस्येवं भुवनानि चतुर्दश।।**

(शि.त.र.,भा-३,९.१.१५३-१५६)

## चतुर्दशविद्याः

ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्चेति चत्वारः वेदाः; तर्कः, व्याकरणम्, ज्योतिषम्, निरुक्तम्, कल्पः छन्दस् इति षडङ्गानि; मीमांसा, न्यायः, धर्मशास्त्रम् पुराणञ्चेति चतुर्दशविद्याः।

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश।।**

(शि.त.र.,भा-२, १, १.१.२७)

## चतुर्विधकर्म

शुभकर्म, अशुभकर्म, ज्ञानकर्म, प्रसादकर्म इति कर्म चतुर्विधम् । चतुर्विधकर्मणः चतुर्विधफलम् । तत्र शुभकर्मणा स्वर्गः, अशुभकर्मणा नरकम्, ज्ञानकर्मणा मोक्षः, एतत् त्रिविधकर्मरहितेन प्रसादकर्मणा भक्तिरुत्पद्यते । प्रसादो नाम शिवप्रसादः । शिवप्रसादात् भक्तिः जायते, भक्त्या शिवप्रसादः प्राप्यते, इत्येवं वर्तते । भक्ति - प्रसादयोः सम्बन्धः बीजवृक्षन्यायमनुसरति ।

**शुभकर्माऽशुभं कर्म ज्ञानकर्मप्रसादकम् ।**
**एतच्चतुर्विधं कर्म तत्तत्फलविधायकम् ।।**
**पापान्नरकः पुण्यात् स्वर्गस्ताभ्यां विनैव कर्मभ्याम् ।**
**ज्ञानान्मोक्षस्तैस्त्रिभिरेव विना स्यात्प्रसादतो भक्तिः ।।**

(अ.सू.,८.२९-३०)

**प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः ।**
**यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः ।।**

(सि.शि.,९.११; अ.सू.,८.३१)

## चतुर्विधभक्ताः

सूक्ष्मागमोक्तरीत्या भक्ताः चतुर्विधाः । लक्षणभेदेन आचारभेदेन च तथा परिगण्यमानाः, कनिष्ठाः, मध्यमाः, उत्तमाः, उत्तमोत्तमाश्चेति। तत्र सिद्धाः, विद्याधरा इत्यादयः शिवाज्ञया ये तत्तल्लोकान् समाश्रिताः ते कनिष्ठा भक्ताः । ये च राजर्षयः, ब्रह्मर्षयः, देवर्षयश्चेति शापानुग्रहशक्तियुक्ताः शिवाज्ञानुसारं अखिललोकेषु सञ्चरन्ति ते मध्यमा भक्ताः । ये केचित् उत्तमाचारेण सालोक्य – सामीप्य – सारूप्या लक्षणेषु तत्तद्योग्यस्थानेषु स्वभक्त्यनुसारेण विराजन्ते ते हि उत्तमा भक्ताः । ये स्वकीयोत्तमोत्तमवृत्तिवशात् स्वतन्त्रतया उत्तमोत्तमपदवीभाजः प्राणलिङ्गपरायणाः, धर्मनिरताश्च केवलं वीरशैवा उत्तमोत्तमा भक्ताः । ते पुनः यं कमपि मार्गमनुसरन्तः यत्किमपि कर्म कुर्वन्तः शिवैकनिष्ठमनसः भवन्ति ।

**भक्ताश्चतुर्विधा लोके नानालक्षणसंयुताः ।**
**कनिष्ठा मध्यमाश्चैवमुत्तमा उत्तमोत्तमाः ।**
**प्रख्याता भुवने देवि तत्तदाचारभेदतः ।।**
**सिद्धविद्याधरादीनां लोकान् वै समुपाश्रिताः ।**
**वसन्ति तत्र भक्तास्ते कनिष्ठा मदनुज्ञया ।।**
**भक्ताश्च मध्यमा देवि त्रिविधा लोकपूजिताः ।**
**ते च राजर्षयः केचित् केचित् ब्रह्मर्षयः परे ।।**
**अन्ये देवर्षयः प्रोक्ताः शापानुग्रहकारकाः ।**
**चरन्त्यखिललोकेषु मदाज्ञापरिपालकाः ।।**
**उत्तमास्त्रिविधाः प्रोक्ता भक्ताश्च परमेश्वरि।**
**उत्तमाचारभेदात्तु तत्तद्योग्यपदे स्थिताः ।।**
**सालोक्यमास्थिताः केचित् समीप्यं च तथा परे ।**
**सारूप्यं चापरे प्राप्तास्तद्भक्त्यनुसारतः ।**

**मदाज्ञया पदेष्वेषु वसन्ति हि निराकुलाः ।।**

**उत्तमोत्तमभक्तास्तेऽत्युत्तमोत्तमवृत्तयः ।**

**प्राप्नुयुः स्वेच्छया देवि पदमप्युत्तमोत्तमम् ।।**

**ये वीरशैवनिरताः प्राणलिङ्गपरायणाः ।**

**ये च धर्मैकनिरता भक्तास्ते चोत्तमोत्तमाः ।।**

**येन केनापि मार्गेण येन केन च कर्मणा ।**

**शिवैकनिष्ठमनसो भक्तास्ते चोत्तमोत्तमाः ।।**

(सू.आ.,क्रि.पा.,९.४–१२)

## चतुर्विधामुक्तिः

पारमेश्वरागमोक्तदिशा सर्वेषु प्राणिषु दया, शिवे भक्तिः, सर्वत्र शिवदर्शनम्, नित्यं शिवलिङ्गधारणं चेति मुक्तिः चतुर्विधा ।

**दया भूतेषु मद्भक्तिः सर्वत्र ममदर्शनम् ।।**

**मल्लिङ्गधारणं नित्यं मुक्तिरेषा चतुर्विधा ।**

(पार.आ.,२.३१–३२)

## चतुर्विधसारायस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। अङ्गस्थलगतभक्तस्थलस्य पञ्चदशावान्तरस्थलेष्वेकम् । गुरुपूजा, लिङ्गपूजा, जङ्गमपूजा तथैव तेषां पादोदकप्रसादस्वीकार इति चतुर्विधसाररूपभक्तिसन्निहिता स्थितिः।

**शिवाचार्यातिथिष्वेतत् प्रसादेऽप्येकरूपिणी।**

**सा चतुर्विधसारोक्ता भक्तिरव्यभिचारिणी।।**

(कै.सा.,पृ.२४,शि.र.तः उद्धृतः)

**तस्माद् गुरुं महादेवं शिवयोगिनमेव च।**

**पूजयेत् तत्प्रसादान्नं भुञ्जीयात् प्रतिवासरम्।।**

(सि.शि.,९.७८)

## चतुर्विंशदुपचाराः

उपचारभेदाः

१. आसनम्, २. आह्वानम्, ३. अर्घ्यम्, ४. पाद्यम्, ५. आचमनम्, ६. यज्ञोपवीतम्, ७. माल्यम्, ८. गन्धानुलेपनम्, ९. आभरणम्, १०. छत्रम्, ११. चामरम्, १२. तालवृन्तम्, १३. दर्पणम्, १४. घण्टा, १५. शङ्खम्, १६. गीतम्, १७. वाद्यम्, १८. नृत्यम्, १९. प्रदक्षिणम्, २०. नमस्कारः, २१. स्तुतिः, २२. याचनम्, २३. विज्ञप्तिः, २४. विसर्जनम् चेति।

शिवलिङ्गार्चनक्रमे द्वादशपूजाः, चतुर्विंशदुपचाराश्च आहत्य षट्त्रिंशदुपचारा भवन्ति। एतैरुपचारैः शैवीस्थितिः ३६ तत्त्वमयी भवति।

(पश्यत – द्वादशशिवलिङ्गार्चनक्रिया)

**आसनाह्वानमर्घ्यं च पाद्यमाचमनं तथा।**
**यज्ञोपवीतमाल्यानुलेपनाभरणानि च।।**
**छत्रं च चामरं चैव तालवृन्तं च दर्पणम्।**
**घण्टा शङ्खं च गीतं च वाद्यं नृत्यं प्रदक्षिणम्।।**
**नमस्कारः स्तुतिर्याञ्चाविज्ञप्तिस्तु विसर्जनम्।**
**इत्येवमुपचाराश्च चतुर्विंशदिधाः स्मृताः।।**
**समर्चनोपचाराणां योगः षट्त्रिंशदीरितः।**
**षट्त्रिंशत्तत्त्वमय्येषा शैवीस्थितिरिति श्रुतिः।।**

(विशे.प्र.,२.६–९)

१. आवाहनम्, २. आसनम्, ३. पाद्यम्, ४. अर्घ्यम् ५.आचमनम्, ६. स्नानम्, ७. वस्त्रम्, ८.उपवीतम्, ९. अक्षता, १०. गन्धः, ११. पुष्पम्, १२. धूपः, १३. दीपः, १४. नैवेद्यम्, १५. फलम्, १६. ताम्बूलम्, १७. स्तोत्रम्, १८. प्रदक्षिणम्, १९. नमस्कारः, २०. शय्या, २१. सङ्गीतम्, २२. वाद्यम्, २३. नृत्तम्, २४. आत्मार्पणम् इति चतुर्विंशत्युपचाराः।

आवाहनासने पाद्यमर्घ्यमाचमनीयकम्।
स्नानं वस्त्रं चोपवीतमक्षता गन्धपुष्पकम्।।
धूपं दीपं च नैवेद्यं फलं ताम्बूलकं स्तुतिः।
प्रदक्षिणनमस्कारौ शय्यासङ्गीतवाद्यकम्।।
नृत्तं चात्मारोपणं च चतुर्विंशतिरित्यमी।

(शि.त.र.,भा- ३, ८.७.४९,१-५)

## चतुष्षष्टिकलाः

१. इतिहासः, २. आगमः, ३. काव्यम्, ४. अलङ्कारः, ५. नाटकम्, ६. गायकत्वम्, ७. कवित्वम्, ८. कामशास्त्रम्, ९. दुरोदरम्, १०. देशभाषालिपिज्ञानम्, ११. लिपिकर्म, १२. वाचनम्, १३. गणकत्वम्, १४. व्यवहारः, १५. स्वरशास्त्रम्, १६. शकुनशास्त्रम्, १७. सामुद्रिकम्, १८. रत्नशास्त्रम्, १९. गजकौशलम्, २०. अश्वकौशलम्, २१. रथकौशलम्, २२. मल्लशास्त्रम्, २३. सूपकर्म, २४. भूरुहाणां दोहदम्, २५. गन्धवादः, २६. धातुवादः, २७. खनिवादः, २८. रसवादः, २९. बिलवादः, ३०. अग्निसंस्तम्भः, ३१. खड्गस्तम्भः, ३२. जलस्तम्भः, ३३. वाचःस्तम्भः, ३४. वयस्स्तम्भः, ३५. वश्याकर्षणमोहनम्, ३६. विद्वेषणम्, ३७. उच्चाटनम्, ३८. मारणम्, ३९. कालवञ्चनम्, ४०. परकायप्रवेशः, ४१. पादुकासिद्धिः, ४२. वाक्सिद्धिः, ४३. घुटिकासिद्धिः, ४४. ऐन्द्रजालिकम्, ४५. अञ्जनम्, ४६. परदृष्टेर्वञ्चनम्, ४७. स्वरवञ्चनम्, ४८. मणिमन्त्रौषधीनां सिद्धिः, ४९. चौरकर्म, ५०. चित्रकर्म, ५१. लोहकर्म, ५२. अश्मकर्म, ५३. मृत्कर्म, ५४. दारुकर्म, ५५. वेणुकर्म, ५६. चर्मकर्म, ५७. अम्बरकर्म, ५८. अदृश्यकारणम्, ५९. दन्तिकारणम्, ६०. मृगयाविधिः, ६१. पशुपालनम्, ६२. वाणिज्यम्, ६३. कृषिरासवकर्म, ६४. लावकुक्कुटमेषादियुध्दकारक़कौशलं च।

(शि.त.र., भा-१, १.२.४४-५३)

## चतुःषष्टिशीलानि

सर्वश्रेष्ठे सद्यःसिद्धिप्रदे गणाचारे (पञ्चाचारेष्वेकतमे) चतुःषष्टि-शीलानि समाविष्टानि । तानि १. वाक् शीलानि (७), २. पाणिगतशीलानि (५), ३. पादगतशीलानि (४), ४. त्वक्शीले (२), ५. चक्षुर्गतशीले (२), ६. जिह्वागतशीलम् (१), ७. घ्राणगतशीलम् (१), ८. श्रोत्रगतशीले (२), ९. कायगतशीलानि (५), १०. मानसिकशीलानि (३५) चेति विभक्तानि ।

**१. वाक्शीलानि सप्त** – १. सत्यवचनम्, २. प्रियं च सत्यं च वचनम्, ३. सद्ग्रन्थपठनम्, ४. गुरु–ज्येष्ठानां स्तुतिः, ५. मानवस्तुतौ विमुखता, ६. आत्मप्रशंसा राहित्यम्, ७. अन्यनिन्दारहितत्वम् ;

**२. पाणिगतशीलानि पञ्च** – ८. गुरुलिङ्गजङ्गमनमस्कारः, ९. पूजाद्रव्यसङ्ग्रहणम्, १०. रुद्राक्षमालाद्वारा यथावकाशं जपः, ११. गुरुलिङ्गजङ्गमाराधनम्, १२. शिवधर्माय यथशक्ति दानम् ;

**३. पादगतशीलानि चत्वारि** – १३. गुरुजङ्गमदर्शनार्थं गमनम्, १४. गुरुजङ्गमप्रदक्षिणाम्, १५. पूजोपकरणानां सम्पादनाय गमनम्, १६. लिङ्गार्चनार्थं स्थिरासनम् ;

**४. त्वक्शीले द्वे** – १७. इष्टलिङ्गस्य सर्वदा धारणम्, १८. इष्टलिङ्गस्पर्शजन्यं रोमाञ्चनम् ;

**५. चक्षुर्गतशीले द्वे** – १९. इष्टलिङ्गवीक्षणम्, २०. इष्टलिङ्गनिरीक्षण-जन्यानन्दबाष्पोद्गमः ;

**६. जिह्वागतशीलमेकम्** – २१. गुरुलिङ्गजङ्गमप्रसादास्वादः ;

**७. घ्राणगतशीलमेकम्** – २२. निर्माल्यगन्धपुष्पाघ्राणनम् ;

**८. श्रोत्रगतशीले द्वे** – २३. गुरुलिङ्गजङ्गमस्तोत्रश्रवणम् ; २४. गुरुलिङ्गजङ्गमानां निन्दाया अश्रवणम् ;

**९. कायगतशीलानि पञ्च** – २५. गुरुलिङ्गजङ्गमप्रसादेन कायशोधनम्, २६. इन्द्रियविनिग्रहः, २७. अस्पृश्यवस्तुसंस्पर्शे सजलभस्मना स्नानम् ; २८. आसने शयने गोष्ट्यां दीक्षारहितेन सम्बन्धवारणम्, २९. भस्मरुद्राक्षधारणम् ;

**१०. मानसिकशीलानि पञ्चत्रिंशत्** – ३०. निषिद्धभोगसङ्कल्पवर्जनरूपं ब्रह्मचर्यम्, ३१. शिवभक्तिकामना न त्वन्यविषयकामना, ३२. अधर्मे क्रोधः न तु वैरिषु, ३३. शिवाराधनाय धनादिलोभः, ३४. भक्तजने मोहः न तु कान्तासुतादिषु, ३५. इन्द्रियेषु मात्सर्यं न तु जनेषु, ३६. माया जपे मदो न तु धर्मे, ३७. गुरुजङ्गमयोः गुणावगुणाविमर्शत्यागः, ३८. प्राणिमात्रे बाधारहितत्वम्, ३९.प्राणिदुःखदर्शने अक्षमता, ४०. क्रियया वचनेन वा वञ्चनारहितत्वम्, ४१. रिपौ मित्रे वा वैषम्यविवर्जनम्, ४२. निगमागमयोः गुरुजनवचने च विश्वासः, ४३. आपदि दुरन्ते च धर्मस्य अवर्जनम्, ४४. वैरिषु अपकारकारिषु च दूषणरहितत्वम्, ४५. भोगासक्तिराहित्यम्, ४६. प्रमादरहितत्वम्, ४७. शिवान्यविषयसङ्कल्पराहित्यम्, ४८. परद्रव्यस्य अपरिग्रहः, ४९. अलब्धवस्तुविषयव्यसनाभावः, ५०. शिवनाम-रूपस्मरणम्, ५१. शिवनामगुणादीनां चिन्तनम्, ५२, शिवपादसेव-नादिभावनम्, ५३. शिवमानसपूजा, ५४. शिवादिपूज्येभ्यो मनसा वन्दनम्, ५५. शिवकैङ्कर्यभावः, ५६. शिवकल्याणरूपे सख्यम्, ५७. मार्जारकिशोरन्यायेन बन्धमोक्षभारं शिवाय समर्पणम्, ५८. मूलमन्त्रस्य मानसजपः, ५९. शिवस्य दिव्यरूपानुसन्धानम्, ६०. तैलधारावत् शिवस्य दिव्यरूपस्मरणम्, ६१. निर्वातदीपवत् निश्चलतया शिवध्यानम्, ६२. सोऽहंभावे स्थितिः, ६३. अपरिच्छन्नतया शिवरूपानुसन्धानम्, ६४. शिवस्य अनन्तरूपं स्मरन्नात्मनो विस्मरणम् ।

यो भक्तः चतुःषष्टिशीलसम्पदा विराजते स शिव एव नान्यः । एतेषाम् अभ्यासवशात् स शिवसायुज्यं भजते । एष गणाचार इत्युक्तः ।

**य श्चतु:षष्टिशीलाढ्यः शिव एव न चापरः ।**

**एतदभ्यासयोगेन शिवसायुज्यमश्नुते ।।**

**गणाचार इति प्रोक्तः ................... ।।**

(चं.आ.,क्रि.पा.,९.१२३)

(चतु:षष्टिशीलानि चं.आ.,क्रि.पा.,९.५३-१२२, इत्यत्र प्रपञ्चितानि । स्थलाभावात् श्लोका न दत्ताः) ।

## चरम्

१. चराचरजगतोः चरजगत् एकम्। अत्र चर इत्यनेन जीव इति अर्थः स्वीक्रियते।

**लयं गच्छति यत्रैव जगदेतच्चराचरम्।**

(सि.शि.,६.३७)

२. स्वयं परं चरं चेति त्रिविधजङ्गमलिङ्गान्यतमम्। अहङ्कारममकाररहितः स्वस्वरूपज्ञानसम्पन्नः स्वयमेव लिङ्गो भूत्वा स्वयं चरतीति चरलिङ्गमित्यभिधानवान् जङ्गमः चरमित्युच्यते।

**स्वयं चरं परं चेति त्रैविध्यं समुपागतम् ।**

(सू.आ.,क्रि.पा.,८.१८)

**स्वरूपज्ञानसम्पन्नो ध्वस्ताहंममताकृतिः।**

**स्वयमेव स्वयं भूत्वा चरतीति चराभिधः।।**

**स्वयं परं चरं चेति तेषां लक्षणमुच्यते।**

(सि.शि.,१५.५७,६)

३. चरास्थिर, चरचर इत्यादि षड्विधलिङ्गेषु एकतमम् ।

**स्थिरं चरं स्थिरचरं चरस्थिरमथाम्बिके ।**

(पार.आ.,१६.९)

(पश्यत – लिङ्गम्)

## चरः

अष्टावरणेष्वेकतमः जङ्गमः।

**गुरुर्लिङ्गं चरश्चैव प्रसादः पादवारि च।**

(वी.प्र.,पृ.५१;चं.आ.तः. उद्धृतम्, जङ्गमः इति पाठान्तरम्)

**गुरोरपीष्टलिङ्गस्य चरस्यापि विशेषतः।**

(चं.आ., क्रि.पा.,५,६)

**गुरुलिङ्गचरश्चैव प्रसादः पादवारि च।**

(वी.प्र., पृ.५१, श्लो.११)

## चरचरलिङ्गम्

स्थिरम्, चरम्, चरस्थिरमित्यादि षड्विधलिङ्गेष्वेकतमम्।

**लिङ्गं चरचरं प्रोक्तं यच्च विश्वात्मकं मम।**

(पार.आ.,१६.२०)

(पश्यत – लिङ्गम्)

## चरप्रसादः

जङ्गमप्रसाद एव चरप्रसादः। तस्य प्रसिद्धप्रसाद इति नामान्तरम्। स च पवित्रदायकः।

**चरगुर्वोः प्रसादस्तु ध्रुवं पवित्रदायकः ।।**

**गुरुलिङ्गजङ्गमानां भुक्तशेषः प्रसादकः।।**

**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्त्यैकसाधनः।**

(चं.आ., क्रि.पा.,५.३५,२०-२१)

## चरपदोदकम्

जङ्गमपादोदकमेव चरपादोदकम्। चरपादोदकस्य ज्ञानपादोकमिति नामान्तरम्।

**गुरुवर्जं चरप्राप्तौ लब्ध्वा चरपदोदकम्।**

**पादतीर्थं त्रिधा शम्भोर्गुरुजङ्गमयोरपि।**

**दीक्षा शिक्षा ज्ञानमिति त्रिसंज्ञं तद्भवत्यहो।।**

(चं.आ., क्रि.पा.,५.५)

(अस्य ज्ञानपादोदकस्य आध्यात्मिकस्वरूपं ज्ञातुं पश्यत– ज्ञानपादोदकस्थलम्।)

## चरभक्तः

गुरुभक्तः, लिङ्गभक्तः, चरभक्तश्चेति त्रिविधभक्तेष्वेकतमः । तत्र चरभक्तः जङ्गमभक्त एव । देहाभिमानं त्यक्त्वा केवलं जङ्गमे अभिमानवान्, अन्यभक्तिविवर्जितो यः सः चरभक्तः ।

**गुरुभक्तो लिङ्गभक्तश्चरभक्तस्तथैव च ।**

**एवं भेदसमायुक्तो भक्तस्तु त्रिविधो भवेत् ।।**

**त्यक्त्वाऽभिमानं देहादौ जङ्गमैकाभिमानवान् ।**

**चरलिङ्गैकभक्तः स्यादन्यभक्तिविवर्जितः ।।**

(सू.आ.,क्रि.पा.,८.३६, ५७; शि.त.र.,भा–३, ९.९.३९; क्रि.सा.,भा–३, पृ.१२२)

## चरमूर्तिः

स च पाशमुक्तः शिवतुल्यः।

**चरमूर्तिश्शिवः साक्षात् पाशमुक्तः परश्शिवः।**

(वी.प्र., पृ.१२१)

## चरलक्ष्माणि

चरलक्षणानि । जङ्गमस्य चिह्नानि इति यावत् । तानि चिह्नानि बाह्यानि आन्तराणि चेति द्विविधानि । तत्र भस्मरुद्राक्षलिङ्गधारणम्, गुरुसेवा,

शिवस्तोत्रम्, तन्नामोच्चारणम्, तत्पूजनम्, शिवागमार्थानुसन्धानम्, शिवपुराणश्रवणम्, जङ्गमानां नमस्कारः, शिवभक्तानां गृहे भोजनम्, गुरुजङ्गमयोः दानं चेति दशबाह्यचिह्नानि । मानसो जपः, मानसीपूजा, स्वात्मनि परमेशस्य साक्षात्कारश्चेति त्रीणि आन्तरचिह्नानि ।

**................ चरलक्ष्माणि निश्चिनु ।।**

**तेषां बाह्यानि चिह्नानि दश सन्ति बृहस्पते ।**

**प्रथमं भस्मरुद्राक्षलिङ्गधारणमीरितम् ।।**

**द्वितीयं गुरुसेवा च शिवस्तोत्रं तृतीयकम् ।।**

**नामोच्चारणमीशस्य चतुर्थं परिकीर्तितम् ।**

**पञ्चमं देवदेवस्य पूजनं समुदीरितम् ।।**

**षष्ठं शिवागमार्थानुसन्धानमिति चोदितम् ।**

**तथा शिवपुराणानां श्रवणं सप्तमं विदुः ।।**

**नमस्कारश्चराणां च परिकीर्तितमष्टकम् ।**

**नवमं शिवभक्तानां गृहभोजनमीरितम् ।।**

**दानं च दशमं ज्ञेयं जङ्गमे च गुरावपि ।**

**एवं बाह्यानि चिह्नानि कथितानि दशैव तु ।।**

**त्रीण्यान्तराणि चिह्नानि कथितानि महात्मनाम् ।**

**शृणु तानि यथा विद्वन् मानसः प्रथमो जपः ।।**

**पूजा च मानसी ज्ञेया द्वितीया परमेशितुः ।**

**साक्षात्कारस्तृतीयस्तु स्वान्तरे परमेशितुः ।।**

(चं.आ.,क्रि.पा.,४.११-१८)

(पश्यत – भक्तिचिह्नानि)

## चरलिङ्गम्

अचरे स्थावरे लिङ्गे मन्त्रसंस्कारद्वारा शङ्करस्य विनिवेशः साध्यते। परन्तु चरलिङ्गे इष्टलिङ्गे शिवयोगिनि वा शङ्करः सर्वकालं तिष्ठति ।

**अचरे मन्त्रसंस्कारात् लिङ्गे वसति शङ्करः ।**

**सदाकालं वसत्येव चरलिङ्गे महेश्वरः ।।**

(सि.शि.९.६२)

**स्वात्मादिशक्तिघटितं मनसैव नित्यम् ।**

**ध्यातव्यमाप्तमतयश्चरलिङ्गमाहुः ।।**

(अ.सू.,३.३०)

(पश्यत–चरम्)

## चरलिङ्गमाहात्म्यस्थलम्

सप्तविंशतिस्थलभेदे सप्तदशतमम्।

**चरलिङ्गस्य माहात्म्ययुतं सप्तदशं भवेत्।**

(अ.वी.सा.सं.,पृ.२७)

## चरलिङ्गस्थलम्

आचारलिङ्गस्थलभेदः। जङ्गमलिङ्गत्रिविधम्। तच्च–स्वयलिङ्गं, चरलिङ्गं, परलिङ्गञ्चेति।

**चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते।**

**स्वयं चरं परश्चेति त्रैविध्यं समुपागतम्।।**

(क्रि.सा.,भा–३, पृ.१२०)

(पश्यत –स्वयस्थलम्, चरस्थलम्, परस्थलम्)

## चरस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। लिङ्गस्थलगत भक्तस्थलान्तर्गत-नवविधलिङ्गस्थलेषु एकम्। अहङ्कार- ममकाररहितः स्वस्वरूपज्ञानसम्पन्नः स्वयलिङ्गी (स्वयजङ्गमः) स्वयमेव स्वयं भूत्वा चरतीति चरलिङ्गीति कथ्यते। तस्य सम्बद्धस्थलं चरस्थलम्।

**आदौ नवस्थलानीह भक्तस्थलसमाश्रयात्।**
**दीक्षागुरुस्थलं पूर्वं ततः शिक्षागुरुस्थलम्।**
**स्वयं परं चरं चेति ........................**
**स्वरूपज्ञानसम्पन्नो ध्वस्ताहंममताकृतिः।**
**स्वयमेव स्वयं भूत्वा चरतीति चराभिधः।।**

(सि.शि.,१५.४-६,५७)

(पश्यत-चरम्)

## चरस्थिरलिङ्गम्

स्थिरम्, चरम्, स्थिरचरमित्यादि षड्विधलिङ्गेष्वेकतमम्।

**लिङ्गं सामान्यवीराणां चरस्थिरमनुत्तमम्।**

(पार.आ.,१६.१७)

(पश्यत - लिङ्गम्)

## चराचरम्

चरतीति चरः जङ्गमः, स च जीवः। न चरतीति अचरः स्थावरम्, वस्तुजातम्। अनयोस्समाहारः चराचरम् जगत्।

**जगच्चराचरं यत्तत् तत्त्वपूर्णं चिदात्मकम्।**
**लयं गच्छति यत्रैव जगदेतत् चराचरम्।**

(लिं.धा.चं.,पृ.१७६, श्लो.१)

## चराचरलयस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। लिङ्गस्थलगत-ऐक्य-स्थलान्तर्गत- नवविधप्रभेदेषु अन्यतमम्। निजस्वरूपस्थितलिङ्गस्य ऐक्ये चराचरोभय- नास्तित्वप्राप्तस्थितिः। चराचरप्रपञ्चगते महालिङ्गतादात्म्ये समापन्ने प्राप्तः शिष्टोदनसम्पन्नः शिवयोगी निर्देही भूत्वा चराचरविनाशको भवति। तत्सम्बन्धि स्थलं चराचरलयस्थलम्।

**स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते ।।**

**शिष्टोदनस्थलं चाथ चराचरलयस्थलम् ।।**

**लिङ्गैक्ये तु समापन्ने चरणाचरणे गते ।**

**निर्देही तु स भवेद्योगी चराचरविनाशकः ।।**

(सि.शि.,२०.२-३, २१)

**नैकता नान्यथा चैव न महत्ता न चाणुता।**

**वेदनत्वं स्वसंवेद्यं यत्र नास्ति चराचरम्।।**

**यत्किञ्चिद्वाङ्मयं लोके जगत् स्थावरजङ्गमम्।**

**चराचरं जगद्विश्वं मदन्यन्नास्ति किञ्चन।।**

(कै.सा.,२.५, पृ.१४५)

## चर्यापादः

शैवागमानां चतुर्षु भागेष्वेकतमः। भागस्य पाद इति नाम। पादेऽत्र वीरशैवशिवमेधाख्यान्त्येष्टिप्रायश्चित्तादिकर्म, जपमालायाश्च लक्षण-मित्यादिकञ्च प्रतिपाद्यते।

**लक्षणं जपमालायाः स्कन्दनन्द्यादिकस्य च।**

**चर्यापादे तु कथितं प्रायश्चित्तादिकर्म च।।**

(शि.त.र.भा-१, १.२.४०)

## चाक्षुषी दीक्षा

दीक्षाभेदः। चक्षुरुन्मीलयन् ध्यात्वा गुरुणा शिष्येक्षणम्। शैवागमसम्प्रदाये दीक्षा साधारा आधारवर्जिता चेति द्विविधा। आचार्यं विना शङ्करेणैव तीव्रशक्तिपातविशिष्टानां विज्ञानाकल-प्रलयाकलजीवेभ्यः दीयमाना दीक्षा आधारवर्जिता। आचार्येण च मन्दशक्तिपातविशिष्टानां सकलजीवेभ्यः दीयमाना दीक्षा साधारा दीक्षा। सा दीक्षा क्रियावती, ज्ञानवती चेति द्विविधा। तथा चाक्षुषी, स्पर्शा, मान्त्री, शास्त्री, योगा, होत्री इत्यनेकविधा च। इयञ्च पाशबन्धविमोक्षकारिणी।

**चक्षुरुन्मीलयन् तत्त्वं ध्यात्वा शिष्यं समीक्षयेत्।**
**पाशबन्धविमोक्षाय दीक्षेयं चाक्षुषी भवेत्।।**

(शि.त.र.,भा.- ३,९.७.२७)

(पश्यत-दीक्षा)

## चान्द्रायणम्

प्रायश्चित्तव्रतविशेषः। शुक्लपक्षे पौर्णिमापर्यन्तं एकैक कवलवर्धनक्रमेण पञ्चदशकवलपर्यन्तं भोजनं कृत्वा कृष्णपक्षे पाड्यादारभ्य एकैककवलन्यूनीकरणक्रमेण अमावास्यायां पूर्णोपवासः क्रियते चेत् तत् चान्द्रायणव्रतम्।

(म.स्मृ.,११.२१६)

शैवागमेषु अगम्यस्त्रीसम्पर्कशुद्ध्यै चान्द्रायणव्रतं विधीयते।

**अगम्यागमने प्रोक्तं शुद्ध्यै चान्द्रायणं व्रतम्।**

(चं.आ.,च.पा.,८.३)

सोर्ध्वपुण्ड्रमुखदर्शनस्य प्रायश्चित्तं चान्द्रायणव्रतमिति पण्डिताराध्यचरित्रे उक्तम्।

**सोर्ध्वपुण्ड्रमुखं दृष्ट्वा व्रतं चान्द्रायणं चरेत्।**

(पं.च., ४.९)

## चिच्छक्ति :

षट्सु शक्तिष्वेका। शिवस्थितेयं साक्षात् शिवस्वरूपिणी। शिवस्यापि शिवङ्करीयं शान्त्यतीतोत्तरेत्युच्यते। परादिपञ्चशक्तियुतेयं चेतनात्मिका परमप्रणवस्य परमप्रकाशिका।

**शान्त्यतीतोत्तरा शक्तिः चिन्मात्राऽनन्तविग्रहा।**
**शिवासन्ना शिवा साक्षात् शिवस्यापि शिवङ्करी।।**
**शान्त्यतीतोत्तरा नाम चिच्छक्तिरिति कीर्तिता।**

(अ.सू.,३.२६-२७)

षट्शक्तिषु चिच्छक्तिस्तावत् महालिङ्गस्थलसम्बद्धा। शिव एव महालिङ्गम्।

**शिव एव स्वचिच्छक्त्या महालिङ्गस्थलं भवेत् ।**

(अ.सू.,३.३५)

## चित्

परमात्मनः स्वरूपलक्षणे सच्चिदानन्दस्वरूपः शिव इत्यत्र सत् नाम सत्तावाचकः। चित् च ज्ञानवाचकः।

**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः।**

(सि.शि.,१.१)

## चित्कला

यथा चित्कला (ज्ञानकला) तथा भावः, यथा भावः तथा चित्तम्, यथा चित्तं तथा दृष्टिः, यथा दृष्टिस्तथा स्थलम् इत्युक्तरीत्या श्रीगुरुः शैवीकलारूपां शिष्यस्य शिरसि स्थितां चित्कलां तस्य वामकरस्थापितेष्टलिङ्गे मूलमन्त्रमनुस्मरन् विनिवेशयेत् । इयं शैवीकला एव चित्कला । कुम्भस्थितजलस्योपरि व्याप्ततैलबिन्दुवत् देहप्राणात्मसु व्याप्य या स्थिता सा शाम्भवी कला एव चिद्रूपा, परमकला, चित्कला । सा च प्रज्वलत् कालाग्निज्वालावत् कोटितटित्समानकान्तियुक्ता विराजते । सा परमा,

सूक्ष्मा, तत्त्वानां ज्ञानदायिनी, उत्कृष्टा कला । तामाकृष्य यथाविधि लिङ्गे समुपवेशयेत् ।

**शैवीं कलां स्वमनसा विभाव्य च ततः परम् ।**
**दृष्टावानीय च तया शिष्यवामकरस्थिते ।**
**लिङ्गे निवेशयेत् क्षिप्रं मूलमन्त्रमनुस्मरन् ।।**
**यथा कला तथा भावो यथा भावस्तथा मनः ।**
**यथा मनस्तथा दृष्टिर्यथा दृष्टिस्तथा स्थलम् ।।**
**जलकुम्भाग्रसद्व्याप्ततैलबिन्दुर्यथा तथा ।**
**देहप्राणात्मसु व्याप्ता संस्थिता शाम्भवी कला ।।**
**ज्वलत् कालानलाभासतटित्कोटिसमप्रभा ।**
**तस्योर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा कला ।।**
**या कला परमा सूक्ष्मा तत्त्वानां बोधिनी परा ।**
**तामाकृष्य यथान्यायं लिङ्गे समुपवेशयेत् ।।**

(का.आ.,क्रि.पा.,१.१२०-१२४)

## चित्तम्

धारणात्मकं तत्त्वम्। चित्स्वरूपम्। पञ्चीकरणजन्यपञ्चविंशति तत्त्वान्यतमम्। आकाशतत्त्वम्। मन आदि चतुर्विधेषु अन्तःकरणेष्वेकम्। स्थैर्यगुणयुक्तं चित्तम्। बुद्ध्या यन्निश्चितं तद् अनेन धार्यते।

**चितिरेव चेतनपदादवरूढा चैत्यसङ्कोचिनी चित्तम्। तत्परिज्ञाने च चित्तमेवान्तर्मुखीभावेन चेतनपदाध्यारोहाच्चितिः।**

(कै.उ., शां.व्या., २.१२,पृ.३५)

**चित्तं स्थैर्यगुणेनैव तदेतद्वस्तुसाधकम् ।।**

(अ.सू.,६.३२)

चित्तं भक्तस्य हस्तः । भक्तस्थले आचारलिङ्गाय गन्धप्रसादं चित्तहस्तेन समर्प्यते।

**चित्तं भक्तस्य हस्तस्स्यात्।**

(अ.सू.,६.३३)

**गन्धप्रसादं सद्भक्त्या चित्तहस्तेन चार्पयेत्।**

(का.आ., क्रि.पा., ७.६०)

## चित्तशुद्धिः

शिवपूजादिकर्मयोगद्वारा सदाचारसम्पादनं भवति। तेन चित्तशुद्धिः जायते। चित्तशद्ध्या भक्तिः सम्पाद्यते।

**चित्तशुद्ध्या भवेद्भक्तिः।**

(का.आ.,क्रि.पा.,१.१३४)

## चित्तहस्तः

चित्तं भक्तस्य हस्तः। भक्तस्थले चित्तहस्तेन क्रियाशक्तियुते नासिकाङ्गे आचारलिङ्गसंज्ञे सद्योजातमुखे गन्धप्रसादम् अर्पयेत्।

**चित्तं भक्तस्य हस्तस्स्यात्।**

(अ.सू.,६.३३)

**भक्तस्थले क्रियाशक्तियुते वै नासिकाङ्गके।**
**आचारलिङ्गसंज्ञेऽस्मिन् सद्योजातमुखात्मके।**
**गन्धप्रसादं सद्भक्त्या चित्तहस्तेन चार्पयेत्॥**

(का.आ., क्रि.पा.,७.६०)

(पश्यत – अहङ्कारहस्तः)

## चिदाकाशः = चिद्व्योम

दिव्याकाशः। हृदयकमलस्थः दिव्याकाशः।

**अहं ब्रह्मेति भावस्य वस्तुद्वयसमाश्रयः।**
**एकीभूतस्य चिद्व्योम्नि तदभावो विनिश्चितः॥**

(सि.शि., १८.४५)

## चिदाकारः

ज्ञानाकारः। ज्योतिर्लिङ्गम्, प्राणलिङ्गं चेति कथ्यते।

**ज्योतिर्लिङ्गे चिदाकारे ज्वलत्यन्तर्निरन्तरम्।**

(सि.शि.,२०.११)

## चिदात्मा

चैतन्यस्वरूपी आत्मा। ज्ञानात्मा। दिव्यदृष्टिसम्पन्नो जीवात्मा।

**चिदात्मनि शिवे न्यस्तं जगदेतच्चराचरम्।**

**ज्ञायते तन्मयं सर्वमग्नौ काष्ठादिकं यथा।।**

**न भाति पृथ्वी न जलं न तेजो नैव मारुतः।**

**नाकाशो न परं तत्त्वं शिवे दृष्टे चिदात्मनि।।**

(सि.शि.,२०.९-१०)

## चिदानन्दः

१. दिव्यानन्दः।

२. दिव्यचेतनः, आनन्दरूपी च शिवः ।

**चिदानन्दमयसाक्षाच्छिव एव निरञ्जनः।**

(सि.शि., १२.३४)

**चिदानन्दरसं साक्षाच्छिवरूपमिति स्मृतम्।**

(का.आ., क्रि.पा.,८.१५)

## चिद्रूपम्

दिव्यरूपम्। परमात्मनः स्वस्वरूपम्। लिङ्गं दिव्यचेतनयुतं तत्त्वम्।

**चिद्रूपं परमं लिङ्गं शाङ्करं सर्वकारणम्।**

(सि.शि.,६.३२)

**चिद्रूपलिङ्गस्य चरात्मनस्ते संसर्गतो मे भवरोगनाशः।।**

(भ.भा.,३.१२,पृ.९७)

## चिद्रूपः

ज्ञानमूर्तिः। परमेश्वरः।

**चिद्रूप जगदाधार स्थूल सूक्ष्म परात्पर।**

(का.आ., क्रि.पा., ८.२८)

**त्वमर्थोऽङ्गस्वरूपो यः सोऽहं शब्दार्थ एव हि।**

**त्वमहं पदलक्ष्यार्थश्चिद्रूपः परमेश्वरः।।**

(लिं.धा.,चं.,पृ.१७४-१७५)

## चिन्मयम्

परतत्त्वम्। शुद्धज्ञानम्।

................ **चिन्मयं शिवम् ।**

(सि.शि.,१९.५८)

(पश्यत-चिन्मयः)

## चिन्मयः

ज्ञानस्वरूपी। शुद्धज्ञानी। परमात्मा। परशिवः।

**घटाकाश इव च्छिन्नं भावयेत् चिन्मयं शिवम्।।**

(सि.शि., १९.५८)

## चिन्मयदीक्षा

दीक्षाभेदः। ज्ञानवतीदीक्षा। सबीजदीक्षा, निर्बीजदीक्षा, चिन्मयदीक्षा, चेत्येतास्वेकतमा। ज्ञानकाण्डोक्तदीक्षा चिन्मयदीक्षा।

**सा दीक्षा त्रिविधा प्रोक्ता सबीजाबीजचिन्मया।**

**यथाक्रमं कर्मभक्तिज्ञानकाण्डेषु ताः स्फुटाः।।**

(शि.त.र.,भा-३, ९.७.९)

(पश्यत-दीक्षा)

## चिरनिर्वाणदा दीक्षा

दीक्षाभेदः। निर्बीजदीक्षायाः सद्योनिर्वाणदादीक्षा, चिरनिर्वाणदा-दीक्षा इति द्विविधप्रभेदयोरन्यतरा। प्रारब्धकर्मणां योगानन्तरं बालादीनां मुक्तिदायिनी दीक्षा।

**प्रारब्धकर्मणां भोगे यया मुक्तिमनन्तरम्।।**

**यान्ति बालादयः सेयं चिरं निर्वाणदा भवेत्।**

(शि.त.र.,भा- ३,९.७.१२-१३)

(पश्यत-दीक्षा)

## चिल्लिङ्गम्

ज्ञानरूपं लिङ्गम्। ज्योतिर्लिङ्गम्। प्राणलिङ्गमिति यावत्। तल्लिङ्गं भाववस्तुभिः पूज्यते।

**बद्धेन्द्रियनवद्वारे बोधदीपे हृदालये।**

**पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम्।**

**भावयित्वा सदाकालं पूजयेद् भाववस्तुभिः।।**

(सि.शि.,१२.१५)

(भाववस्तुभिः प्रणलिङ्गपूजाप्रकारः सिद्धान्तशिखामणौ १२.१६-२० श्लोकेषु वर्णितः)

## चेतनाचेतनम्

चेतनम्, अचेतनम् इत्यनयोः समावेशः (समाहारः) चेतनाचेतनम्। तच्च जगत्।

**तत्र लीनमभूत् पूर्वं चेतनाचेतनं जगत्।**

(सि.शि., २.७)

(पश्यत-प्राणलिङ्गार्चनस्थलम्)

# ज

**जङ्गमः**

चलनशीलः। चैतन्ययुक्तः। परब्रह्मस्वरूपी। ज्ञानमूर्तिः। मान्त्रिकं सहजश्चेति जङ्गमद्वये मन्त्रसामर्थ्यात् चैतन्ययुक्तम्, वीरशैवैः ध्रियमाणं इष्टलिङ्गं मान्त्रिकं जङ्गमम्। माहेश्वर इत्यादि अभिधानयुक्तं जङ्गमं सहजमिति उच्यते।

**जङ्गमं द्विविधं प्रोक्तं मान्त्रिकं सहजं त्विति।**
**मान्त्रिकं मन्त्रसामर्थ्यादावाहितमुदीरितम्।।**
**ध्रियमाणं महाशैवैश्चरलिङ्गादिकं मुने।**
**सहजं जङ्गमं माहेश्वर इत्यभिधीयते।।**

(चं.आ.,क्रि.पा.,४.६-७)

शैवागमेषु जङ्गमस्य दशभक्तिचिह्नानि दशबाह्यचिह्नानि। त्रीणि आन्तरचिह्नानि च उक्तानि।

(चं.आ., क्रि.पा.,४.९.१९)

(पश्यत - चरलक्ष्माणि, भक्तिचिह्नानि)

ये विश्वस्रष्टारं शिवं अतिशयेन स्वस्वरूपतया जानन्ति ते जङ्गमा इति कीर्तिताः।

**जानन्त्यतिशयाद् ये तु शिवं विश्वप्रकाशकम्।**
**स्वस्वरूपतया ते तु जङ्गमा इति कीर्तिताः।।**

(सि.शि.,११.३६)

स्वयं चरं परश्चेति जङ्गमलिङ्गत्रयं भक्तस्थलान्तर्गतलिङ्गस्थलेषु उक्तम्।
(पश्यत–चरम्, स्वयस्थलम्, चरस्थलम्, परस्थलम्)

सदा सञ्चारशीलः विरक्तः। तस्य चरलिङ्गमित्यभिधानम्।

**सर्वलोकोपकाराय यो देवः परमेश्वरः।**
**चरत्यतिथिरूपेण नमस्ते जङ्गमात्मने।।**

(कै.सा.,पृ.५१–वीरागमादुद्धृतम्)

जननमरणादिसंसाररहितः। (पुनर्जन्म–गम्यस्थान–मरणरहितः)

**जकाराज्जननं दूरं गकाराद्गतिनाशनम्।**
**मकारान्मरणं नष्टं जङ्गमस्त्र्यक्षरात्मकः।।**

(वी.स.सं.,१५.६)

निराकारं निरञ्जनं तत्त्वम्।

**निराकारं निरालम्बं निराकुलं निरञ्जनम्।**
**निष्पदं निष्प्रकाशं च ज्ञेयं जङ्गमलक्षणम्।।**

(अ.वी.सा.सं.३.६)

स्वयंप्रकाशः सच्चिदानन्दात्मकः।

**स्वयं प्रकाशरूपश्च सच्चित् जङ्गम इष्यते।**

(शि.त.र.,भा–१, १.३.१७)

**लिङ्गाङ्गसङ्गमज्ञानी जङ्गमः परिकीर्तितः।।**

(वी.ध.शि.,पृ.३५)

जङ्गमः सूर्यचन्द्रसदृशः।

**जकारः कथ्यते चन्द्रः मकारः सूर्य उच्यते।**
**एकत्र गमयेदेतौ इति जङ्गम इष्यते।।**

(शै.र., भा–२,१९.१,पृ.२२८)

शिवस्यैकमूर्तेः गुरुलिङ्गाभ्यां सह तृतीयो भागः ।

**एकमूर्तेस्त्रयो भागाः गुरुर्लिङ्गं च जङ्गमः।**

(चं.आ.,क्रि.पा.,५.१५ ; वी.प्र.,पृ.११९.,श्लोक.१७,१९)

## जङ्गमपादोदकम्

पादोदकप्रभेदः। गुरुपादोदकम्, लिङ्गपादोदकम्, जङ्गमपादोदकमिति त्रिविधपादोदकान्यतमम्। अस्य पादोदकस्य ज्ञानपादोदकमिति अपरं नाम।

**पादतीर्थं त्रिधा शम्भोर्गुरुजङ्गमयोरपि।**

**दीक्षा शिक्षा ज्ञानमिति त्रिसंज्ञं तद्भवत्यहो।।**

(चं.आ.,क्रि .पा.,५.५)

(पश्यत–चरपदोदकम्, ज्ञानपादोकम्)

## जङ्गममाहात्म्यस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। अङ्गस्थलान्तर्गत प्रसादिस्थलस्य–सप्तविधाङ्गस्थलेषु अन्यतमम्। 'आचार्यः पूर्वरूपमन्तेवास्युत्तररूपं विद्यासन्धिः' इति श्रुतेः (तै.उ.,२.३), गुरुशिष्यमध्यगतस्याः शिवलिङ्गमहत्त्वसम्पदः सर्वं प्रपञ्चं चिद्रूपमिति विज्ञानात् जङ्गमाधिक्यमुच्यते।

**प्रसादिस्थलमादौ तु गुरुमाहात्म्यकं ततः ।**

**ततो लिङ्गप्रशंसा च ततो जङ्गमगौरवम् ।।**

**गुरुशिष्यसमारूढलिङ्गमाहात्म्यसम्पदः।**

**सर्वं चिद्रूपविज्ञानात् जङ्गमाधिक्यमुच्यते।।**

(सि.शि.,११.४,३५)

## जङ्गमलिङ्गम्

१. जङ्गमरूपं लिङ्गम्। चरलिङ्गम्। जङ्गमः। शिवयोगीति प्रसिध्दम्।

**अजङ्गमं तु यल्लिङ्ग मृच्छिलादि विनिर्मितम् ।**

**तद्वरं जङ्गमं लिङ्गं शिवयोगीति विश्रुतम् ।।**

(सि.शि., ९.६१)

(पश्यत, चरम्, चरलिङ्गम्)

२. षट्स्थलसम्बद्धेषु आचारलिङ्ग-शिवलिङ्ग-जङ्गमलिङ्ग- प्रसादलिङ्ग-महालिङ्गनामकषड्लिङ्गेष्वेकम्। तत्र च षट्स्थलान्यतमभूत प्राणलिङ्गि स्थलसम्बद्धमिदम्।

**आदावाचारलिङ्गं स्यात्ततश्च गुरुलिङ्गकम्।**
**शिवलिङ्गं ततो ज्ञेयं चरलिङ्गमतः परम्।।**

(सू.आ.,क्रि.पा.,८.४)

**प्राणलिङ्गिस्थलं चास्य तया भक्त्या समागतम्।।**
**अङ्गं च चरलिङ्गेन संयुक्तं प्राणलिङ्गि यत्।**

(अ.सू.,५.७७-७८)

## जगत्

**ब्रह्माण्डम्। प्रपञ्चः। लोकः। विश्वम्।**
**जगच्चराचरं यत्तत् तत्त्वपूर्णं चिदात्मकम् ।**
**लयं गच्छति यत्रैव जगदेतत् चराचरम् ।।**

(लिं.धा.चं.,पृ.१७६, श्लो.१; सि.शि.,६.३७)

## जगदुत्पत्तिः

शक्तिविशिष्टेन शिवेन जगतः सृष्टिः। अस्यां सृष्टौ सच्चिदानन्द-स्वरूपः शिव एव समवायकारणं निमित्तकारणञ्च। तस्य अविना भावसम्बन्धयुक्तसच्चिदानन्दलक्षणा शक्तिः समवायस्वरूपिणी इत्यपि उपचर्यते।

तादृशः शिवः जगदुत्पत्त्यर्थं षट्त्रिंशत् तत्त्वानि (शिवादारभ्य पृथिवीपर्यन्तम्) निर्माय तेषां द्वारा जगदुत्पत्तिं कृतवानिति स एव

जगदुत्पत्तिकारणम्। स्वकीयलीला प्रदर्शनाय मनुष्याणां उपकाराय च जगदुत्पत्तिं कृतवानिति शैवागमाः मन्यन्ते।

**सृष्ट्यर्थं सर्वतत्त्वानां जगदुत्पत्ति कारणम्।**
**योगिनामुपकाराय स्वेच्छयाऽचिन्तयच्छिवः।।**

(सू.आ.,क्रि.पा., १.१९)

**तदीया परमाशक्तिः सच्चिदानन्दलक्षणा।**
**समस्तलोकनिर्माणसमवायस्वरूपिणी।**

(सि.शि.,२.१२)

शक्तिविशिष्टः शिव एव जगतः लयकारणमपि भवति।

**तत्र लीनमभूत् पूर्वं चेतनाचेतनं जगत्।**
**स्वात्मलीनं जगत्कार्यं स्वप्रकाश्यं तदद्भुतम्।।**

(सि.शि.,२.७)

जगत्सृष्टिः द्विविधा। शिवसृष्टिः ब्रह्मसृष्टिश्चेति। शिवः स्वकीयान् प्रमथगणान् ससर्ज। प्रमथगणानां सृष्टिः शिवसृष्टिः, तदन्या ब्रह्मसृष्टिः।

**ससर्जात्मसमप्रख्यान् सर्वगान् सर्वशक्तिकान्।।**
**प्रबोधपरमानन्दपरिवाहितमानसान्।**
**प्रमथान् विश्वनिर्माणप्रलयापादनक्षमान्।।**

(सि.शि.,२.२५-२६)

## जनशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडशशुद्धिष्वेकतमा।

**सद्भक्तजनसाङ्गत्यं जनशुद्धिः समीरिता।**

(चं.आ.,क्रि.पा.,९.४९)

(पश्यत – षोडशशुद्धयः)

## जपः

जपयज्ञः। वीरशैवानां पञ्चयज्ञान्यतमः। पञ्चाक्षराद्यभ्यासः।

**जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा।**

**रुद्राध्यायादिकाभ्यासः न वेदाध्ययनादिकम्।।**

(सि.शि., ९.२३)

सूक्ष्मागमोक्तरीत्या जपयज्ञोऽष्टैश्वर्यप्रदायकः स्वर्गसाधनं पापहारी च।

**अष्टैश्वर्यप्रदा पूजा योगाद्यं स्वर्गसाधनम्।**

**पापहारी जपः प्रोक्तः...........।।**

(सू.आ.,क्रि.पा.,६.२९)

तपोयज्ञाज्जपयज्ञो विशिष्यते।

**जपध्यानरतो मर्त्यस्तद्वैशिष्ट्यवशादिह।।**

**ज्ञानं लब्ध्वाऽचिरादेव शिवसायुज्यमाप्नुयात्।**

(शै.र.,भा- २,१२.११-१२,पृ.१३५)

**जपभेदः**

१. जपः त्रिधा-वाचिकजपः, उपांशुजपः, मानसजप इति । ते उत्तरोत्तरं श्रेष्ठत्वं भजन्ते। मानसजपश्च श्रेष्ठः।

**जपस्तु त्रिविधः प्रोक्तः वाचिकोपांशुमानसः।**

(सि.शि.,८.२७)

**त्रयाणां जपयज्ञानां श्रेयः स्यादुत्तरोत्तरम्।**

(शि.त.र.भा-३.८.६.४२)

**उत्तमो मानसः प्रोक्तः उपांशुर्मध्यमस्तथा।**

**अधमो वाचिकः प्रोक्तः इत्येतच्छिवशासनम्।।**

(चं.आ.क्रि.पा.,८.५६;पार.आ.,११.८३-८९)

२. **पञ्चधा** – वाचिकः, उपांशुः, मानसः, सगर्भः, सध्यानः चेति। तत्र मानसाज्जपात् सगर्भः श्रेयः। सगर्भात् सध्यानजप उत्तमः।

**साहस्रं मानसं प्रोक्तं सगर्भस्तच्छताधिकः।**

**सगर्भादपि साहस्रं सध्यानो जप उच्यते।**

**एषु पञ्चविधेष्वेव कर्तव्यः शक्तितो जपः।।**

(चं.आ.क्रि.पा.,८.६०, ६४)

३. **षोढ़ा** – वाचिकः, उपांशुः, मानसः, सगर्भः, अगर्भः, सध्यानः चेति। किन्तु अगर्भजपः हीयते इत्यतः पञ्चैव परिगण्यते।

**अगर्भं वा सगर्भं वा सगर्भस्तु प्रशस्यते।**

**एषु पञ्चविधेष्वेव कर्तव्यः शक्तितो जपः।।**

(चं.आ.क्रि.पा.,८.६३–६४;पार.आ.,११.८९–९२)

## जपक्रमः

१. पञ्चाक्षरमन्त्रजप एव जपः। तत्र नमः शब्दं प्रथममुक्त्वा शिवायेति वदेदनन्तरम्। एषः क्रमः जपक्रमः।

**आदौ नमः प्रयोक्तव्यं शिवायेति ततः परम्।**

(चं.आ.,क्रि.पा., ८.५)

**नमःपदं वदेत्पूर्वं यान्तं शिवपदं ततः।**

(सू.आ., क्रि.पा., ३.१३)

**नमश्शब्दं वदेत्पूर्वं शिवायेति ततः परम्ः।**

(सि.शि.,८.७)

२. जपमालायोजनेन जपक्रमः । मध्यमायामङ्गुल्यां जपमणिं संस्थाप्य, अनामिकसाहाय्यं स्वीकृत्य अङ्गुष्ठाङ्गुल्या जपमणिम् आवर्तयेत्।

**मध्यमानामिकाङ्गुष्ठैरक्षमालामणिं स्पृशेत्।**
**मध्यमायां न्यस्तमालां ज्येष्ठेनावर्तयेत्क्रमात्।।**
**अङ्गुष्ठेन तु मोक्षाय तर्जनी शत्रुनाशिनी।**
**मध्यमा धनदा शान्तिं करोत्येषा ह्यनामिका।।**
**कनिष्ठा रक्षणीशस्ता जपकर्मणि शोभनाः।**
**अङ्गुष्ठेन जपेज्जप्यं मध्यैरङ्गुलिभिः सह।।**
**अङ्गुष्ठेन विना कर्म कृतं यदफलं भवेत्।।**

(शि.त.र.,भा-३, ८.६.४३-४६)

**अङ्गुष्ठं मोक्षदं विद्यात् तर्जनी शत्रुनाशिनी ।**
**मध्यमा धनदा शान्तिं करोत्येव ह्यनामिका ।।**
**कनिष्ठा कर्षणी प्रोक्ता जपकर्मणि गीस्पते ।**

(चं.आ.,क्रि.पा.,८.७०)

## जपफलम्

१. अङ्गुल्यादिर्जपविधानेन फलं भिद्यते।

अङ्गुल्यङ्गुलिरेखाशङ्खमणिस्फटिकमणिप्रवालमौक्तिकाद्यपेक्षया कुशग्रन्थिरुद्राक्षजपः श्रेष्ठः।

**पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते।**
**कुशग्रन्थ्या च रुद्राक्षैरनन्तफलमुच्यते।।**

(चं.आ.क्रि.पा., ८.६७;पार.आ.,११.९८.१००)

२. स्थानादिभेदादपि फलं भिद्यते। गृहगोष्ठपुण्यारण्यारामपर्वत-नदीदेवालयेषु विधेयजपेषूत्तरोत्तरः श्रेयान्। शिवसन्निधौ वामहस्तगतेष्ट-लिङ्गदर्शनपुरस्सरं क्रियामाणः जप अनुपमफलदायकः।

**गृहे जपं समं विद्याद् गोष्ठे शतगुणं भवेत् ।**
**पुण्यारण्ये तथाऽऽरामे सहस्रगुणमुच्यते ।।**

**आयुतं पर्वते रम्ये नद्यां लक्षमुदाहृतम् ।**

**कोटिं देवालये विद्यादनन्तं शिवसन्निधौ ।।**

**यदिष्टलिङ्गं सम्पश्यन् वामहस्तस्थितं परम्।**

**जपते तत्फलं वक्तुं न मया शक्यते गुरो।।**

(चं.आ.क्रि.पा., ८.७२-७४)

तत्र पूर्वाभिमुखजपस्य वश्यं फलम्, दक्षिणाभिमुखस्याभिचारिकम्, पश्चिमाभिमुखस्य धनम्, उत्तराभिमुखस्य शान्तिः फलम्।

**तत्पूर्वाभिमुखं वश्यं दक्षिणं चाभिचारिकम् ।**

**पश्चिमं धनदं विद्यादुत्तरं शान्तिदं भवेत् ।।**

(चं.आ., क्रि.पा., ८.७६)

देवताप्रीतिः, पिशाचादिपीडानिवारणम्, पापक्षयः, रोगनिवारणम्, मृत्युजय इत्येतानि जपस्य विधफलानि।

**जपेन देवता नित्यं स्तूयमाना प्रसीदति ।**

**प्रसन्नाभिमुखान् भोगान् दद्यान्मुक्तिं च शाश्वतीम् ।।**

**यक्षरक्षः पिशाचाश्च ग्रहाः सर्वेऽतिभीषणाः ।**

**जापिनं नोपसर्पन्ति भयभीताः समन्ततः ।।**

**जपेन पापं क्षपयेदशेषं यत्त कृतं जन्मपरम्परासु ।**

**जपेन रोगान् जयते च मृत्युं जपेन सिद्धिं लभते च मोक्षम् ।।**

(शि.त.र.,भा-३.८.६.४६-४८)

## जपयज्ञः

पञ्चविधयज्ञेष्वेकः। पञ्चाक्षराभ्यासो वा प्रणवाभ्यासोवा रुद्राध्याया-दिकाभ्यासो वा जपयज्ञः ।

**कर्मयज्ञस्तपो यज्ञो जपयज्ञस्तथापरः।**

**ध्यानयज्ञो ज्ञानयज्ञः पञ्चयज्ञा इमे स्मृताः।।**

(सू.आ., क्रि.पा.,६.२६)

**जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा ।**

**रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम् ।।**

(सि.शि.,९.२३)

(पश्यत–जपः, पञ्चयज्ञाः)

## जपविधिः

शुचिर्भूत्वा प्राङ्मुखो उदङ्मुखो वा सन् युक्तासने उपविश्य शिवं गुरुञ्च ध्यात्वा पृथिव्यादिपञ्चतत्त्वानि विशोध्य प्राणायामादिभिः प्राणान् नियम्य एकाग्रमना भूत्वा बीजमन्त्रादिकं स्मृत्वा पञ्चाक्षरं जपेत्।

**स्नानं कृत्वा शुचौ देशे बध्द्वा रुचिरमासनम्।**

**शङ्करं हृदि सञ्चिन्त्य स्वगुरुं तद्गुरूंस्तथा ।।**

**प्राङ्मुखोदङ्मुखो वापि मौनी चैकाग्रमानसः ।**

**मन्त्रन्यासादिकं कृत्वा सकलीकृतविग्रहः।**

**देवं देवीयुतं ध्यायेत् प्राणापानौ नियम्य च ।।**

**बीजं शक्तिं तथा वाच्यं स्मृत्वा पञ्चाक्षरं जपेत्।।**

(चं.आ.,क्रि.पा.,८.५२–५५;पार.आ.,११.७९–८३;सू.आ.,क्रि.पा.,३.४०)

## जपसिद्धिहेतवः

मनसः एकाग्रता, शुचित्वम्, मौनम्, मन्त्रार्थचिन्तनम्, अव्यग्रत्वम्, अनिर्वेदः–इत्येते जपसिद्धिहेतवः।

**मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।।**

**अव्यग्रत्वमनिर्वेदो जपसिद्धेस्तु हेतवः।।**

(शि.त.र.,भा-३, ८.६.४४-४५)

## जलाङ्गम्

आत्माङ्गम्, व्योमाङ्गम्, अनिलाङ्गम्, अनलाङ्गम्, जलाङ्गम्, भूम्यङ्गं चेति षडङ्गानि । जलाङ्गं नाम माहेश्वरस्थलम्, यस्मिन् बुद्धिहस्तेन गुरुलिङ्गार्चनं क्रियते ।

**जलाङ्गं बुद्धिहस्तं च गुरुलिङ्गार्चने रतम् ।।**

**माहेश्वरस्थलं साक्षादिति प्राहुर्मनीषिणः ।**

(अ.सू.,६.३९-४०)

## जाग्रत्

अवस्थाभेदः। जाग्रत्स्वप्नसुषुप्तिरिति तिसृषु अवस्थासु एकतमा। षट्त्रिंशत्तत्त्वसङ्घातोपस्थितिकालः। त्यागाङ्गोपलक्ष्यककालः।

**षट्त्रिंशत् तत्त्वसङ्घातं जाग्रत्काले तु भावयेत्।**

(वी.ध,शि.,पृ.२५३)

**जाग्रदित्युदितावस्था त्यागाङ्गमिति कथ्यते।**

(श.त्र., पृ.६९, श्लो.१३९)

## जालन्धरबन्धः

केवलकुम्भकोपायभूत-मूलबन्ध-उड्डियानबन्ध-जालन्धरबन्धनामक-त्रिविधबन्धेष्वन्यतमः। कण्ठमाकुञ्च्य हृदये चुबुकस्थापनम्।

**कण्ठमाकुञ्च्य हृदये स्थापयेच्चुबुकं दृढम्।**

**एष जालन्धरो बन्धः ऊर्ध्वामृतनिबन्धकः।।**

(शि.यो.प्र.,२.५२)

## जीवः

शिवांशः। अनादि अविद्यासम्पर्केण शिवात् विभक्तः।

**अनाद्यविद्यासम्बन्धात् तदंशो जीव नामकः।**

(तदंशः=शिवांशः)

(सि.शि.,५.३४)

**ममैवांशो जीवलोके जीवभूतः सनातनः।**

(भ.गी.,१५.७)

**जीवो मदंशो ज्ञानात्मा।**

(पार.आ.,२१.८०)

**अंशो नानाव्यपदेशात्।**

(ब्र.सू.,२.३.४०)

**वालाग्रशतभागस्य शतधा कल्पितस्य च।**
**भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते।।**

(श्वे.उ.,५.९)

**यथा सुदीप्तात् पावकात् विस्फुल्लिङ्गाः सहस्रशः.........।**

(मुं.उ.,२.१.१)

**पाशबद्धो भवेज्जीवः.....।**

(कै.सा.,२.४)

जाग्रदवस्थायां जीवः अन्नपानादिविचित्रभोगभाक्, स्वप्नावस्थायां स्वकल्पितलोके सुखदुःखभोक्ता, सुषुप्त्यवस्थायां विलीनतमोविकारः सुखरूपं गच्छति। एवं तिसृष्वस्थासु स्थितः।

**स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति।।**
**स्वप्नेस जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके।**
**सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति।।**

(कै .उ.,१.१२-१३,पृ.६३)

परशिवस्य अंशभूतोऽपि जीवः मायादिमलवशात् किञ्चित् कर्ता, किञ्चिज्ज्ञः, अविद्यामोहितः शिवोऽहंभावरहितः, कर्मानुसारतः, देवतिर्यङ् मनुष्यादिनानाजन्मधारी संसारी एव जीवः।

**किञ्चित्कर्ता च किञ्चिज्ज्ञो बद्धोऽनादिशरीरवान्।**

**अविद्यामोहिता जीवा ब्रह्मैक्यज्ञान वर्जिताः।।**

**परिभ्रमन्ति संसारे निजकर्मानुसारतः।।**

**देवतिर्यङ्मनुष्यादिनानायोनिविभेदतः ।।**

(सि.शि.,५.४७-४८)

अस्य जीवस्यैव भोक्तृत्वं विधीयते।

**भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम्।**

(सि.शि.,५.४१)

पति-पशु-पाशरूपवस्तुत्रये भोक्ता पशुरेव जीवः ।

**..........भोक्तारः पशवः स्मृताः।**

(सि.शि.,५.४२)

जीव उपासकः शिवश्च उपास्यः।

**जीवो ह्युपासकः साक्षात् उपास्यं ब्रह्मकेवलम्।**

(क्रि.सा., भा-१,१.४४७)

**तत्त्वमसीत्यत्र अविद्योपहितं ब्रह्मैव जीव इति श्रुति-प्रतिपन्नाऽविद्योपाधिकदेहेन्द्रियाद्यवच्छिन्नः सांसारिको जीवस्त्वं-पदवाच्यः।**

(लिं.धा.चं.,पृ.१६८)

**जीवत्रयम्**

विश्वः, तैजसः, प्राज्ञः चेति जीवः त्रिविधः। अनुभवसूत्रोक्तदिशा तत्तल्लिङ्गार्पितप्रसादं भुक्तात्मा जीवः विश्व-तैजस-प्राज्ञरूपधारणपूर्वकं भक्त्या स्वीकरोति।

**तत्तदर्पणतो लब्धं प्रसादं तत्तदादरात्।**

**भुङ्क्ते यत्नात् स्वयं विश्वतैजसप्राज्ञरूपतः।।**

(अ.सू.,७.२३)

तत्र विश्वः सर्वव्यापकः बाह्यविषयज्ञानी च, तैजसः अन्तर्विषयज्ञानी, ज्ञानघनश्च प्राज्ञः। एवं एक एव अवस्थात्रये त्रिविधरूपेण तिष्ठति।

**बहिः प्राज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः।**

**घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः।।**

(मां.उ.,६.१)

## जीवतत्त्वानि

जीवसम्बद्धानि तत्त्वानि। तानि च पुथिव्यादीनि कलापर्यन्तं त्रिंशत् । तद्यथा – पृथिवी, अप्, तेजः, वायुः, आकाशः, गन्धः, रसः, रूपं, स्पर्शः, शब्दः, वाक्, पाणिः, पादः, पायुः, उपस्थम् ; श्रोत्रम्, त्वग्, नेत्रम्, जिह्वा, घ्राणम्, मनः (चित्तं), अहङ्कारः, बुद्धिः ; प्रकृतिः, पुरुषः, रागः, विद्या, नियतिः, कालः, कला चेति।

**पृथिव्यादीनि तत्त्वानि कलातत्त्वावधीनि च ।**

**त्रिंशत्तत्त्वानि विद्यन्ते प्रतिजीवं पृथक् पृथक्।**

(शि.त.र.,भा-३,९.३.७)

(पश्यत – तत्त्वानि)

## जीवन्मुक्तः

गुरोः सकाशात् संसाररोगनिवारकं महाज्ञानं लब्ध्वा यः साधकः सुखी शान्तश्च सन् मोदते स एव जीवन्मुक्तः।

देहयुक्तोऽपि निर्देहः, अर्थात् देहविकारादिरहितः, चिद्रूपं स्वस्वरूप लक्षणं ज्योतिर्विभावयन् साधकः जीवन्मुक्तः भवति । छिन्नाहङ्कारग्रन्थिः लीलाकल्पितकलेवरश्च सन् यो योगी देहवानिव सञ्चरति सो जीवन्मुक्तः ।

अखण्डसच्चिदानन्दपरब्रह्मस्वरूपिणः जितेन्दियस्य जीवन्मुक्तस्य शिवयोगिनः माया दासभावं वहति ।

**गुरोर्लब्ध्वा महाज्ञानं संसारमयभेषजम् ।**
**मोदते यः सुखी शान्तः स जीवन्मुक्त एव हि ।।**
**स्वस्वरूपं चिदाकारं ज्योतिः साक्षाद्विचिन्तयन् ।**
**देहवानपि निर्देहो जीवन्मुक्तो हि साधकः ।।**
**गलिताहङ्कृतिग्रन्थिः क्रीडाकल्पितविग्रहः ।**
**जीवन्मुक्तश्चरेद् योगी देहिवन्निरुपाधिकः ।।**
**अखण्डसच्चिदानन्दपरब्रह्मस्वरूपिणः ।**
**जीवन्मुक्तस्य धीरस्य माया कैङ्कर्यवादिनी ।।**

(सि.शि.,१७.६७, १६.५४, १७.१३, २०.१६)

**त्यक्तसंसारकवलः कलावानपि निष्कलः ।**
**यः सचित्तोऽप्यचित्तस्तु जीवन्मुक्त उच्यते ।।**

(कै.सा.,२.१,पृ.९०;सूत स.तः.उद्धृतः)

## जीवन्मुक्तिः

जीवन्नेवानुभूयमानब्रह्मानन्दस्थितिः। त्रिविधशरीरविशिष्टावस्थायामेव मुक्तेरनुभवः। जीवतो मुक्तस्य स्थितिः। अहंममेत्यादि संसारबन्धरहितावस्था।

देहो भवतु वा न वा, अर्थात् देहादिनिरपेक्षत्वेन स्वात्मज्ञाननिरतस्य शिवयोगिनः सद्य एव आनन्दानुभवदायिनी या स्थितिर्वर्तते सा जीवन्मुक्तिः।

**देहस्तिष्ठतु वा यातु योगिनः स्वात्मबोधिनः ।**
**जीवन्मुक्तिर्भवेत् सद्यश्चिदानन्दप्रकाशिनी ।।**

(सि.शि.,१६.५५)

(पश्यत–जीवन्मुक्तः)

## जीवात्मा

अङ्गम् एव जीवात्मा ।

**अङ्गरूपो हि जीवात्मा भवभाव नियन्त्रितः।**

(लि.धा.चं., पृ.१७४)

(पश्यत–जीवः)

## ज्ञाता

ज्ञाता जीवः। ज्ञाता त्रिपुट्यामेकः। त्रिपुटी तु ज्ञाता–ज्ञेयं–ज्ञानं चेति ।

**सर्वात्मनि परे तत्त्वे भेदशङ्काविवर्जिते ।**

**ज्ञात्रादि व्यवहारोक्तं कुतो ज्ञानं विभाव्यते।।**

(सि.शि.,२०.६२)

## ज्ञानम्

ज्ञानम्–ज्ञाता–ज्ञेयम् इति त्रिपुट्यां एकतमम्।

**ज्ञानं ब्रह्मणि तन्नास्ति ज्ञानशून्यस्थलं विदुः ।।**

(सि.शि.,२०.६०)

**ज्ञानं हि शुद्धभावत्वात् स्फटिकाभासमुच्यते।**

(शि.त.र.,भा.–१,१.६.३३)

## ज्ञानकर्मणी

ज्ञानं कर्म च ज्ञानकर्मणी। परस्परापेक्षिते ज्ञानकर्मणी अनुष्ठेये। ज्ञानकर्मणोः परस्परसापेक्षत्वं मुक्तेः साधनं ज्ञानकर्म–समुच्चयात्मकम्।

**ज्ञानक्रिययोरन्योन्यसापेक्षे सति तद्द्वयं तस्मात् परापरमुक्ति–रूपफलोत्पत्तौ विरक्तः आचरेत्।**

(सि.शि.तत्त्व. प्र.१६.११)

**अपश्यन्नन्धको दग्धः पश्यन् दहति पङ्गुलः।**

**अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी।।**

(चं.आ.,क्रि.पा.,१२.६)

**अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी।**
**फलोत्पत्तौ विरक्तस्तु तस्मात् तद्द्वयमाचरेत्।।**
**ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते।**
**फलाभिसन्धिरहितं तस्मात् कर्म न सन्त्यजेत्।।**

(सि.शि.,१६.११-१२)

## ज्ञानकाण्डः

कर्मकाण्डः, ज्ञानकाण्डः, भक्तिकाण्डश्चेति काण्डत्रयेऽन्यतमः। नाहं धर्माऽधर्मकर्मणः कर्ता, कर्तृत्वसाक्ष्यपि नाहम्, इत्येवंरूपाभिमानयुक्तत्वं ज्ञानकाण्ड इत्युच्यते ।

**नाहं कर्ताऽस्य कर्तृत्वं नैव साक्षी स्वभावतः ।**
**इत्यनेनाभिमानेन ज्ञानकाण्डोऽयमुच्यते ।।**

(अ.सू.,८.२१)

(पश्यत – कर्मकाण्डः, भक्तिकाण्डः)

## ज्ञानगुरुः

दीक्षागुरुः, शिक्षागुरुः, ज्ञानगुरुश्चेति त्रिविधगुरुष्वेकः। मोक्षकारक-शिवज्ञानानुग्राहकः ज्ञानगुरुः। स एव संशयच्छेदकारकोपदेशगुरुः।

**उपदेष्टोपदेशानां संशयच्छेदकारकः।**
**सम्यग् ज्ञानप्रदः साक्षात् एष ज्ञानगुरुः स्मृतः।।**
**निरस्तविश्वसम्भेदं निर्विकारं चिदम्बरम्।**
**साक्षात्करोति यो युक्त्या स ज्ञानगुरुरुच्यते।।**

(सि.शि.,१५.२१-२२)

## ज्ञानगुरुस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। लिङ्गस्थलगतभक्तस्थलस्य (आचारलिङ्गस्थलस्य) नवविधलिङ्गस्थलेष्वेकतमम्। ज्ञानगुरोः स्थलम्।

**आदौ नव स्थलानीह भक्तस्थलसमाश्रयात् ।**

**प्रज्ञागुरुस्थलं चाथ ................ ।।**

**उपदेष्टोपदेशानां संशयच्छेदकारकः ।**

**सम्यग्ज्ञानप्रदः साक्षादेष ज्ञानगुरुः स्मृतः ।।**

(सि.शि., १५,४-५,२१)

(पश्यत-ज्ञानगुरुः)

## ज्ञाननिष्पत्तिस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। लिङ्गस्थलान्तर्गतशरणस्थलस्य द्वादशावान्तरस्थलेष्वेकम्। ज्ञाननिष्पन्नस्य स्थलम्। ज्ञानव्यवहारे ज्ञेयस्य अभावात् स्वप्नवत् ज्ञाननिष्पत्तिः यस्मिन् भवति स ज्ञाननिष्पन्नः। तस्य स्थलम्।

**शरणस्थलमाश्रित्य स्थलद्वादशकं मया ।**

**दीक्षापादोदकं पूर्वं...........ज्ञाननिष्पत्तिकं ततः ।।**

**ज्ञानस्य व्यवहारेऽपि ज्ञेयाभावात् स्वभावतः।**

**स्वप्नवज्ज्ञाननिष्पत्त्या ज्ञाननिष्पन्न इत्यसौ ।।**

(सि.शि.,१९.२-४, ४४)

**भावनिष्पन्नलिङ्गेन शरणस्य त्रिपुटीज्ञानानन्तरं तच्छरणज्ञानान्तरे स्वयमेव स्थित्वा तद्ज्ञाननिष्पत्तिस्वरूपोत्पादकं स्थलम्।**

(कै.सा.,२-३,पृ.१३३)

## ज्ञानपादः

आगमपादः। पादेऽत्र पशुपतिपाशाः प्रतिपाद्यन्ते।

**ज्ञानपादे पशुपतिपाशास्तु त्रय ईरिताः ।।**

(शि.त.र.,भा-१,१.२.४१)

## ज्ञानपादोदकम्

१. दीक्षापादोदकम्, ज्ञिक्षापादोदकम्, ज्ञानपादोदकं चेति त्रिविध-पादोकेष्वेकम्। तत्रजङ्गमपादोदकमेव ज्ञानपादोदकम्।

**पादतीर्थं त्रिधा शंभोर्गुरुजङ्गमयोरपि।**

**दीक्षाशिक्षा ज्ञानमिति त्रिसंज्ञं तद्भवत्यहो।।**

(चं.आ.,क्रि.पा.,५.५)

**तदेव गुरुपादोदमिति मत्वा पिबेत्तदा।**

(चं,आ.,क्रि.पा. ५.९)

२. ''विज्ञानमानन्दं ब्रह्म'' (बृ.उ., ३.९.३४) इति श्रुत्यनुसारेण पादोदकशब्दवाच्यम् आनन्दज्ञानमेव ज्ञानगुरुः। तदैक्यसम्पदा तदानन्द-ज्ञानयोरैक्यसम्पत्तिः यदा शिवयोगिनः सम्पद्यते तदा तादृशं आनन्दज्ञानमेव ज्ञानपादोकमित्युच्यते।

**तदैक्यसम्पदानन्दज्ञानं ज्ञानगुरुर्मतः।**

**तत्सामरस्यं शिष्यस्य ज्ञानपादोदकं विदुः।।**

(सि.शि.,१९.१९)

## ज्ञानपादोदकस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। शरणस्थलगतद्वादशलिङ्ग-स्थलेष्वन्यतमम्। ज्ञानपादोदकसम्पन्नस्य शिवयोगिनः स्थलम्।

**शरणस्थलमाश्रित्य स्थलद्वादशकं मया ।**

**दीक्षापादोदकं पूर्वं शिक्षापादोदकं ततः।**

**ज्ञानपादोदकं चाथ-----------।।**

(सि.शि.,१९.२-३)

(पश्यत-ज्ञानपादोदकम्)

## ज्ञानप्रकाशनस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। शरणस्थलान्तर्गतद्वादशलि-ङ्गस्थलेष्वन्यतमम्। अङ्गलिङ्गयोः मुख्यार्थे अनुपपन्ने सति लक्षणाव्यापाराश्रयेण यत् ज्ञानयोजनं तत् ज्ञानप्रकाशनमित्युक्तम्। तत्सम्बध्दं स्थलम्।

**भावप्रकाशनं पश्चात् ततो ज्ञानप्रकाशनम्।**

**मुख्यार्थेऽसम्भवे जाते लक्षणायोगसंश्रयात्।**

**तज्ज्ञानयोजनं यत्तदुक्तं ज्ञानप्रकाशनम्।।**

(सि.शि.,१९.५, ९०)

## ज्ञानयज्ञः

पञ्चयज्ञेष्वेकतमः। शिवागमानामर्थविज्ञानं ज्ञानमेव ज्ञानयज्ञः।

**कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तथापरः।**

**ध्यानयज्ञो ज्ञानयज्ञः पञ्चयज्ञा इमे स्मृताः।।**

(सू.आ., क्रि.पा., ६.२६)

**शिवागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम्।।**

(पार.आ.,१२.१९;सि.शि.,९.२५)

## ज्ञानयोगः

स्वात्मज्ञानेन शिवजीवैक्यज्ञानेन इति यावत् योगः ज्ञानयोगः । वीरशैवानां साधनमार्गे कर्मयोगभक्तियोगाभ्यां ज्ञानयोगस्यापि समुच्चयोऽङ्गीकृतः । ज्ञानेन विना कर्म संसृतिकारणं भवति । तदेव सम्यग्ज्ञानयोगेन संसारस्य विनिवर्तकं भवति। शिवोऽहमिति ज्ञान श्रेष्ठम् ।

**ज्ञानहीनं सदा कर्म पुंसां संसारकारणम् ।**

**तदेव ज्ञानयोगेन संसारविनिवर्तकम् ।।**

**शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम् ।।**

(सि.शि.,१६.२७-३१)

## ज्ञानवती दीक्षा = चिन्मयदीक्षा

दीक्षाभेदः। चिन्मयदीक्षा।

१. साधारदीक्षायाः सबीजदीक्षा, अबीजदीक्षा, चिन्मयदीक्षेति त्रिविधप्रभेदेष्वन्यतमः। ज्ञानकाण्डे उपयुत्का दीक्षा।

**सा दीक्षा त्रिविधा प्रोक्ता सबीजाबीजचिन्मया।**

**यथाक्रमं कर्मभक्तिज्ञानकाण्डेषु ताः स्फुटाः।।**

(शि.त.र., भा-३,९.७.९)

२. ज्ञानवतीदीक्षा, क्रियावतीदीक्षा इति द्विविधदीक्षयोरन्यतरः। इज्यादि कर्मणि विना मनोव्यापारमात्रतः दीयमाना अत्मतत्त्वप्रतिपादिका दीक्षा।

**एका भवेज्ज्ञानवती क्रियावत्यपरा स्मृता।**

**विनेज्यादिककर्माज्याणि मनोव्यापारमात्रतः।।**

**दीक्षा ज्ञानवती प्रोक्ता सम्यग्तत्त्वावबोधिका।**

(शि.त.र.,भा-३,९.७,१५-१६)

(पश्यत दीक्षाभेदः)

## ज्ञानलिङ्गम्

ब्रह्मतत्त्वम् । भावलिङ्गप्रकाशकज्ञानं यत् लयं गच्छति तत् ज्ञानलिङ्गमिति शिवतत्त्वज्ञैरुच्यते। ब्रह्म-विष्णु-रुद्रलक्षणत्रिमूर्तिभेदरहितं सत्त्वादिगुणत्रयोत्तीर्णं तुर्य-तुर्यातीतसम्पत्तिमद् ब्रह्म यत् बोध्यते तत् ज्ञानलिङ्गम्।

**तद्भावज्ञापकज्ञानं लयं यत्र समश्नुते।**

**तद् ज्ञानलिङ्गमाख्यातं शिवतत्त्वार्थकोविदैः।।**

**त्रिमूर्तिभेदनिर्मुक्तं त्रिगुणातीतवैभवम्।**

**ब्रह्म यद् बोध्यते तत्तु ज्ञानलिङ्गमुदाहृतम्।।**

(सि.शि.,१५.४५-४६)

स्थूलम् सूक्ष्मम्, परात्परं (तृप्तिलिङ्गं) चेति लिङ्गत्रये एकम्। ज्ञानलिङ्गमेव भावलिङ्गम्, तदेव परात्परलिङ्गम्, तृप्तिलिङ्गश्चेति व्यवह्रियते।

**निष्कलं भावलिङ्गं स्याद्भावग्राह्यं परात्परम्**

(चं.आ.,क्रि.पा.,३.२४)

**परात्परं तु यत् प्रोक्तं तृप्तिलिङ्गं तदुच्यते।**

(सि.शि.,६.५०)

## ज्ञानलिङ्गस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। लिङ्गस्थलगतभक्तस्थलस्य नवविधाचार-लिङ्गस्थलेष्वन्यतमम्। ज्ञानलिङ्गस्वरूपस्य शिवयोगिनः स्थलं ज्ञानलिङ्गस्थलम्।

**भावलिङ्गस्थलं चाथ ज्ञानलिङ्गस्थलं ततः।**
**तद्भावज्ञापकज्ञानं लयं यत्र समश्नुते ।**
**तज्ज्ञानलिङ्गमाख्यातं शिवतत्त्वार्थकोविदैः ।।**

(सि.शि.,१५.५-६,४५)

(पश्यत-ज्ञानलिङ्गम्)

## ज्ञानशक्तिः

शक्तिभेदः। इच्छाशक्तेस्सहस्रांशाज्जायमानेयं प्रतिष्ठारूपा कला शब्दात्मिका च।

**तच्छक्तेस्तु सहस्रांशात् ज्ञानशक्तिसमुद्भवः।**

(शि.त.र.,भा-१,१.४.५१)

**इच्छाशक्त्यंशभेदेन ज्ञानशक्तिरजायत ।**

(सू.आ., क्रि.पा., १.२१)

**प्रतिष्ठा ज्ञानरूपिणी।**

(अ.सू.,३.२५)

**शब्दो ज्ञानमिहोच्यते।**

(वा.शु.आ.,२,१२)

(पश्यत-शक्तिः)

## ज्ञानशून्यस्थलम् = ज्ञानशून्यैक्यम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। लिङ्गस्थलगत–ऐक्यस्थलस्य नवविधप्रभेदेषु अन्यतमम्। ज्ञानशून्यस्थलमेव ज्ञानशून्यैक्यम्।

भावनिर्भावोभयरहितलिङ्गम् ऐक्यस्य मूलज्ञानमालिङ्ग्य यद् ज्ञानमेव स्वयं भूत्वा तद् ज्ञानं निजस्वरूपे विलयं संसाध्य शून्यत्वं प्राप्तस्य स्थलम्।

**परापरसमापेक्षभावाभावविवेचनम्।**

**ज्ञानंब्रह्मणि तन्नास्ति ज्ञानशून्यस्थलं विदुः।।**

(सि.शि.,२०.६०)

**ज्ञानाचारसमायुक्ताः ज्ञाननिर्धूतकल्मषाः।**

**ज्ञानिनः शिवभावेन ज्ञानशून्यैक्यभागिनः।।**

(कै.सा.,पृ.१५२,योगजागमाद् उद्धृतम्)

## ज्ञानशैवः

शैवभेदः। पारमेश्वरागमोक्तरीत्या योगशैवम्, ध्यानशैवम्, ज्ञानशैवं चेति त्रिविधशैवेषु एकतमम्। यदखण्डं श्रेष्ठं ज्ञानं यत् निर्मलं अव्ययं अव्यक्तं च यत् मनसः अतीतं तदेकं केवलं ब्रह्म तस्य भावनाधिकारी ज्ञानशैवः। वीरशैवावधूतोऽपि ज्ञानशैव इत्येव कथ्यते। तादात्म्यस्य आत्मभावेन सः ज्ञानशैवव्रतीति कथ्यते।

**यदखण्डं परं ज्ञानं यदेकं स्वच्छमव्ययम्।**

**यदव्यक्तं मनोतीतं तदेकं ब्रह्म केवलम्।।**

**तद्भावनाधिकारी यो ज्ञानयोगान्वितः शिवे।**

**वीरशैवावधूतोऽपि स एव कथितः शिवे।।**

**बहिर्गतेऽपि तच्चित्ते स्वात्मा भावं विना क्वचित्।**

**तत्तादात्म्यभावेन ज्ञानशैवव्रती भवेत्।।**

(पार.आ.,१०.१६–१८)

## ज्ञानहस्तः

हस्तभेदः। अयं च शरणस्थलसम्बद्धः। शरणस्थले ज्ञानहस्तेन शब्दप्रसादं प्रसादलिङ्गाय समर्पयेदिति नियमः।

**व्योमाङ्गं ज्ञानहस्तं स्यात् प्रसादार्चनतत्परम् ।।**

**शरणस्थलमित्याहुः शिवयोगपरायणाः।**

(अ.सू.,६.३१,३४,३६,३७)

**शरणस्थले तु परया भक्त्या युक्ते श्रवोऽङ्गके ।**

**प्रसादलिङ्गे...............शब्दप्रसादकम् ।**

**आनन्दभक्त्या सुज्ञानहस्तेनैव समर्पयेत् ।।**

(का.आ., क्रि. पा.,७.५६)

(पश्यत - अर्पणम्)

## ज्ञानागमस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। माहेश्वरस्थलसम्बद्ध-नवविधस्थलेष्वेकम्। भावागमसम्पन्नस्य परशिवयोगिनः ज्ञानचिह्नान्येव सामान्यजनानां सद्गतिप्राप्त्यर्थं ज्ञानागमत्वेन विभाव्यते। निष्ठासम्पन्नमेव भूत्वा भावसद्भावसन्निहितलिङ्गम्। माहेश्वरस्य ज्ञानागमस्वरूप प्राप्तस्थितिः।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस।**

**ज्ञानागमस्थलं चाथ............।**

**परस्य ज्ञानचिह्नानि यानि सन्ति शरीरिणाम् ।**

**तानि ज्ञानागमत्वेन प्रवर्तन्ते विमुक्तये।।**

(सि.शि.,१६.२-३,२४)

## ज्ञानाचारः

ज्ञानम् आचारः यस्य सः ज्ञानाचारः। ज्ञानमवलम्ब्य प्रवृत्तः शिवनामधाम्नि सर्वनियोजकः। भावाचारसम्पन्नस्य शिवयोगिनः आचार

एव ज्ञानाचारः। परतत्त्वप्रकाशकं परिपूर्णमहाज्ञानं अर्थात् शिवाद्वैत-ज्ञानमवलम्ब्य यः आचारे प्रवर्तते सः ज्ञानाचार इत्युच्यते।

**अस्य ज्ञानसमाचारो योगिनः सर्वदेहिनाम्।**
**ज्ञानाचारो यदुक्तोऽयं ज्ञानाचारः स कथ्यते।।**
**परिपूर्णं महाज्ञानं परतत्त्वप्रकाशकम्।**
**अवलम्ब्य प्रवृत्तो यो ज्ञानाचारः स उच्यते।।**

(सि.शि.,१६.७६,७९)

## ज्ञानाचारस्थलम्

स्थलभेदः। एकोत्तरशतस्थलेष्वेकम्। माहेश्वरस्थलान्तर्गत नवविध-लिङ्गस्थलेष्वन्यतमम्। ज्ञानाचारसम्पन्नस्य स्थलम्, ज्ञानाचारस्थलम्।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस।**
**ज्ञानाचारस्थलं चेति..............।**

(सि.शि.,१६.२-४)

(पश्यत - ज्ञानाचारः)

## ज्ञानामृतम्

निरुपाधिक आनन्दः। आनन्दलक्षणा तृप्तिः या निरुपाधिका भवति। तदुत्थानानन्दमग्नत्वं ज्ञानामृतमिति कथ्यते।

**आनन्दलक्षणा तृप्तिः निरुपाधितया स्थिता।**
**तदुत्थानन्दसान्द्रत्वं ज्ञानामृतमुदीरितम्।।**

(कै,सा.,वि.सं.६२२)

ज्ञानामृतेन तृप्तः योगी धर्माचारं न त्यजेत्। लोकसंग्रहार्थं सः सदाचारत एव स्यात्।

**ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न सन्त्यजेत्।**
**आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः।।**

(सि.शि.,१६.६५)

## ज्ञानार्पणम्

क्रियार्पणम् (क्रियामतार्पणम्), ज्ञानार्पणं (ज्ञानमतार्पणम्) इति लिङ्गार्पणयोरेकम्। तत्र स्वयं प्राप्तानां वस्तूनां मध्ये यद्वस्तु येन इन्द्रियेण यस्मै लिङ्गाय समर्पणीयमिति ज्ञात्वा तत्तद्वस्तु (गन्धादिवस्तु) तत्तदिन्द्रियमुखेन तस्मै तस्मै लिङ्गाय यदर्पणं क्रियते तत् ज्ञानार्पणमित्युच्यते।

**द्वेधालिङ्गार्पणविधिः प्रोच्यते देशिकोत्तमैः।**
**क्रियामतार्पणं किञ्चित् किञ्चित् ज्ञानमतार्पणम्।।**
**षट्सु लिङ्गेषु सर्वत्र सार्वकालिकरूपतः।**
**स्वयमागतवस्तूनि ज्ञात्वा तत्तन्मुखेषु च।**
**अनिच्छविधिना कार्यमेतज्ज्ञानार्पणं विदुः।।**

(अ.सू.,७.२,४-५)

इदमेव ज्ञानार्पणं चन्द्रज्ञानागमे सूक्ष्मार्पणमिति कथ्यते।

**यदा येनेन्दियेणैव विषयो ह्युपभुज्यते।**
**तदिन्द्रियगतलिङ्गे ह्यर्पणं सूक्ष्ममीरितम्।।**

(चं.आ.,क्रि.पा.,५.३१)

एतदर्पणप्रपञ्चं कारणागमे पश्यत। (का.आ.,क्रि.पा.,७.६०-६५)
(पश्यत-अर्पणम्)

## ज्योतिर्लिङ्गम्

ज्योतिर्मयं लिङ्गम्। मूलाधारे हृदये भ्रूमध्ये एव देदीप्यमानं प्राणलिङ्गमेव ज्योतिर्लिङ्गमित्युच्यते। तल्लिङ्गानुसन्धानमेव आन्तरं लिङ्गधारणमित्युच्यते। ज्योतिर्लिङ्गमेव आन्तर्लिङ्गम्।

**आधारे हृदये वाऽपि भ्रूमध्ये वा निरन्तरम्।**
**ज्योतिर्लिङ्गानुसन्धानमान्तरं लिङ्गधारणम्।।**

(सि.शि.,६.३९)

**आधारे कनकप्रख्यं हृदये विद्रुमप्रभम्।**
**भ्रूमध्ये दीपसङ्काशं प्राणलिङ्गं प्रकीर्तितम्।।**
**ज्योतिर्लिङ्गमिदं विद्वन् ध्यानस्थानं महेशितुः।**
**ज्योतिर्लिङ्गं विभाव्यैव तत्र ध्येयः परः शिवः।।**

(चं.आ.,क्रि.पा.,३.३३-३४)

## ज्योतिर्लिङ्गानुसन्धानम्

बाह्याभ्यन्तरलिङ्गधारणे उक्ते । तेषां ज्योतिर्लिङ्गानुसन्धानमेवाभ्यन्तर-लिङ्गधारणम् । इदं ज्योतिर्लिङ्गानुसन्धानं आधारचक्रे, हृदये, भ्रूमध्ये च निरन्तरं क्रियते चेत् तदान्तरं लिङ्गधारणमुच्यते ।

**आधारे हृदये वाऽपि भ्रूमध्ये वा निरन्तरम् ।**
**ज्योतिर्लिङ्गानुसन्धानमान्तरं लिङ्गधारणम् ।।**

(सि.शि.,६.३९)

# त

## तत्

शिवतत्त्वम् । लिङ्गतत्त्वम् । परब्रह्म । सर्वं च शिवतत्त्वम्।

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके।**
**तदन्तरस्य सर्वस्य तदु उ सर्वस्यास्य बाह्यतः।।**

(ई.उ., ५)

**लिङ्गं तत्पदमाख्यातं अङ्गं त्वं पदमीरितम् ।**

**संयोगोऽसि पदं प्रोक्तं अनयोरङ्गलिङ्गयोः ।।**

(अ.सू., ५.२७)

## तत्त्वम्

१. जगत्सृष्टिकारणभूतं मूलवस्तु। तच्चानेकविधम्। तत्र षट्त्रिंशत्तत्वानि, शैवैर्वीरशैवैश्चाङ्गीकृतानि । शैवमतसम्मतानि षट्त्रिंशत्तत्त्वानि।

**षट्त्रिंशत्तत्त्वरूपाय तत्त्वातीताय शम्भवे।**

**परतत्त्वस्वरूपाय तत्त्ववेद्याय ते नमः।।**

(सू.आ.,क्रि.पा.,१०.४)

**यस्योर्मिबुद्बुदाभासः षट्त्रिंशत्तत्त्वसञ्चयः।**

(सि.शि.,१.३)

षट्त्रिंशत्तत्वानि एतानि–शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या–एतानि पञ्च शुद्धतत्त्वानि। माया, पुरुषः, कला, विद्या, रागः, कालः, नियतिः – एतानि सप्त शुद्धाशुद्धतत्त्वानि। प्रकृतिः, बुद्धिः, अहंकारः, मनः, श्रोत्रं, त्वक्, नेत्रं, जिह्वा, घ्राणं, वाक्, पाणिः, पादः, पायुः, उपस्थः, शब्दः, स्पर्शः, रूपं, रसः, गन्धः, आकाशः, वायुः, तेजः (अग्निः), जलं, पृथिवी–एतानि चतुर्विंशति अशुद्धतत्त्वानि। एतानि षट्त्रिंशत्तत्त्वानि तत्त्वाध्वेति परिकीर्त्यते।

**पृथिवीतत्त्वमारभ्य शिवतत्त्वावधीनि च।**

**तानि तत्त्वानि षट्त्रिंशत् तत्त्वाध्वेत्यभिधीयते।।**

(शि.त.र.भा–३,९.३.८१)

२. तत्त्वज्ञानादात्मज्ञानम्। ततः संसाराद्विमुक्तिः।

**'ज्ञानादेव तु कैवल्यं नान्यः पन्थाः विद्यते अयनाय'** इति श्रुतेः।

(तै.उ.,८)

त्रिधा–आत्मतत्त्वं, विद्यातत्त्वं, शिवतत्त्वं इति तत्त्वानि त्रिधा। (वीरागमे)

**आत्मविद्या शिवाख्यानि तत्त्वानि च यथाक्रमम्।**

(लिं.धा.चं.,पृ.२८०)

**तत्त्वभेदः–**

१. त्रिविधम् – सुजनाननुगृह्णातुं महालिङ्गं त्रिधा जातम्–भावलिङ्गम्, प्राणलिङ्गम्, इष्टलिङ्गं चेति। तत्र भावलिङ्गं निष्कलम्। तत्तु परात्परं केवलं भावग्राह्यम् । यत् मनोग्राह्यं तत् प्रणलिङ्गं, तदेव सकल–निष्कलम्। यच्च नेत्रकलाग्राह्यं तत् इष्टलिङ्गम्। तदेव सकलम्। तत् इष्टसिद्धिकरं अनिष्टपरिहारकं च।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया।**
**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम्।।**
**तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं मतम्।**
**निष्कलं भावलिङ्गं स्याद्भावग्राह्यं परात्परम्।**
**प्राणलिङ्गं मनोग्राह्यं भवेत् सकलनिष्कलम्।।**
**सकलं दृक्कलाग्राह्यमिष्टलिङ्गं प्रकीर्तितम्।**
**इष्टसिद्धिकरं सम्यगनिष्टपरिहारकम्।।**

(चं.आ.,क्रि.पा.,३.२३–२५ ; अ.सू.,३.६–७)

अत्र परात्परं भावलिङ्गं निष्कलं सूक्ष्मं प्राणलिङ्गं सकल–निष्कलम् इष्टलिङ्गं च स्थूलं सकलमुच्यते।

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम्।**
**इष्टलिङ्गमिदं स्थूलं..........।।**
**प्राणलिङ्गमिदं सूक्ष्मं..........।**
**परात्परं तु यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते।**

(सि.शि., ६.४९–५०)

२. पुनस्त्रिविधम् – सकलम्, निष्कलम्, सकलनिष्कलम् इति त्रिविधम्। तत्र महेशतत्त्वं सकलम्। शिवतत्त्वं निष्कलम्। सदाशिवतत्त्वं सकलनिष्कलम्। कलासहितं सकलम्। कलारहितं निष्कलम्। सकलं निष्कलं च सकलनिष्कलम्।

**तत्त्वं तु त्रिविधं ज्ञेयं तस्य भेदं शृणुष्व च ।।**
**शिवं सदाशिवं चैव महेशं त्रिविधं स्मृतम् ।।**
**शिवतत्त्वं महासेनं निष्कलं चेति कीर्तितम् ।।**
**सकलं निष्कलं चैव सदाशिवमिहोच्यते।**
**महेशं सकलं विद्या त्रिविधास्ते भवन्ति वै ।।**

(शि.त.र.,भा–१,१.६.९–११)

३. **द्विविधम्**

गुरुमाहात्म्यस्थले उक्तः महादेवः निष्कलम्, स एव सर्वानुग्रहाय गुरुरूपः भूत्वा सकलम् भवति।

**निष्कलो हि महादेवो नित्यज्ञानमहोदधिः।**
**सकलो गुरुरूपेण सर्वानुग्राहको भवेत् ।।**

(सि,शि.,११.२०)

## तत्त्वप्रासादमन्त्रः

पञ्चप्रासादमन्त्रेष्वेकतमः ।

**मूलप्रासाद इत्युक्तः तत्त्वप्रासाद उच्यते ।**

(वा.शु.आ.,५.३९)

(पश्यत – प्रासादमन्त्र)

## तत्त्वब्रह्म

शुद्धाद्यात्मप्रासादपर्यन्तं पञ्चप्रासादस्वरूपं तत्त्वब्रह्म । शुद्धप्रासादः, मूलप्रासादः, तत्त्वप्रासादः, आदिप्रासादः, आत्मप्रासादश्चेति पञ्चप्रासादाः।

**तस्माच्छुद्धादि चात्मान्तं तत्त्वब्रह्म प्रकीर्तितम् ।**
**शुद्धो मूलं तथा तत्त्वं आदिरात्मेति पञ्चधा ।।**
**पञ्चप्रासादमित्युक्तम् .......................।**

(वा.शु.आ.,७.९;५.२०)

## तत्त्वमण्डलम्

लिङ्गार्चनपात्रविन्यासाय रचनीयेषु त्रिषु मण्डलेष्वेकतमम् ।
**तत्त्वमण्डलमाख्यातं तत्त्वानुभवसाधनम् ।**

(का.आ.,क्रि.पा.,४.२५)

(पश्यत – मण्डलानि)

## तत्त्वमसि

**तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो।**

(छां.उ.,६.८.७)

तत् परशिवब्रह्मवाचकम्। तदेव लिङ्गमित्युच्यते। त्वंपदेन जीवात्मा ज्ञेयः। जीवात्मा एव अङ्गपदवाच्यः। असि पदेन सामरस्यमुच्यते।

**लिङ्गं तत्पदमाख्यातमङ्गं त्वं पदमीरितम्।**
**संयोगोऽसि पदप्रोक्तमनयोरङ्गलिङ्गयोः।।**

(अ.सू.,५.२७)

**तत्त्वमसीत्याद्यनेकश्रुतिबोधितजीवब्रह्मैक्यस्वरूपलिङ्गाङ्ग–सम्बन्धबोधकत्वेनछान्दोग्यबृहदारण्यकादिश्रुतिविहितानेकार्थत्वाच्चेति।**

(लिं.धा.चं., पृ.२४०)

## तत्त्वयोजनम्

वीरशैवानाम् अन्त्येष्ट्यङ्गत्वेन तत्त्वसंयोजनविधिर्विधीयते । सदाशिवाद्यभिन्नेभ्यः पितृभ्यः तत्त्वसंयोजनविधिद्वारा कलाः संगृह्य

शास्त्रोक्तविधिना संपूज्य, मृतस्य लिङ्गधारिणः जीवभावनिवृत्तिपूर्वकं त्रिभिः पूर्वजैः सह ऐक्यं सम्पादयितुं मृतस्य पुत्रः तत्त्वसंयोजनविधिमाचरेत् । स च विधिः द्वादशेऽह्नि करणीयः । तदर्थं गणानाम् (जङ्गमानाम्) अनुज्ञां प्राप्य, "मम पिता माहेश्वरादिस्वरूपैः पितृभिः सह शिवसायुज्यप्राप्त्यर्थं तत्त्वसंयोजनमाचरन् नन्दिकेशमहाकालनाम्ने विश्वेदेवयोस्तथा महेशादिस्वरूपानां प्रपितामहानां षट्त्रिंशत्तत्त्वानि, अष्टात्रिंशत् कलाश्चाराधयामि" इति सङ्कल्पं कृत्वा विश्वेदेवताः, पितृदेवताः, तत्त्वानि, कलाश्चावाह्य संपूजयेत् । तत्त्वसंयोजनचिकीर्षुः कर्ता गवादिदशविधदानानि कुर्यात् । (पश्यत - षट्त्रिंशत्तत्त्वानि, अष्टात्रिंशत्कलाः, कलाब्रह्म च)

**सदाशिवाद्यभिन्नेभ्यः पितृभ्यस्तत्त्वसम्मिता ।**
**कलाः संगृह्य चान्यत्र समभ्यर्च्य यथाविधि ।।**
**जीवभावनिवृत्त्यर्थं मृतलिङ्गाङ्गसङ्गिनः ।**
**वर्गत्रयैक्यसिद्ध्यर्थं तत्त्वादीन् योजयेत् सुतः ।।**
**द्वादशेऽहनि वै कर्ता माहेशान् सन्निमन्त्र्य च ।**
**पितुस्तदीयपित्राद्यैर्महेशादिस्वरूपकैः ।।**
**शिवसायुज्यसिध्यर्थं करिष्यन् तत्त्वयोजनम् ।।**
**नान्दिकेशमहाकालसंज्ञिनोर्विश्वदेवयोः ।**
**पितुः पितामहादीनां महेशादिस्वरूपिणाम् ।।**
**षट्त्रिंशतां च तत्त्वानां कलानामष्टत्रिंशताम् ।**
**आराधनं करिष्यामीत्येवं सङ्कल्पपूर्वकम् ।।**
**विश्वे देवौ च पित्रादीन् तत्त्वानि च कलास्तथा ।**
**आवाह्य चाभिसम्पूज्य चिकीर्षुस्तत्त्वयोजनम् ।**
**दशदानानि वै कुर्याद् गवादीनि यथाक्रमम् ।।**

(मकुट., च.पा.,७.६-१२; चं.आ.,च.पा.,४.३८-४३)

## तत्त्वविशोधिनी दीक्षा

वेधादीक्षान्तर्गतासु सप्तविधदीक्षाष्वेकतमा। शब्दादिविषयान् तत्तदिन्द्रियगोचरान् आचारलिङ्गादिषड्लिङ्गेभ्यः समर्प्य प्रयतः जितेन्द्रियश्च भूत्वा पूजां कुरु इत्येवंरूप उपदेशः तत्त्वविशोधिनी दीक्षा इत्युच्यते।

**तत्त्वविशोधिनीदीक्षेति कथ्यते।**
**............... षष्ठी तत्त्वविशोधिनी।**
**आदिश्यैवं ततो दद्यात् तत्त्वसंशोधनात्मिकाम् ।।**
**शब्दादीन् विषयान् सर्वास्तत्तदिन्द्रियगोचरान्।**
**आचारलिङ्गमुख्येभ्यः षड्लिङ्गेभ्यः समर्पयेत्।।**

(का.आ.,क्रि.पा.,१.९७, १०५-१०६)

## तत्त्वशुद्धिः

आहारशुद्ध्या तत्त्वशुद्धिः (छां.उ.,७.२६.२) इति छान्दोग्य-श्रुत्यनुसारेण शुद्धशिवनिर्माल्यस्वीकारेण सकल तत्त्वसिद्धिः जायते। तद्वारा मनोनैर्मल्यं प्रप्यते। मनोनैर्मल्यमेव ज्ञानकारणम्।

**अन्नशद्ध्या हि सर्वेषां तत्त्वशुद्धिरुदाहृता।**
**विशुद्धमन्नजातं हि यच्छिवाय समर्पितम्।।**
**तदेव सर्वकालं तु भुञ्जानो लिङ्गतत्परः।**
**मनःप्रसादमतुलं लभते ज्ञानकारणम्।।**

(सि.शि.,११.९-१०)

## तत्त्वाध्वा

अध्वभेदः। षडध्वस्वेकः। अर्थरूपः । शिवादि पृथिवीतत्त्वान्तानि षट्त्रिंशत्तत्त्वानि तत्त्वाध्वा।

**पृथिवीतत्त्वमारभ्य शिवतत्त्वावधीनि च ।**

**तानि तत्त्वानि षट्त्रिंशत्तत्त्वाध्वेत्यभिधीयते ।।**

(शि.त.र., भा-३, .३.८१)

**तत्त्वाध्वानं त्वर्थरूपं हृदि न्यसेदतन्द्रितः ।।**

(का.आ.,क्रि.पा.,१.८०)

(पश्यत-तत्त्वम्)

## तत्त्वाभिधायिनी दीक्षा

वेधादीक्षान्तर्गतसप्तविधदीक्षाष्वेकतमा । लिङ्गाङ्गतत्त्वं ज्ञात्वा लिङ्गसायुज्यं प्राप्नोतु इत्येवंरूपो गुरोरुपदेशः तत्त्वाभिधायिनी दीक्षेति कथ्यते ।

**इति निर्वाणमादिश्य दद्यात् तत्त्वाभिधायिनीम् ।।**

**लिङ्गाङ्गतत्त्वं विज्ञाय लिङ्गसायुज्यवान् भव ।**

(का.आ.,क्रि.पा.,१.१०३-१०४)

(पश्यत - दीक्षा, वेधादीक्षा)

## तत्त्वोपदेशिनी दीक्षा

वेधादीक्षान्तर्गतासु सप्तविधदीक्षास्वेकतमा । सच्चिदानन्दस्वरूपं ब्रह्माभिधं लिङ्गं त्वमेवासि इति मत्वा उपासनां कुरु इत्येवंरूप उपदेशः तत्त्वोपदेशिनीदीक्षेति कथ्यते ।

**उपदिश्यैवमपि च दद्यात् तत्त्वोपदेशिनीम् ।**

**सच्चित्सुखनिजाकारं लिङ्गं यद्ब्रह्मसंज्ञितम् ।।**

**तदसि त्वमुपास्वातस्तदेवाहमिति ध्रुवम् ।**

(का.आ.,क्रि.पा.,१.१०७-१०८)

(पश्यत - दीक्षा, वेधादीक्षा)

## तत्पुरुषम्

१. पञ्चब्रह्मसु एकं तत्पुषब्रह्म।

२. शिवस्य परमात्मनः पञ्चमुखेषु पूर्वदिशि वर्तमानं मुखम्।

**सद्योजातं च प्रथमं वामदेवं द्वितीयकम्।**

**अघोरं च तृतीयं तु तत्पुरुषं चतुर्थकम्।।**

**ईशानं पञ्चमं प्रोक्तं मुखानि मम सर्वशः।**

(वी.स.सं.,१.२६-२७)

## तत्पुरुषः

महेश्वरस्य सद्योजातादिमूर्तिषु एका । कुङ्कुमवर्णः, चतुर्वक्त्रः, चतुर्भुजः, जटामकुटभूषितः, द्वादशनेत्रः, सर्वावयवसंयुक्तः, पीताम्बर-धरोत्तरवस्त्रः, सर्वाभरणमण्डितः, वामहस्तयोः टङ्कमभयं च, दक्षिणहस्तयोः शूलं वरदं च गृहीतवान्, दिव्यगन्धाालिप्तदेहः, दिव्यपुष्पालङ्कृतश्च तत्पुरुषः ।

**पुरुषं कुङ्कुमाभं स्यात् चतुर्वक्त्रं चतुर्भुजम् ।।**

**जटामकुटसंयुक्तं नेत्रैर्द्वादशभिर्युतम् ।**

**सर्वावयवसंयुक्तं पीताम्बरधरं परम् ।।**

**पीतवस्त्रोत्तरीयं च सर्वाभरणभूषितम् ।**

**सव्ये तु टङ्कमभयं शूलं वरदमन्यके ।।**

**दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम् ।**

(वा.शु.आ.,७.५६-५९)

## तत्पुरुषमन्त्रः

तत्पुरुषः मन्त्रः। सद्योजातादिपञ्चब्रह्मस्तुतिपरेषु मन्त्रेषु तत्परुष-ब्रह्मस्तुतिपरः मन्त्रः। मन्त्रस्वरूपं यथा -

**तत्पुरुषाय विध्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।।**

(तै.आ.,१०.४६.म.ना.उ.,१.२२)

(पश्यत–तत्पुरुषम्)

## तनुत्रयम्

शरीरभेदः। स्थूलतनुः, सूक्ष्मतनुः, कारणतनुः इति तनुः त्रिधा। तत्र पञ्चभूतात्मिका स्थूलतनुः। पञ्चेन्द्रिय। पञ्चविषय। पञ्चवायुमनोबुद्धियुक्ता सूक्ष्मतनुः। स्थूलसूक्ष्मयोः शरीरयोः चैतन्यदायकमूलात्मयुक्ता कारणतनुः।

**तनुत्रयगतानादिमलत्रयमसौ गुरुः ।**

**दीक्षात्रयेण सन्दह्य लिङ्गत्रयमुपादिशेत् ।।**

(का.आ.,क्रि.पा., १.१०)

(पश्यत–दीक्षा)

## तन्त्रम्

सिद्धान्तः। सिद्धान्तप्रतिपादकः ग्रन्थः। आगमस्य तन्त्रमिति नामान्तरम्। तत्त्वमन्त्रयोः ज्ञानं तनोति विस्तारयति पुंसां त्राणं रक्षणं च करोति इति तन्त्रम्।

**सूक्ष्मतन्त्रमहं वक्ष्ये शिवज्ञानैकसाधनम् ।**

(सू.आ.,क्रि.पा.,१.१३)

पतिः, पशुः, पाशश्चेति पदार्थत्रयप्रतिपादकं पादचतुष्टययुक्तं शिवेनोक्तं शास्त्रं तन्त्रमित्युच्यते। सूत्ररूपेण विषयं प्रथमं संगृह्य तदनन्तरं तस्य विस्तारः दृश्यते। कामिकादिवातुलान्तं अष्टाविंशतिसंख्यात्मकं तन्त्रम्। तन्त्रं शिवागमसमुदायः। तस्य सिद्धान्त इति प्रसिद्धिः।

**त्रिपदार्थं चतुष्पादं प्राह तन्त्रं जगत्पतिः।**

**सूत्रेणैकेन संगृह्य प्राह विस्तरतः प्रभुः।।**

**कामिकादि प्रभेदेन तद्भिन्नं बहुधैव हि।**

**कामिकाद्याः वातुलान्ताः शिवेनोक्ताः शिवागमाः।।**

**सिद्धान्त इति विज्ञेया उपभेदसमन्विताः ।।**

(क्रि.सा.,भा-१, उपोद्घातम्१०-११)

**तन्त्रभेदः**

१. **चतुर्विधम्** - वामम्, दक्षिणम्, मिश्रम्, सिद्धान्तं चेति शैवतन्त्रं चतुर्विधम् । तत्र वामं शक्तिप्रधानम्, दक्षिणं भैरवप्रधानम्, मिश्रं सप्तमातृसम्बद्धम्, सिद्धान्तं वेदसम्मतम् । तत्र सिद्धान्तं नाम कामिकादि वातुलान्तं शिवोदितं महातन्त्रम् । (सिद्धान्तम् = कामिकादि वातुलान्ताष्टाविंशति आगमशास्त्रम्) ।

**तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।**

**वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ।।**

**शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।**

**सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम् ।।**

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।**

**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ।।**

(सि.शि.,५.१०-११, १४)

२. **षड्विधम्** । तद्यथा - वीरशैवम्, वैष्णवम्, शाक्तम्, सौरम्, विनायकम्, कापालम्, इति भेदेन तन्त्रं षड्विधम् ।

**तन्त्रं तु षड्विधं प्रोक्तं षड्दर्शनविभेदतः ।**

**वीरशैवं वैष्णवं च शाक्तं सौरं विनायकम् ।।**

**कापालिकमिति विज्ञेयं दर्शनानि षडेव हि ।**

(पार. आ., १.२२-२३)

३. **अष्टविंशतिधा** - शैवागमाः कामिकादिवातुलान्ताः अष्टाविंशतिसंख्याकाः ।

(पश्यत - आगमः)

४. **चतुःषष्टिविधम्** – अव्याजपालिनीतन्त्रमित्यादि भेदेन तन्त्रं चतुःषष्टिविधम्।

**आख्यातानि चतुष्षष्टि तन्त्राण्येवं तु नामतः ।**

(शि.त.र.,भा–१, १.१.९५)

अगणितानि–वातुलादीनितन्त्राणि अगणितानीति क्रियासारकारः।

**एवमेतानि तन्त्राणि कथितान्यपि कोटिशः ।**

(क्रि.सा., उपोद्घातं – ९६–१०५, पृ – १०)

## तन्वष्टकम्

१. शिवस्य अष्टमूर्तयः तन्वष्टकमिति कथ्यते ।

**या स्रष्टुः सृष्टिराद्या वहति विधिहुतं या हविर्या च होत्रि**
**ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।**
**यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः**
**प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ।।**

(अ.शा., १.१)

(पश्यत – अष्टमूर्तिः)

२. भक्तस्य अष्टावरणम् ।

**इत्याष्टावरणं तस्य तन्वष्टकमितीरितम् ।**

(शि.त.र.,भा–१, १.३.३२)

(पश्यत – अष्टावरणम्)

## तपोयज्ञः = तपः

तपोयज्ञः । वीरशैवानां पञ्चयज्ञेषु एकतमः । जप आध्यात्मिक साधनेष्वन्यतमम् । शिवार्थं देहदण्डनं तपः। न तु कृच्छ्रादि व्रतानि ।

**शिवार्थे देहसंशोषस्तपः कृच्छ्रादि नो मतम् ।**

(सि.शि.,९.२२; पार.आ., १७.८०)

**कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तथापरः ।**
**ध्यानयज्ञो ज्ञानयज्ञः पञ्चयज्ञा इमे स्मृताः ।**
**ऐतेषामपि पञ्चानां श्रेयं स्यादुत्तरोत्तरम् ।।**

(सू.आ.,क्रि.पा., ६.२६)

## तान्त्रिकपूजाक्रमः

वेदाध्ययनं कृतवन्तः ये तस्मिन्नधिकृताश्च तैरिष्टलिङ्गपूजादि वेदमन्त्रपठणपूर्वकं कर्तुं शक्यते । स्त्रीणामितरेषां च पूजायां वेदमन्त्राः नोपयुज्यन्ते, आगममन्त्रा एवोपयुज्यन्ते इत्याशयेन तान्त्रिकपूजाक्रम आगमेषु विधीयते । यद्यपि पूजाविषये पुरुषाणां स्त्रीणां च समानोऽधिकारः । तथापि शैवब्राह्मणपरम्परानुरोधेनागमेषु एषः क्रमः स्त्रीणां वेदाधिकार-रहितानामिति विधीयते । वीरशैवे तावत् तान्त्रिकपूजाक्रमः सर्वेषां सौकर्याय भवति । आगमेष्वन्यो विशेष उक्तः । वैदिकपूजने ये लिङ्गपूजायां वेदमन्त्राः नियोजितास्तेषामर्थः गन्धधारणाद्युपचारसम्बद्धो न भवति । केवलं गन्धादिशब्दप्रयोगमात्रेण सम्बन्धः परिकल्प्यते । उदाहरणार्थं गन्धधारणे 'गन्धद्वारां दुरादर्षाम्' - इति मन्त्रः प्रयुज्यते । तत्र गन्धशब्दप्रयोग एव गन्धधारणे सङ्केतः । परन्त्वागममन्त्रेषु अनुष्टीयमानानामुपचाराणामर्थः स्पष्टं भवति । तस्मात् तेषां पठनेन चित्तं तत्तत्कर्मण्यनुरज्यते । शिवः भक्तिलभ्यः । तस्मात् तस्य पूजनं भक्त्या विधेयम् । तस्मात्, तान्त्रिकमन्त्रा इष्टलिङ्गपूजायामुत्तमोत्तमाः । वैदिको वाऽन्यो वा स्त्रीर्वा पुरुषो वा सर्वेषां तान्त्रिकेषु मन्त्रेष्वधिकारोऽस्त्येव ।

**तस्मादधिकृतां वेदे तत्राऽनधिकृतामपि ।**
**मदीयमूलमन्त्रेण पूजनं सर्वतो परम् ।।**
**अथवा तान्त्रिकैर्मन्त्रैरपि पूजा विशिष्यते ।**
**एषु भात्युपचारार्थः स्पष्टः सर्वोऽपि भामिनि ।।**

**वैदिकेषु तु मन्त्रेषु लिङ्गादेवौपचारिकात् ।**
**तेषु तेषूपचारेषु वेदमन्त्रा नियोजिताः ।।**
**समनुष्ठीयमानोऽर्थो येषु स्पष्टं प्रकाशते ।**
**तेष्वेव पठ्यमानेषु चित्तं कृत्येऽनुरज्यते ।।**
**भक्तिलभ्योऽस्म्यहं यस्मादभक्त्या पूजनं वृथा ।**
**तन्मन्त्रास्तान्त्रिका देवि पूजायामुत्तमोत्तमाः ।।**
**सर्वेषामधिकारोऽस्ति तान्त्रिकेषु वरानने ।**
**वैदिकानां तथान्येषां स्त्रीणां पुंसां च सुव्रते ।।**

(का.आ.,क्रि.पा.,८.५-१०)

**अत्र क्रमः**

१. प्रथमं शिवकुम्भपूजा कर्तव्या। तत् स्थापनाय मन्त्रः।

**ईशानः कलशस्याग्रे पूर्वे तत्पुरुषस्तथा ।**
**अघोरो दक्षिणे चैव सद्योजातस्तु पश्चिमे ।।**
**उत्तरे वामदेवश्च मध्ये च परमः शिवः ।**
**अधो भागे पराशक्तिर्विश्वोद्भासनकारिणी ।।**

(का.आ.,क्रि.पा.,८.१२-१३)

(कलशस्याग्रभागे ईशानः, पूर्वभागे तत्पुरुषः, दक्षिणभागेऽघोरः, उत्तरभागे वामदेवः, मध्यभागे च परशिवः। अधोभागे च विश्वप्रकाशनसमर्था पराशक्तिः।)

एषः कलशः (कुम्भः) गन्धादिधारणेन पूजनीयः । तत्रैते मन्त्राः ।

**सद्रूपं कलशाकारं चिद्रूपं कलशद्युतिः ।**
**मध्यस्थं जलमुत्कृष्टं सर्वतीर्थोत्तमोत्तमम् ।।**
**चिदानन्दरसं साक्षाच्छिवरूपमिति स्मृतम् ।।**

(का.आ.,क्रि.पा., ८.१४-१५)

(कलशस्याकारः शिवस्य सद्रूपम् । कलशस्य प्रकाशः चिद्रूपम् । कलशस्थजलं श्रेष्ठम्, सर्वतीर्थजलेभ्य उत्तमम् । तत् शिवस्य चिदानन्दस्वरूपम् । एवं कलशः साक्षात् शिवरूपमिति ज्ञातम् ।)

२. अनन्तरमिष्टलिङ्गपूजा करणीया । आदौ सज्जिकात् इष्टलिङ्गं बहिरानीय करपीठे स्थापयेत् । तत्र मन्त्रः –

**हृदयाद्रिगुहावास करुणावास शाश्वत ।**

**पूजापरिग्रहायाद्य करपीठे निषीद मे ।।**

(का.आ.,क्रि.पा., ८.१६)

(हे हृदयरूपिण्यां पर्वतगुहायां वासकृत्, हे कारुण्यधाम, हे शाश्वत, पूजास्वीकाराय मम कराब्जे उपविश।)

३. यद्यपि इष्टलिङ्गपूजायाम् आवाहनविसर्जने न स्तः तथापि शैवपूजा–क्रमानुसारेणावाहनमत्र विहितः । केवलमत्रावाहनमुक्तम्। विसर्जनं नोक्तम् । यत्र आवाहनमुच्यते तत्र विसर्जनमप्युच्येत, इति नियमेन अत्र आवाहनमौपचारिकमिति ग्राह्यम् । अत्र मन्त्रः ।

**पञ्चपञ्चात्मलीलाढ्य पञ्चकृत्यपरायण ।**

**आवाहितः सुप्रसन्नः सान्निध्यं कुरु सर्वदा ।।**

(का.आ.,क्रि.पा.,८.१७)

(हे पञ्चविंशतिलीलाढ्य ! हे पञ्चकृत्यपरायण ! आवाहितः त्वं सुप्रसन्नः भूत्वा सदा मम समीपे (हस्ते) वर्तस्व ।)

४. अनन्तरं गुरून् नमस्कृत्य, पूजयित्वा, शिवध्यानं कुर्वन् प्रसन्नमनसा मूलमन्त्रं जपेत् । ततः दशावधानविधिना चिरं लिङ्गं समीक्षन् एतन्मन्त्रमुच्चरन् सानुरागाख्यं नीराजनं दर्शयेत् । तत्र मन्त्रः –

**सर्वमङ्गलयाऽऽश्लिष्टशुभाङ्ग हृदयङ्गम ।**

**नीराजनं गृहाणेश सानुरागं सदाशिव।।**

(का.आ.,क्रि.पा.,८.१९)

(हे सर्वमङ्गलया (शिवया) आलङ्गितपवित्राङ्ग ! हे मम हृदयनिवास! हे ईश ! हे सदाशिव ! सानुरागाख्यं नीराजनं स्वीकुरु )

ततः मूलमन्त्रेण भस्म पुष्पं च समर्पयेत् ।

५. तदनन्तरं दर्शनाख्यं नीराजनं दर्शयेत् । तत्र मन्त्रः –

**अन्तःस्थितबहुर्व्याप्तज्योतिर्लिङ्गस्वरूपक ।**
**नीराजनं गृहाणेश दर्शनाख्यं सदाशिव ।।**

(का.आ.,क्रि.पा.,८.२१)

(हे अन्तर्वास ! हे बहिर्व्याप्त ! हे ज्योतिर्लिङ्गस्वरूप ! हे परमेश्वर ! हे सदाशिव ! दर्शनाख्यं नीराजनं स्वीकुरु ।)

६. इतः परं अर्घ्यादिसमर्पणं मध्ये मध्ये नीराजनसमर्पणं च विधीयते । पाद्यम् –

**हरिमुख्यामरशिरोरत्ननीराजिताङ्घ्रिक ।**
**भवत्पादाब्जयोः पाद्यं गृहाण परमेश्वर ।।**

(का.आ.,क्रि.पा.,८.२२)

(हे विष्ण्वादिदेवानां शिरस्सु स्थापितैः नीराजनैः दीपितपाद ! भवतः पादकमलयोः पाद्यं समर्प्यते । हे परमेश्वर ! तत् स्वीकुरु ।)

७. **अर्घ्यम् –**

**वराभयाङ्कितकरकञ्जपालितकिङ्कर ।**
**हस्तनीरेजयोरर्घ्यं गृहाण गिरिजावर ।।**

(का.आ., क्रि.पा., ८.२३)

(हे वरमुद्राभयमुद्राभ्यां युक्तैः करकमलैः भक्तानां पालक ! हे गिरिजावर ! हस्तकमलयोरर्घ्यं स्वीकुरु।)

८. **आचमनीयम्**

**जगदाभीलकाकोलगोलपालिलसद्गल ।**
**श्रीमन्मुखाम्बुजे दत्तं गृहाणाचमनीयकम् ।।**

(का.आ.,क्रि.पा.,८.२४)

(हे जगतः अपायकारकेण कालकूटविषेण गोलाकारयुक्तसुन्दरकण्ठ! तव शोभायुक्तमुखकमलायाचमनीयं समर्प्यते, तत् स्वीकुरु ।)

९. **शुद्धोदकस्नानम् –**

**गङ्गातरङ्गसङ्गाश्रितोत्तमाङ्ग नमोऽस्तु ते ।**

**शुद्धोदकस्नानमिदं गृहाण परमेश्वर ।।**

(का.आ.,क्रि.पा.,८.२५)

(हे गङ्गायाः तरङ्गसम्पर्कयुक्तोत्तमाङ्ग ! ते नमस्कारः अस्तु ! हे परमेश्वर! शुद्धोदकस्नानं स्वीकुरु ।)

एवं शुद्धोदकस्नानं विधाय तीर्थजलं शिरसि संप्रोक्ष्य लिङ्गपादोदकं स्वीकुर्यात् । तत्र मन्त्रः –

**सर्वमङ्गलमाङ्गल्यं सर्वपावनपावनम् ।**

**सर्वसिद्धिकरं पुंसां शम्भोः पादाम्बुसेवनम् ।।**

(का.आ.,क्रि.पा.,८.२७)

(सर्वमङ्गलानां मङ्गलभूतं सर्वपावनानां पावनभूतं
शिवस्य पादोदकास्वीकारः सर्वेषां सर्वसिद्धिप्रदम्)

१०. पादोदकस्वीकारानन्तरमिष्टलिङ्गं गन्धादिभिः पूजयेत् । पश्चात् अवसराख्यं नीराजनं कुर्यात्।तत्र मन्त्रः–

**चिद्रूप जगदाधार स्थूलसूक्ष्मपरात्पर ।**

**नीराजनं गृहाणेशावसराख्यं सदाशिव ।।**

(का.आ.,क्रि.पा.,८.२८)

(हे चित्स्वरूप ! हे जगदालम्बन ! हे स्थूलसूक्ष्मपरात्पर ! हे सदाशिव ! अवसराख्यं नीराजनं स्वीकुरु ।)

११. पश्चादिष्टलिङ्गस्य शिरसि भस्मफलपुष्पादिकं समर्प्य मज्जनाख्यं नीराजनं दर्शयेत् । तत्र मन्त्रः–

**परिपूर्णचिदानन्द जलाध्यक्ष सदाशिव ।**

**नीराजनं गृहाणेश मज्जनाख्यं सुशोभनम् ।।**

(का.आ.,क्रि.पा., ८.३०)

(हे अखण्ड चिदानन्द ! हे जलाधिष्टातः । हे सदाशिव ! मज्जनाख्यं सुन्दरं नीराजनं स्वीकुरु।)

१२. पश्चात् पुनः पाद्यमर्घ्यमाचमनीयं च पूर्वोक्तमन्त्रैः समर्प्य स्नानं परिकल्पयेत् । तत्र मन्त्रः -

**पञ्चब्रह्ममयतनो पञ्चकृत्यपरायण ।**

**पञ्चामृतस्नानमिदं गृह्यतां भक्तवत्सल ।।**

(का.आ.,क्रि.पा.,८.३२)

(हे सद्योजातादिपञ्चब्रह्मनिर्मितशरीर ! हे पञ्चकृत्यनिष्णात ! हे भक्तवत्सल ! पञ्चामृतस्नानं स्वीकुरु ।)

१३. पश्चात् शुद्धोदकस्नानम् । तत्र मन्त्रः -

**आकाशवाहिनीनद्धजटापटलभासुर ।**

**शुद्धोदकस्नानमिदं गृहाण जगदीश्वर ।।**

(का.आ.,क्रि.पा.,८.३३)

(हे आकाशगङ्गां धृतेन जटासमूहेन भासुर ! हे जगदीश्वर ! इदं शुद्धोदकस्नानं स्वीकुरु ।)

१४. शुद्धोदकस्नानानन्तरं लिङ्गतीर्थं स्वशिरसि संप्रोक्ष्य आदरेण नमस्कृत्य तत्तीर्थं स्वीकुर्यात् । तत्र मन्त्रः -

**भवाम्बुनिधिनिस्तारसेतवे मोक्षहेतवे ।**

**पापप्रशमनार्थाय पादतीर्थाय ते नमः ।।**

(का.आ.,क्रि.पा.,८.३५)

(भवसागरस्य तरणे सेतुरूपाय, मोक्षकारणाय, पापनाशकारणाय, पादतीर्थाय तुभ्यं नमः ।)

१५. पादतीर्थस्वीकारानन्तरं श्रेष्ठलिङ्गं वस्त्रेण संमृज्य अङ्गारतापनं कुर्यात् । तत्र मन्त्रः–

**अशेषज्योतिरुद्भासकोत्तमज्योतिरात्मक ।**
**अङ्गारतापनमिदं कुरु शीतापनोदनम् ।।**

(का.आ.,क्रि.पा.,८.३६)

(हे समग्रज्योतीनां उद्भासकोत्तमज्योतिस्वरूप ! शीतपरिहारोपायमिदम् अङ्गारतापनं कुरू।)

१६. अनेन मन्त्रेण धूमरहिनेनाग्निना तापनं कृत्वा धूपं समर्पयेत् । तत्र मन्त्रः ।

**अशेषवासनोन्मूलकारणात्मीयभासन ।**
**धूपसंवीजनं शम्भो गृह्यतां भक्तवत्सल ।।**

(का.आ.,क्रि.पा.,८.३७)

(हे समग्रवासनानामुन्मूलनाय कारणीभूतप्रकाशात्मन् ! हे भक्तवत्सल ! हे शम्भो ! धूपसंवीजनमङ्गीक्रियताम् )

१७. एवं धूपसंवीजनानन्तरं माङ्गल्याख्यं नीराजनं दत्वा वस्त्रं समर्पयेत्। तत्र माङ्गल्यनीराजनमन्त्रः –

**अनन्तमाङ्गल्यगुणरत्नरत्नाकरायित ।**
**नीराजनं गृहाणेश माङ्गल्याख्यं सदाशिव ।।**

(का.आ.,क्रि.पा.,८.३८)

(हे अनन्तमङ्गलानां गुणरत्नानां सागर ! हे सदाशिव ! हे परमेश्वर! माङ्गल्याख्यं नीराजनं स्वीकुरु ।)

वस्त्रार्पणमन्त्रः –

**नृसिंहचर्मोत्तरीय गजाजिनपरिष्कृत ।**
**वस्त्रयुग्ममिदं शम्भो गृहाण जगदीश्वर ।।**

(का.आ.,क्रि.पा.,८.३९)

(हे नरसिंहचर्मणा कृतोत्तरीयधर ! हे जगदीश्वर ! हे शम्भो! इदं वस्त्रयुगलं स्वीकुरु।)

१८. अनन्तरं विभूतिं धारयेत् । तत्र मन्त्रः –

**फालाग्निदग्धप्रद्युम्न वपुर्भसितभूषित ।**
**शिवाग्निजमिदं भस्म दीयतां जगतां पते ।।**

(का.आ.,क्रि.पा.,८.४०)

(हे फालाग्निना दग्धस्य कामस्य भस्मना अलङ्कृतशरीर ! हे जगत्पते ! शिवाग्निजनितमिदं भस्म ध्रियताम् ।)

१९. पश्चाद् यज्ञोपवीतं धारयेत् । तत्र मन्त्रः –

**फणामणीघृणिभ्राजिनागयज्ञोपवीतक ।**
**यज्ञेश्वरगृहाणेश स्वर्णयज्ञोपवीतकम् ।।**

(का.आ.,क्रि.पा.,८.४१)

(हे फणायां मणियुक्तं सर्पं यज्ञोपवीतत्वेन धृतशरीर ! हे यज्ञेश्वर ! हे परमेश्वर ! सुवर्णयज्ञोपवीतमिदं स्वीकुरु ।)

२० गन्धं धारयेत् । तत्र मन्त्रः –

**कामाङ्गभसितालेपसमुज्वलशुभाङ्गक ।**
**सुगन्धी चन्द्रसम्बन्धः श्रीगन्धः प्रतिगृह्यताम् ।।**

(का.आ.,क्रि.पा.,८.४२)

(हे कामदहनलब्धेन भस्मना लेपनात् उज्वलपवित्रशरीर! कर्पूरमिश्रितं सुगन्धयुक्तं च चन्दनं गृहाण ।)

२१. चन्दनलेपनानन्तरम् अक्षतान् धारयेत् । तत्र मन्त्रः –

**अक्षयानन्दसन्धायकाक्षयाङ्गप्रदायक ।**
**अक्षतान् सुगृहाणेश पक्षिवाहनपूजित ।।**

(का.आ.,क्रि.पा.,८.४३)

(हे क्षयरहितस्य आनन्दस्य प्रदायक ! हे अक्षयशरीरानुग्राहक ! हे परमेश्वर ! हे विष्णुपूजित ! अक्षतान् स्वीकुरु ।)

२२. पश्चात् कर्पूरनीराजनं दर्शयेत् । तत्र मन्त्रः –

**सुरयोषामणिश्रेणीदत्तनीराजनोज्वल ।**
**नीराजनं गृहाणेश कर्पूराख्यं सदाशिव ।।**

(का.आ.,क्रि.पा.,८.४४)

(हे श्रेष्ठदेवतास्त्रीणां श्रेण्या दर्शितेन नीराजनेन उज्वल ! हे परमेश्वर ! हे सदाशिव ! कर्पूराख्यं नीराजनं स्वीक्रियताम् ।)

२३. मालार्पणम् । तत्र मन्त्रः –

**विधिविष्णुकपालालिमालालङ्कृतविग्रह ।**
**माल्यं गृहाण देवेश सुमजालमनोरमम् ।।**

(का.आ.,क्रि.पा.,८.४५)

(हे ब्रह्म-विष्णु-कपालसरणिरूपमालयाऽलङ्कृतशरीर । हे देवेश! पुष्पजालनिर्मितं मनोहरं च माल्यं स्वीकुरु ।)

२४. पश्चाद् आभरणसमर्पणम् । तत्र मन्त्रः –

**चन्द्रमःखण्डकोटीरफणिकुण्डलमण्डित ।**
**भूषणानि गृहाणेश सौवर्णानि जगन्नुत ।।**

(का.आ.,क्रि.पा.,८.४६)

(हे चन्द्रकलावत् प्रकाशमानैः सर्पकुण्डलैरलङ्कृत ! हे परमेश्वर ! हे जगन्नुत ! सुवर्णमयान्यलङ्काराणि स्वीकुरु ।)

२५. अलङ्करणानन्तरं शृङ्गाराख्यं नीराजनं कुर्यात् । तत्र मन्त्रः–

**भवानीभावमधुरलीलालोकावलोकित ।**
**नीराजनं गृहणेश शृङ्गाराख्यं सदाशिव ।।**

(का.आ.,क्रि.पा.,८.४७)

(हे शक्तिस्पन्दद्वारा मधुरलीलानां लोके प्रकाशक ! हे सदाशिव ! हे परमेश्वर ! श्रृङ्गाराख्यं नीराजनं स्वीक्रियताम् ।)

२६. पश्चात् पत्रपुष्पकैः अष्टाभिर्नामभिर्वा अष्टोत्तरशतनामभिर्वा पूजयेत्। तत्र पुष्पार्पणम् । तत्र मन्त्रः-

**पुष्पवद्रथचक्राढ्यपुष्पायुधवधोद्यत ।**

**नानाविधानि पुष्पाणि गृहाणेश नमोऽस्तु ते ।।**

(का.आ.,क्रि.पा.,८.४९)

(हे पुष्पयुक्तैः रथचक्रैः सुसज्जित ! हे ईश ! ते नमोऽस्तु । नानाविधानि पुष्पाणि गृह्यताम् ।)

२७. **बिल्वार्पणम्** । तत्र मन्त्रः-

**त्रिसुपर्णं स्फुरद्वर्णं श्रिया चीर्णं सुशोभनम् ।**

**कुण्डलीकृतगोकर्ण गृहाण श्रीद्रुपर्णकम् ।।**

(का.आ.,क्रि.पा.,८.५०)

(हे गोकर्णनामकसर्पाण्येव कुण्डलत्वेन धृतवान् ! त्रिदलानि, कान्तियुक्तानि सौन्दर्ययुक्तानि, मनोहराणि च बिल्वपत्राणि स्वीक्रियताम् ।)

२८. बिल्वदलधारणानन्तरं सर्वोपरि भस्म प्रक्षिप्य श्वेतछत्रं, चामरद्वयम्, तालवृन्तम्, दर्पणं च दर्शयेत् । तत्र श्वेतच्छत्रदर्शनमन्त्रः -

**कपर्दवेष्टनानन्तभोगच्छत्रपरिष्कृत ।**

**श्वेतच्छत्रं गृहाणेश मुक्तादामाभिशोभितम् ।।**

(का.आ.,क्रि.पा.,८.५१)

(हे जटाधारिन् ! हे अनन्ताख्यसर्पफणाभिः सुशोभित ! हे परमेश्वर ! मुक्तामालाभिः सुशोभितं श्वेतच्छत्रं स्वीकुरु।)

२९. चामरद्वयवीजनमन्त्रः ।

**विधिविष्णुकराब्जोद्यच्चामरद्वयवीजित ।**

**चामराभ्यां वीजयामि प्रसीद करुणालय ।।**

(का.आ.,क्रि.पा.,८.५२)

(हे ब्रह्मणः विष्णोश्च करकमलगृहीतचामराभ्यां वीजित ! अहमपि चामरद्वयेन वीजयामि । हे करुणामय ! प्रसन्नो भव ।)

३०. तालवृन्तवीजनमन्त्रः–

**तालसंवादनव्यग्रविधितोषितमानस ।**

**वीजये तालवृन्तेन करुणावरुणालय ।।**

(का.आ.,क्रि.पा.,८.५३)

(हे तालसंवादनकार्ये मग्नेन ब्रह्मणा सन्तोषित ! हे करुणासागर ! तालवृन्तेन वीजयामि।)

**३१. दर्पणदर्शनम् मन्त्रः–**

**आदर्शविमलाकारादर्शभास्वत्कपोलक ।**

**आदर्शं दर्शयाम्यद्य दुर्दर्शनिजरूपक ।।**

(का.आ.,क्रि.पा.,८.५४)

(हे दर्पणवत् विमलाकार ! हे दर्पणवत् शोभमानकपोल ! हे अदर्शनीयस्वरूप ! अद्य ते दर्पणं दर्शयामि ।)

३२. तदनन्तरं घण्टानादं श्रावयित्वा शङ्खं वादयेत्, गीतं वाद्यं च संश्रावयेत्, नृत्तं प्रदर्शयेत्, प्रदक्षिणनमस्कारौ कुर्याच्च । तत्र मन्त्राः –

**घण्टानादः –**

**नादस्वरूपविलसद्घण्टाशोभिकराम्बुज ।**

**घण्टानादं श्रावयामि नादरूपि शृणु प्रियम् ।।**

(का.आ.,क्रि.पा.,८.५५)

(हे नादस्वरूपेण शोभायमानया घण्टयाऽलङ्कृतकरकमलयुक्त ! हे नादस्वरूप ! प्रियं घण्टानादं श्रावयामि अवधारय!)

**३३. शङ्खनादः –**

**शङ्खध्यानक्रियाशक्तगणेन्द्रगणसंवृत ।**
**श्रृणु शङ्खरवं देव कम्बुग्रीवमनोरमम् ।।**

(का.आ.,क्रि.पा.,८.५६)

(हे शङ्खध्वननकार्ये मग्नानां गणमुख्यानां वृन्देन संवृत ! हे देव ! हे कम्बुकण्ठ ! मनोहरं शङ्खनादं शृणु।)

**३४. गीतम् –**

**कम्बलाश्वतरोद्गीतसमाकर्णनतत्पर ।**
**गीतं संश्रावयाम्यद्य भवच्चित्र चरित्रकम् ।।**

(का.आ.,क्रि.पा.,८.५७)

(हे कम्बलाश्वतरयोः गीतस्याऽकर्णनतत्पर ! इदानीमहं भवतः विचित्रचरित्रवर्णनात्मकं गीतं श्रावयामि।)

**३५. वाद्यम् –**

**मुरारिवादितमहामुरजध्वनितोषित ।**
**वाद्यं संश्रावये शम्भो डमरुध्वननप्रिय।।**

(का.आ.,क्रि.पा.,८.५८)

(हे मुरारिणा वादितेन महामृदङ्गध्वनिना तोषित ! हे शम्भो ! हे डमरुवादनप्रिय ! वाद्यं संश्रावयामि।)

**३६. नृत्तम् –**

**निजानन्दातिरेकोत्थमहाताण्डवपण्डित ।**
**नृत्तं विरंचयाम्यद्य महानटविलोकय ।।**

(का.आ.,क्रि.पा.,८.५९)

(हे आत्मानन्दस्यातिरेकेणोत्पन्ने महाताण्डवनर्तने प्रवीण ! हे महानट! अद्याहं नृत्यं करोमि पश्य ।)

३७. प्रदक्षिणम् –

**प्रदक्षिणक्रियाशक्तब्रह्मादिसुरसेवित ।**
**प्रदक्षिणत्रयं कुर्वे गृहण करुणानिधे ।।**

(का.आ.,क्रि.पा.,८.६१)

(हे प्रदक्षिणक्रियायां निमग्नैः ब्रह्मादिदेवैः सेवित ! हे करुणासिन्धो ! त्रिवारं प्रदक्षिणं करोमि तत् स्वीकुरु।)

३८. नमस्कारः –

**नमो नमो भूभृदपत्यजानये नमो नमो भस्मितचित्तयोनये ।।**
**नमो नमः शिक्षितभानुसूनवे नमो नमो भूषितशीतभानवे ।।**

(का.आ.,क्रि.पा.,८.६२)

(पार्वतीपतये नमः, दग्धकामाय नमः, शिक्षितयमाय नमः । चन्द्रशेखराय नमः।)

३९. स्तुतिसमर्पणम् –

**ब्रह्मणां ब्रह्मणे तुभ्यं रक्षितॄणां च रक्षिणे ।**
**हर्तॄणामपि संहर्त्रे देवदेवाय ते नमः।।**

(का.आ.,क्रि.पा.,८.६३)

(सृष्टिकर्तॄणामपि सृष्टिकर्त्रे, रक्षकाणामपि रक्षकाय, संहारकाणामपि संहारकाय, देवानां देवाय ते नमः ।)



४०. धूपसंवीजनम् –

**महास्मशानदहनधूमधूपावृताङ्गक ।**
**धूपसंवीजनं शम्भो गृह्यतां भक्तवत्सल ।।**

(का.आ.,क्रि.पा.,८.६४)

(हे मणिकर्णिकायां ज्वलदग्नेः प्रसार्यमाणेन धूमेनाऽवृतशरीर ! हे शम्भो ! हे भक्तवत्सल ! धूपं संवीजयामि, स्वीकुरु।)

**४१. महानीराजनम् –**

**माङ्गल्यहेतवे सर्वमङ्गलालिङ्गितात्मने ।**

**मङ्गलार्थाभिधानाय महादेवाय मङ्गलम् ।।**

**इष्टलिङ्गस्वरूपायाभिष्टदायास्तु मङ्गलम् ।।**

**प्राणेषु च मनोमध्ये ज्योतिर्लिङ्गस्वरूपिणे ।**

**प्राणग्रन्थिस्वरूपाय प्राणलिङ्गाय मङ्गलम् ।।**

**भावग्राह्याय पूर्णाय भावाभावैकहेतवे ।**

**कलासर्गकृते तुभ्यं भावलिङ्गाय मङ्गलम् ।।**

(का.आ.,क्रि.पा.,८.६६–६८)

(मङ्गलकारणाय, सर्वमङ्गलैः आलङ्गितात्मने, मङ्गलार्थकशब्दवाच्याय (शिव इति नामधेययुक्ताय), देवदेवाय, इष्टलिङ्गस्वरूपाय, अभीष्टप्रदायकाय, प्राणेषु मनसि च ज्योतिर्लिङ्गस्वरूपाय, प्राणग्रन्थिस्वरूपाय, प्राणलिङ्गाय, भावग्राह्याय, पूर्णाय, भावाभावयोरैकैककारणाय, कलासृष्टिहेतवे, भावलिङ्गाय, तुभ्यंइष्ट–प्राण–भावात्मकाय मङ्गलम्।)

**४२. प्रार्थना** । तत्र मन्त्रः –

**याचेऽहं याचेऽहं वचसि सततं नाम रुचिरम् ।**

**याचेऽहं याचेऽहं मवसि सततं भावरचनाम् ।**

**याचेऽहं याचेऽहं शिव तव पादाम्बोजभक्तिम् ।**

**याचेऽहं याचेऽहं पुनरपि च तामेव सततम् ।।**

**नाधिकं मुक्तसंप्राप्यमशोकमचलं सुखम् ।**

**त्वत्पदं देहि मे शीघ्रं न जाये प्रार्थ्यमुत्तमम् ।।**

(का.आ.,क्रि.पा.,८.६९–७०)

(वचसा सदा स्वादु नाम प्रार्थये । मनसा निरन्तरं शिवविषयक-भावरचनां प्रार्थये । हे शिव, तव चरणारविन्दभक्तिं प्रार्थये । पुनः पुनः तामेव

भक्तिं प्रार्थये । नाहमधिकं प्रार्थयामि । केवलमहं शोकरहितौ अचलौ सुखस्वरूपौ च तव चरणौ अनुगृह्णातु ।)

४३. **विज्ञापना** । तत्र मन्त्रः –

**भृत्यापराधा नमसा शाम्यन्तीति नयेन वै ।**

**नमस्येऽतोऽपराधान्मे क्षमस्व करुणानिधे ।।**

(का.आ.,क्रि.पा.,८.७१)

(नमस्कारेण सेवकस्यापराधाः शान्ततां प्राप्नुवन्तीति न्यायेनाहं नमस्करोमि । हे करुणासागर ! अस्मदपराधान् क्षमस्व।)

४४. **परिषेचनम्**। तत्र मन्त्रः –

**देवस्य सवितुर्मध्ये यो मार्गो नो धियः क्रमात् ।**

**प्रचोदयात् तद्वरेण्यं शरण्यं समुपास्महे ।।**

(का.आ.,क्रि.पा.,८.७२)

(सवितृदेवतामध्ये स्थितं तेजः अस्मदीयं बुद्धिं प्रेरयतु । तं वरेण्यं शरण्यं च शिवं उपास्महे ।)

४५. **षड्लिङ्गार्पणम्** । तत्र मन्त्रः –

परिषेचनानन्तरं नैवेद्यं आचारादिषड्लिङ्गेभ्यः समर्पयेत् । षड्लिङ्गार्पणविषये पश्यत का.आ.,क्रि.पा., ७.६०–६६.

(पश्यत – अर्पणम्)

४६. **आनन्दाख्यं नीराजनम्**–

**अवाङ्मानससंवेद्यानन्दबोधसुधाम्बुधे ।**

**नीराजनं गृहणेदमानन्दाख्यं सदाशिव।।**

(का.आ.,क्रि.पा.,८.७४)

(वाचा वा मनसा वा अग्राह्यं आनन्दज्ञानमेव स्वरूपभूतामृतसागर! इदं आनन्दाख्यंनीराजनम्, हे सदाशिव स्वीकुरु।)

४७. **ताम्बूलसमर्पणम्** । तत्र मन्त्रः ।

**गुणत्रयक्रियादूर गुणत्रयसमन्वित ।**
**गृहाणेदं सकर्पूरं ताम्बूलं तापसार्चित।।**

(का.आ.,क्रि.पा.,८.७५)

(हे सत्त्वरजस्तमोगुणानां परिणामाद् दूरस्थित ! हे तापसैः पूजित! हे शिव, कर्पूरसहितं ताम्बूलं स्वीकुरु।)

४८. **ताम्बूलनीराजनम्**। तत्र मन्त्रः –

**अम्बा कराम्बुजानीतताम्बूलग्रहणोत्सुकः ।**
**नीराजनं गृहाणेश ताम्बूलाख्यं सदाशिव।।**

(का.आ.,क्रि.पा.,८.७६)

(हे पार्वतीकरकमलेनानीत! ताम्बूलग्रहणासक्त ! हे सदाशिव ! ताम्बूलाख्यं नीराजनं स्वीकुरु ।)

४९. **पुष्पाञ्जलिसमर्पणम्** । तत्र मन्त्रः ।

**विष्णवादिविबुधानन्तपुष्पाञ्जलिसमर्पित ।**
**पुष्पाञ्जलिं गृहाणेश पुष्पायुधनिसूदन ।।**

(का.आ.,क्रि.पा.,८.७७)

(हे विष्णु–ब्रह्मादिदेवैः दत्तया पुष्पाञ्जलिना समर्चित ! हे मन्मथसंहारक ! हे ईश ! पुष्पाञ्जलिं स्वीकुरु।)

५०. **असंख्याख्यं नीराजनम्** । तत्र मन्त्रः –

**असंख्येयसहस्रश्रीरुद्ररुपावृताखिल।**
**नीराजनं गृहाणेदमसंख्यातं सदाशिव ।।**

(का.आ.,क्रि.पा.,८.७८)

(हे अगणितसहस्रश्रीरुद्ररूपेणावृतसर्वलोक ! हे सदाशिव ! असंख्यातं नीराजनं स्वीकुरु।)

५१. **वस्त्रसंवेष्टनम्** । तत्र मन्त्रः –

**तन्तुना पटवन्नैजरूपेणावृतविश्वक ।**

**वस्त्रेण वेष्टयामीष्टलिङ्गरूप नमोऽस्तुते ।।**

(का.आ.,क्रि.पा.,८.७९)

(हे तन्तुभिर्पटवत् स्वस्वरूपेण व्याप्तविश्वक ! हे इष्टलिङ्गरूप ! वस्त्रेण वेष्टयामि, ते नमस्कारोऽस्तु ।)

५२. **सज्जिकायां न्यासः** । तत्र मन्त्रः –

**सद्भक्तहृदयावास जगदावास शाश्वत ।**

**निवेशयामि हृदये सुखं वस सतीसख ।।**

(का.आ.,क्रि.पा.,८.८०)

(हे सद्भक्तानां हृदयावास ! हे जगदावास ! हे शाश्वत ! हे पार्वतीपते ! हृदये भवन्तं निवेशयामि, सुखेन वस।)

## तापत्रयम्

त्रिविधः तापः । कर्मवशात् तापत्रयेण जीवः सन्दह्यते । आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं चेति तापत्रयम् । दुःखत्रयमित्यपि कथ्यते ।

**भूत्वा कर्मवशाज्जन्तुर्ब्राह्मणादिषु जातिषु ।**

**तापत्रयमहावह्निसन्तापाद् दह्यते भृशम् ।।**

**समस्तलोकसन्दाहतापत्रयमहानलः ।**

**आध्यात्मिकं तु प्रथमं द्वितीयं चाधिभौतिकम्।**

**आधिदैविकमन्यच्च दुःखत्रयमिदं स्मृतम् ।।**

(सि.शि., ५.६५; ४.४९; ५.६७)

(पश्यत – आधिदैविकम् – आधिभौतिकम् – आध्यात्मिकं च)

## तामस अहङ्कारः

अहङ्कारभेदः । सत्विकः, राजसः, तामस इति त्रिविधाहङ्कारेष्वन्यतमः। बुद्धितत्त्वजन्यः, तन्मात्रा पञ्चकस्य जनकः ।

**एतेषु बुद्धितत्त्वात् स्यादहङ्कारस्त्रिरूपवान् ।।**

**....... सात्विको राजसश्चेति भेदतः ।**

**तामसादपि तन्मात्रपञ्चकस्य समुद्भवः ।।**

(शि.त.र.,भा-३, ९.३.१८-२०)

## तामसनिरसनस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतशरणस्थलस्य चतुर्भेदेष्वन्यतमम् । शिवासक्तो भूत्वा परानन्दानुभवे मग्नः गुरुकल्पः तमोभावान् निरस्य तामसनिरासकः भवति । तत्सम्बन्धिस्थलं तामसनिरसनस्थलम्।

**शिवासक्तपरानन्दमोदिना गुरुणा यतः ।**

**निरस्यन्ते तमोभावाः स तामसनिरासकः ।।**

(सि. शि., १३.३,१३)

## तारः = तारम् = तारकः

प्रणवः । ॐकारः

**तारपूर्वेणमूलेन शिवायेति समर्पयेत् ।**

**तारेण वक्षसि शिवे मूलेनोदरनाभिके ।**

(पार.आ., ४.७९, ५.२३)

सर्वेभ्यो दुःखभयेभ्यः सन्तारयतीति तारणात् तारः ।

**प्राणान् सर्वान् परमात्मनि प्रणामयतीत्येतस्मात् प्रणवः ।**

**सकृदुच्छारितमात्रेणोर्ध्वमुन्नामयतीत्योङ्कारः ।।**

(अथ. शिखा., २.१; १.१०)

## तारकम्

१. ॐकारः
(पश्यत तारम्)

२. तारकब्रह्म ।
**तारकब्रह्मणे तुभ्यमाषाढाय महस्पते ।**
(पार.आ., २१.८१)

३. भस्मभेदः । द्वादश भस्मसु एकतमम् । (स्कन्दपुराणोक्तदिशा)
**अक्षरं तारकं भस्म द्वादशैतानि भस्मनः ।**
**पुण्यानि नामधेयानि ....... ।।**
(वी.ध.शि.,पृ.१२३)

(पश्यत – भस्मभेदः)

## तारकयोगः

राजयोगस्य त्रिविधभेदेष्वेकः । बहिर्मुद्राभिरिष्टवस्तुसाक्षात्कारः तारकयोगः । चक्षुर्मनःप्राणानां बाह्यप्रवृत्तिं निरुध्य तेषां स्थिरीकरणं बहिर्मुद्रा। ततः बाह्यमध्यान्तर्लक्ष्येषु इष्टवस्तुसाक्षात्कारः तारकयोगः । बहिर्मुद्रापरिज्ञानाद्योगस्तारक उच्यते । इष्टवस्तुसाक्षात्कारोऽयं गुरुशिष्ययोः भवाब्धेस्तारकः ।

**तारणाच्च गुरुशिष्ययोर्द्वयोस्तारकोऽयमिति योगसंज्ञकः ।**
**तारकं भवमहाब्धितारकं तत्त्वमेव परिशीलनं कुरु ।।**
(शि.यो. प्र.,४.५०)

## तितिक्षा

शमः, दमः, सन्तोषः, तितिक्षा, श्रद्धा, समादानं चेति षट्सु एकतमा। आत्मसाक्षात्कारसाधनान्यतमम् इति यावत् ।

**शीतोष्णादिद्वन्द्वसहनेच्छारूपा तितिक्षा ।**
(वी.आ.चं., पृ–४)

## तिरोधानार्घ्यम्

अर्घ्यप्रभेदः । सामान्यार्घ्यम्, विशेषार्घ्यम्, तिरोधानार्घ्यम् इति अर्घ्यत्रैविध्यम् । देवतापूजानन्तरं गन्धपुष्पादिविसर्जने दीयमानमर्घ्यं तिरोधानार्घ्यम् ।

**तिरोधानार्घ्यमुदितं विसर्जनविधानकम् ।**

(क्रि.सा., भा-३, पृ.४)

## तिरोभावः = तिरोधानम्

परमात्मनः पञ्चकृत्यान्यतमम् । जीवानां निजस्वरूपाच्छादनम् ।

**तिरोभावोऽनिले तद्वदनुग्रह इहाम्बरे ।।**

(क्रि.सा.,भा-३, पृ.७७)

**जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः ।**
**कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि ।।**

(मृ.आ.,२.३)

## तीर्थः = तीर्थम्

गुरुलिङ्गजङ्गमानां पादोदकम्। पवित्रं जलं । तच्च चिद्रसम्, पूर्णम्, नित्यम्, चित्प्रकाशम्, परानन्दम्, अखण्डम् इति षड्विधलक्षणयुतम्।

**पादतीर्थं त्रिधा शंभोर्गुरुजङ्गमयोरपि ।**
**पादतीर्थं सदा पेयं भवबन्धमुमुक्षुभिः ।**

(चं.आ., क्रि.पा.,५.५-६)

**चिद्रसं पूर्णनित्ये च चित्प्रकाशं मम प्रिये ।**
**परानन्दमखण्डत्वं षड्विधं तीर्थलक्षणम् ।।**

(शि.त.र.,भा-१, ३.२६-२७)

(पश्यत - पादोदकम्)

## तीव्रदीक्षा

दीक्षाभेदः । तीव्रा, तीव्रतरा इति शाम्भवीदीक्षायाः द्विविध-प्रभेदयोरन्यतरः। जीवत्काले मोक्षदायिनी दीक्षा ।

**सा दीक्षा शाम्भवी ज्ञेया स पुनर्भिद्यते द्विधा ।**

**तीव्रातितीव्रतरा चेति गुरुमार्गोक्तभेदतः।।**

**तीव्रा तु जीवतोऽत्यन्तं पुंसः पाशविशोधिका ।।**

(वी.ध.शि., पृ.१९१)

(पश्यत – शाम्भवी दीक्षा)

## तीव्रतरदीक्षा

दीक्षाभेदः । तीव्रा, तीव्रतरा इति शाम्भवीदीक्षायाः द्विविधप्रभेद-योरन्यतरः । सद्यः मोक्षदायिनी दीक्षा ।

**यया स्यान्निर्वृतिस्सद्यश्शैवी तीव्रतरा मता ।**

(वी.ध.शि., पृ.१९१)

(पश्यत – शाम्भवी दीक्षा)

## तुरीया

जाग्रत्,स्वप्नः, सुषुप्तिः, तुरीया (तुर्या), (तुर्यातीता) तुरीयातीता – इति पञ्चविधावस्थासु चतुर्थी अवस्था । रागमायादीनां विलीनस्थितिः ।

**रागमायकलाश्चाऽपि विसृजेच्च तुरीयके ।**

(वि.ध.शि.,४.,पृ.२५३)

(पश्यत – अवस्था)

## तुरीयातीता

जाग्रत्, स्वप्नः, सुषुप्तिः, तुरीयातीता (तुर्यातीता) इति पञ्चविधाव-स्थास्वन्यतमा । तत्र च पञ्चमी च अवस्था । परे तत्त्वे मनसः विलीनस्थितिः।

**तुर्यातीते परे तत्त्वे मनसो विलयो भवेत् ।।**

(वी.ध.शि.,४, पृ.१५३)

(पश्यत – अवस्था)

## तुर्यातीतपदम्

वाङ्मनसोरध्वनो दूरम्, अर्थात् स्तुतिध्यानयोरविषयम् तत् तुर्यातीतपदम् । अस्य तुर्यातीतस्थानमित्यपि नाम । तत् पदं अनुप्रविष्ठः शिवयोगी पुनः विश्वं न पश्यति । चिदानन्दस्वरूपे शिवे सन्दृष्टे सति सः शिवयोगी निजस्वरूपे स्थितः स्वातिरिक्तं रूपमन्यत् न पश्यति । नान्यत् जानाति, नान्यत् शृणोति। मलशक्तिक्षयवशात् मायिकरूपादिदर्शनं शिवयोगिनो नास्तीति भावः ।

**तुर्यातीतपदं यत्तद्दूरं वाङ्मनसाध्वनः ।**
**अनुप्रविश्य तद्योगी न भूयो विश्वमीक्षते ।।**
**नान्यत् पश्यति योगीन्द्रो नान्यज्जानाति किञ्चन ।**
**नान्यच्छृणोति सन्दृष्टे चिदानन्दमये शिवे ।।**

(सि.शि.,२०.२६-२७)

## तृणशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडशशुद्धिष्वेकतमा । भक्तैः परिग्रहणं तृणशुद्धिः ।

**तृणादिकं परिग्राह्यं तृणशुद्धिरितीरिता ।**

(चं.आ.,क्रि.पा.,९.३७)

(पश्यत – षोडशशुद्धयः)

## तृप्तिः

परमात्मनोऽङ्गविशेषः । सर्वज्ञता, तृप्तिः, अनादिबोधः, स्वतन्त्रता, अलुप्तशक्तिः, अनन्तशक्ति इति परमात्मनः षडङ्गेष्वेकम् ।

**सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रतानित्यमलुप्तशक्तिः ।**

**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।।**

(पार.आ.,६.३३ ; अ. सू., ४.२०)

**एतदङ्गमेव माहेश्वरस्थलसंज्ञकमित्युक्तम् ।**

**यन्महेश्वरकं नाम सा तृप्तिर्मम शाङ्करी ।**

(पार.आ.,६.३४)

## तृप्तिलिङ्गम्

त्रिविधलिङ्गेषु एकतमं भावलिङ्गम् । भावलिङ्गमेव परात्परलिङ्गं तृप्तिलिङ्गं च।

**परात्परं तु यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते ।**

(सि. शि., ६.५०)

## तैजसः

जीवविशेषः । विश्वः, तैजसः, प्राज्ञ इति त्रिविधजीवेष्वन्यतमः । सूक्ष्मशरीरी स्वप्नावस्थाविशिष्टः जीवः । एष एव भोगाङ्गमिति कथ्यते वीरशैवशास्त्रेषु ।

**........ भोगाङ्गं तैजसो भवेत् ।**

**तैजसः प्राणलिङ्गी स्यात् प्रसादीति तथैव च ।**

(अ.सू.,४.१०, १६)

## तैजसपञ्चकम्

१. अग्निसम्बद्धानि पञ्चतत्त्वानि। इमानि च षट्त्रिंशत्तत्त्वेषु अन्तर्गतेषु पञ्चविंशतितत्त्वेषु अन्यतमभूतानि पञ्चतत्त्वानि। अग्नितत्त्वे इतरतत्त्व-मेलनजातानि, इतरतत्त्वेषु अग्नितत्त्वमेलनजातानि इति तानि द्विधा ।

अग्नितत्त्वे इतरतत्त्वमेलनजातानि श्रोत्रं, चर्म, चक्षुः, जिह्वा, घ्राणं च ।

**तेजस्तेजोंऽशतश्चक्षुस्तेजोव्योमांशतः श्रुतिः ।**

**तेजोवाय्वंशतस्त्वक्स्याज्जिह्वा तेजो जलांशतः ।**

**तेजो भूम्यंशतो घ्राणमिति तैजसपञ्चकम् ।।**

(शि.त.र.,भा–१, १.७.५१–५२)

२. इतरतत्त्वेषु नभोमरूज्जलभूमिषु तेजस्तत्त्वाशंमेलनाज्जातानि – बुद्धिः, उदानः, चक्षुः, रूपम्, पादश्च ।

**नभोबुद्धिरूदानश्च मरूद्गौर्वह्निरेव च ।**

**पाथो रूपं पादो वह्नेर्यत्तत्त्वपञ्चकम् ।।**

(शि.यो.प्र.,४.२२)

(पश्यत – पञ्चीकरणम् ।)

## तैजसाहङ्कारः

सात्विकाहङ्कार एव तैजसाहङ्कारः ।

**सत्त्वेनोत्कृष्टभावो यः स तैजस इहोच्यते ।।**

**तैजसादप्यहङ्कारात् .....................।**

(शि.त.र.,भा–१, १.७.४०–४१)

(पश्यत – अहङ्कारः)

## त्यागाङ्गम्

१. अङ्गस्थलभेदः ।

२. योगङ्गादि त्रिविधाङ्गेष्वन्यतमम् । तत्र तृतीयम् । तदेव स्थूलशरीरम् ।

**योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं तु द्वितीयकम् ।।**

**त्यागाङ्गं तु तृतीयं स्यादेवमेव त्रिधा भवेत् ।**

(अ.सू.,४.५–६ ; क्रि.सा., भा–३,२४, पृ.१०६)

३. तच्च माहेश्वरस्थलम्, भक्तस्थलमिति उभयस्थलात्मकम् ।

**माहेश्वरस्थलं भक्तस्थलमित्युभयं स्थलम् ।।**

**त्यागाङ्गं भवतीत्येव प्रोच्यते तत्वदर्शिभिः ।**

(क्रि.सा.,भा–३, २४, पृ.१०६ ; अ.सू., ४.१३)

४. स्थूलशरीरम् ।

**त्यागङ्गं स्थूलमित्युक्तं .......।**

(अ.सू., ४.८; अ.वी.सा.सं., १.१५९)

५. संसारभोगत्यागः । संसारभ्रान्तित्यागकारणात् त्यागाङ्गमित्यन्वर्थं नाम ।

**संसारभोग (भ्रान्ति) संत्याग त्यागाङ्गमिति पठ्यते ।**

(अ.वी.सा.सं., १.१५८, पृ.२३)

६. जाग्रदवस्थाविशिष्टम् ।

**जाग्रदित्युदितावस्था त्यागङ्गमिति लक्ष्यते ।**

(अ.सू., ४.९)

७. विश्वजीवः ।

**त्यागङ्गं विश्व एव स्यात् ........... ।।**

(अ.सू., ४.१०)

(पश्यत – अङ्गस्थलम्)

## त्याज्याणवम्

आणवमलभेदः । अनात्मन्यात्मताबुद्धिः ।

**अनात्मन्यात्मताबुद्धिः त्याज्याणवमिति स्मृतम् ।।**

(वी.आ.उ.,१.१८, पृ.५)

(पश्यत – आणवम्)

## त्रयोदशमुखरुद्राक्षः ।

रुद्राक्षभेदः । त्रयोदशमुखविशिष्टः रुद्राक्षः । एतद्धारणात् धर्ता सर्वकामान् प्राप्नोति वामदेव एव भवति च । तस्य मात्रादयः पापकोटिभ्यः मुच्यन्ते ।

**स एव वामदेवः स्यात्सर्वकामप्रदायकः ।**
**माता पिता ततो बन्धुः भ्रातरोऽथ तथाऽऽत्मनः ।।**
**मुच्यन्ते पापकोटिभ्यः त्रयोदशमुखस्य तु ।**

(शि.त.र.,भा–३, ८.६.३१–३२)

**षोडश षोडश त्रयोदशमुखान् रुद्राक्षान् बाह्वोः धारयेत् ।**
**त्रयोदशमुखान् बाह्वोर्धरेत् षोडश षोडश ।।**

(सि.शि.,७.५७)

त्रयोदशमुखरुद्राक्षधारणेन इच्छापूरणं शुद्धिं शुभं च विन्दते जीवः ।

**त्रयोदशमुखं चाक्षं कामदं शुद्धिदं शुभम् ।**
**तस्य धारणमात्रेण कामदेवः प्रसीदति ।।**

(चं.आ.,क्रि.पा.,७.३७)

## त्रिकरणम्

त्रयाणां करणानां समाहारः त्रिकरणम् । कायः, वाक्, मनः – इति त्रीणि करणानि साधनानि इति यावत् । करणशब्दः इन्द्रियशब्देन क्वचित् पर्यायतया स्वीक्रियते । कायार्पणस्थलम्, करणार्पणस्थलम्, भावार्पणस्थलमिति त्रिषु प्रसादिस्थलसंबद्धेषु लिङ्गस्थलेषु क्रमेण देहाभिमानत्यागः कायार्पणमिति, इन्द्रियाणां परात्परे आसञ्जनं करणार्पणमिति, मनोभावानां समर्पणं भावार्पणमिति त्रिकरणार्पणं विव्रियते।

**शिवस्य पररूपस्य सर्वानुग्राहिणोऽर्चने ।**
**त्यागो देहाभिमानस्य कायार्पितमुदाहृतम् ।।**
**यदा योगी निजं देहं शिवाय विनिवेदयेत् ।**
**तदा भवति तद्रूपं शिवरूपं न संशयः ।।**
**आसञ्जनं समस्तानां करणानां परात्परे**
**शिवे यत्तदिदं प्रोक्तं करणार्पितमागमे ।।**

**यद्यत् करणमालम्ब्य भुङ्क्ते विषयजं सुखम् ।**

**तत्तच्छिवे समर्प्यैष करणार्पक उच्यते ।।**

**शिवे निश्चलभावेन भावानां यत्समर्पणम् ।**

**भावार्पितमिदं प्रोक्तं शिवसद्भाववेदिभिः ।।**

(सि.शि.,१७.३४-३५, ३९-४०, ५०)

## त्रिकूटम्

इडा-पिङ्गला-सुषुम्ना चेति वामदक्षिणमध्यनाडीनां सम्बन्धात् यत् त्रिवेणीयोगस्थलं भवति तदेव त्रिकूटम् इत्युच्यते । देहस्यान्तः वामभागस्था इडा एव चन्द्रनाडी । सा एव यमुनानद्याः (सूर्यसुतायाः) सङ्केतः। दक्षिणभागस्था पिङ्गला एव सूर्यनाडी । सा एव गङ्गानदी (विष्णुपदी) इति कथ्यते।मध्यमा च सुषुम्ना अग्निनाडीति कथ्यते । सा एव योनिरिति सरस्वतीनदी इति स्मर्यते । तासां नाडीनां सम्बन्ध एव त्रिवेणीयोगः । स एव त्रिकूटयोगः । अस्य त्रिकूटस्य त्रिवेणीयोगस्थलं त्रिवेणीसङ्गमस्थलं चेत्यपि नामान्तरे ।

**इडा स्मृतेन्दुरिति सूर्यसुतेतियोगात्**

**सा पिङ्गलेनेति विष्णुपदीति तासाम् ।**

**सा मध्यमाग्निरिति योनिरिति त्रिवेणी**

**योगस्थलं तदिदमेव भवेत् त्रिकूटम् ।।**

(शि.यो.प्र.,२.३५)

(पश्यत - शृङ्गाटकम्, चतुःपीठम्, त्रिवेणीयोगस्थलम्, त्रिवेणीसङ्गमस्थलम्)

## त्रिणेत्रः

त्रीणि नेत्राणि यस्य सः । शिवः ।

**पुरा त्रिपुरसंहारे त्रिणेत्रो जगतां पतिः ।।**

(वी.प्र., पृ.९१, श्लो.१६)

**प्रत्याननं विशेषेण त्रिणेत्रं चन्द्रभूषणम् ।।**

(सू.आ.,क्रि.पा.,१.४६)

## त्रिपुण्ड्रम्

तिसृभिः मध्याङ्गुलीभिः शरीरस्य विविधेषु स्थानेषु भस्मनो धारणं त्रिपुण्ड्रम्। त्रिभिः पुण्ड्रैर्युक्तुत्वात् त्रिपुण्ड्रम् । तद् ब्रह्मविष्णुशिवात्मकम् ।

**त्रिपुण्ड्रं कारयेद्धीमान् ब्रह्मविष्णुशिवात्मकम् ।**

**मध्याङ्गुलीभिरादाय तिसृभिर्मूलमन्त्रितम् ।।**

(बृ.जा.उ., ४.१४) (चं, आ., क्रि.पा., ६.४३)

तत्र एकैकं पुण्ड्रम् एकैकस्य वेदस्य प्रतीकम् ।

**ऊर्ध्वपुण्ड्रं भवेत् साम मध्यपुण्ड्रं यजूंषि च ।**

**अधःपुण्ड्रमृचः साक्षात् तस्मात् पुण्ड्रं त्रियायुषम् ।।**

(चं.आ., क्रि. पा., ६.५८)

अत्रत्यानि त्रिणि पुण्ड्राणि त्रिसङ्ख्यया प्रथितानां गुण –आत्मतत्त्व – तनु – दृक् – काल – मूर्ति – मात्राणां प्रतीकानि ।

श्रुतौ – (प्रथमा रेखा)

**आललाटादाचक्षुषो भ्रूमध्यतो या चास्य प्रथमरेखा साऽहवनीया अकारो रजो भूर्लोकश्चात्मा क्रियाशक्तिः ऋग्वेदः प्रातःसवनं रुद्रो देवता ।**

(द्वितीया रेखा)

**या चास्य द्वितीया रेखा सा गार्हपत्या । उकारसत्वमन्तरिक्षमन्तारात्मैच्छाशक्तिः यजुर्वेदो माध्यन्दिनसवनं महेश्वरो देवता ।**

(तृतीया रेखा)

**या चास्यास्तृतीया रेखा सा दक्षिणाग्निर्मकारस्तमो द्यौः परमात्मा ज्ञानशक्तिः सामवेदः सायंसवनं सदाशिवो देवता ।।**

(जा.उ.,२१)

स्कान्द पुराणे –

**त्रिपुण्ड्रत्रिगुणात्मा त्रितत्त्वत्रितनुत्रिदृक् ।**
**त्रिकालश्च त्रिमूर्तिश्च त्रिमात्रा च त्रिधा त्रिधा ।।**

(अ.वी.सा.सं., भा–२, १९.१७)

**भस्म सजलं ध्रियते ।**

(जा.उ., २२, २३; का.रु.उ., ६.७)

**त्रिपुण्ड्रं धारयेन्नित्यं भस्मना सजलेन च ।**

(सि.शि., ७.३१)

उद्धूलनादपि त्रिपुण्ड्रं श्रेष्ठम् ।
**सर्वाङ्गोद्धूलनं चापि न समानं त्रिपुण्ड्रकैः ।।**

(सि. शि., ७.३०)

## त्रिपुण्ड्रधारणम्

मध्याङ्गुलीभिस्त्रिसृभिः धारणम् भस्म।
**त्रिपुण्ड्रं धारयेन्नित्यं ........**

(सि.शि.,७.३१)

(पश्यत – त्रिपुण्ड्रम्)

**त्रिपुण्ड्रधारणं महत्फलदायकम् । तच्च साक्षाच्छिवधारणम् । "तत्र या चास्य प्रथमारेखा" इत्यादिना त्रिरेखाणां महेश्वररुद्र–सदाशिवात्मकत्वं प्रतिपाद्य धारणविधानेन शिवस्वरूपत्वेन तासामेव धारणत्वे साक्षाच्छिवधारणस्य कैमुतिकन्याय सिद्धत्वात् ।**

(लिं.धा.चं., पृ.१६७)

भस्मत्रिपुण्ड्रधारी चेन्मुच्यते सर्वकिल्बिषैः ।।

(सि.शि.,७.४४)

कूर्मपुराणे-

एतानि तानि शिवमन्त्रपवित्रितानि
भस्मानि कामदहनाङ्गविभूषितानि ।
त्रैपुण्ड्रकानि रचितानि ललाटपट्टे
लुम्पन्ति दैवलिखितानि दुरक्षराणी ।।

(अ.वी.सा.सं., भा-२,१९.१३)

भीमागमे –

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ।
धृतत्रिपुण्ड्रपूतात्मा मृत्यून् जयति मानवः ।।

(अ.वी.सा.सं., भा-२,१९.४१)

त्रिपुण्ड्रमुक्तस्थानेषु दद्यात्सजलभस्मना ।।
शुद्धशीतजलेनैव भस्मना त्रिपुण्ड्रकम् ।
यो धारयेत्परं ब्रह्म स प्राप्नोति न संशयः ।।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ।
महापातकसंघाततमसश्चण्डभास्करः ।।

(शि.त.र.,भा-३, ८.५.८५-८६, ९६)

त्रिपुण्ड्रं यो न धरति सः पतितः तस्य सर्वमपि कर्म व्यर्थम् ।
उद्धूलनं त्रिपुण्ड्रं च मनसापि न लङ्घयेत् ।
श्रुत्या विधीयते तस्मात् तत्त्यागी पतितो भवेत् ।

(लिं.धा.चं., पृ.९५-९६, श्लो-६)

**बोधायनस्मृतौ –**

**वृथा वेदाः वृथा यज्ञाः वृथा दानं वृथा तपः ।**

**वृथा व्रतोपवासौ तु त्रिपुण्ड्रं यो न धारयेत् ।।**

(अ.वी.सा.सं., १९.३९)

**त्रिपुण्ड्रधारणविधिः**

वामहस्ततले भस्म संस्थाप्य दक्षिणेन च पाणिना तदाच्छाद्य, अग्निरित्यादिमन्त्रेण अभिमन्त्र्य त्रियायुष–त्रियम्बक–प्रणव–पञ्चाक्षरमन्त्रैः सह मूर्धादिषु उक्तस्थानेषु तद्धारयेत् ।

**वामहस्ततले भस्म क्षिप्त्वाऽच्छाद्यान्यपाणिना ।**

**अग्निरित्यादिमन्त्रेण स्पृशन् सप्ताभिमन्त्र्य च ।।**

**ततोऽष्टकृत्वो मूलेन चाभिमन्त्र्यावकुण्ठ्य च ।**

**त्रिपुण्ड्रं धोरयेद्धीमान्मूर्धादिककुदन्तकम् ।**

(शि.त.र.,भा–३, ८.५.८०–८१; सि.शि.,७.३४–३५)

**त्रियायुष – त्रियम्बक – प्रणव – पञ्चाक्षरमन्त्रैः (त्रिपुण्ड्रं) धारयेत् । शिरोललाटकण्ठस्कन्धवक्षस्थलेषु त्रियायुषत्रियम्बकैः त्रिस्रो रेखाः कुर्वीत । व्रतमेतत् शाम्भवम् इति श्रुतेः ।**

(सि.शि., तत्त्व.प्र.,७.३३. पृ.१७१ ; शै.र.,७ त्रिपुण्ड्रविधिः)

वेदपारगैः बुधैः त्रियायुषेणमन्त्रेण त्रिपुण्ड्रं धार्यम्, ब्रह्मचारिणा तु मेधावी इत्यादिना मन्त्रेण धार्यम्, गृहस्थः वानप्रस्थश्च त्रियम्बकेन मन्त्रेण धार्यम्, सन्यासिना च त्रिरुक्तेन ॐकारेण धर्तव्यम्, इत्युक्तम् ।

**अग्निरित्यादिभिर्मन्त्रै र्जाबालोपनिषद्गतैः ।**

**सर्वैरुद्धूलनं कार्यं भस्मना सजलेन च ।।**

**त्रियायुषेण मन्त्रेण बुधैस्तिर्यक्त्रिपुण्ड्रकम् ।**

धार्यं सदा दिजश्रेष्ठैर्धार्मिकैर्वेदपारगैः ।।
मेधावीत्यादिना वाऽपि ब्रह्मचारी दिने दिने ।
भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम् ।।
त्रियम्बकेन मन्त्रेण प्रणवेन शिवेन च ।
गृहस्थश्च वनस्थश्च धारयेच्च त्रिपुण्ड्रकम् ।।
ॐकारेण त्रिरुक्तेन सहंसेन त्रिपुण्ड्रकम् ।
धारयेद् भिक्षुको नित्यमित्येतच्छिवशासनम् ।।

(चं.आ.,क्रि.पा.,६.५९-६३)

त्रिपुण्ड्रधारणस्थानानि

त्रिपुण्ड्रधारणस्थलानि विभिन्नसंख्यानि निर्दिष्टानि ।
द्वात्रिंशस्थानके चार्धं षोडषस्थानकेऽपि वा ।
अष्टस्थाने तथा चैव पञ्चस्थानेऽपि योजयेत् ।।

(बृ.जा.उ.,४. १६; चं.आ., क्रि.पा., ६.४४)

१. द्वात्रिंशत्स्थानानि –

उत्तमाङ्गे ललाटे च कर्णयोर्नेत्रयोस्तथा ।
नासावक्त्रे गले चैवमंसद्वयमतः परम् ।
कूर्परे मणिबन्धे च हृदये पार्श्वयोर्द्वयोः ।
नाभौ गुह्यद्वये चैवमूर्वोः स्फिक्बिम्बजानुनी ।।
जङ्घाद्वये च पादौ च द्वात्रिंशत्स्थानमुत्तमम् ।

(बृ.जा.उ., ४.१७-१९ ; चं.आ., क्रि.पा., ६.४५-४६)

एतानि स्थानानि अष्टमूर्तयः, अष्टविद्येशाः, अष्टदिक्पालाः, अष्टवसवश्चेति द्वात्रिंशत् देवतानां सङ्केतभूतानि । अतः तेषां नाममात्रेण त्रिपुण्ड्रं धारयेदिति विधिः ।

**अष्टमूर्त्यष्टविद्येशान् दिक्पालान् वसुभिः सह ।।**

**एतेषां नाममात्रेण त्रिपुण्ड्रं धारयेद्बुधः ।**

(बृ.जा.उ.,४.१९–२१; चं.आ. क्रि.पा.,६.४७)

२. **षोडशस्थानानि –**

**विदध्यात् षोडशस्थाने त्रिपुण्ड्रं तु समाहितः ।।**

**शीर्षके च ललाटे च कण्ठे (कर्णे) चांसद्वये तथा ।**

**कूर्परे मणिबन्धे च हृदये नाभिपार्श्वयोः ।।**

**पृष्ठे चैवं प्रतिस्थानं (प्रतिष्ठानं) जपेत्तत्राधिदेवताः ।**

(बृ.जा.उ., ४.२१–२३, चं. आ. क्रि.पा.,६.४८–४९)

एतानि स्थानानि शिवः, शक्तिः, सादाख्यम्, ईशः, रुद्रः, नासत्यः दस्त्रकः (इति अश्विनौ), वामादि नवशक्तय इति षोडशदेवतानां सङ्केतरूपेण तासां नाममन्त्रैः त्रिपुण्ड्रं धारयेत् ।

**शिवं शक्तिं च सादाख्यमीशं विद्याऽख्यमेव च ।।**

**वामादिनवशक्तीश्च एते षोडश देवताः ।**

**नासत्यो दस्त्रकश्चैव अश्विनौ द्वौ समीरितौ ।।**

(बृ.जा.उ.,४.२३–२४ ; चं.आ.क्रि.पा.,६.५०)

३. **पञ्चदशस्थानानि –**

**स्थानेषु पञ्चदशसु शरीरे साधकोत्तमः ।।**

**उत्तमाङ्गे ललाटे च श्रवणद्वितये तथा ।**

**गले भुजद्वये चैव हृदि नाभौ च पृष्ठके ।।**

**बाहुयुग्मे ककुद्देशे मणिबन्धद्वये तथा ।**

**त्रिपुण्ड्रं भस्मना धार्यं मूलमन्त्रेण साधकैः ।।**

(सि. शि.,७.३१–३३)

४. **अष्टस्थानानि –**

**गुरुस्थानं ललाटं च कर्णद्वयमनन्तरम् ।**

**अंसयुग्मं च हृदयं नाभिरित्यष्टमं भवेत् ।।**

(बृ.जा.उ., ४.२९, चं. आ., क्रि.पा.,६.४४-४५)

तत्रदेवताः ब्रह्मा, सप्तर्षयश्च ।

**ब्रह्म च ऋषयः सप्त देवताश्च प्रकीर्तिताः ।**

(बृ.जा.उ., ४.३०; चं.आ., क्रि.पा., ६.५५)

५. **पञ्चस्थानानि –**

**अथवा मस्तकं बाहू हृदयं नाभिरेव च ।।**

**पञ्चस्थानान्यमून्याहुर्भस्मतत्त्वविदो जनाः ।**

(बृ.जा.उ., ४.३०-३१ ; चं.आ., क्रि.पा.,६.५६)

अत्र सद्योजातादि पञ्चब्रह्माणि देवताः ।

**...... पञ्चब्रह्माणि देवताः ।**

(चं.आ.,क्रि.पा., ६.५६)

## त्रिपुण्ड्ररचना

स्वदक्षिणकरस्य मध्याङ्गुलीत्रयेण षडङ्गुलायतप्रमाणकं भस्मना क्रियमाणं चिह्नं त्रिपुण्ड्रं स्यात् । मध्यमानामिकाभ्याम् अङ्गुलीभ्यां प्रदक्षिणतः, तन्मध्ये अङ्गुष्ठेन अप्रदक्षिणतः रेखारचनापुरस्सरं त्रिपुण्ड्ररचना श्रेष्ठा ।

**मध्याङ्गुलीत्रयेणैव स्वदक्षिणकरस्य तु ।**

**षडङ्गुलायतं मानमपि वालिकमानकम् ।।**

**नेत्रयुग्मप्रमाणेन फाले दध्यात् त्रिपुण्ड्रकम् ।।**

**मध्यमानामिकाङ्गुष्ठै अनुलोमविलोमतः ।**

**धारयेद्यः त्रिपुण्ड्राङ्कं स रुद्रो नात्र संशयः ।।**

(सि.शि., ७.३६-३८)

## त्रिमूर्तयः

सादाख्यजन्यपञ्चविंशतिलीलामूर्तिस्वन्यतमाः, सृष्टिस्थितिलय-कारणभूताः मूर्तयस्त्रिधा । ते च भवमृडहराः ।

**सृष्टिकारणरूपोऽयं भवाख्य इति संस्मृतः ।।**

**रक्षणार्थं मृडाख्यश्च हरः संहारकारणम् ।**

**इति त्रयो मूर्तयश्च समाख्याताः क्रमादिह ।।**

(शि.त.र.,भा-१, १.१.६३-६४)

## त्रियम्बकमन्त्रः

त्रियम्बकः परशिवः । त्र्यम्बकमित्यपि रूपम् । त्रिणेत्रधारी इत्यर्थः। तत्सम्बद्धः मन्त्रः त्रियम्बकमन्त्रः । यथा -

**त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**

**उर्वारुकमिव बन्धनात् मृत्योर्मुक्षीय मामृतात् ।।**

(ऋ.वे.,५.४.३०; शु.य.वे.,मा.सं.,३.६०; तै.सं.,१.८.६.२)

अयमेव मृत्युञ्जयमन्त्र इति कथ्यते । लिङ्गधारणदिविधौ भस्मधारणाद्युपचारेषु चोपयुज्यते ।

**लिङ्गं शुद्धजलैः स्नाप्य शिवपञ्चाक्षरं जपेत् ।**

**निवेद्य भक्तिसंयुक्तो विरक्तो वीरशैवकः ।।**

**त्रियम्बकेण मन्त्रेण धारयेत् भक्तिपूर्वकम् ।**

(पार.आ.,१७.६८, ७१) धारयेत् = करण्डिकायां लिङ्गं स्थापयेत्)

**निधनपतय इति पुष्पाणि च समर्पयेत् ।**

**बिल्वं त्रियम्बकमिति यच्च व्योमेति धूपकम् ।।**

(का.आ.,क्रि.पा.,६.१०)

**त्रियम्बकेण मन्त्रेण प्रणवेन शिवेन च ।**

**गृहस्थश्च वनस्थश्च धारयेच्च त्रिपुण्ड्रकम् ।।**

(चं.आ.,क्रि.पा.,६.६२)

## त्रियायुषमन्त्रः

त्रिपुण्ड्रधारणविधावुपयुज्यमानमन्त्रः । स च,

**त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषम् ।**

**अगस्त्यस्य त्रियायुषं यद्देवानां त्रियायुषम् ।**

**तन्मे अस्तु त्रियायुषम् इति ।**

(शु.य.वे., रुद्रा.,६.७)

## त्रिरेखाः

त्रिपुण्ड्रस्य तिस्रः रेखाः । तासां बहवः संकेताः –

**याऽस्य प्रथमा रेखा स गार्हपत्यश्चाकारो रजः स्वात्मा क्रियाशक्तिः ऋग्वेदः प्रातः सवनं महेश्वरो देवतेति । याऽस्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरात्मा चेच्छा शक्तिः यजुर्वेदो माध्यन्दिनं सवनं सदाशिवो देवतेति । याऽस्य तृतीया रेखा सा आहवनीयो मकारस्तमः परमात्मा ज्ञानशक्तिः सामवेदः तृतीयसवनं महादेवो देवतेति ।।**

(का.रु.उ., ६–८)

(पश्यत – त्रिपुण्ड्रम्, त्रिपुण्ड्रधारणम्)

## त्रिलोचनः

परमेश्वरः । त्रीणि लोचनानि यस्य सः ।

**उमासहायं परमेश्वरं प्रभुं त्रिलोचनम् ।।**

(वी.प्र.,पृ.५, श्लो.५)

**दिव्यमप्राकृतं नित्यं नीलकण्ठं त्रिलोचनम् ।।**

(सि.शि.,२.९)

## त्रिवक्त्रः

१. त्रेतायुगसञ्जातपञ्चाचार्येष्वन्यतमः । कृतयुगे त्र्यक्षर इति, द्वापरे शङ्कुकर्ण इति, कलियुगे एकोरामाराध्य इति च तस्य नाम ।

**त्रेतायां एकवक्त्र, द्विवक्त्र, त्रिवक्त्र, चतुर्वक्त्र, पञ्चवक्त्र इति नामसमेतैस्तैरेव पञ्चाचार्यैः .... ।**

(वी.स.सं., पृ.३)

२. त्रिमुखरूद्राक्षः ।

**त्रिमुखश्चैव रुद्राक्षमग्नित्रयस्वरूपकम् ।**
**तद्धारणाच्च हुतभुक् तस्य तुष्यति नित्यदा ।।**

(रुद्र.जा.उ.,२९)

**द्वित्रिद्वादशवक्त्राणि शिरसि त्रिणि धारयेत् ।**

(सि.शि., ७.५४)

## त्रिविधगुरुलिङ्गम्

भक्तस्थलसम्बद्धेषु लिङ्गस्थलेषु यत् त्रिविधगुरुस्थलं निरूपितं तत्रोक्तं त्रिविधगुरुलिङ्गम् । तत्र दीक्षागुरुलिङ्गम्, शिक्षागुरुलिङ्गम्, ज्ञानगुरुलिङ्गश्चेति गुरुलिङ्गं त्रिविधम् ।

**दीक्षा शिक्षा अनुभावश्च गुरुलिङ्गं त्रिधा भवेत् ।**

(सू.आ.,क्रि.पा., ८.१०)

(अनुभावगुरुलिङ्गमेव ज्ञानगुरुलिङ्गम् ।)

**दीक्षागुरुस्थलं पूर्वं ततः शिक्षागुरुस्थलम् ।**
**प्रज्ञागुरुस्थलं चाथ ... ।।**

(सि.शि.,१५.५)

(पश्यत – गुरुलिङ्गम्)

## त्रिविधचरलिङ्गम्

स्वयं–परं–चरं चेति जङ्गमलिङ्गस्य त्रैविध्यम् ।

**चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते ।**
**स्वयं चरं परं चेति त्रैविध्यं समुपागतम् ।।**

(सू.आ., क्रि.पा., ८.१८; क्रि.सा.,भा–३.२५, पृ.१२०)

**स्वयं परं चरं चेति ..... ।।**

(सि.शि.,१५.६)

(पश्यत – चरलिङ्गस्थलम्)

## त्रिविधजपः

वाचिकजपः, उपांशुजपः, मानसजपश्चेति जपस्त्रिविधः ।

**स जपस्त्रिविधः प्रोक्तो वाचिकोपांशुमानसैः ।**

(म.स्मृ., २.५४ ; सू.आ., क्रि.पा.,३.४१)

**जपस्तु त्रिविधः प्रोक्तो वाचिकोपांशुमानसः ।**

(सि.शि.,८.२७)

**उत्तमो मानसः प्रोक्त उपांशुर्मध्यमस्तथा ।**
**अधमो वाचिकः प्रोक्त इत्येतच्छिवशासनम् ।।**

(चं.आ.,क्रि.पा., ८.५६)

## त्रिविधतत्त्वम्

१. पतिः, पशुः, पाशश्चेति तत्त्वं त्रिविधम् । शिवः पतिः, सर्वे जीवाः पशवः, कर्ममलादिकं पाशाः ।

**ब्रह्मादिस्तम्बपर्यन्तं पशवः परिकीर्तिताः ।**

**शिवः पतिरिति प्रोक्तः पाशः कर्ममलादिकम् ।।**

(सू.आ.,क्रि.पा., ५.२०; चं. आ., क्रि.पा., १.१०-११)

२. भोक्ता, भोज्यम् (भोग्यं), प्रेरयिता चेति वस्तुत्रयमेव तत्त्वत्रयम्, (त्रिविधतत्त्वम्) ।गुणत्रयसम्पर्केण परतत्त्वं वस्तुत्रयस्वरूपं धरते ।

**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।।**

(श्वे.उ.,१.१२)

**गुणत्रयविभेदेन परतत्त्वे चिदात्मनि ।**

**भोक्तृवच्चैवभोज्यत्वं प्रेरकत्वं च कल्पितम् ।।**

(सि.शि.,५.३८)

३. शिवतत्त्व - सदाशिवतत्त्व - महेशतत्त्वमित्येतत् त्रिविधतत्त्वम् ।

**तत्त्वं तु त्रिविधं ज्ञेयं तस्य भेदं शृणुष्व च ।।**

**शिवं सदाशिवं चैव महेशं त्रिविधं स्मृतम् ।**

(शि. त.र.,भा-१, १.६.९-११)

## त्रिविधदानम्

सोपाधिकम्, निरुपाधिकम्, सहजम् इति त्रीणि दानानि । फलापेक्षया दीयमानं दानं सोपाधिकम् । फलापेक्षारहितं ईश्वरार्पणबुद्ध्या दीयमानं दानं निरुपाधिकम् । परिगृहीतृप्रदातृदेयानां शिवत्वं चिन्तयन्, आत्मनः स्वस्य अकर्तृत्वं भावयन्, यत् दानं दत्तं तत् सहजदानम् ।

**दानं च त्रिविधं प्रोक्तं सोपाधिनिरुपाधिकम् ।**
**सहजं चेति सर्वेषां सर्वतन्त्रविशारदैः ।।**
**फलाभिसन्धिसंयुक्तं दानं यद्विहितं भवेत् ।**
**तत्सोपाधिकमाख्यातं मुमुक्षुभिरनादृतम् ।।**
**फलाभिसन्धिनिर्मुक्तम् ईश्वरार्पितकाङ्क्षितम् ।**
**निरुपाधिकमाख्यातं दानं दानविशारदैः ।।**
**आदातृदातृदेयानां शिवभावं विचिन्तयन् ।**
**आत्मनो अकर्तृभावं च यद्दत्तं सहजं भवेत् ।।**

(सि.शि.,९.८०-८३)

## त्रिविधदीक्षाः

वेधादीक्षा, मन्त्रदीक्षा, क्रियादीक्षा इति त्रिविधदीक्षाः । एताश्च त्रिविधलिङ्गानि त्रिविधाङ्गेषु सम्प्रतिष्ठाप्य त्रिविधमलानां नाशिकाः ।

**सा दीक्षा परमा शैवी त्रिधा भवति निर्मला ।**
**एका वेधात्मिका साक्षादन्या मन्त्रात्मिका मता ।।**
**क्रियात्मिका परा काचिदेवमेव त्रिधा भवेत् ।**

(का.आ.,क्रि.पा., १.१३-१४ ; चं.आ.,क्रि.पा., ३.४७)

**सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः ।।**
**वेधारूपा क्रियारूपा मन्त्ररूपा च तापस ।**

(सि.शि.,६.१२-१३)

## त्रिविधद्रव्याणि

आत्मोपभोगार्थं यानि द्रव्याणि सन्ति तानि स्थूलद्रव्यम्, प्रविविक्तद्रव्यम्, आनन्दद्रव्यं चेति त्रिविधानि भवन्ति । तत्र रूपं स्थूलद्रव्यम्। रुचिः प्रविविक्त (सूक्ष्म) द्रव्यम् । तृप्तिरेव आनन्दद्रव्यम् ।

बहिरङ्गार्पणे (स्थूलशरीराय) रूपद्रव्यम्, अन्तरङ्गार्पणे (सूक्ष्मशरीराय) रुचिद्रव्यम्, आत्माङ्गार्पणे (कारणशरीराय) आनन्दद्रव्यम् इति त्रिविधद्रव्याणि । इष्टलिङ्गाय रूपद्रव्यार्पकः विश्वजीवः, प्राणलिङ्गाय रुचिद्रव्यार्पकः तैजसजीवः, भावलिङ्गाय आनन्दार्पकः प्राज्ञजीवश्च ।

**आत्मोपभोगजातानि द्रव्याणि त्रिविधानि हि ।।**
**स्थूलाख्यं प्रविविक्ताख्यमानन्दाख्यमिति त्रिधा ।**
**स्थूलद्रव्यं भवेद्रूपं प्रविविक्तं रुचिर्भवेत् ।।**
**आनन्दस्तु भवेत् तृप्तिरेवमेव पृथक् क्रमात् ।**
**बहिरङ्गार्पणे रूपमन्तरङ्गार्पणे रुचिः ।।**
**आत्मसङ्गमयं साक्षादानन्दार्पणमुच्यते ।**
**आत्माङ्गार्पणमेवात्र तृप्तिरित्यभिधीयते ।।**
**रूपद्रव्यार्पको विश्व इष्टलिङ्गे स्वभावतः ।**
**रुचिद्रव्यार्पकः साक्षात् प्राणलिङ्गे तु तैजसः ।।**
**भावलिङ्गे सदा प्राज्ञ आनन्दार्पक उच्यते ।**

(अ.सू.,७.९-१४)

**विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।**
**आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ।।**
**स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।**
**आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ।।**

(गौ.का.,३-४)

## त्रिविधपशुः

पशुः अर्थात् जीवात्मा विज्ञानाकलः, प्रलयाकलः, सकलश्चेति त्रिविधः। तत्र विज्ञानाकलो विज्ञान-योग-संन्यासैर्वा भोगेन वा कर्मविनाशं प्राप्नोति । कर्मक्षयार्थमेव कलादिभोगाद्यभावात् केवलं मलमात्रयुक्तत्वात्,

तस्य विज्ञानाकल इति व्यपदेशः । एषः समाप्तकलुषः असमाप्तकलुशश्चेति द्विविधः। प्राप्तमलसमाप्तिः समाप्तकलुषः। तादृशश्रेष्ठपुरुषेभ्यः शिवः अनन्ताद्यष्टविद्येश्वरपदवीमनुगृह्णाति। असमाप्तकलुषेभ्यः सानुग्रहं सप्तकोटिमन्त्राणां रूपं ददाति। प्रलयाकलो जीवः प्रलयकाले कलादेरुपसंहारद्वारा मलकर्मयुक्तः भवति । सोऽपि द्विविधः । पक्वपाशद्वयः अपक्वपाशद्वयश्चेति। तत्राद्यः मोक्षं प्राप्नोति। द्वितीयस्तावत् पुर्यष्टकरूपेण स्थितः कर्मवशात् नानाविधजन्मभाग् भवति। पुर्यष्टकं नाम अन्तःकरणम्, बुद्धिः, कर्म, इन्द्रियाणि चेत्येषां समुदायः। स च सूक्ष्मदेहः । सकलस्तु मलमायाकर्मात्मकबन्धत्रयसहितः। सोऽपि द्विविधः। पक्वकलुषः अपक्वकलुषश्चेति । तत्राद्याः परमेश्वरानुग्रहेण मण्डल्याद्यष्टादशाधिकशतमन्त्रे-श्वरपदं प्राप्नुवन्तिः । अपक्वकलुषास्तु स्वीयकर्मानुसारं सुखदुःखाननुभवन्ति ।

**पशवास्त्रिविधाः प्रोक्ता विज्ञानप्रलयकेवलौ सकलः ।**
**मलयुक्तस्तत्राद्यो मलकर्मयुतो द्वितीयः स्यात् ।।**
**मलमायाकर्मयुतो सकलस्तेषु द्विधा भवेदाद्यः ।**
**आद्यः समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात् ।**
**आद्याननुगृह्य शिवो विद्येशत्वे नियोजयत्यष्टौ ।**
**मन्त्राँश्च करोत्यपरान् ते चोक्ताः कोटयः सप्त – इति ।।**
**प्रलयाकलेषु येषामपक्वमलकर्मणी व्रजन्त्येते ।**
**पुर्यष्टकदेहयुता योनिषु निखिलासु कर्मवशात् – इति ।।**
**स्यात्पुर्यष्टकमन्तः करणं धीकर्मकरणानि – इति ।।**
**शेषा भवन्ति सकलाः कलादियोगादहर्मुखे काले ।**
**शतं मष्टादश तेषां कुरुते स्वयमेव मन्त्रेशान् ।।**
**तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः ।**
**श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्याधिकम् – इति ।।**

(त.प्र.,१.८–१२, १४–१५; शै.प.सं.९. पृ.६५)

(सर्वदर्शनसंग्रहः)

## त्रिविधपादोदकम्

अष्टावरणेष्वेकीभूतपादोदकस्य त्रयः प्रेभेदाः । शिवपादोदकं (लिङ्गपादोदकम्), गुरुपादोदकम्, जङ्गमपादोदकं चेति त्रीणि पादोदकानि।

**पादतीर्थं त्रिधा शम्भोर्गुरुजङ्गमयोरपि ।**

(चं. आ., क्रि.पा., ५.५)

(पश्यत – पादोदकम्)

## त्रिविधपूजा

मध्याह्ने सायङ्काले च क्रियमाणासु पूजासु त्रैविध्यमुक्तम् । महती, गुर्वी, लघ्वी चेति पूजा त्रिविधा । तत्र महतीं पूजामुत्तमः, गुर्वीं पूजां मध्यमः, लघ्वीं पूजां अशक्तः कुर्यादिति नियमः ।

**मत्पूजा त्रिविधा लघ्वी गुर्वी च महती तथा ।**

**उत्तमो महतीं कुर्याद् गुर्वीं मध्यम एव च ।**

**लघ्वीमशक्तः कुर्याच्च सायं माध्याह्नके तथा ।।**

(का.आ.,क्रि.पा.,४.४–५; मकुट.,क्रि.पा.,३.२–३)

(पश्यत – महतीपूजा, गुर्वीपूजा, लघ्वीपूजा च)

## त्रिविधप्रणवः

नादबिन्दुकलारूपात्मकः प्रणवः ।

**अकारः बिन्दुरूपं च उकारं नादरूपकम्**

**मकारं च कलारूपं ..... ।**

(सू.आ., क्रि.पा., ४.१६–१७)

अखण्डप्रणवस्य मूलस्वरूपम् ।

**नादबिन्दुकलारूपत्रिविधप्रणवेन तु ।**

**लिङ्गमाविरभूदेकमखण्डप्रणवात्मकम् ।।**

(शि.त.र., भा–१, १.५.५)

(पश्यत – प्रणवः)

## त्रिविधप्रदक्षिणम्

प्रदक्षिणं त्रिविधम्– सव्यम्, अपसव्यम्, सव्यापसव्यं चेति।

**देवं स्वस्य दक्षिणभागे कृत्वा क्रियमाणं प्रदक्षिणं सव्यम्। तद्विपरीतमपसव्यम्। उभयं मिलितं सव्यापसव्यम्।**

(क्रि.सा., भा–२, पृ.३०१)

## त्रिविधप्रसादः

शुद्धप्रसादः, सिद्धप्रसादः, प्रसिद्धप्रसादश्चेति त्रयः प्रसादाः।

**...... प्रसादं त्रिविधं स्मृतम्।**

(शै.र.,भा–१, १६–२९, पृ.१७२)

**अथ वक्ष्ये प्रसादस्य रूपं तद् वैभवं शृणु।**
**गुरुलिङ्गजङ्गमानां भुक्तशेषः प्रसादकः॥**
**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्त्यैकसाधनः।**

(चं.आ., क्रि.पा., ५.२०–२१)

गुरुभुक्तप्रसादः शुद्धः, लिङ्गार्पितप्रसादः सिद्धः, चरार्पितप्रसादः प्रसिद्धः।

**गुरुभुक्तप्रसादो यः स शुद्धः परिकीर्तितः॥**
**लिङ्गार्पितप्रसादोऽयं सिद्ध इत्यभिधीयते॥**
**चरार्पितप्रसादोऽयं प्रसिद्धः परिकीर्तितः॥**

(सू.आ., क्रि.पा., ८.२३–२५)

अनुभवसूत्रे शुद्धसिद्धप्रसिद्धानां क्रमेण इष्टप्राणभावलिङ्गार्पितत्वेनोक्तम्। इष्टलिङ्गार्पितं शुद्धप्रसादः, प्राणलिङ्गार्पितं सिद्धप्रसादः, भावलिङ्गार्पितं च प्रसिद्धप्रसादः। तत्तदर्पणद्वारा लब्धं प्रसादं ये भुञ्जते भक्तिपूर्वकं ते विश्वतैजसप्राज्ञरूपाः जीवाः भवन्ति।

**इष्टलिङ्गार्पितं शुद्धं प्राणलिङ्गमुखार्पितम् ।**
**सिध्दं ततः प्रसिद्धं हि भावलिङ्गार्पितं विदुः ।।**
**तत्तदर्पणतो लब्धं प्रसादं तत्तदादरात् ।**
**भुङ्क्ते यत्नात् स्वयं विश्वतैजसप्राज्ञरूपतः ।।**

(अ.सू.७.२२-२३)

(पश्यत – प्रसादः)

## त्रिविधप्रसादलिङ्गम्

त्रयः प्रसादा एव त्रिविधप्रसादलिङ्गम् ।

**प्रसादलिङ्गत्रैविध्यमपि श्रृणु वरानने ।**
**शुद्धं सिद्धं प्रसिद्धं च भेदश्चैषामायोज्यते ।।**

(सू.आ., क्रि.पा., ८.२२)

## त्रिविधब्रह्म

भोक्ता, भोज्यम्, प्रेरयिता चेति त्रिविधं ब्रह्म । गुणत्रयस्वरूपाशक्तिः ब्रह्मनिष्ठा सतीगुणवैषम्येन ब्रह्मणि भोक्त्रादिविभागं समुत्पादयति ।

**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।**

(श्वे.उ., १.१२)

**भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम् ।**

(सि.शि.,५.४१)

## त्रिविधभक्तः

गुरुभक्तः, लिङ्गभक्तः, चरभक्त इति त्रिविधो भक्तः ।

**गुरुभक्तो लिङ्गभक्तश्चरभक्तस्तथैव च ।**
**एवं भेदसमायुक्तो स भक्तस्त्रिविधो भवेत् ।।**

(सू.आ., क्रि.पा., ८.३६ ; क्रि.सा., भा-३, २४.१४, पृ. १२२;
शि.त.र.,भा-३, ९.९.३९)

## त्रिविधभस्म

चन्द्रज्ञानागमोक्तदिशा शान्तिकम्, पौष्टिकम्, कामदं चेति भस्म त्रिविधम् । भूमिपातात्पूर्वमेव गोमयं हस्तेन गृहीत्वा पञ्चब्रह्ममत्रैः सन्दह्य निर्मितं भस्म शान्तिकमित्युच्यते । पूर्वोक्तरीत्या गोमयमन्तरिक्षे गृहीत्वा षडङ्गमन्त्रैः सन्दह्य निर्मितं भस्म पौष्ठिकमिति कथ्यते । परिशुद्धायां भूमौ पतितं गोमयं गृहीत्वा प्रसादमन्त्रेण सन्दह्य निर्मितं भस्म कामदं भवति ।

**शान्तिकं पौष्टिकं भस्म कामदं च त्रिधा भवेत् ।**
**गोमयं योनिसम्बद्धं यद्धस्तेनैव गृह्यते ।।**
**ब्रह्ममन्त्रैश्च सन्दग्धं तच्छान्तिकमिहोच्यते ।।**
**सावधानेन गोयोनिनिःसृतं गोमयं तु यत् ।**
**अन्तरिक्षे गृहीत्वा तं षडङ्गेन दहेत्ततः ।।**
**पौष्ठिकं तु समाख्यातं कामदं तु ततः श्रृणु ।।**
**सुशुद्धे भूतले दैवात् पतितं गोमयं तु यत् ।**
**प्रसादेन दहेदेवमेतत् कामदमुच्यते ।।**

(चं.आ.,क्रि.पा.,६.३१-३३)

(पश्यत – भस्म)

## त्रिविधभस्मधारणम्

उद्धूलनम्, अवगुण्ठनम्, त्रिपुण्ड्रं चेति त्रिविधं भस्मधारणं प्रसिद्धम्। तत्र पञ्चब्रह्ममन्त्रैर्वा मूलमन्त्रेण वा भस्म सम्मन्त्र्य सर्वाङ्गेभ्यो यल्लेपनं क्रियते तदुद्धूलनम् । पूर्वोक्तरीत्या मन्त्रितेन भस्मना सजलेन यदनुलेपनं विधीयते तदवगुण्ठनमित्युक्तम् । इदमेव भस्मस्नानम् । मूलमन्त्रेण मन्त्रितं भस्म तिसृभिः मध्याङ्गुलीभिः गृहीत्वा यद्विविधेषु स्थानेषु तिर्यक् क्रमेण धार्यते तत् ब्रह्मविष्णुशिवरूपत्रिरेखात्मकं त्रिपुण्ड्रम् ।

उद्धूलनं ततश्चैवमवगुण्ठनमेव च ।
त्रिपुण्ड्रं चेति विख्यातं त्रिविधं भस्मधारणम् ।।
पञ्चभिर्ब्रह्मभिर्वापि मूलमन्त्रेण वा पुनः ।
सम्मन्त्र्य निर्जलं भस्म तेन लिम्पेत् सुसंयतः ।।
सर्वाङ्गमापादशिखमुद्धूलनमिदं स्मृतम् ।।
भस्मना मन्त्रितेनैव सजलेनानुलेपनम् ।
अवगुण्ठनमाख्यातं त्रिपुण्ड्रमथ कथ्यते ।।
त्रिपुण्ड्रं कारयेत् धीमान् ब्रह्मविष्णुशिवात्मकम् ।
मध्याङ्गुलीभिरादाय तिसृभिर्मूलमन्त्रितम् ।।

(चं.आ.,क्रि.पा.,६.४०-४३; सि.शि.,७.२८-३१)

(पश्यत - भस्मधारणम्)

## त्रिविधमङ्गतत्त्वम् = (त्रिविधाङ्गतत्त्वम्)

त्यागाङ्गम्, भोगाङ्गम्, योगाङ्गं चेति अङ्गतत्त्वं त्रिविधम् । इदमेव अङ्गत्रितयं क्रमेण स्थूलशरीरम्, सूक्ष्मशरीरम्, कारणशरीरं च ।

अङ्गस्थलं त्रिधा ज्ञेयमाचार्यैः सूक्ष्मदर्शिभिः ।
योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं तु द्वितीयकम् ।।
त्यागाङ्गं तु तृतीयं स्यादेवमेव त्रिधा भवेत् ।
योगाङ्गं कारणं प्रोक्तं भोगाङ्गं सूक्ष्ममुच्यते ।
त्यागाङ्गं स्थूलमित्युक्तं .... ।।

(अ.सू., ४.५-६,८)

## त्रिविधमङ्गस्थलम्

अनुभवसूत्रोक्तरीत्या अङ्गस्थलं त्रिविधम्-योगाङ्गस्थलम्, भोगाङ्ग-स्थलम्, त्यागाङ्गस्थलं चेति । एतानि त्रीणि स्थलानि कारणादि शरीरत्वेन निरूप्यन्ते ।

**अङ्गस्थलं त्रिधा ............................ ।**

**..............................भेदोपभेदतः ।।**

(अ.सू.,४.५-६,८)

(पश्यत – त्रिविधमङ्गतत्त्वम्)

एकैकमप्यङ्गस्थलं द्विविधं द्विविधं भवति । योगाङ्गम् ऐक्यस्थलं शरणस्थलं चेत्युभयं भवति । भोगाङ्गं प्राणलिङ्गिस्थलं प्रसादिस्थलं चेति द्वयं भवति । त्यागाङ्गं च माहेश्वरस्थलं भक्तस्थलं चेत्युभयं भवति ।

**योगाङ्गमैक्यं शरणस्थलमित्युभयं भवेत् ।**

**प्राणलिङ्गि प्रसादीति द्वयं भोगाङ्गमिष्यते ।।**

**माहेश्वरस्थलं भक्तस्थलमित्युभयं तथा ।**

**त्यागाङ्गं भवतीत्येवं प्रोच्यते पारमार्थिकैः ।।**

(अ.सू., ४.१२-१३)

## त्रिविधयात्रा

गुरुयात्रा, देवयात्रा, तीर्थयात्रा चेति यात्रा त्रिधा। तत्र गुरुयात्रा विशिष्यते ।

**गुरुयात्रा देवयात्रा तीर्थयात्रेति च त्रिधा ।**

**आसां त्रिविधयात्राणां गुरुयात्रा फलाधिका ।।**

(चं.आ., क्रि. पा., २.२८)

## त्रिविधलिङ्गम् = त्रिविधमहालिङ्गम्

१. महालिङ्गं सुजनानामनुग्रहाय इष्टलिङ्गम्, प्राणलिङ्गम्, भावलिङ्गं चेति त्रिविधं जातम् । तत्र स्थूलशरीरसम्बद्धमिष्टलिङ्गं स्थूलम् बाह्यं च । सूक्ष्मशरीरसम्बद्धहृदयकमले योगिभिर्ध्येयं प्राणलिङ्गं सूक्ष्मम् आभ्यन्तरं च । कारणशरीरसम्बद्धभावलिङ्गं सच्चिदानन्दात्मकं परमित्युच्यते ।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया ।**

**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम् ।**

**तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं मतम् ।।**

(चं.आ., क्रि.पा., ३.२३)

इष्टलिङ्गम्, प्राणलिङ्गम्, भावलिङ्गं चेति लिङ्गं त्रिविधम् । स्थूलम्, सूक्ष्मम्, परात्परं चेत्यपरनामानि ।

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम् ।**

**इष्टलिङ्गमिदं स्थूलं यद्बाह्ये धार्यते तनौ ।।**

**प्राणलिङ्गमिदं सूक्ष्मं यदन्तर्भावनामयम् ।**

**परात्परं तु यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते ।।**

(सि.शि., ६.४९-५०)

२. सूक्ष्मागमोक्तदिशा आचारादि षड्लिङ्गानि त्रिविधं त्रिविधं भवन्ति । तत्र आचारलिङ्गं सदाचारलिङ्गम्, नियताचारलिङ्गम्, गणाचारलिङ्गं चेति त्रिविधम्। गुरुलिङ्गम् दीक्षागुरुलिङ्गम्, शिक्षागुरुलिङ्गम्, अनुभावगुरुलिङ्गं चेति त्रिधा भवति । शिवलिङ्गम् - इष्टलिङ्गम्, प्राणलिङ्गम्, भावलिङ्गमिति त्रिधा । चरलिङ्गं (जङ्गमलिङ्गम्)- स्वयजङ्गमलिङ्गम्, चरजङ्गमलिङ्गम्, परजङ्गमलिङ्गमिति त्रिविधम् । प्रसादलिङ्गम् शुद्धप्रसादलिङ्गम्, सिद्धप्रसादलिङ्गम्, प्रसिद्धप्रसादलिङ्गं चेति त्रिभेदः । महालिङ्गमपि पिण्डजलिङ्गम्, अण्डजलिङ्गम्, बिन्द्वाकाशलिङ्गं चेति त्रिविधम्।

**स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।**

**सदाचारस्तु नियतो गणाचारस्तथापरः ।।**

**दीक्षाशिक्षानुभावश्च गुरुलिङ्गं त्रिधा भवेत् ।**

**शिवलिङ्गस्वरूपं ते वक्ष्यामि शृणु पार्वति ।**

**इष्टलिङ्गं प्राणलिङ्गं भावलिङ्गमिति त्रिधा ।**

**चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते ।**

**स्वयं चरं परञ्चेति त्रैविध्यं समुपागतम् ।।**

**प्रसादलिङ्गत्रैविध्यमपि शृणु वरानने ।**

**शुद्धं सिद्धं प्रसिद्धञ्च भेदश्चैषामथोच्यते ।।**

**महालिङ्गस्थलञ्चापि त्रिधा भिन्नं शृणु क्रमात् ।**

**पिण्डजं प्रथमं प्रोक्तमण्डजञ्च ततः परम् ।**

**बिन्द्वाकाशं ततो ज्ञेयमेषां लक्षणमुच्यते ।।**

(सू.आ.,क्रि.पा.,८.६, १०, १४, १८, २२, २६)

सिद्धान्तशिखणौ गुरुलिङ्गत्रैविध्यम्, चरलिङ्गत्रैविध्यम्, भक्तस्थलाश्रितेषु दीक्षागुरुस्थलम्, शिक्षागुरुस्थलम्, ज्ञानगुरुस्थलम्, स्वयस्थलम्, चरस्थलम्, परस्थलञ्चेति षट्सु स्थलेषु समावेशिताः सन्ति । शिवलिङ्गस्थलत्रैविध्यञ्च क्रियालिङ्गस्थलम्, भावलिङ्गस्थलम्, ज्ञानलिङ्गस्थल-ञ्चेति त्रिषु स्थलेषु विनिवेशितम् ।

(सि.शि.,१५.५-६)

## त्रिविधवीरशैवम् = त्रिविधवीरशैवः

वीरशैवं शैवभेदवाचकः । वीरशैव इति तदधिकारिवाचकः । वीरशैवं त्रिविधम् - सामान्यम्, विशेषम्, निराभारी चेति । (वीरशैवः त्रिविधः- सामान्यः, विशेषः, निराभारी चेति।)

**पुनः त्रिविधमेतद्धि सामान्यादिभेदतः ।**

**सामान्यश्च विशेषश्च निराभारीति च त्रिधा ।।**

(चं.आ.,क्रि.पा.,१०.३५)

**सामान्यं प्रथमं प्रोक्तं विशेषं च द्वितीयकम् ।**

**निराभारं तृतीयं स्यात् क्रमाल्लक्षणमुच्यते ।।**

(सू.आ.,क्रि.पा.,७.३०)

**त्रिविधं वीरशैवाख्यमधिकारिविभेदतः ।**
**सामान्यं वीरशैवं च विशेषं च ततः परम् ।**
**निराभारं वीरशैवं न ततोऽधिकमीश्वरि ।।**

(पार.,आ.,१५.३१-३२)

(पश्यत-सामान्य विरशैवादित्रयं प्रत्येकतया)

## त्रिविधसम्पत्तिस्थलम्

भक्तस्थलान्तर्गतपञ्चदशस्थलेषु एकादशतमम् । एकोत्तरशतस्थलेष्वपि एकादशतमम् । यथा गुरौ यथा च लिङ्गे भक्तिमान् प्रवर्तते साधकः तथा जङ्गमेऽपि भक्तिमान् इति बोधकं स्थलं त्रिविधसम्पत्तिस्थलमित्युच्यते । सर्वानुग्रहकारी साक्षादेव शिवः गुरु-लिङ्ग-जङ्गमात्मा भूत्वा भुक्तिं मुक्तिं च प्रददाति साधकाय ।

**भक्तिमार्गक्रिया चैव गुरुर्लिङ्गस्य चार्चनम् ।**
**जङ्गमस्य तथा ह्येषा प्रसादस्वीकृतिस्तथा ।।**

(सि.शि.,५.२९)

**तत्र गुरुलिङ्गार्चनरूपोभयस्थलं**
**जङ्गमार्चनलक्षणत्रिविधसम्पत्तिस्थलम् ।**

(सि.शि. तत्त्व.प्र., ५.२९-३०)

**एकमूर्तेस्त्रयो भागा गुरोर्लिङ्गं च जङ्गमः ।**
**तदेवंगुणकं ग्राह्यं गुरुजङ्गमयोरपि ।।**

(चं.आ.,क्रि.पा.,५.१५)

**यथा गुरौ यथा लिङ्गे भक्तिमान् परिवर्तते ।**
**जङ्गमे च तथा नित्यं भक्तिं कुर्याद् विचक्षणः ।।**
**एक एव शिवः साक्षात् सर्वानुग्रहकारकः ।**
**गुरुजङ्गमलिङ्गात्मा वर्तते भुक्तिमुक्तिदः ।।**

(सि.शि.,९.५८-५९)

## त्रिविधागमस्थलम्

क्रियागमः, भावागमः, ज्ञानागम इति त्रिविधम् आगमलिङ्गम् । माहेश्वरस्थलाश्रितेषु नवविधलिङ्गस्थलेषु क्रियागमस्थलम्, भावागमस्थलम्, ज्ञानागमस्थलं चेति त्रिविधागमस्थलसम्बद्धलिङ्गम् आगमलिङ्गम् ।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस ।**

**क्रियागमस्थलं पूर्वं ततो भावागमस्थलम् ।।**

**ज्ञानागमस्थलं चाथ ............... ।**

(सि.शि., १६.२–३)

(पश्यत – क्रियागमादिस्थलानि प्रत्येकतया)

## त्रिविधाचारलिङ्गम्

आचारलिङ्गसम्बन्धिस्थले आचारः त्रिविधः–सदाचारः, नियताचारः, गणाचारश्चेति । येन मार्गेण शिवभक्तः सर्वदा सन्तुष्टः तत्सम्बद्धाचारः सदाचार इति कथ्यते । यदा प्राणत्यागेऽपि यः आचारः नैव हीयते स नियताचारः । गुरुलिङ्गजङ्गमविषये दूषणस्य अश्रवणं श्रुते च प्रतीकारक्रमं च गणाचारः ।

**स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।**

**सदाचारस्तु नियतो गणाचारस्तथापरः ।।**

**सज्जनः शिवभक्तश्च येन मार्गेण सर्वदा ।**

**तोष्यते च महादेवि सदाचारः स वै स्मृतः ।।**

**यस्तु स्वकृतमाचारं न त्यजेच्च तदत्ययात् ।**

**त्यजेदसून् महादेवि नियताचार ईरितः ।।**

**गुरुलिङ्गादिविषये न श्राव्यं दूषणं यदि ।**

**श्रुतं तान् शिक्षयामीति गणाचारः स हि स्मृतः ।।**

(सू.आ.,क्रि.पा., ८.६–९)

## त्रिविधोपचारः

स्नानं, पूजा, नैवेद्यमित्युपचारास्त्रयः ।

**स्नानं पूजा च नैवेद्यमुपचारास्त्रयः स्मृताः ।**

(शि.त.र.,भा-३, ८.७.४३)

(पश्यत – उपचारः)

## त्रिवेणीयोगस्थलम्

इडा – पिङ्गला – सुषुम्नानां तिसृणां नाडीनां समायोगे त्रिवेणीयोग-स्थलं भवति । एतदेव त्रिकूटम् ।

**सा मध्यमाग्निरिति योनिरिति त्रिवेणी ।**

**योगस्थलं तदिदमेव भवेत् त्रिकूटम् ।।**

(शि.यो.प्र.,२.३५)

(पश्यत – त्रिकूटम्, त्रिवेणीसङ्गमस्थलम्, शृङ्गाटकम्)

## त्रिवेणीसङ्गमस्थलम्

यदुक्तं त्रिकूटमिति तदेव त्रिवेणीसङ्गमस्थलम् ।

**तस्मात् त्रिकूटनामापि त्रिवेणीसङ्गमस्थलम् ।**

**शृङ्गाटकचतुःपीठ नामान्येकस्थलस्य हि ।।**

(शि.यो.प्र.,२.३७)

(पश्यत – त्रिकूटम्, चतुःपीठम्, शृङ्गाटकम्, त्रिवेणीयोगस्थलम्)

## त्वम्

**तत्त्वमसि ..... (छां.उ., ६.८.७)**

त्वं इत्यस्य जीवः अथवा अङ्गमित्यर्थः ।

**लिङ्गं तत्पदमाख्यातमङ्गं त्वं पदमीरितम् ।**

(अ.सू.,५.२७)

# द

## दक्षिणशैवम्

वामम्, दक्षिणम्, मिश्रम्, सिद्धान्तमिति चातुर्विधशैवतन्त्रेष्वेकम्।

**तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।**

**वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ।।**

**........ दक्षिणं भैरवात्मकम् ।**

(सि.शि., ५.१०–११ ; वे.सा.वी.चिं.,भा–१, १.६)

**यत्रोत्तमो भैरवोऽभूद्दक्षिणः परिकीर्तितः ।।**

(वी.स.सं., ८.१२)

## दण्डप्रणामः = दण्डनमस्कारः

प्रणामप्रकारः । अष्टाङ्गः, पञ्चाङ्गः, त्र्यङ्गः, एकाङ्गश्चेति प्रणामः चतुर्विधः। तेषु अष्टाङ्गः पुनर्द्विविधः । दण्डप्रणामः, केवलप्रणामश्च ।

**पद्भ्यां कराभ्यां उरसा वाचा क्रियमाणः दण्डप्रणामः।**

(क्रि.सा.,भा–१.१, पृ.३०१)

**कुर्याद्दण्डनमस्कारं निर्लज्जो गुरुसन्निधौ ।।**

(चं.आ., क्रि.पा., २.३३)

## दमः

बहिरिन्द्रियनिग्रहः दमः । चक्षुरादीनां स्वस्वविषयवैमुख्यरूपो दमः ।

**अहिंसा सत्यवचनं संविभागो दमः क्षमा ।**

**अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ।।**

(वी.प्र., पृ.१४६)

## दया

वीरशैवदशधर्मसंग्रहे एकतमा ।

**अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा ।**

**दानं पूजा जपो ध्यानमिति धर्मस्य संग्रहः ।।**

(सि.शि., १६.५९)

आन्तरिकप्राणलिङ्गपूजायां समर्प्यमाणानां मानसपुष्पाणां एकतमं दयारूपम् ।

**अहिंसा चेन्द्रियजयः सर्वभूतदया परा ।**

**क्षमा ध्यानं तपो ज्ञानं सत्यं चैव तथा परम् ।**

**एभिः पुष्पैरहिंसाद्यैर्मानसैः शिवमर्चयेत् ।।**

(सू.आ., क्रि.पा., ६.२५)

## दर्पसंक्षयः

भक्त्यादिनि परमेश्वरस्य उपाङ्गषट्के एकतमः ।

**भक्तिः कर्मक्षयो बुद्धिर्विचारो दर्पसंक्षयः ।**

(पार. आ.,६.४१)

(पश्यत – उपाङ्गषट्कम्)

## दर्शनानि

१. सौरम्, वैनायकम्, ब्राह्मं, शाक्तेयम्, शैवम्, वैष्णवम् इति षट् दर्शनानि ।

**सौरं वैनायकं ब्राह्मं शाक्तेयं शैववैष्णवे ।**

**एतानि दर्शनान्याहुः षड्दैवतसमाश्रयात् ।।**

(शि.त.र.,भा-३., ९.४.६,७)

तत्र सूर्यप्रधानात्मकं दर्शनं सौरम् ; विनायकप्रधानं वैनायकम्, ब्रह्मप्रधानं ब्राह्मम्, शक्तिप्रधानं शाक्तेयम्, शिवप्रधानं शैवम्, विष्णुप्रधानं वैष्णवम् ।

२. सिद्धान्तशिखामणौ 'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा' इति ये सिद्धान्ता उक्ताः तेऽपि दर्शनान्येव । न्यायदर्शनम्, वैशेषिकदर्शनम्, सांख्यदर्शनम्, योगदर्शनम्, पूर्वमीमांसादर्शनम्, उत्तरमीमांसादर्शनमिति षड्दर्शनानि सुप्रसिद्धानि । एतानि वैदिकदर्शनानि । चार्वाक - जैन - बौद्धदर्शनानि त्रीणि अवैदिकदर्शनानि ।

## दशचक्राणि

शिवतत्त्वरत्नाकरे दत्तरीत्या दशचक्राणि भावनीयानि । तानि आधारचक्रम्, स्वाधिष्ठानचक्रम्, मणिपूरकचक्रम्, अनाहतचक्रम्, विशुद्धिचक्रम्, ललनाचक्रम्, आज्ञाचक्रम्, मनश्चक्रम्, सोमचक्रम्, सहस्रपत्रचक्रं चेति दश । (तेषां चक्रनाम्नाम् आवली न दत्ता) तत्र गुदलिङ्गान्तरे आधारचक्रं चतुर्दलात्मकम् । लिङ्गमूले स्वाधिष्ठानं षड्दलात्मकम् । नाभौ मणिपूरकचक्रं दशदलात्मकम् । हृदयेऽनाहतं चक्रं द्वादशदलात्मकम् । कण्ठे विशुद्धिचक्रं षोडशदलात्मकम् । घण्टिकायां (जिह्वायाः अधोभागः) ललनाचक्रं द्वादशदलात्मकम् । भ्रूमध्ये आज्ञाचक्रं त्रिदलात्मकम्। आज्ञाचक्रस्योपरि मनश्चक्रं षड्दलात्मकम् । मनश्चक्र-स्योपरि सोमचक्रं षोडशदलात्मकम् । ब्रह्मरन्ध्रे सहस्रपत्रचक्रम् (सहस्रदलात्मकम्) ।

**गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।।**

**स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रमस्य च ।**

**नाभौ दशदलं चक्रं मणिपूरकसंज्ञकम् ।।**

**हृदयेऽनाहतं चक्रम् ................. ।।**

**................. दलैर्द्वादशभिर्युतम् ।।**

**कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम् ।**

**ललनाख्यं घण्टिकायां चक्रं द्वादशपत्रकम् ।।**

**भ्रूमध्ये त्रिदलं चक्रमाज्ञासंज्ञम् .............. ।**

**ततोप्यस्ति मनश्चक्रं षड्दलम् ........... ।**

**ततोऽपि षोडशदलं सोमचक्रमितीरितम् ।।**

**चक्रं सहस्रपत्रं तु ब्रह्मरन्ध्रे सुधामयम् ।।**

(शि.त.र., भा-३, ९.१.१३१, १३४, १३६, १३८, १४१, १४३, १४५-१४७, १५०)

(पश्यत - चक्राणि, षट्चक्राणि, सप्तचक्राणि, नवचक्राणि)

(सूचना - एकैकस्मिन् चक्रे एकैकदलस्य फलं दत्तम् । तत्प्रपञ्चः शि.त.र., भा-३, ९.१.१३१-१५१, इत्यत्र द्रष्टव्यः ।)

## दशवक्त्ररुद्राक्षः

दशमुखयुक्तरुद्राक्षः, सर्वपापविनाशकः । यमः अस्य दैवतम्। दर्शनाद्धारणाच्च शान्तिदायकम् ।

**दशवक्त्रं तु रुद्राक्षं यमदैवमुदाहृतम् ।**

**दर्शनाच्छान्तिजनकं धारणान्नात्र संशयः ।।**

(रुद्र.जा.उ., ३८)

कर्णद्वये षण्णां रुद्राक्षाणां धारणं विधीयते । तत्र षट्सु आदिमरुद्राक्षद्वयं दशवक्त्रयुक्तं स्यात् ।

**दशसप्तपञ्चवक्त्रान् षट् षट् कर्णद्वये वहेत् ।।**

(सि.शि., ७.५५)

**नश्यन्ति सर्वपापानि दशवक्त्रस्य धारणात् ।।**

(शि.त.र.,भा-३.,८.६.२८)

## दशवायवः

योगप्रक्रियायां प्रमुखभूताः प्राणः, व्यानः, उदानः, अपानः, समानः, नागः, कूर्मः, कृकरः, देवदत्तः, धनञ्जय इति दशविधवायवः । तत्र प्राणादयः पञ्चप्रधानवायवः । नागादयः पञ्च उपवायवः ।

**ये पश्यन्ति सदा गौरि एते माहेश्वराः स्मृताः ।**
**दशवायून् तिरस्कृत्य अथो मूर्ध्नि प्रतिष्ठितान् ।।**

(वी.आ.उ., भा-१, १. श्लो. १२१. पृ.३२)

## दशविधलिङ्गानि

१. अखण्डलिङ्गम्, २. भावलिङ्गम्, ३. प्राणलिङ्गम्, ४. इष्टलिङ्गम्, ५. आचारलिङ्गम्, ६. गुरुलिङ्गम्, ७. शिवलिङ्गम्, ८. चरलिङ्गम्, ९. प्रसादलिङ्गम्, १०. महालिङ्गम् इति लिङ्गं दशविधम् ।

**अखण्डमेकं लिङ्गं स्यात् तदेव गुरुणा परम् ।**
**भावप्राणेष्टभेदेन त्रिधा भूतं नगात्मजे ।।**
**इष्टलिङ्गप्रकृतिके आचारगुरुलिङ्गके ।**
**पार्थिवाप्ये इति प्रोक्ते शैवागमविशारदैः ।।**
**प्राणलिङ्गप्रकृतिके तेजोवायुमये तथा ।**
**शिवलिङ्गचराभिख्ये लिङ्गे द्वे वरवर्णिनि ।।**
**व्योमप्रकृतिकं लिङ्गं प्रसादाख्यं महत्तरम् ।**
**आत्मतत्त्वमयं प्रोक्तं महालिङ्गं महत्तमम् ।।**

**इति सिद्धान्तशेखरवचनेनोक्तानां दशविधलिङ्गानां नमोऽन्तैः स्तुतिर्दृश्यते ।**

(सि.शे.,लिं.धा.चं.,पृ.७३-७४ - इत्यत्र उद्धृतः)

## दशाव्ययानि

ज्ञानम्, वैराग्यम्, ऐश्वर्यम्, तपः, शक्तिः, क्षमा, धतिः, स्रष्टुत्वम्, आत्मसम्बोधः, अधिष्ठातृत्वं चेति दशाव्ययानि । तानि शङ्करे नित्यं तिष्ठन्ति ।

**अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे। अत एव तान्यव्ययानि ।**

(ब्र.पु.,३.४.२.२१८–२१९; कूर्म.पु.१.१०.३९–४०; लिं.धा.चं.,पृ.२३७)

(पश्यत – अव्ययानि)

## दशोपचाराः

आचारभेदाः । अर्घ्यम्, पाद्यम्, आचमनम्, मधुपर्कः, आचमः (आचामः), गन्धः, अक्षतः, धूपः, दीपः, नैवेद्यम् इति दशोपचाराः ।

**अर्घ्यं पाद्यं चाचमनं मधुपर्काचमौ तथा ।**
**गन्धादयो निवेद्यान्ता उपचाराः दश क्रमात् ।।**

(शि.त.र., भा–३, ८.७. ४५–४६)

## दशोपागमाः

अष्टविंशतिशिवागमेषु असुरमोहकाः, वेदविरुद्धाश्च दश आगमा उपागमाः ।

**असुरमोहकवेदविरुद्धान्दशोपागमान् विहाय ।**

(वी.स.सं., १, पृ.३ ; शै.र.,पृ.१२३, श्लो.५–६)
(शिवागमसौरभ)

## दहरम् = दह्रम्

दह्रं नाम हृदयम् । पुष्पाञ्जलिमन्त्रेऽस्मिन् श्रूयते ।

**दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्य संस्थम्। तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ।**

(तै.आ., ७.१०)

## दानम्

धर्मसंग्रहे उक्तेषु दशधर्मेषु एकम् । (पश्यत – दया) ।

**दानं कुर्याद् यथाशक्ति तत्प्रसादयुतः सदा ।।**

(सि.शि.,९.७९)

तच्च दानं सोपाधिक – निरुपाधिक – सहजभेदात् त्रिधा ।

(पश्यत – त्रिविधदानम्)

## दारुकः

द्वापरयुगे अवतारप्राप्तवतां पञ्चाचार्याणां मध्ये दारुकः एकतमः । कृतयुगे द्व्यक्षर इति, त्रेतायुगे द्विवक्त्र इति, कलियुगे च मरुळाराध्य इति तस्यैव नामानि ।

**द्वापरे रेणुकदारुकशङ्कुकर्णधेनुकर्ण विश्वकर्णेति नाम समेतैस्तैरेव पञ्चाचार्यैः ।**

(वी.स.सं., पृ.३)

## दावाग्निजम्

भस्मभेदः । दावाग्निजन्य भस्म । सर्वैर्धार्यम् ।

**अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ।**

(बृ.जा.उ., ५.६; क्रि.सा.,भा–२, ६.३६, पृ.२०)

## दाससज्जनः

षड्विध सज्जनेष्वेकः । दासोऽहमिति भावविशिष्टः सज्जनः ।

**दासत्वं वीरदासत्वं भृत्यत्वं वीरभृत्यता ।**

**समयस्सकलावस्थः सज्जनः षड्विधस्तथा ।।**

**आदौ नियमसंयुक्तो गुरुपादाम्बुजार्चने ।**

**कर्मयोगयुतः प्रोक्तो दासभावस्तु सज्जनः ।।**

(अ.वी.सा.सं.,भा-२, २२.२५-२६)

(पश्यत - दासभावः)

## दासभावः = दासोऽहंभावः

१. दासोऽहमिति भावः ।

२. दासोऽहमिति भावविशिष्टः सज्जनः । दासः, वीरदासः, भृत्यः, वीरभृत्यः, समयः, सकलावस्थ इति षड्विधसज्जनेषु प्रथमः । गुरुपादाम्बुजार्चनेन सन्तुष्टः कर्मयोगरतः ।

**आदौ नियमसन्तुष्टो गुरुपादाम्बुजार्चने ।**

**कर्मयोगरतः प्रोक्तो दासभावस्तु सज्जनः ।।**

(आ.वी.सा.सं.,भा-२, २२.२४-२५; शै.र.,भा-२., १७.१९७)

**शरीरादि पदार्थं च दत्त्वा दानं समर्पणम् ।**

**समर्प्य सोऽहमस्मीति दासोऽहं भाव उच्यते ।।**

(श.त्र.,५२, पृ.३६; अ.वी.सा.सं.,भा-१, १.१७, पृ.३१)

**वातुले -**

**शरीरादिपदार्थं च दत्तं दानं समर्पणम् ।**

**समर्प्य सोऽहमस्मीति दासोऽहंभाव उच्यते ।।**

(अ.वी.सा.सं.,भा-१, १.१७, पृ.३१)

## दासोऽहम्

अहं दास इति भावः । किङ्करभावः । शिष्यगुणः । जन्मनाशकः, पापनाशकः, दुःखनाशकश्च गुणः ।

**दासोऽहं भावसंयुक्तः सर्वाचारनियुक्तकः ।**

**दासोऽहं धन्यताहेतुर्दासोऽहं जन्मनाशनम् ।।**

**दासोऽहं ज्योतिरूपं दासोऽहं निर्मलप्रभम् ।**

**दासोऽहं कुरुते यस्तु पार्वतीपरमेशयोः ।।**

**अचिरेणैव कालेन सर्वपापैः प्रमुच्यते ।।**

**दासोऽहमिति यो भक्त्या चिन्तयेद् वृषभध्वजम् ।**

**संसारविषयादिभ्यः सर्वदुःखैर्न लिप्यते ।।**

(अ.सू.,७.६१; शै.र.,भा-२, १७.१९३-१९५)

## दासोही

अहं दास इति भावयुक्तः भक्तः शिष्यश्च।

**दासोही लिङ्गमिष्टश्च वीरव्रतसमाश्रयः ।**

**सुसर्वाचारसम्पन्नो लिङ्गजङ्गमरूपकः ।।**

(अ.वी.सा.सं., भा-१,१८४)

## दास्यम् = दास्यभक्तिः

१. नवविधभक्तिस्वन्यतमा । गुरौ परमात्मनि च भृत्यवद्वर्तनं दास्यभक्तिः।

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।**

(सि.शि.,९.२)

## दिव्यलिङ्गम्

दशविधलिङ्गान्यतमभूतं प्रसादलिङ्गम् । आचारलिङ्गादिषड्विध-लिङ्गेष्वन्यतमम् ।

**“दिव्यलिङ्गाय नम इत्याकाशत्वाधिष्ठितप्रसादलिङ्गस्तुतिः, दिविभवं दिव्यमिति व्युत्पत्या तयोरभेदात् ।”**

(लिं. धा. चं.,पृ.७५)

(पश्यत – लिङ्गम्)

## दिव्यशरीरम्

देवानां औपभोगिकं शरीरं दिव्यशरीरम् । भूतसारतः समुत्पन्नम् ।

**तत्र धर्मेण चैकेन देवानामौपभोगिकम् ।।**

**सद्यः प्रजायते दिव्यं शरीरं भूतसारतः ।**

(शि.त.र., भा-३,९.१.६-७)

## दिव्यस्थलम्

परतत्त्वम् । जगदधिष्ठानम् ।

**अधिष्ठानं समस्तस्य स्थावरस्य चरस्य च ।**

**जगतो यद्भवेत्तत्त्वं तद्दिव्यस्थलमुच्यते ।।**

(अ.सू.,२.६)

## दीक्षा

इष्ट – प्राण – भावेति त्रिविधलिङ्गधारणसंस्कारः ।

१. दीक्षाशब्दस्य अक्षरनिष्पत्त्या 'दी' इत्यनेन लिङ्गसम्बन्धः दीयते इत्यर्थः । 'क्ष' इत्यनेन मलत्रयं अथवा पाशबन्धनं क्षीयते इत्यर्थः गृह्यते । यस्याः किञ्चिद्दीयते किञ्चिच्च क्षीयते सा दीक्षा इति कथ्यते ।

**दीयते लिङ्गसम्बन्धः क्षीयते च मलत्रयम् ।**

**दीयते क्षीयते यस्मात् सा दीक्षेति निगद्यते ।।**

(का.आ., क्रि.पा., १.१२; सू.आ., क्रि.पा., ८.११ ; क्रि.सा.,भा-३, पृ.१२९, श्लो-१ ; शि.त.र.,भा-३. ९.७.५)

२. कुण्डमण्डलहोमादियुक्त्या क्रियादीक्षया अध्वशुद्धिचित्कलायोजनादियुक्तया वेधादीक्षया शिवपञ्चाक्षरीमन्त्रोपदेशयुक्त्या मन्त्रदीक्षया च क्रियमाणः संस्कारविशेषः दीक्षेति कथ्यते ।

**कुण्डमण्डलहोमाद्या अध्वशुद्धिः कलात्मका ।**

**मन्त्रोपदेशसहिता या सा दीक्षेति कथ्यते ।।**

(सू.आ., क्रि.पा., ८.१०)

३. यया शिवज्ञानं दीयते पाशबन्धनं क्षीयते सा दीक्षा ।

**शक्तिपातं समालोक्य दीक्षया योजयेदमुम् ।**

**दीयते च शिवज्ञानं क्षीयते पाशबन्धनम् ।।**

**यस्मादतः सामाख्याता दीक्षेतीयं विचक्षणैः ।**

(सि.शि., ६.११-१२)

(पश्यत – त्रिविधदीक्षा)

**दीक्षाभेदः**

१. दीक्षा

| **क्रियादीक्षा** | **वेधादीक्षा** | **मन्त्रदीक्षा** |
|---|---|---|
| १. आज्ञादीक्षा | एकाग्रमतिदीक्षा | समयदीक्षा |
| २. उपमादीक्षा | दृढव्रतदीक्षा | निस्संसारदीक्षा |
| ३. कलशाभिषेकदीक्षा | पञ्चेन्द्रियार्पणदीक्षा | निर्वाणदीक्षा |
| ४. स्वस्तिकारोहणदीक्षा | अहिंसादीक्षा | तत्त्वदीक्षा |
| ५. भूतिपट्टदीक्षा | मनोलयदीक्षा | अध्यात्मदीक्षा |
| ६. आयत्तदीक्षा | लिङ्गनिजदीक्षा | तत्त्वविशोधिनीदीक्षा |
| ७. स्वायत्तदीक्षा | सद्योमुक्तदीक्षा | तत्त्वबोधादीक्षा |

**सा दीक्षा परमा शैवी त्रिधा भवति निर्मला ।**

**एका वेधात्मिका साक्षादन्या मन्त्रात्मिका मता ।**

**क्रियात्मिका परा काचिदेवमेव त्रिधा भवेत् ।।**

**अत्रैकापि विख्याता दीक्षासप्तक शोभिता ।**

(का.आ.,क्रि.पा.,१.१३, १५)

**एकविंशतिदीक्षाश्च लिङ्गाचार इति स्मृतः ।**

**क्रियावेधामन्वभिख्यदीक्षान्तर्गतमूर्तयः ।**

**एकविंशतिदीक्षाश्च लिङ्गाचार इति स्मृतः ।।**

(चं.आ., क्रि.पा., ९.११)

**सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः ।।**

**वेधारूपा क्रियारूपा मन्त्ररूपा च तापस ।**

(सि.शि., ६.१२-१३)

**सा दीक्षा त्रिविधा ज्ञेया वेधामन्त्रक्रियात्मिका ।**

(शि.त.र., भा-३,९.७.३९)

तत्र क्रियादीक्षया स्थूलशरीरगतकार्मिकमलं निष्कास्य इष्टलिङ्गं गुरुणा अनुगृह्यते । मन्त्रदीक्षया सूक्ष्मशरीरगतमायामलं निष्कास्य प्राणलिङ्गं स्थाप्यते। तथैव वेधादीक्षया कारणशरीरगताणवमलं निवार्य भावलिङ्गं स्थाप्यते ।

**इष्टं स्थूलतनोः प्रोक्तं प्राणं सूक्ष्मतनोः स्मृतम् ।**

**भावाख्यं कारणस्यैवं तनुत्रयगतं त्रयम् ।।**

**आणवं मायिकं चैव कार्मिकं च यथाक्रमम् ।**

**मलत्रयमनादीदं तनुत्रयगतं भवेत् ।।**

**तनुत्रयगतानादिमलत्रयमिदं गुरुः ।**

**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत् ।।**

(चं.आ., क्रि.पा., ३.४५-४७)

(पश्यत – एकविंशतिदीक्षा)

२.




(शि.त.र.,भा-३, ९.७.६-१०)

३.




(शि.त.र., भा-३,९.७.१४-२४)

## दीक्षागुरुः

दीक्षागुरुः, शिक्षागुरुः, ज्ञानगुरु इति त्रिविधगुरुष्वेकः । दीक्षादायको गुरुः दीक्षागुरुः । अङ्गे लिङ्गस्थापनानुग्राहकगुरुः । भक्ताय लिङ्गदीक्षादायकः गुरुः।

**दीयते परमं ज्ञानं क्षीयते पाशबन्धनम् ।**
**यया दीक्षेति सा तस्यां गुरुर्दीक्षागुरुः स्मृतः ।।**

(सि.शि.,१५.७)

## दीक्षागुरुस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । भक्तस्थला श्रितनवविध-लिङ्गस्थलेष्वेकतमम् ।

**दीक्षागुरुस्थलं पूर्वं..... ।**

(सि.शि. १५.५)

ऐक्यस्य शिवयोगिनः दीक्षागुरुत्वेन निरूपणं दीक्षागुरुस्थलम् ।
(पश्यत – दीक्षागुरुः)

## दीक्षाङ्गम्

त्रिविधदीक्षायाः एकविंशतिदीक्षासमुदाय इत्यादय दीक्षाङ्गम् ।

**दीक्षाङ्गशैवसंस्कारैः शतानन्दपुरूरवैः ।**
**दीक्षाङ्गं मन्त्रसंयुक्तं प्राणलिङ्गसमन्वितम् ।**

(वी.आ.उ.,४.५९३;२.१८९)

## दीक्षात्रयम्

क्रियादीक्षा, मन्त्रदीक्षा, वेधादीक्षा चेति दीक्षात्रयम्।

**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत्।**

(चं.आ.,क्रि.पा., ३.४७)

(पश्यत – दीक्षा)

**सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः ।**

**वेधारूपा क्रियारूपा मन्त्ररूपा च तापस ।।**

(सि.शि.,६.१२-१३)

## दीक्षापादोदकम्

दीक्षाद्वारा गुरुशिष्ययोः द्वैतपरिहारेणानन्दैक्यप्राप्तिरेव दीक्षापादोदकं भवति ।

**दीक्षयापगतद्वैतं यज्ज्ञानं गुरुशिष्ययोः ।**

**आनन्दस्यैक्यमेतेन दीक्षापादोदकं स्मृतम् ।।**

(सि.शि.,१९.६)

## दीक्षापादोदकस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम्। शरणस्थलाश्रितद्वादश-लिङ्गस्थलेष्वेकम् ।

(पश्यत – दीक्षापादोदकम्)

## दुःखत्रयम्

आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकम् इति दुःखत्रयम्। एतैर्दुःखैः समेतस्य लोके स्वर्गे वा सुखलेशोऽपि नास्ति ।

**आध्यात्मिकं तु प्रथमं द्वितीयं चाधिभौतिकम् ।**

**आधिदैविकमन्यच्च दुःखत्रयमिदं स्मृतम् ।।**

**दुःखैरेतैरुपेतस्य कर्मबद्धस्य देहिनः ।**

**स्वर्गे वा यदि वा भूमौ सुखलेशो न विद्यते ।।**

(सि.शि.,५.६७, ७०)

(पश्यत – आधिदैविकम्, आधिभौतिकम्, आध्यात्मिकम्)

## दृढ़व्रतदीक्षा

मन्त्रदीक्षान्तर्गतसप्तविधदीक्षास्वेकतमा । शरीरपतनपर्यन्तं लिङ्गपूजादिव्रतान्याचर इत्येवंरूप उपदेशः दृढ़व्रतदीक्षेति कथ्यते ।

**शरीरपातपर्यन्तं न जहीः व्रतान्यपि ।**

**दृढ़व्रतामिति प्रोक्त्वा दद्यात् पञ्चेन्द्रियार्पणाम् ।।**

(का.आ.,क्रि.पा.,१.११३)

## देशिकः = देशिकेन्द्रः

तत्त्वोपदेशकः गुरुः । षट्स्थलागमकोविदः ।

**श्रीदेशिकदयाप्राप्तज्ञानोद्यन्मन्त्रहृद्गते ।**

(पं.च.,दी.प्र.,४९, पृ.२४)

**देशिकेद्रं गुरुश्रेष्ठं षडध्वाध्वानसाधकम् ।**

(वी.आ.उ., ४.११)

## देशिकमहत्त्वस्थलम्

सप्तविंशतिस्थलेष्वेकम् । तत्र च चतुर्दशम् । देशिकस्य गुरोर्महत्त्वप्रतिपादकं स्थलम् ।

**त्रयोदशं देशिकस्य महत्त्वं तु चतुर्दशम् ।**

(अ.वी.सा.सं.,भा-१, १.५२)

(पश्यत – सप्तविंशतिस्थलानि)

## देहः

शरीरम् । कायः । तनुः । शुक्रशोणितसंयोगजन्यम् । कर्मबन्धविनिर्मितं शरीरम् ।

**अविशुद्धं विशुद्धस्य कर्मबन्धविनिर्मितम् ।**

**शुक्रशोणितसंयोगाद्देहः सञ्जायते यतः ।।**

(अ.वी.सा.सं.,भा-१, ८.१६४)

## देहन्यासः

एष एव अङ्गन्यासस्यैकः प्रकारः। देहस्य विद्यामयत्वसम्पादनानन्तरं तस्मिन् प्रविष्टं शिवतेजांशभूतं हृदयकमले ध्यात्वा विद्यामयशरीरम् अमृतवर्षेण आत्त्यायनीकृत्य करन्यासम्, देहन्यासम्, अङ्गन्यासञ्च कुर्यादिति नियमः।

**अन्तर्देहं प्रविष्टं तं ध्यात्वा हृदयपङ्कजे।**
**पुनश्चामृतवर्षेण सिञ्चेद्विद्यामयं वपुः॥**
**पुनः कुर्याद् करन्यासं करशुद्धिपुरस्सरम्।**
**देहन्यासं ततः कुर्यादङ्गन्यासं यथाविधि॥**

(चं.आ.,क्रि.पा.,११.३१-३२)

**अस्य न्यासस्य क्रमः**

**नं** सद्योजाताय नमः मुखे। **मं** वामदेवाय नमः हृदये। **शिं** अघोराय नमः पादद्वये। **वां** तत्पुरुषाय नमः गुह्ये। **यं** ईशानाय नमः शिरसि।

## देहशुद्धिः

स्थूलसूक्ष्मदेहयोः बाह्यान्तरशरीरयोः शुद्धिः। एषा द्विविधा- सूक्ष्मदेहशुद्धिः स्थूलदेहशुद्धिश्चेति। पुर्यष्टकस्वरूपसूक्ष्मशरीरशुद्धिः सूक्ष्मदेहशुद्धिः। स्वशरीरे पादाद्यङ्गानां शुद्धिः स्थूलशरीरशुद्धिः।

"अथ देहशुद्धिः। सा द्विविधा। सूक्ष्मदेहशुद्धिः स्थूलदेहशुद्धिश्चेति। तत्र शब्दस्पर्शरूपरसगन्धबुध्यहङ्कारमनोरूप पुर्यष्टकात्मकसूक्ष्मशरीरशुध्यर्थं हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रस्थितेषु ब्रह्मादिषु कारणपुरुषेषु सूक्ष्मशरीरांशान् शब्दादीन् प्रविलापयेत्। ततः स्थूलशरीरशुद्ध्यर्थं स्वशरीरे पादादिद्वादशान्तपर्यन्तस्थानेषु स्थितानि ...... पञ्चमहाभूतानि ध्यात्वा पृथिवीम् अप्सु प्रविलापयामि ..... भावयेत्।" एषा एव भूतशुद्धात्मिका देहशुद्धिः।

(क्रि.सा.,भा-२, पृ.२२४)

## द्रव्यशुद्धिः

लिङ्गाचारः, सदाचारः, शिवाचारः, गणाचारः, भृत्याचारश्चेति पञ्चाचारेषु एकतमस्य शिवाचारस्य अन्तर्गतोऽयं शुद्धिविचारः । तत्र षोडशप्रकाराणां शुद्धीनां द्रव्यशुद्धिरेकतमा । भस्मना विशोध्य भक्तहस्तद्वारा वा यत् फलमूलादिकं गृह्यते तद् द्रव्यशुद्धिः ।

**भक्तहस्तगतं वापि भस्मना वा विशोधितम् ।**
**फलमूलादिकं ग्राह्यं द्रव्यशुद्धिरियं मता ।।**

(चं.आ., क्रि.पा., ९.३३)

## द्वात्रिंशदुपचाराः

लिङ्गपूजायाम् उपचारभेदाः – १. आवाहनम्, २. आसनम्, ३. पाद्यम्, ४. अर्घ्यम्, ५. आचमनम्, ६. स्नानम्, ७. वस्त्रम्, ८. उपवीतम्, ९. भूषणम् (अलङ्कारः), १०. अनुलेपनम्, ११. अक्षताः (तिलाः), १२. पुष्पम्, १३. धूपः, १४. दीपः, १५. नैवेद्यम्, १६. गन्धः, १७. नीराजनम्, १८. दर्पणम्, १९. फलम्, २०. प्रदक्षिणम्, २१. ताम्बूलम्, २२. नमस्कारः, २३. स्तोत्रम्, २४. पुराणपठनम्, २५. छत्रम्, २६. व्यजनम्, २७. चामरम्, २८. शय्या, २९. सङ्गीतम्, ३०. नृत्तम्, २१. वाद्यम्, ३२. अर्पणम् इति द्वात्रिंशदुपचाराः ।

**आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ।**
**स्नानं वस्त्रं चोपवीतं भूषणं चानुलेपनम् ।।**
**तिलाक्षताः पुष्पधूपदीपनैवेद्यकानि च ।**
**मुखवासननीराजदर्पणं च फलानि च ।।**
**प्रदक्षिणं च ताम्बूलं नमस्कारस्तुती तथा ।**
**पुराणपठनं छत्रं व्यजनं चामरं तथा ।**
**शय्या सङ्गीतनृत्ते च वाद्यानि च ततः परम् ।।**
**आत्मन्यारोपणं चेति द्वात्रिंशदुपचारकाः ।**

(शि.त.र.,भा-३, ८.७.५१-५५)

## द्वादशमुखरुद्राक्षः

रुद्राक्षभेदः । द्वादशवक्त्रविशिष्टः रुद्राक्षः । द्वादशादित्यद्योतकः अयं कण्ठदेशे धर्तव्यः ।

**रुद्राक्षं द्वादशमुखं कण्ठदेशे तु धारयेत् ।**
**आदित्यः स भवेन्नित्यं द्वादशात्मा शिवः स्वयम् ।।**

(शि.त.र.,भा-३.८.६.३०)

द्वादशमुखरुद्राक्षं तु महाविष्णुस्वरूपवत् द्वादशादित्यस्वरूपं च यस्तद्धारयति सः द्वादशादित्यपरः भवति ।

**रुद्राक्षं द्वादशमुखं महाविष्णुस्वरूपकम् ।**
**द्वादशादित्यरूपं च बिभर्त्येव हि तत्परः ।**

(रू.जा.उ.,४०)

**रुद्राक्षं द्वादशमुखं महाविष्णुस्वरूपकम् ।**
**द्वादशादित्यदैवं च देवताप्रीतिवर्धनम् ।।**

(चं.आ.,क्रि.पा.,७.३६)

शिरसि धार्यमाणेषु त्रिषु रुद्राक्षेषु तृतीयं रुद्राक्षं द्वादशवक्त्रं स्यादिति विधिः ।

**द्वित्रिद्वादशवक्त्राणि शिरसि त्रीणि धारयेत् ।**

(सि.शि., ७.५४)

## द्वादशशिवलिङ्गार्चनक्रिया

शिवसिद्धान्ततत्पराः पूजायाः द्वादशत्वं वदन्ति। यथा –

१. विभूत्यभ्युक्षणम्, २. स्नानम्, ३. अग्नितापनम्, ४. धूपसमर्पणम्, ५. धूमप्रसारणम्, ६. गन्धावतंसनम्, ७. अक्षतारोपणम्, ८. पुष्पोपहरणम्, ९. दीपप्रकाशनम्, १०. नैवेद्यसमर्पणम्, ११. ताम्बूलप्रदानम्, १२. वस्त्रप्रावरणम्। एते द्वादशशिवलिङ्गार्चनक्रमा ।

**विभूत्यभ्युक्षणं लिङ्गे करणं स्नपनं तथा ।**

**अङ्गारतापनं चैव धूपसंवीजनं तथा।**

**धूमप्रसारणं चैव ततो गन्धावतंसनम् ।**

**अक्षतारोपणं चैव पुष्पोपहरणं तथा।**

**दीपप्रकाशनं चैव नैवेद्यस्य समर्पणम् ।**

**ताम्बूलस्य प्रदानं च वस्त्रप्रावरणं तथा ।**

**एवं द्वादशधा प्रोक्ता शिवलिङ्गार्चनक्रिया ।**

(विशे.प्र.,२.३-६)

एताभिः शिवलिङ्गार्चनक्रियाभिस्सह चतुर्विंशत्युपचारान् मेलयित्वा षट्त्रिंशत् पूजोपचाराः भवन्ति । एते षट्त्रिंशत् पूजोपचाराः षट् त्रिंशत् तत्त्वानां द्योतकाः ।

**समर्चनोपचाराणां योगः षट्त्रिंशदीरितः ।**

**षट्त्रिंशत्तत्त्वमय्येषा शैवी स्थितिरिति श्रुतिः ।।**

(विशे.प्र.,२.९)

(पश्यत – चतुर्विंशदुपचाराः)

## द्वादशादित्याः

अदितेः पुत्राः । ते – धाता, अर्यमा, मित्रः, वरुणः, इन्द्रः, विवस्वान्, पर्जन्यः, पूषा, अंशुमान्, गभस्तिमान्, त्वष्टा, विष्णुश्चेति द्वादश ।

**धाता मित्रोऽर्यमा रुद्रो वरुणस्सूर्य एव च ।**

**भर्गो विवस्वान् पूषा च सविता दशमः स्मृतः ।**

**एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ।।**

(श.कौ, पृ.३०९)

## द्विदलशीलम्

सदाचारान्तर्गतत्वेनोक्तेष्वष्टविधशीलेष्वेकम् । शैवलाञ्छनानां धारणम् ।

**लाञ्छनानां हि शैवानां भस्मादीनामनारतम् ।**

**धारणं त्वप्रमादेन द्विदलं शीलमुच्यते ।।**

(चं.आ.,क्रि.पा.,९.२५)

(पश्यत – सदाचारः)

## द्विपञ्चाशन्मूर्तयः

सादाख्यसमुद्भूतरुद्रादयः द्विपञ्चाशन्मूर्तयः । सादाख्यपञ्चकमीश्वराष्टकमेकादशरुद्रास्त्रिमूर्तयः पञ्चविंशतिलीलामूर्तयश्चेति द्विपञ्चाशन्मूर्तयः।

**सादाख्यं पञ्चधैवोक्तमीश्वराष्टकमेव च ।।**

**पञ्चविंशतिमाहेशाः रुद्रा एकादश स्मृताः ।**

**त्रिमूर्तिरङ्गत्रितयं द्विपञ्चाशच्च मूर्तयः ।।**

(शि.त.र.,भा–१, १.६, ४९–५०)

## द्विरेफकीटन्यायः = भ्रमरकीटन्यायः

कीटः द्विरेफात् भयभीतः तं सर्वदा स्मरन् द्विरेफरूपेण परिणमते । अयमेव द्विरेफकीटन्यायः । भ्रमरकीटन्याय इत्यस्य नामान्तरम् ।

शिवजीवैक्यस्वरूपप्रतिपादनाय अयं न्यायः प्रयुज्यते । शिवं निरन्तरं स्मरन् जीवः शिव एव भवतीत्यस्य दृष्टान्तभूतोऽयं न्यायः ।

**गुरुदीक्षापरिप्राप्तशिवलिङ्गाङ्गयोगतः ।**

**द्विरेफकीटन्यायेन शिवैक्यं प्राप्तवान् द्विजः ।**

(मकुट., च.पा., ७.३)

**कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् ।**

**मानवः शिवयोगेन शिवो भवति निश्चयात् ।।**

(एन्. आर. करिबसवशास्त्रिविरचिते सिद्धान्तशिखामणेः कन्नडव्याख्याने उल्लिखितः ।)

## द्विवक्त्ररुद्राक्षः

रुद्राक्षभेदः । द्विमुखविशिष्टः रुद्राक्षः । अर्धनारीश्वरात्मक अयं ईशप्रीतिजनकः ।

**द्विवक्त्रं तु मुनिश्रेष्ठ अर्धनारीश्वरात्मकम् ।**

**धारणादर्धनारीशः प्रीयते तस्य नित्यशः ।।**

(रु.जा.उ.,२८; चं.आ.,क्रि.पा.,७.२६ ; शि.त.र., भा-३,८.६.२१)

शिरसि धार्यमाणेषु त्रिषु रुद्राक्षेषु द्विवक्त्ररुद्राक्षः प्रथमः ।

**द्वित्रिद्वादशवक्त्राणि शिरसि त्रीणि धारयेत् ।**

(सि.शि.,७.५४)

## द्विविधलिङ्गम्

१. लिङ्गभेदः । लिङ्गं जङ्गमलिङ्गम्, अजङ्गमलिङ्गमिति द्विधा । जङ्गमलिङ्गं चरलिङ्गमित्युच्यते । अजङ्गमलिङ्गं तु स्थिरलिङ्गमित्युच्यते । उभयोरपि समाना भक्तिराश्रयणीया ।

**लिङ्गं च द्विविधं प्रोक्तं जङ्गमाजङ्गमात्मना ।**

**अजङ्गमे यथा भक्तिः जङ्गमे च तथा स्मृता ।।**

(सि.शि.,९.६०)

**जङ्गमाजङ्गमात्मना चरस्थिरभेदेन लिङ्गं द्विविधमिति प्रोक्तम् । अजङ्गमे स्थिरे लिङ्गे यथा भक्तिः विधीयते, तथा जङ्गमेऽपि चरलिङ्गेऽपि भक्तिः कर्तव्या इत्यर्थः ।**

(सि.शि.तत्त्व.प्र.,९.६०)

## २. द्विविधलिङ्गम् = द्विविधलिङ्गस्थलम् ।

प्रथमं सुजनानामनुग्रहाय महालिङ्गं त्रिविधं जातम् । तत्र प्रथमं भावलिङ्गं द्वितीयं प्राणलिङ्गं तृतीयम् इष्टलिङ्गं च ।

(पश्यत – त्रिविधलिङ्गम्)

भावादि त्रीणि लिङ्गानि पुनः द्विविधं द्विविधं भवन्ति । भावलिङ्गं द्विविधं महालिङ्गं प्रसादलिङ्गं चेति । एवमेव प्राणलिङ्गं द्विविधं चरलिङ्गं शिवलिङ्गं चेति । इष्टलिङ्गमपि द्विविधं गुरुलिङ्गं आचारलिङ्गं चेति ।

**भावादिलिङ्गत्रितयं द्विविधं द्विविधं भवेत् ।**
**भावलिङ्गं महालिङ्गप्रसादाभिख्यकं द्वयम् ।।**
**प्राणलिङ्गं तथा चरशिवलिङ्गद्वयं भवेत् ।**
**इष्टं तु गुरुलिङ्गाख्यमाचाराख्यं द्वयं भवेत् ।।**

(चं.आ., क्रि.पा., ३.२६–२७)

द्विविधलिङ्गमेव द्विविधलिङ्गस्थलमिति अनुभवसूत्रे प्रतिपाद्यते ।

**एकमेकं स्थलं भूयो द्विविधं द्विविधं भवेत् ।**
**भावलिङ्गस्थलं द्वेधा प्राणलिङ्गस्थलं द्विधा ।**
**इष्टलिङ्गस्थलं चैव द्विधा प्रोक्तं महात्मभिः ।।**
**महालिङ्गं प्रसादाख्यं लिङ्गमित्युभयस्थलम् ।**
**भावलिङ्गं भवत्येव स्वानुभूतिप्रमाणतः ।।**
**तथा च चरलिङ्गं च शिवलिङ्गमिति द्वयम् ।**
**प्राणलिङ्गं भवत्येव तात्पर्यार्थो न संशयः ।।**
**गुरुलिङ्गं तथा चरलिङ्गमित्युभयस्थलम् ।**
**इष्टलिङ्गं भवत्येव सत्यमुक्तमिदं मया ।।**

(अ.सू., ३.१६–२०)

## द्विविधशैवागमः

शैवागमः श्रौताश्रौतभेदेन द्विविधः । तत्र श्रौतः श्रुत्यनुसारेण प्रवर्तते। अश्रौतः स्वतन्त्रः भवति ।

**शैवागमोऽपि द्विविधः श्रौताश्रौतश्च स स्मृतः ।**
**श्रुतिसारमयः श्रौतः स्वतन्त्रः इतरो मतः ।।**

(शै.प., ८. पृ.२२)

## द्वैताद्वैतमतम्

वीरशैवसिद्धान्तस्य द्वैताद्वैतमतमित्यन्यन्नाम । लौकिकव्यवहार-दशायां द्वैतम्, पारमार्थिकदशायामद्वैतम् । अत्र लौकिकव्यवहारो नाम पूजादिक्रिया । शिवजीवयोरद्वैते पूज्यपूजकसम्बन्धो न घटते । तदा पूजाकर्मादीनामनुपपन्नत्वम् । अतः भक्त-माहेश्वर-प्रसादिस्थलदशायां द्वैतमेव भवति । पारमार्थिकदशायां जले जलमिव वह्नौ वह्निरिव शिवजीवसामरस्यरूपमद्वैतं सम्पद्यते । वीरशैवमते द्वैतम्, अद्वैत-मित्युभयमपि सत्यम् । शिवजीवयोरत्यन्तो भेदो वाऽत्यन्ताभेदो वा नाङ्गीक्रियते । अग्नेरुत्पन्नाः विस्फुलिङ्गाः अग्निश्चेत्युभयोर्मध्ये अत्यन्तभेदो वाऽत्यन्ताभेदो वा वक्तुं न शक्यते । एवमेव शिवादाविर्भूतानां जीवानाम्, शिवस्य च मध्ये अत्यन्तभेदो वा अत्यन्ताभेदो वा न घटते । अंसांसिनोर्मध्ये अत्यन्तभेदेऽङ्गीकृते सति अग्निरूपांशिनः दाहादिकार्यं विस्फुलिङ्गैरसाध्यं स्यात् । परन्तु विस्फुलिङ्गाः कार्पासं प्रविश्य दाहकार्यं करोतीति लोकप्रसिद्धम् । तयोर्मध्ये अत्यन्ताभेदेऽङ्गीकृते सति यथाऽग्निना पाकादिक्रियाः सम्भवन्ति, तथा विस्फुलिङ्गैरपि सम्भवेयुः । परन्तु तादृश्यः क्रियाः विस्फुलिङ्गैः न सम्भवन्तीति लोकप्रसिद्धम् । एवमेव शिवस्य शिवांशरूपस्य जीवस्य चात्यन्तभेदे सति घटपटादिभिरिव जीवेनापि ज्ञानरूपकार्यमसाध्यं स्यात् । तयोरत्यन्ताभेदे सति सर्वज्ञत्वसर्वकर्तृत्वादयः

शिवे यथा भवन्ति तथा जीवेऽपि भवेयुः । तस्मात् भेदाभेदमेव सर्वथाऽङ्गीकरणीयमिति सिद्धान्तः ।

**द्वैताद्वैतमतेशुद्धे विशेषाद्वैतसंज्ञके ।**
**वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ।।**

(श्री.भा.,भूमिकाश्लोकः१५)

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ।।**

(ऋ.वे.,१.१६४.२०; श्वे.उ.,४.६; मुं.उ.,३.१.१)

**अहं ब्रह्मास्मि।**

(बृ.उ.,१.४.१०)

**तत्त्वमसि।**

(छां.उ.,६.८.७)

**नेह नानास्ति किञ्चन।**

(कठ.उ.,४.११; बृ.३.,४.४.१९)

**एक एव शिवः साक्षाच्चिदानन्दमयो विभुः ।**
**निर्विकल्पो निराकारःनिर्गुणो निष्प्रपञ्चकः ।**
**अनाद्यविद्यासम्बन्धात्तदंशो जीवनामकः ।**
**यथा सुदीप्तात्पावकात् विस्फुलिङ्गः सहस्रशः प्रभवन्ते सरूपाः ।**
**तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ।।**

(मुं.उ.,२.१.१)

**पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।**
**पूजाकर्माद्यसम्पत्तेर्लिङ्गनिष्ठाविरोधतः ।।**
**सर्वाद्वैतविचारस्य ज्ञानाभावे व्यवस्थिते ।**

**भवेन्माहेश्वरः कर्मी सर्वाद्वैतनिरासकः ।।**
**प्रेरकं शङ्करं बुद्ध्वा प्रेर्यमात्मानमेव च ।**
**भेदात् तं पूजयेन्नित्यं न चाद्वैतपरो भवेत् ।।**
**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम् ।**
**परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते ।।**

(सि.शि.,१०.३७-३९; २०.६१)

# ध

## धर्माः

सत्यम्, क्षमा, दया, शौचम्, नियमः, मृदुता, तपः, त्यागः, ब्रह्मचर्यम्, सन्तुष्टिः, ऋजुता इति एकादशधर्माः ।

**सत्यं क्षमा दया शौचं नियमो मार्दवं तथा ।**
**तपस्त्यागो ब्रह्मचर्यं सन्तुष्टिश्चार्जवं तथा ।**
**धर्मा एकादश प्रोक्ता भक्तानां शुभवाञ्छिनाम् ।।**

(वी.स.सं., ७.११-१२)

## धर्माचारः

भक्तितः सम्यक् गृहीतस्य आचारस्य प्राणात्ययेऽपि अपरित्यागः धर्माचार इत्युच्यते ।

**धर्मो विश्वस्य जगतः प्रतिष्ठाः ... तस्माद्धर्मं परमं वदन्ति ।**

(म.ना.उ.,१७.६)

**आचारस्यापरित्यागः सुगृहीतस्य भक्तितः ।**

**अपि प्राणात्ययेनायं स धर्माचार उच्यते ।।**

(वातुलागमे., कै.सा., २.२ पृ.९९)

धर्माचारः, भावाचारः, ज्ञानाचारश्चेति त्रिविधेषु आचारेषु एकतमः । माहेश्वरस्थलाश्रितलिङ्गस्थलानां मध्ये एते त्रिविधाचाराः स्वीकृताः ।

(पश्यत – धर्माचारस्थलम्)

## धर्माचारस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । माहेश्वरस्थलाश्रितनवविध-लिङ्गस्थलेष्वेकम् । परकायस्वरूपस्य योगीश्वरस्य धर्माचार एव सर्वेषां उपकाराय भवतीति तस्यैव योगीश्वरसम्बद्धं धर्माचारस्थलम् ।

**धर्माचारस्थलं चाथ भावाचारस्थलं ततः ।**

**तस्यैव परकायस्य समाचारो य इष्यते ।**

**स धर्मः सर्वलोकानामुपकाराय कल्प्यते ।।**

(सि.शि., १६.३, ५८)

## धारणा = धारणम्

१. यमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाधिषु योगस्याष्टाङ्गेष्वेकम् ।

**नासाग्रनाभिचक्रादिदेशे चित्तस्य स्थिरीकरणं धारणा ।**

(वी.आ. चं., पृ.६)

२. मनसः (चित्तस्य) निर्मलीकरणं धारणा ।

**चित्तस्य निर्मलीभावो धारणासौ निगद्यते ।।**

(वी.आ.चं., पृ.५)

**स्फुरति परमतत्त्वं स्वस्य बाह्यान्तरे यत्**

**सततमतुलमत्या धारणं निश्चलेन ।**

**पुनरपि च वदामस्ते प्रकारोऽयमास्ते**

**चलनरहितचित्तं केवलं धारणा सा ।।**

**ध्यानैकगोचरमनास्थिरता भवेद्या।**

**साधारणेति शिवयोगविदो वदन्ति ।**

(शि.यो.प्र.,४.१०, ३.३५)

सा च धारणा स्थूलसूक्ष्मभेदेन द्विधा । तत्र स्थूला मन्दाधिकारिणाम्। सूक्ष्मा तु तीक्ष्णमतीनाम् । स्थूला च धारणा धरण्यादिना पञ्चधा ।

**धरणी वारिणी चैवमाग्नेयी मारुती तथा ।**

**नभोमयीति गद्यन्ते सूरिभिः पञ्चधारणाः ।।**

(शि.यो.प्र., ३.३६)

स्थूलधारणाभिस्त्रिदोषजाः रोगाः विनश्यन्ति ।

**एतासु भूम्यादिकधारणासु नृणां सदा प्राणनिरोधनेन ।**

**त्रिदोषजास्सर्वपुराणरोगाः नश्यन्ति शीघ्रं न संशयोऽत्र ।।**

(शि.यो.प्र.,३.४४)

## ध्यानम्

१. यमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाधिष्वेकं ध्यानं शिवात्मकम् ।

(वी.शै.प्र.,पृ.७१. श्लो.८)

२. पञ्चविधशिवयोगान्यतमम् ।

**ज्ञानं शिवमयं भक्तिश्शैवी ध्यानं शिवात्मकम् ।**

**शैवव्रतं शिवार्चेति शिवयोगो हि पञ्चधा ।।**

(शि.यो.प्र.,१.१५)

**सोऽहं चिन्मात्रमेवेति ध्यानं चिन्तनमुच्यते ।**

**यत्र हृदयकमलनिष्ठप्राणलिङ्गादौ चित्तं धृतं तत्र प्रत्ययस्य विसदृशपरिणामपरिहारद्वारेणालम्बनीकृतस्य नैरन्तर्यं ध्यानम् ।**

(वी.आ.चं.,पृ.६)

तपः, कर्मः, जपः, ध्यानम्, ज्ञानमिति शिवपञ्चयज्ञेष्वेकम् ।

**ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम् ।**

(सि.शि.,९.२४)

**शिवस्वरूपचिन्तैव ध्यानमित्यभिधीयते ।**

(श.त्र., श्लो.१३५, पृ.१७.; श्लो.१२४, पृ.१५; शि.यो.प्र.,१.५, ४.९; वी.शै.प्र., पृ.१९. श्लो.७)

**ध्येये चित्तं यदा लीनं तदा ध्यानमुदाहृतम् ।**

**ध्येयः प्रत्यक्षतां याति ध्याता तन्मयतां व्रजेत् ।।**

(कै.उ.शां.व्या.,पृ.३२)

ध्यानं सगुणं निर्गुणं चेति द्विधा –

**शिवध्यानं द्विधा प्रोक्तं सगुणं निर्गुणं तथा ।**

(शि.त.र., भा–३,८.६.८२)

३. ध्यानं धर्मसंग्रहे दश अन्यतमम् ।

**अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा ।**

**दानं पूजा जपो ध्यानमिति धर्मस्य संग्रहः ।**

(सि.शि.,१६.५९)

**जपकोटि समं ध्यानम् ।**

(शि.त.र.,भा–३,८.७.८३)

ध्यानं ज्ञानसाधनत्वेन मुक्तेरपि साधनम् ।

**ज्ञानाद् ध्यानं भवेद् ध्यानात् ज्ञानं भूयः प्रवर्तते ।**

**तदुभाभ्यां भवेन्मुक्तिस्तदस्माद् ध्यानरतो भवेत् ।।**

(शै.र.,भा-२,१२.३४; श.त्र.,पृ.१०,श्लो.७३,७५)

(पश्यत – पञ्चयज्ञाः)

**ध्यानस्थलानि–**

आधारस्थानम्, स्वाधिष्ठानस्थानम्, नाभिस्थानम्, हृदयस्थानम्, कण्ठस्थानम्, भ्रूमध्यस्थानम्, शीर्षस्थानम्, ब्रह्मरन्ध्रस्थानम्, चिदाकाश-स्थानम् इत्येतानि नव ध्यानस्थलानि ।

**आधारलिङ्गमणिपूरकहृद्विशुद्धि**

**भ्रूमध्यमस्तकनभोस्थलसंज्ञकानि ।**

**एतानि तानि यतिनां सुखदायकानि**

**ध्यानस्थलानि सुविचित्रतराणि नूनम् ।।**

(शि.यो.प्र.,३.५)

## ध्यानयज्ञः

दोषवर्जितः शुद्धोऽयं ध्यानयज्ञः चित्तं शोधयति, ज्ञानयज्ञप्रापकत्वेन मुक्तिञ्चापि प्रदापयति ।

**ध्यानयज्ञः परः शुद्धः सर्वदोषविवर्जितः ।**

**ध्यानयज्ञेन सततं स याति परमां गतिम् ।।**

(क्रि.सा.,भा-३.२७, पृ.२१०-२११)

**तपोयज्ञाद् ध्यानयज्ञः शताधिकः ।**

(शै.र.,भा-२,१२.८)

(पश्यत – ध्यानम्)

## ध्यानयोगः

ध्यानमेव ध्यानयोगः

**ध्यानयोगस्य चैकस्य कलां नार्हन्ति षोडशीम् ।।**

(सू.आ.,क्रि.पा.,६.३४)

(पश्यत – ध्यानम्)

## ध्यानयोगी

ध्यानयोगनिरतः साधकस्सिद्धो वा ।

**शिवध्यानरतो भूत्वा शिवलिङ्गाङ्गसंयुतः ।**

**शिवेतरपरित्यागी ध्यानयोगी स उच्यते ।।**

**यथा बाह्ये शिवं ध्यात्वा पूजां कुर्वन्ति मानवाः ।**

**तथा हृदि प्रसन्नश्चेत् ध्यानयोगी स उच्यते ।।**

(लिं.धा.चं.,पृ.१८९)

## ध्यानशैवः

भक्तिः, वैराग्यम्, अभ्यासः, ध्यानम्, एकान्तसेवनम्, भिक्षाटनम्, लिङ्गपूजा, सततं शिवस्मरणं चेति योगाष्टाङ्गेषु सिद्धिं प्राप्य यो योगी आत्मनिष्ठः भवति सः ध्यानशैवः । यदा तस्य चित्तं बहिर्मुखं भवति तदा बहिः स्थिताः सर्वे पदार्थाः दृश्यन्ते । तान् सर्वान् शिवमयत्वेन ध्यायन् ध्यानशैवः भवति । यत् दृष्टम्, यत् श्रुतम्, यत् स्पृष्टम्, यत् आघ्रातम्, यत् स्वादितम्, यच्च कृतं तत्सर्वं शिवात्मकमिति ध्यानशैवस्य प्रत्ययः ।

**इत्थं संसिद्धयोगस्सन् वर्तेतात्मपरायणः ।**

**सर्वं मदात्मकं ध्यायेद् यदि चित्तं बहिर्गतम् ।**

**दृष्टं श्रुतं च संस्पृष्टमाघ्रातं स्वादितं कृतम् ।।**

**सर्वं शिवात्मकं ध्यायेद् ध्यानशैवः स उच्यते ।**

(पार.आ.,१०.५७-५८)

(पश्यत - योगाष्टाङ्गानि, योगशैवः; योगाष्टाङ्गानां नामानि - पार. आ., १०.५५-५६ इत्यत्र दत्तानि)

# न

## नकारः

पञ्चाक्षरमन्त्रे अयं प्रथमः वर्णः । अस्य वर्णस्य वर्णं पीतम् । अधिदैवतं ब्रह्मा । सावित्री शक्तिः । पृथिवी आधारः । अनुष्टुप् छन्दः । ऋषिः वसिष्ठः । पश्चिममुखं स्थानम् । सद्योजातो ब्रह्म । वज्रमायुधम् । कला निवृत्तिः। काठिन्यं गुणः । चतुरश्रं चक्रम् । ज्वलदग्नेः प्रकाशः । मनः करणम्। प्राणो वायुः । घ्राणं ज्ञानेन्द्रियमिति नकारस्य षोडशरूपता । नमः इति अक्षरद्वयमपि लिङ्गस्य पीठम् । नकार आचारलिङ्गम् ।

**नकारं पीतवर्णं स्याद् ब्रह्मा तत्राधिदैवतम् ।**

**सावित्री शक्तिरित्युक्ता चाधारं पृथिवी तथा ।।**

**अनुष्टुप् छन्दसा युक्तं वासिष्ठार्षं तथैव हि ।**

**स्थानं पश्चिमतो वक्त्रं सद्योजातं तु ब्रह्मकम् ।।**

**आयुधं वज्रमेवोक्तं कला निवृत्तिरेव च ।**

**गुणः कठिन एवोक्तश्चक्रं तु चतुरश्रकम् ।।**

**ज्वलदग्नेः प्रकास्तु करणं मन एव च ।**

**प्राणवायुसमायुक्तं घ्राणं ज्ञानेन्द्रियो भवेत् ।**

**इत्येवं षोडशानां तु नकाराक्षरमुच्यते ।।**

(चं.आ.,क्रि.पा.,८.२२-२५)

**नमः पीठमिति प्रोक्तं ...................... ।**

(सि.सारा., पश्यत - लिं.धा.चं.,पृ.४६)

**आचाराख्यं नकारः स्यात् .................. ।**

(अ.सू.,६.४९)

## नन्दी

१. शिवस्य वाहनम्

२. शिवस्य प्रमथगणे एकतमः ।

**नन्द्यादि प्रमथानां च गणैः संसेविते शुभे ।।**

(सू.आ.,क्रि.पा.,१.३)

**अतिवर्णाश्रमाः पूर्वे नन्द्यादि प्रमथाः स्मृताः ।**

(वी.स.सं.,६.४. सुप्र.आ.तः.,उद्धृतः)

**ततो नन्दी महाकालः चण्डो भृङ्गी रिटिस्ततः ।**

(सि.शि., ३.४५)

३. वीरशैवानां पञ्चगोत्रनाथेषु एकतमः । नन्दीगोत्रम् उज्जैनीपीठा- नुयायिनां भवति ।

**वीरो नन्दी तथा भृङ्गी वृषभः स्कन्द एव च ।**

**मत्स्वरूपाः समुत्पन्नाः पञ्चगोत्राधिकारिणः ।।**

**वामदेवमुखोत्पन्नो दारुक परिकीर्तितः ।**

**.................. लक्षणं नन्दिगोत्रिणाम् ।।**

(वी.स.सं.,१.२८,४०,४३ – सुप्रभेदागमाद् उद्धृतः)

## नमः शिवाय

१. शिवपञ्चाक्षरीमहामन्त्रः । सप्तकोटिमन्त्रेषु श्रेष्ठः । विद्यासु श्रुतिः, श्रुतौ रुद्राध्यायः, तत्र पञ्चाक्षरी मन्त्रः, तत्र शिव इत्यक्षरद्वयं च प्राशस्त्यं भजन्ते । मूलम्, विद्या,शिवः, शैवसूत्रम् इत्येतानि पञ्चाक्षरमन्त्रस्य नामान्तराणि । लोके यानि यानि पञ्चेति व्यवस्थितानि सन्ति तानि सर्वाणि पञ्चाक्षरमहामन्त्रस्य सङ्केतानि ।

**नमश्शिवाय च शिवतराय च ....... ।**

(तै.सं.,४.५८)

**नमश्शिवायेति भस्म कृत्वा सप्ताभिमन्त्रितम् ।**

(सि.शि.,७.२९)

**नमः शिवाय स्वयमायत्तनाम्ने स्वभावसंसिद्धमहामहिम्ने।**

(अ.सू.,१.३)

**नमः शब्दं वदेत् पूर्वं शिवायेति ततः परम् ।**
**मन्त्रः पञ्चाक्षरो ह्येष सर्वश्रुतिशिरोगतः।।**

(सि.शि.,८.७)

**सप्तकोटिषु मन्त्रेषु मन्त्रः पञ्चाक्षरो महान् ।**

(सि.शि.,८.४)

**विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।**
**तत्र पञ्चाक्षरस्तत्र शिव इत्यक्षरद्वयम् ।।**

(चं.आ., क्रि.पा.,८.१७)

**मूलं विद्या शिवं चैव सूत्रं पञ्चाक्षरस्तथा ।**

**नामान्यस्य विजानीयादोङ्कारो हृदयं मतम् ।।**

(चं.आ.,क्रि.पा.,८.१७; सि.शि.,८.२३)

**पञ्चभूतानि सर्वाणि पञ्चतन्मात्रकाणि च ।**

**ज्ञानेन्द्रियाणि पञ्चापि पञ्चकर्मेन्द्रियाणि च ।।**

**पञ्चब्रह्माणि पञ्चापि कृत्यानि सह कारणैः ।**

**बोध्यानि पञ्चभिर्वर्णैः पञ्चाक्षरमहामनोः ।।**

(सि.शि.,८.१४-१५)

२. शिवजीवयोरैक्यम् । उमा-शिवयोः समावेशः ।

**नमः पदं तत् खलु जीवविवाचि शिवपदं तत् परमात्मवाचि ।**

**अथेति तादात्म्यपदं तदेतद् नमः शिवायेति जगाद मन्त्रः ।।**

(अ.सू.,६.४६)

**नमः शब्द उमा साक्षात् शिवशब्दः शिवः स्वयम् ।**

**अयशब्दस्तयोर्योगः सोमं तं समुपास्महे ।।**

(वी.प्र.,पृ.२)

## नरकम्

मरणोत्तरपापानुभवलोकः ।

**पशुं हत्वा सुरां पीत्वा कृत्वा पललभोजनम् ।**

**येनैव गम्यते स्वर्गः नरकं केन गम्यते ।।**

(च.ब.व.,१३४ - वीरागमादुद्धृतः)

## नवचक्राणि

ध्यानमुद्रापूर्वकध्यानगोचराणि योगसम्बद्धानि चक्राणि षोढा, सप्तधा, नवधा, दशधा चेति विविधप्रकाराणि । तत्र नवविधचक्राणि - मूलाधारम्

(ब्रह्मचक्रम्), स्वाधिष्ठानम्, मणिपूरकम्, अनाहतम्, विशुद्धिः, घण्टिकालिङ्गमूलम्, आज्ञा (भ्रूचक्रम्), निर्वाणचक्रम्, आकाशचक्रं चेति। मूलाधारचक्रम् (ब्रह्मचक्रम्) त्रिकोणाकारम्, हेमवर्णम्, गुदस्थाने स्थितम् । तत्र आधारशक्तिं ध्यायेत् । लिङ्गस्थाने स्थितम्, चतुर्दलात्मकं चक्रं तावत् स्वाधिष्ठानम् । तत्र सकलवर्णाधारत्वेन लिङ्गरूपं शिवं ध्यायेत् । नाभिस्थानस्थितं पञ्चावर्तं सर्पाकारम्, तटित्सदृशकान्तियुक्तं मणिपूरकचक्रम् । तत्र सकलसिद्धिप्रदां कुण्डलिनीशक्तिं ध्यायेत् । हृदयस्थाने विद्यमानं अधोमुखाष्टदलयुक्तं अनाहतचक्रम्, तत्र कर्णिकामध्ये ज्योतिर्लिङ्गं ध्यायेत् । कण्ठस्थाने स्थितं विशुद्धिचक्रम्, तत्र चतुरङ्गुलप्रमाणे इडापिङ्गलयोर्मध्ये सुस्थिरां सुषुम्नां ध्यायेत् । घण्टिकालिङ्गमूले राजदन्तकमिति प्रसिद्धे स्थाने घण्टिकामूलचक्रं स्थितम् (घण्टिकालिङ्गं नाम जिह्वायारधो भागः), तत्र अमृतत्त्वसिद्ध्यै बिन्दुस्वरूपं शून्यं ध्यायेत् । भ्रूमध्ये स्थितं एकनालभूतायाः सुषुम्नायाः मूलस्थानत्वेन स्वीकृतम्, वाक्सिद्धिप्रदम्, आज्ञाचक्रं भवति । तन्मध्ये दीपज्वालासदृशम्, ज्ञाननेत्रभूतम्, प्रसादज्योतिं ध्यायेत् । ब्रह्मरन्ध्रस्थाने सुखस्वरूपं (सुषुम्नकम्) निर्वाणाख्यं चक्रम् । तत्र वह्निसमानम्, मोक्षदम्, जालन्धरपीठं भवेत् । बैन्दवाकाशे पूज्यं नादबिन्दुकलाकूटरूपमाकाशचक्रं भावयते । तदेव दिव्यलिङ्गपीठमुच्यते । तत्र षोडशदलात्मके कमले परमशून्यस्वरूपां महाशक्तिं (ऊर्ध्वशक्तिं) ध्यायेत् ।

**ध्यानस्थलेषु सर्वेषु नवचक्राणि योगिभिः ।**
**श्रेष्ठानि तानि कथ्यन्ते वक्ष्यामः श्रृणु ते वयम् ।।**
**मूलाधारे त्रिधावर्तं ब्रह्मचकं भगोपमम् ।**
**तत्र हेमनिभां ध्यायेदधःशक्तिमभीष्टदाम् ।।**
**स्वाधिष्ठानं ततश्चक्रं तत्र चातुर्दलाम्बुजम् ।**
**तदेवोड्डीयणं ध्यायेत्पश्चिमाभिमुखं शिवम् ।।**

पञ्चावर्तं नाभिचक्रं सर्पाकारां तटिन्निभाम् ।
तत्र कुण्डलिनीशक्तिं सर्वशक्तिप्रदां स्मरेत् ।।
अधोमुखाष्टपत्राब्जयुक्तं हृच्चक्रमिष्टदम् ।
तन्मध्यकर्णिकां ज्योतिर्लिङ्गाकारामिमां स्मरेत् ।।
पञ्चमं कण्ठचक्रं च तत्राङ्गुलचतुर्थके ।
इडापिङ्गलयोर्मध्ये सुषुम्नां सुस्थिरां स्मरेत् ।।
षष्ठं च घण्टिकालिङ्गमूलं तद्राजदन्तकम् ।
ध्यायेत् तद्दशनाद्वारं तत्र शून्यं सुसिद्धये ।।
भ्रूचक्रं सप्तमं त्वेकनालकन्दं सुवाक्प्रदम् ।
ध्यायेद्दीपशिखाकारं तन्मध्ये ज्ञानलोचनम् ।।
ब्रह्मरन्ध्रेऽष्टकं चक्रं निर्वाणाख्यं सुषुम्नकम् ।
तत्र जालन्धरं धूमशिखाभं मोक्षदं भवेत् ।।
आकाशचक्रं नवमं प्रशस्तं
त्रिकूटकं पूर्णगिरेश्च पीठम् ।
तत्रोर्ध्वशक्तिं सुखदां सुशून्याम्
ध्यायेद् द्व्यष्टारसरोजमध्ये ।।

(शि.यो.प्र.,३.७-१६; तुलयत-यो.रा.उ.,११-१७)

## नववक्त्ररुद्राक्षः

रुद्राक्षभेदः । नवमुखविशिष्टः रुद्राक्षः । अस्य नवशक्त्यधिदैवताः भवन्ति । तस्य धारणेन नवशक्तयः प्रीता भवन्ति । तस्य धारणेन भ्रूणहत्या-दोषो निवार्यते । स तु भैरवः ।

नववक्त्रं तु रुद्राक्षं नवशक्त्यधिदैवतम् ।
तस्य धारणमात्रेण प्रीयन्ते नवशक्तयः ।

(चं.आ.,क्रि.पा.,७.३३)

**नवास्यो भैरवः प्रोक्तो भ्रूणहत्यां व्यपोहति ।**

(शि.त.र.,भा-३, ८.६.२७)

## नवाराधनम्

वीरशैवानां अन्त्येष्ट्यन्तर्गतत्वेन नवाराधनम् आगमेषु विहितम् । प्रथमे, तृतीये, पञ्चमे, सप्तमे, नवमे, एकादश्यां च दिने नवाराधनं क्रियते । धर्मशास्त्रेषु नवाराधनं नवश्राद्धस्वरूपेण वर्णितम् । अत्र श्राद्धस्य स्थाने आराधनं विधीयते ।

**प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे तथा ।**

**नवमैकादशाह्नोश्च नवाराधनमाचरेत् ।।**

(चं.आ.,च.पा.,४.१६;मकुट.,च.पा.,५.१६;पश्यत-पि.वि.काणे महोदयस्य धर्मशास्त्रस्येतिहासे, पृ.११५३-१२७९)

## नवविधभक्तिः

श्रवणम्, कीर्तनम्, स्मरणम्, पादसेवनम्, अर्चनम्, वन्दनम्, दास्यम् सख्यम्, आत्मनिवेदनम् - एवं नवविधा भक्तिः । तद्यथा -

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।**

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**

**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना ।**

(सि.शि.,९.२-३)

**श्रोत्रं शृणोति चरितं यदुमापते -**

**स्तज्जिह्वा तु सैव कुरुते स्तुतिमीश्वरस्य ।**

**चित्तं स्मरत्यनुदिनं शिवमेव यत्तद्येतौ**

**करौ कलयतश्शिवपादसेवाम् ।।**

**लिङ्गार्चनं च नियमात्कुरुतस्त्रिसन्ध्यं**

**मूर्ध्ना स एव कुरुते गुरवे नमांसि।**

**दासस्सखास्मि तव शङ्कर तेऽर्पयामि**

**स्वात्मानमेनमिति भक्तिमतां क्रियास्ताः।।**

(वी.ध.शि.,३.५१-५२, पृ.२०३)

## नष्टागमः

भेदशून्यशिवज्ञानस्थितिः । द्वैतशून्ये महाशिवज्ञाने ज्ञातृज्ञानज्ञेयात्मकत्रिपुटीमयप्रपञ्चशून्यत्वाद् इह निर्भावागमसम्पन्नशिवयोगिविषये ज्ञानस्य भेदज्ञानस्य नष्टभावेन नष्टत्वेन नष्टागमः ।

**भेदशून्ये महाबोधे ज्ञात्रादित्रयहीनकः ।**

**ज्ञानस्य नष्टभावेन नष्टागम इहोच्यते ।।**

(सि.शि., १८.५०)

## नष्टागमस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्राणलिङ्गिस्थलान्तर्गत नवविधलिङ्गस्थलेष्वेकम् । नष्टागमे स्थितस्य शिवयोगिनः स्थलम् ।

**स्तलानां नवकं प्रोक्तं प्राणलिङ्गिस्थलाश्रितम् ।**

**..................... ततो नष्टागमस्थलम् ।।**

(सि.शि.,१८.२-३)

(पश्यत – नष्टागमः)

## नादः

स्थावरजङ्गमं जगत् बिन्दुनादात्मकं भवति । तत्र शक्तिः बिन्दुः, शिवो नादः । अतः जगत् शिवशक्त्यात्मकम् । नादः बिन्दोः आधारः । बिन्दुः जगतः आधारः । मिलित्वा जगदाधारभूतौ । बिन्दुनादस्वरूपौ पार्वतीपरमेश्वरौ जगतः मातापितरौ ।

**बिन्दुनादात्मकं सर्वं जगत् स्थावरजङ्गमम् ।**

**बिन्दुः शक्तिः शिवो नादः शिवशक्त्यात्मकं जगत् ।।**

**नादाधारमयं बिन्दुः बिन्द्वाधारमिदं जगत् ।**

**जगदाधारभूतौ हि बिन्दुनादौ व्यवस्थितौ ।**

**माता देवी बिन्दुरूपा नादरूपः शिवः पिता ।**

(चं.आ., क्रि.पा.,३.१३-१४, १७)

नादबिन्दुकलारूपजगत्कारणत्रये नादः एकं कारणम् ।

**नादरूपः शिवस्साक्षाल्लिङ्गमित्यभिधीयते ।**

**तत्पीठिकामहाशक्तिः सा च वै बिन्दुरूपिणी ।।**

**तयोः सम्मेलनाद्देवि कला तत्र प्रतिष्ठिता ।।**

(सू.आ., क्रि.पा., ६.३)

**बिन्दुः शक्तिः शिवो नादः कला संयोग एव च ।**

**शिवशक्त्योर्भवेद्योगो जगत्सृष्ट्यर्थकारणम् ।**

(शि.त.र.,भा-१, १.४.२५)

## नादबिन्दुकला:

१. नादः, बिन्दुः, कला - इत्येते जगत्सृष्टिकारणभूत- त्रिविधतत्त्वानि ।

**तस्माल्लिङ्गमिति ख्यातं नादबिन्दुकलात्मकम् ।**

(सू.आ., क्रि.पा., ६.४)

(पश्यत - नादः)

२. नादबिन्दुकलारूपमेव कर्मसादाख्यम् ।

**नादबिन्दुकलारूयं कर्मसादाख्यमुच्यते ।**

(सू.आ.,क्रि.पा., ७.५८)

## नाभिचक्रम्

नाभिप्रदेशगतं पञ्चवलययुक्तं मणिपूरकं चक्रम्। तत्र सर्वसिद्धिप्रदां कुण्डलिनीं ध्यायेदिति नियमः।

**पञ्चावर्तं नाभिचक्रं सर्पाकारां तटिन्निभाम् ।।**

**तत्र कुण्डलिनीशक्तिं सर्वसिद्धिप्रदां स्मरेत् ।**

(शि.यो.प्र.,३.१०)

## निगमागमः

निगमः वेदः, श्रुतिः । आगमः शिवागमादिसिद्धान्तः । शिव एवानयोरुभयोरुपदेशकः । निगमाः शिवस्य निश्वासभूताः । शिवागमास्तु शिववक्त्राद्विनिर्गताः ।

**अथवा शिवनिश्वासश्रुतिभ्यस्ते शिवागमाः ।**

**अधिकाः शिववक्त्रेभ्यः साक्षादेव विनिर्गताः ।।**

**परस्पराविरुद्धार्थाः शिवोक्ता निगमागमाः ।**

**निगमानामागमानां परमाप्तोपदेशतः ।**

**प्रामाण्यमविशेषेण ज्ञातव्यं तत्त्वदर्शिभिः ।।**

(क्रि.सा.,भा-१, उपोद्घातम्, ३०-३२)

## निजलिङ्गम्

१. परवस्तु । निजतत्त्वम् । स्वात्मनि तादात्म्येन स्थितस्य शिवलिङ्गस्य अहमिति प्रत्यक्षानुभवस्थितिः निजलिङ्गमिति कथ्यते । महालिङ्गमेव निजस्वरूपमिति भावः। इदमेव लिङ्गनिजमिति कथ्यते ।

**स्वान्तःस्थशिवलिङ्गस्य प्रत्यक्षानुभवस्थितिः।**

**यस्येव परलिङ्गस्य निजमित्युच्यते बुधैः ।।**

(सि.शि., १२.३२)

२. इष्टलिङ्गमपि निजलिङ्गमिति कथ्यते ।

**यो हस्तपीठे निजमिष्टलिङ्गं विन्यस्य तल्लीन मनः प्रचारः ।**

**बाह्यक्रिया सङ्कुलनिस्पृहात्मा संपूजयत्यङ्ग स वीरशैवः ।।**

(शं.सं. वीरशैवपञ्चपीठपरम्परा इति ग्रन्थे उद्धृतम्, पृ.१०)

**अर्पयित्वा निजे लिङ्गे पत्रं पुष्पं फलं जलम् ।**

(वी.प्र., पृ.१३४, श्लो.२६)

## नित्यम्

क्रियासारोक्तदिशा श्रुत्यनुसारेण सदाचाराः निर्विशेषाः । ते च पञ्चविधाः । तत्र नित्यं सायङ्काले अग्निहोत्रादि कर्म यत्क्रियते तन्नित्यं नाम आचारः ।

**सदाचाराः बहुविधाः प्रमाणैरुपवर्णिताः ।**

**संक्षेपतः पञ्चविधा आचारा निर्विशेषकाः ।।**

**नित्यं नैमित्तिकं काम्यं नित्यनैमित्तिकं तथा ।**

**नित्यकाम्यमिति प्राहुः पञ्चधा शास्त्रकोविदाः ।।**

**तत्र नित्यं सायमग्निहोत्रमौपासनादिकम् ।**

**नित्यत्वं श्रुतिचोद्यत्वं प्रमादे दोषसम्भवः ।**

(क्रि.सा., भा-२, ५.९-१०, १६ (१९))

## नित्यकाम्यम्

क्रियासारानुसारं पञ्चसदाचारेष्वन्यतमः । दध्ना जुहोतीत्यादिकं नित्यकाम्यम् ।

**दध्ना जुहोति पयसा जुहोतीत्येवमादिकम् ।**

**नित्यकाम्यमिति प्राहुः करणेऽभ्युदयः परः ।।**

(क्रि.सा.,भा-२, ५.१९)

(पश्यत – नित्यम्)

## नित्यनैमित्तिकम्

पञ्चसदाचारेष्वन्यतमम् । वर्षाकाले निमित्तेन नित्यं क्रियमाणं निरुढपशुबन्धात्मकं कर्म नित्यनैमित्तिकम् ।

**नित्यनैमित्तिकं प्राहुः प्रावृषि श्रुतम् ।**

**निरुढपशुबन्धाख्यं ............... ।।**

(क्रि.सा., भा-२, ५.२०)

(पश्यत – नित्यम्)

## नित्यपरिक्रमः

नित्यपरिक्रमः, नैमित्तिकपरिक्रम, इति द्विविधपरिक्रमयोः अन्यतरः । नियमेन प्रतिदिनं संख्यानियमेन सह क्रियमाणः परिक्रमः नित्यपरिक्रमः ।

**परिक्रमोऽयं कर्तव्यो नियमेवानुवासरम् ।**

**संख्यासमन्वितः सोऽयं नित्य इत्यभिधीयते ।।**

(शै.र.,भा-२.१३.१५८-१५९)

## नित्यमुक्ताः

स्वतन्त्रपदार्थभूताः चेतनाः नित्यमुक्ताः नित्यसंसारिणश्चेति द्विविधा। तत्र वीर-नन्दि-भृङ्गि-वृष-स्कन्दाख्या गोत्राधिकारिणः, एकाक्षर-द्व्यक्षर-त्र्यक्षर-चतुरक्षर-पञ्चाक्षराख्यमहाचार्येभ्य आरभ्य प्रमथगणपर्यन्तं चेतनाः नित्यमुक्ताः ।

**तत्र वीरनन्द्यादयस्तथैकाक्षरादयः प्रमथगणान्ताश्चेतना नित्यमुक्ताः।**

(वी.स.सं., १, पृ.२)

## नित्यसंसारिणः

सृष्टि-स्थिति-लय-तिरोधान-अनुग्रहकर्तृभूतब्रह्मविष्णुरुद्रमहेश्वर सदाशिवादिमनुष्यान्ताः नित्यसंसारिणः ।

**नित्यसंसारिणस्तु सृष्टिस्थित्यन्तकर्तारो**

**ब्रह्मविष्णुमहेश्वरादयो मनुष्यान्ताः ।**

(वी.स.सं., १.पृ.२)

(पश्यत – नित्यमुक्ताः)

## नित्यानन्दः

निरतिशयानन्दः । मोक्षसुखम् । मुक्तः । आत्मतत्त्वम् । नित्यानन्दे स्थितस्य नास्ति विश्वविकल्पना ।

**नित्यानन्दचिदाकारमात्मतत्त्वं विहाय कः ।**

**विवेकी रमते देहे.......................।।**

**नित्यानन्दपदे निराकृतजगत्संसारदुःखोदये**

**साम्बे चन्द्रशिरोमणौ समुदयेद्भक्तिर्भवध्वंसिनी ।।**

(सि.शि., ५.७३, ७७)

**नित्यानन्दे निजाकारे विमले परतेजसि ।**

**विलीनचेतसां पुंसां कुतो विश्वविकल्पना ।।**

(सि.शि.,१९.२५)

**निरतिशयनित्यमुक्तनित्यानन्दः ।**

(वी.प्र.,पृ.११७, श्लो.३)

## निदिध्यासनम्

महालिङ्गस्वरूपाद्वैतशिवचैतन्यरूपब्रह्मज्ञानसाधनभूतश्रवणादि-साधनत्रयान्यतमम्। उक्तं श्रीमरितोण्टदार्यैः **"विजातीयप्रत्यय तिरस्कारपूर्वकसजातीयप्रत्ययप्रावाहीकरणं निदिध्यासनम् । तच्च योगशास्त्रे समाधिरित्युच्यते । तच्च द्विविधम् – सविकल्पकं निर्विकल्पकं चेति। निर्विकल्पोपकारकं सविकल्पकम् ।**

**निर्विकल्पं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।**

**ये मन्दास्तेऽनुकम्प्यन्ते सविशेष निरूपणैः ।। इति कल्पतरूक्तेः ।**

**सविकल्पकनिदिध्यासनं च यमनियमासनप्राणायामप्रत्याहार धारणध्यानसहितम्''।**

(वी.आ.चं., पृ.५)

## नियताचारः

आचारलिङ्गस्य सदाचार, नियताचार, गणाचार, इति त्रिविधप्रभेदेष्वन्यतमः । नियतम् अत्यये प्राणत्यागः आचारपरिपालनम् ।

**स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।**

**सदाचारस्तु नियतो गणाचारस्ततः परम् ।।**

**यस्तु स्वकृतमाचारं न त्यजेच्च तदत्ययात् ।**

**त्यजेदसून् महादेवि नियताचार ईरितः ।।**

(सू.आ., क्रि.पा., ८.६, ८; क्रि.सा.,भा-३, २४, पृ.१२०)

## नियतिः

षट्त्रिशंत्तत्त्वान्यतमम् । स्वानुष्ठितकर्मफलं स्वेनैवानुभोक्तव्यमिति नियमः नियतिः । आत्मना स्वेन कृतानि कर्माणि स्वेनैव भोक्तव्यानीति नियमनं नियतितत्त्वम् ।

(शै.सि.दी.,पृ.२, श्लो.२४)

**व्यापकता हि अव्यापकतां प्राप्य, मयेदं कर्तव्यमिति नियमहेतुभूतं नियमतत्त्वम् ।**

(शि.मं.,पृ.५३)

सा च आयुरादिभेदात् षोढ़ा ।

**आयुः कर्म च चित्तं च विद्या निधनमेव च ।।**

**कालतत्त्वात्सुखं चेति षड्विधा नियतिः स्मृता।**

(शि.त.र.,भा-१, १.७.१९-२०)

## नियमः

यमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाधिनामकाष्टाङ्गविशिष्टहठयोगाङ्गम् । सविकल्पकनिदिध्यासनाङ्गं च । अन्तरिन्द्रियनिग्रहः नियमः । योगशास्त्रे-शौचादयः नियमाः पञ्च ।

**शौचसन्तोषजपः स्वाध्यायेश्वरप्रणिधानानि पञ्च नियमाः ।**

(वी.आ.चं.,पृ.५)

वीरशैवमते - अक्रोधादयो नियमाः पञ्चेति केचित्, सन्तोषादयः दशेत्यन्ये ।

**अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।**

**अप्रमादश्च पञ्चैते नियमास्तु प्रकीर्तिताः ।।**

(श.त्र., पृ.४., श्लो.२२)

**सन्तोष आस्तिक्यगुणो मतिश्च तपोव्रतं शङ्करपूजनं जपः ।**

**ह्रीर्योगशास्त्रश्रवणं च पात्रे प्रदानमेते नियमा दश स्मृताः ।।**

(शि.यो.प्र.,२.११)

प्रकारान्तरेण च -

**भक्तिर्गुरौ परमतत्त्वपदेऽनुरक्तिः**

**निस्सङ्गतास्वयमुपागतलाभतुष्टिः।**

**एकान्तवासपरता च मनोनिवृत्तिः**

**वैराग्यभाव इति ये नियमास्त एव।।**

(शि.यो.प्र.,४.५)

**अनुरक्तिः परे तत्त्वे नियमः परिकीर्तितः ।।**

(वी.आ.चं.,पृ.५)

## निरञ्जनः

१. आत्मा । निर्गतम् अञ्जनं यस्मात् सः । जीवन्मुक्त आत्मा इत्यर्थः ।

**आत्मायं केवलः शुद्धः शिवस्यांशः सदाऽमलः ।**

**नित्यो निरञ्जनः शान्तः तस्मादात्मा स्वयं शिवः ।।**

(अ.सू.,५.३)

**निराकृतं रञ्जनं यन्मायामोहविजृम्भितम् ।**

**येन स्वरूपसिद्धेन स भवेद्धि निरञ्जनः ।।**

(शि.त.र., भा-१,१.३.४६)

**अस्ति कश्चित् स्वतःसिद्धः सच्चिदानन्दलक्षणः ।**

**नित्यो निरञ्जनः शुद्धो निर्मलो निरुपप्लवः ।।**

(सू.आ., क्रि.पा.,१.१४)

२. निरञ्जनम् । शिवः । स एव ब्रह्म । परमात्मा ।

**तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।।**

(शि.त.र.,भा-१, १.३.४७)

## निरञ्जनजङ्गमः

ब्रह्मेति व्यवह्रियमाण अनादिभक्तः स्वप्रकाशः अद्वितीयश्च निरञ्जनजङ्गमः, यस्य शिखायां जगत्कारणं शून्यलिङ्गमजायत ।

**श्रीमान्महानादिभक्तः स्वप्रकाशोऽद्वितीयकः ।**

**योऽसौ ब्रह्मेति सम्प्रोक्तः शिवतत्त्वार्थवेदिभिः ।।**

**तस्मात् स्वयं प्रादुरासीत् स निरञ्जनजङ्गमः ।**

**तच्छिखायां शून्यलिङ्गं सञ्जातं विश्वकारणम् ।।**

(शि.त.र.,भा-१, १.३. ४-५)

## निराकारयोगशैवः

शैवभेदः । योगशैवस्य साकारनिराकारभेदयोरन्यतरः । ध्यातृध्येयादि वर्जितः । स एव वीरशैवावधूतः ।

**स चापि द्विविधो योगः साकारश्च निराकृतिः ।।**

**निराकृतिर्निराकारो ध्यातृध्येयविवर्जितः ।**

**ज्ञानज्ञेयज्ञातृभेदप्रत्ययत्रयवर्जितः ।।**

**वीरशैवावधूतोऽपि स एव कथितः शिवे ।**

(पार.आ., १०.१३-१४, १७)

(पश्यत – योगशैवः)

## निराभारः

निस्सङ्गत्वं निस्पृहत्वादिकं निराभारवीरशैवस्य लक्षणम् ।

**निस्पृहो निजलिङ्गैक्यो भिक्षाशी भयवर्जितः ।**

**मौनी भूतदयायुक्तो निराभार इति स्मृतः।**

(चं.आ., क्रि.पा.,१०.४५)

(पश्यत – निराभारी)

## निराभारब्रह्मचारी

पट्टाभिषिक्तः, चरपतिः, निराभारी चेति त्रिविधब्रह्मचारिष्वेकः ।

**ब्रह्मवेदस्तदध्येता ब्रह्मचारीति गीयते ।**

**ब्रह्मचारी गृही चेति द्विधा मुख्यो विभिद्यते ।**

**उक्तलक्षणसम्पन्नो ब्रह्मचारी पुनस्त्रिधा ।।**

**पट्टाभिषेकवानाद्यः प्रोक्तश्चरपतिस्तथा ।**

**निराभारस्तृतीयः स्यात्सर्वलोकेषु विश्रुतः ।।**

(वी.स.सं.,१४.१, ३-४)

## निराभारी

१. मान्त्रिकसहजजङ्गमयोः सहजजङ्गमः ब्रह्मचारी, गृहस्थः, निराभारीति त्रिविधः । एवं सहजजङ्गमेष्वेकतमः।

**ब्रह्मचारी गृही चैव निराभारीति ते त्रयः ।**

(चं.आ.,क्रि.पा.,४.८)

२. सामान्यः, विशेषः, निराभारीति त्रिविधवीरशैवेषु एकतमः। चतुर्थाश्रमस्थः त्यक्तदारादिश्च वीरशैवः निराभारीति प्रोच्यते ।

**पुनस्त्रिविधमेतद्धि सामान्यादिभेदतः ।**

**सामान्यश्च विशेषश्च निराभारीति च त्रिधा ।।**

(चं.आ.,क्रि.पा., १०.३५)

**तुरीयाश्रमसेवी तु निराभारीति चोच्यते ।**

**स्वतन्त्रो त्यक्तदारादिर्निराभारीति कथ्यते ।।**

(चं.आ., क्रि.पा., १०.४२)

## निराभारी वीरशैवः

वीरशैवस्य भेदः । चतुर्थाश्रमस्थः वीरशैवः यः मुक्तिमार्गम् आश्रित्य लौकिकाचाररहितः ।

पुण्य-पापरूपात् कर्मभारात् निवृत्तः निराभार इति कथ्यते । स च जटी, मुण्डी, शिखी वा काषायवस्त्रधारी वा निस्पृहः, निजलिङ्गयोगयुक्तः,

भिक्षान्नसेवी, भयवर्जितः, मौनधारी, प्राणिषु दयावान्, कन्था कमण्डलुधरः, भूति-रुद्राक्षधारी, दण्डकौपीनयुक्तः भवति ।

**मुक्तिमार्गं समाश्रित्य लौकिकाचारवर्जितः ।।**

**स एव च निराभारी वीरशैव इतीरितः ।।**

(वी.स.सं., ८.२९-३०)

(पश्यत – निराभारी)

**जन्तोः पुण्यं पापमिति कर्म द्विविधमुच्यते ।**

**निवृत्तकर्मभारत्वान्निराभार इति स्मृतः ।।**

**जटी मुण्डी शिखी वापि काषायवसनान्वितः ।**

**निस्पृहो निजलिङ्गैक्यो भिक्षाशी भयवर्जितः ।।**

**मौनी भूतदयायुक्तो निराभार इति स्मृतः ।**

**कन्था कमण्डलुधरो भूतिरुद्राक्षसंयुतः ।**

**दण्डकौपीनधारी च निराभार इति स्मृतः ।।**

(सू.आ.,क्रि.पा.,७.६४-६६, चं.आ.,क्रि.पा.,४५-४९;
पार.आ.,१५.५४-६९)

चन्द्रज्ञानागमोक्तदिशा श्रौतम्, स्वतन्त्रश्चेति वीरशैवद्वैविध्यमनृसृत्य निराभारी वीरशैवमपि द्विविधमित्यङ्गीक्रियते । तत्र स्वतन्त्रनिराभारीवीरशैवः मुण्डी वा जटिलो वा भूत्वा दण्डकाषाययुक्तः सन् सञ्चरति । श्रौता-(वैदिक)-निराभारी तु शिखायज्ञोपवीतयुक्तः दण्डकाषायवस्त्रधारी च भवति । शरीरे इष्टलिङ्गस्य निरन्तरधारणमुभयोरपि समानम्, लिङ्गवियोगे प्राणपरित्यागोऽपि उभयोरपि समानः।

**मुण्डी वा जटिलो वापि दण्डकाषायसंयुतः ।**

**स्वतन्त्रे वीरशैवे तु निराभारी चरेन्महीम् ।।**

**शिखायज्ञोपवीताढ्यो दण्डकाषायचेलवान् ।**

**वैदिके वीरशैवे तु निराभारी स स्मृतः ।।**

**स्वेष्टलिङ्गवियोगस्तु समान उभयोः स्मृतः ।**

(चं.आ.,क्रि.पा., १०.४३-४५)

## निरुपाधिकदानम्

दानभेदः । त्रिविधदानेष्वेकतमः । फलाकांक्षां विना ईश्वरार्पणबुद्ध्या दीयमानं दानम् ।

**दानं च त्रिविधं प्रोक्तं सोपाधिनिरुपाधिकम् ।**

**सहजं चेति सर्वेषां सर्वतन्त्रविशारदैः ।।**

**फलाभिसन्धिनिर्मुक्तं ईश्वरार्पितकाङ्क्षितम् ।**

**निरुपाधिकमाख्यातं दानं दानविशारदैः ।।**

(सि.शि.,९.८०, ८२)

(पश्यत – दानम्)

## निरुपाधिकदानस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतभक्तस्थलस्य पञ्चदशप्रभेदेष्वन्यतमम् । निरुपाधिकदाननिष्णातस्य स्थलम् ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**

**अत्र दानत्रयं प्रोक्तं सोपाधिनिरुपाधिकम् ।**

(सि.शि.,५.२७-२९)

(पश्यत – उपाधिभस्म, सोपाधिकदानम्)

## निरुपाधिकभस्म

परशिवः । परशिवं महाभस्मेति मन्यमानाः निरुपाधिक भस्मधारिणः ।

**भस्मधारणसंयुक्तः पवित्रो नियताशयः ।**

**शिवाभिधानं यत्प्रोक्तं भासनाभ्दसितं तथा ।।**

महादेवं महाभस्मेति मनसि ये धारयन्ति ते एव निरुपाधिक भस्मधारिणः । अनेन महाभस्मेति प्रसिद्धो महादेव एव निरुपाधिकं भस्मेति व्यज्यते ।

**महाभस्मेति सञ्चिन्त्य महादेवं प्रभामयम् ।**

**वर्तन्ते ये महाभागाः मुख्यास्ते भस्मधारिणः ।।**

(सि.शि.,७.१-२)

**महाभस्मेति सञ्चिन्त्य, महाभागाः श्रेष्ठाः ये केचित् लिङ्गधारकाः वर्तन्ते ते मुख्यभस्मधारिणः तैश्च धृतं भस्म निरुपाधिकं भस्म ।**

(सि.शि.तत्त्व.प्र.,७.२)

(पश्यत – उपाधिकभस्म, सोपाधिकभस्म)

## निर्गुणध्यानम्

ध्यानभेदः । शिवध्यानप्रभेदः । शिवध्यानस्य सगुणध्यानम्, निर्गुणध्यानम् इति द्विविधध्यानयोरन्यतरः ।

**इन्द्रियादिभिरग्राह्यवस्त्वाधारितं ध्यानम् ।**

**शिवध्यानं द्विधा ज्ञेयं सगुणं निर्गुणं तथा ।।**

**आदौ सगुणमाश्रित्य पश्चान्निर्गुणमाश्रयेत् ।**

**इन्द्रियादिभिरग्राह्यं निर्गुणं त्वन्तरिक्षवत् ।।**

(शि.यो.प्र.,१.३२)

## निर्देशः

**निर्दिश्यते तु यज्ज्ञानं स निर्देश इति स्मृतः ।**

२२(सि.शि.,तत्त्व.प्र.,१३.४)

(पश्यत – निर्देशस्थलम्)

## निर्देशस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । शरणस्थलाश्रित चतुर्विधाङ्ग-स्थलेष्वेकतमः । संसारप्रवृत्तिकारणतमोभागं निराकृत्य यज्ज्ञानं उपदिश्यते सः निर्देशः । तत्सम्बद्धस्थलं निर्देशस्थलम् ।

**स्थलमेतत् समाख्यातं चतुर्धा धर्मभेदतः ।**

**ततो निर्देशमुद्दिष्टम् ..................... ।।**

**निराकृत्य तमोभागं संसारस्य प्रवर्तकम् ।**

**निर्दिश्यते तु यज्ज्ञानं स निर्देश इति स्मृतः ।।**

(सि.शि., १३.३-४, २२)

**स तज्ज्ञानं निर्देश इति निर्देशस्थलमिति स्मृतम् ।**

(सि.शि., तत्त्व.प्र., १३.२२)

## निर्देहागमः

देहवतोऽपि परात्मत्वभाविनः निरहङ्कारस्य निरस्तदेहधर्मस्य देहाभि-मानरहितस्य स्थितिः ।

**देहिनोऽपि परात्मत्वभाविनो निरहङ्कृतेः ।**

**निरस्तदेहधर्मस्य निर्देहागम उच्यते ।।**

(सि.शि., १८.३६)

## निर्देहागमस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्राणलिङ्गस्थलगत-नवविधलिङ्गस्थलेष्वेकतमः । निर्देहागमसंज्ञस्य शिवयोगिनः स्थलम् ।

**स्थलानां नवकं प्रोक्तं प्राणलिङ्गिस्थलाश्रितम् ।**

**परमात्मस्थलं पश्चान्निर्देहागम संज्ञकम् ।**

(सि.शि.,१८.२-३)

(पश्यत – निर्देहागमः)

## निर्बीजदीक्षा

सबीजदीक्षा निर्बीजदीक्षा इति क्रियावतीदीक्षाप्रकारयोरेकतरा ।

**क्रियावत्यथ सा द्वेधा निर्बीजा च सबीजका ।**

**तत्र निर्बीजका या सा जननीपुत्रयोर्वरम् ।।**

(शि.त.र.,भा-३, ९.७.१७)

(पश्यत – अबीजदीक्षा)

## निर्भावागमः

स्वस्वरूपभावव्यतिरेकभावाभावः ।

**व्यतिरेकात् स्वरूपस्य भावान्तरनिराकृतेः ।**

**भावो विकारनिर्मुक्तो निर्भावागम उच्यते ।।**

(सि.शि.,१८.४४)

## निर्भावागमस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्राणलिङ्गिस्थलगत-नवविधलिङ्गस्थलेष्वेकम् ।

**निर्भावागमसंज्ञं च ततो नष्टागमस्थलम् ।**

(सि.शि., १८.२-३)

(पश्यत – निर्भावागमः)

## निर्माल्यम्

शिवार्पणं कृत्वा स्वीकृतं निर्मलं शुद्धं फलपुष्पादिद्रव्यं निर्माल्य-मित्युच्यते ।

**निर्माल्यं निर्मलं शुद्धं शिवेन स्वीकृतं यतः ।**

**शिवप्रसादं यद्द्रव्यं शिवाय विनिवेदितम् ।**

**निर्माल्यं तत्त्वशैवानां मनोनैर्मल्यकारणम् ।।**

(सि.शि.,९.७५; ११.७)

## निर्वाणचक्रम्

चक्रभेदः । ब्रह्मरन्ध्रस्थितमिदम् अष्टमं चक्रम् । वह्निसमानं तत्रत्यं जालन्धरपीठं मोक्षसुखदम् ।

**ब्रह्मरन्ध्रेरष्टमं चक्रं निर्वाणाख्यं सुषुम्नकम् ।**

**तत्र जालन्धरं धूमशिखाभं मोक्षदं भवेत् ।।**

(शि.यो.प्र.,३.१५)

## निर्वाणदीक्षा

वेधादीक्षान्तर्गतासु सप्तविधदीक्षास्वेकतमा । आणवादिमलत्रयोत्पन्न-तापत्रयभयेन व्याकुलात् दुरन्तकरात् दुःखमयाच्च भावात् प्रयत्नपूर्वकं मनः निर्वर्तयस्व इत्येवंरूपो गुरोरादेशः निर्वाणदीक्षेति कथ्यते ।

**इत्यादिश्य च दद्याच्च दीक्षां निर्वाणसंज्ञिताम् ।।**

**मलत्रयसमुद्भूते तापत्रयभयाकुले ।**

**दुरन्ते दुर्भवोपान्ते मनो न कुरु यत्नतः ।।**

(का.आ.,क्रि.पा.,१०२-१०३)

## निवृत्तिः

कलाभेदः । क्रियाशक्तिः ।

**निवृत्तिः स्यात् क्रियाशक्तिरिति पर्यायसङ्गतिः ।**

(अ.सू.,३.२६)

## निवृत्तिकला

निवृत्तिनाम्नी कला ।

**निवृत्तिकलयायुक्तं क्रियाशक्तिसमुद्भवम् ।**

(सू.आ.,क्रि।पा.,१.४३)

(पश्यत – निवृत्तिः)

## निषिद्धगुरुः

हितादि षड्गुरुष्वेकतमः । तदुक्तं किरणागमे –

**हितः काम्यो निषिद्धश्च ................ ।**

**इहेष्टकामदं यत्तु परस्मिन्नरकप्रदम् ।**

**यः प्रयच्छति तज्ज्ञानं स निषिद्धगुरुर्भवेत् ।।**

(वी.ध.शि.,२, पृ.१३७)

(पश्यत – षड्विधगुरुः)

## निष्कलम्

कलारहितम् अखण्डं निराकारतत्त्वम् । परवस्तु । शिवतत्त्वम् । भावग्राह्यं भावलिङ्गम् ।

**न विद्यन्ते कला यत्र तन्निष्कलमुदाहृतम् ।**

**शिवतत्त्वं महासेन निष्कलं चेति कीर्तितम् ।**

(शि.त.र.,भा–१, १.४.८; १.६.१०)

**निष्कलं भावलिङ्गं स्यात् भावग्राह्यं परात्परम् ।**

(चं.आ., क्रि.पा., ३.२४ ; अ.सू.,३.६)

## निष्कललिङ्गम्

कलारहितं सच्चिदानन्दात्मकं शिवतत्त्वम् । शून्यलिङ्गजन्यम् ।

**शून्यलिङ्गस्य मध्ये तु निष्कलस्य समुद्भवम् ।**

**न विद्यन्ते कला यत्र तन्निष्कलमुदाहृतम् ।।**

(शि.त.र.,भा–१, १.४.८)

## निष्कललिङ्गस्थलम्

निराकारवस्तु । सप्तविंशतिस्थलेष्वेकम्, पञ्चमं च । सर्वशून्यस्य निरालम्बस्य शून्यलिङ्गस्य स्वलीलाविलासचिन्तनेन निष्कललिङ्गस्वरूपमुद्भूतम् । तच्च षट्कललिङ्गस्थलमभवत् । एवं सर्वशून्यं निरालम्बं शून्यलिङ्गं स्वस्य लीलाविलासचिन्तनेन षट्कलातीतं वाङ्मनसगोचरं निष्कललिङ्गस्वरूपमासीत्।

**पञ्चमं निष्कलाख्यस्य लिङ्गस्य स्थलमुच्यते ।**

(अ.वी.सा.सं., भा-१, १.४९)

## निष्पत्तियोगः

योगशास्त्रप्रसिद्धारम्भघटप्रचयनिष्पत्तिनामकचतुर्भूमिकान्यतमा निष्पत्तिभूमिका । सेयमत्र राजयोगात्मिका। तत्राप्यमनस्कयोगात्मिका ।

**मन्त्रलयावारम्भकघटसंज्ञौ हठः प्रचयस्स्यात् ।**

**सन्निष्पत्तिरिति स्मृत एव महाराजयोगस्तु ।।**

योगेऽस्मिन् स्थितस्य न देहविकारादयः ।

**तापत्रयं नवविधव्यवहारभावाः षट्कौशिकानि षण्मित्रक पञ्च कोशाः ।**

**षड्भावनाविकृतयश्च षडूर्मयश्च निष्पत्तियोगमहतां भुवि न स्युरेव ।।**

(शि.यो.प्र.,५.५१-५२)

## निःसंसारदीक्षा

वेधादीक्षान्तर्गतासु सप्तविधदीक्षाष्वेकतमा । देहेन्द्रियादिसंसारं परित्यज्य शिवपूजा एव संसार इत्येवंरूपभावनां कुरु इत्युपदेशो गुरुणा निःसंसारदीक्षेति कथ्यते ।

**देहेन्द्रियादिसंसारं परिहृत्य सदा मम ।**

**पूजोपचारः संसार इति भावय चेतसि ।।**

**एवं समयमादिश्य निस्संसारां निबोधयेत् ।**

(का.आ.,क्रि.पा.,१.१०१-१०२)

## नीराजनानि

अवसर-लघ्वी - गुर्वी - महतीत चतुर्विधासु पूजासु उपयुज्यमानानि नीराजनानि भिन्नभिन्नसंख्याकानि भवन्ति । तथा हि - अवसरपूजायां त्रिणि नीराजनानि - दर्शनम्, मज्जनम्, अवसरं चेति । मकुटागमे मज्जनाख्यस्य नीराजनस्य उत्तरमिति नामान्तरमुक्तम् ।

लघ्वीपूजायां नवनीराजनानि उक्तानि । अवसरपूजायामुक्ताभिः त्रीभिः नीराजनैः सह षडन्यनीराजनानि - माङ्गल्यम्, कर्पूरम्, शृङ्गारम्, महत्, आनन्दाख्यम्, असंख्यातं चेति उपयोक्तव्यानि ।

गुर्वीपूजायां महतीपूजायां च पूर्वोक्तनवनीराजनैःसह नीराजनद्वयं - सानुरागम्, ताम्बूलाख्यं चेति योजयेत् । एवमवसरपूजायां त्रीणि, लघ्वीपूजायां नव, गुर्वीमहतीपूजयोरेकादश - एकादश नीराजनानि भवन्ति ।

**नीराजनत्रयं प्रोक्तमवसराख्यपूजने ।**

**आद्यं दर्शनसंज्ञं स्यान्मज्जनाख्यं द्वितीयकम् ।**

**तृतीयमवसराख्यमेवं सम्पूजयेत् प्रिये ।।**

**नीराजनानां नवकं लघ्व्यामुक्तं वरानने ।**

**प्रथमं दर्शनाख्यं स्यादवसराख्यं द्वितीयकम् ।।**

**मज्जनाख्यं तृतीयं तु माङ्गल्याख्यं चतुर्थकम् ।**

**कर्पूराख्यं पञ्चमं स्यात् षष्ठं शृङ्गारसंज्ञकम् ।।**

**सप्तमं तु महासंज्ञमानन्दाख्यमिहाष्टमम् ।**

**असंख्याताभिधं चैतन्नवमं परिकीर्तितम् ।।**

**सानुरागाभिधं ताम्बूलाभिख्यं च महार्चने ।**

**गुर्वर्चनेऽपि हि भवन्त्येकादश प्रियव्रते ।।**

(का.आ.,क्रि.पा.,४.२८-३२)

**दर्शनं त्ववसराभिख्यमुत्तराभिख्यमित्यपि ।**

**नीराजनत्रयं प्रोक्तमवसरायां महामते ।।**

(मकुट., क्रि.पा.,३.१०-१३)

## नैमित्तिकम्

सदाचारभेदः । कर्मप्रकारः । नित्यम्, नैमित्तिकम्, काम्यम्, नित्यनैमित्तिकम्, नित्यकाम्यम् इति पञ्चविधसदाचारेष्वन्यतमः । निमित्तमाश्रित्य ग्रहणादिसम्भवे अनुष्ठेयं कर्म नैमित्तिकम् ।

**नैमित्तिकं क्रान्तिपातग्रहणग्रहसम्भवे ।**

**कर्तव्यं कर्म वेदोक्तं कालसापेक्षमुच्यते ।।**

(क्रि.सा., भा-२, ५.१८)

## नैमित्तिकपरिक्रमः

नित्यपरिक्रमः, नैमित्तिकपरिक्रम इति द्विविधपरिक्रमयोः अन्यतरः। अष्टम्यादिविशेषसन्दर्भे क्रियमाणः परिक्रमः नैमित्तिकपरिक्रमः ।

**अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।**

**वैधृतौ च व्यतीपाते विषुवायनयोरपि ।।**

**चन्द्रसूर्यग्रहणयोः स्वजन्मादिविशेषतः ।**

**परिक्रमोऽयं कर्तव्यः स नैमित्तिक उच्यते ।।**

(शै.र.,भा-२, १३. १५९-१६१)

## नैवेद्यम्

शिवपूजोपचारभेदः । देवतायै समर्प्यमाणः फलादिद्रव्यविशेषः । देवतातृप्तिजननद्वारा भक्ततृप्तिजनकम् ।

**सर्वकामांस्तु नैवेद्यं दत्वा तृप्तिरतो भवेत् ।**

(शि.त.र.,भा-३, ८.७.६०)

## नैष्ठिकी दीक्षा

दीक्षाभेदः । शिवधर्मिणीदीक्षायाः भौतिकी, नैष्ठिकीति द्विविधदीक्ष-योरन्यतरा । शरीरपातपर्यन्तव्रतविशिष्टा दीक्षा ।

**भौतिकी नैष्ठिकी चेति द्विधा सा शिवधर्मिणी ।**
**शरीरपातपर्यन्तं व्रता सा नैष्ठिकी मता ।**

(शि.त.र.,भा-३, ९.७.२४-२५)

## नैष्ठिकब्रह्मचारी

शिष्यभेदः । वंश्यशिष्यभेदभूतमुख्यशिष्यभेदः । ब्रह्मचारी । नैष्ठिकब्रह्मचारी, भौतिकब्रह्मचारीति द्विविधब्रह्मचारिणोरन्यतरः । कौमारा-दारभ्य यावज्जीवं ब्रह्मचर्यपरिपालकः ।

**ब्रह्मचारी द्विधा प्रोक्तो नैष्ठिको भौतिकस्त्विति ।**
**नैष्ठिको मध्यमो ज्ञेयो भौतिकस्तु ततोऽधमः ।।**
**आकौमाराद् ब्रह्मचारी यावज्जीवं स नैष्ठिकः ।**

(शि.त.र.,भा-३,९.७.४७-४८)

## नैष्ठिकी भक्तिः = निष्ठाभक्तिः

भक्तिभेदः । निष्ठाभक्तिः । ध्येयैकवस्तुनि अचलनिष्ठा निष्ठाभक्तिः, सा एव नैष्ठिकीभक्तिः । षट्स्थलसम्बद्धासु षड्विधभक्तिषु अन्यतमा । तत्र च माहेश्वरस्थलसम्बद्धा इयम् ।

**नैष्ठिकीभक्तिरित्येव कीर्तिताभक्तितत्परैः ।**

**तथा माहेश्वरं नाम स्थलमस्य स्वरूपतः ।।**

(अ.सू.,५.७३)

## न्यासविधिः

न्यासस्य आरम्भे मन्त्रस्य ऋष्यादि निर्देशः करणीयः । ऋष्यादि निर्देशेऽपि ऋषिः शिरसि, छन्दः मुखे, देवता हृदये, बीजं नाभौ, शक्तिः गुह्ये, कीलकं पादयोः इति विन्यस्य श्रीसदाशिवप्रीत्यर्थे जपे विनियोग इति विनियोगं वदेत् । तत्र पञ्चाक्षरमहामन्त्रस्य न्यासे ऋष्यादिनिर्देश एवं भवति –

१. ॐ अस्य श्रीपञ्चाक्षरमहामन्त्रस्य वामदेव ऋषिः (शिरसि), पङ्क्तिः छन्दः (मुखे), श्रीसदाशिवो देवता (हृदये), ॐ बीजं (नाभौ), उमा शक्तिः (गुह्ये), शिव इति कीलकं (पादयोः), श्री सदाशिवप्रीत्यर्थे जपे विनियोगः ।

**वामदेवऋषिश्चास्य पङ्क्तिः छन्द उदाहृतः ।**

**देवता स शिवः साक्षात् प्रणवो बीज उच्यते ।**

**उमाशक्तिरिति प्रोक्ता न्यासश्चैवं षडक्षरैः ।।**

(चं.आ., क्रि.पा.,८.११)

**अस्य मन्त्रस्य वक्ष्यामि श्रुणु ऋष्यादिकं प्रिये ।**

**वामदेवऋषिः पंक्तिश्छन्दो देवःशिवः प्रभुः ।।**

**बीजं प्रणव एव स्यान्नमः शक्तिरुदाहृता ।**

**शिवाय कीलकं मोक्षे विनियोगः प्रकीर्तितः ।।**

(सू.आ., क्रि.पा.,३.२३–२४)

२. नकारादिपञ्चाक्षरैः बिन्दुसहितैः सह सद्योजातादि पञ्चब्रह्मवाचक-पदानि संयोज्य कनिष्ठिकादारभ्य अङ्गुष्ठपर्यन्तं यः न्यासः क्रियते सः करन्यास इत्युच्यते । एवमेव मुखादारभ्य शीर्षपर्यन्तं यः न्यासः क्रियते स

अङ्गन्यासः । एवमेव नकारादि पञ्चाक्षरैः बिन्दुसहितैः सह अनन्तशक्तिधाम्ने हृदयाय नमः इत्यादि संयोज्य यः न्यासः क्रियते सः षडङ्गन्यासः उच्यते । (अत्र सर्वसामान्यः ब्रह्मचार्यादीनां सृष्ट्यादिन्यासानां करन्यासः, अङ्गन्यासः (देहन्यासः), षडङ्गन्यासः (अङ्गन्यासः) इति भेदात्मकानां न्यासक्रमः चन्द्रज्ञानागमस्य कन्नडावृत्तौ हिन्दीभाषाऽऽवृत्तौ वा परिशिष्टे दत्तः । तदासक्तैः तत्र द्रष्टव्यम् । एवमेव अङ्गन्यास-(देहन्यास)-स्य तथा षडङ्गन्यास -(अङ्गन्यास) -स्य सृष्ट्यादिक्रमोऽपि तत्रैव दत्तः)।

**स्थित्युत्पत्तिलयाभिख्यः करन्यासस्त्रिधा मतः ।**
**गृहस्थानां स्थितिन्यास उत्पत्तिर्ब्रह्मचारिणाम् ।**
**यतीनां च वनस्थानां संहृतिन्यास इष्यते ।।**

(चं.आ.,क्रि.पा.,११.२१)

**नकाराद्यैर्बिन्दुयुतैः पञ्चभिर्ब्रह्मभिः सह ।**
**चतुर्थ्यन्तैः कनिष्ठादिष्वङ्गुलीषु क्रमान्न्यसेत् ।।**
**एवं कृत्वा करन्यासमङ्गन्यासमथाचरेत् ।**
**मुखहृत्पादयुगलगुह्यशीर्षेषु च क्रमात् ।।**
**चतुर्थ्यन्तैरनन्तादिशक्तिधामादिभिः सह ।**
**षड्वर्गपूर्वकैर्न्यस्येत् षडङ्गानि यथा क्रमम् ।**

(सू.आ., क्रि.पा., ३.३१-३३)

**करन्यासः**

**'नं'** सद्योजाताय कनिष्ठिकाभ्यां नमः ।
**'मं'** वामदेवाय अनामिकाभ्यां नमः ।
**'शिं'** अघोराय मध्यमाभ्यां नमः ।
**'वां'** तत्पुरुषाय तर्जनीभ्यां नमः ।
**'यं'** ईशानाय अङ्गुष्ठाभ्यां नमः ।

**अङ्गन्यासक्रमः (देहन्यासः)**

**'नं'** सद्योजाताय नमो मुखे ।

**'मं'** वामदेवाय नमो हृदये ।

**'शिं'** अघोराय नमो पादद्वये ।

**'वां'** तत्पुरुषाय नमो गुह्ये ।

**'यं'** ईशानाय नमः शिरसि ।

**षडङ्गन्यासक्रमः**

**'ॐ'** अनन्तशक्तिधाम्ने हृदयाय नमः ।

**'नं'** सर्वज्ञशक्तिधाम्ने शिरसे स्वाहा ।

**'मं'** नित्यतृप्तिधाम्ने शिखायै वषट् ।

**'शिं'** अनादिभेदशक्तिधाम्ने कवचाय हुम् ।

**'वां'** स्वतन्त्रशक्तिधाम्ने नेत्रत्रयाय वौषट् ।

**'यं'** अलुप्तशक्तिधाम्ने वस्त्राय फट् ।।

(सू.आ., क्रि.पा., पृ.२९-३०)

# प

## पञ्चकञ्चुकम्

षट्त्रिंशत्तत्त्वान्तर्गतकलादिरागान्तानि पञ्चतत्त्वानि पञ्चकञ्चुकम् । इदमेव च मिश्राध्वपञ्चकम् । तानि च तत्त्वानि कला, विद्या, रागः, कालः, नियतिश्च । इदं मिश्राध्वमिति कथ्यते ।

**कलाविद्याकालरागाः नियतिः पञ्चकञ्चुकम् ।।**

**आरागादाकलात्तत्त्वं मिश्राध्वाख्यं तु पञ्चकम् ।**

(शि.त.र.,भा-३,९.३.३६, ३८)

(पश्यत - षट्त्रिंशत्तत्त्वानि)

## पञ्चकर्मेन्द्रियाणि

षट्त्रिंशत्तत्त्वान्तर्गतानि क्रियासाधकानीन्द्रियाणि । क्रियाशक्ति-प्रधानत्वात्कर्मेन्द्रियाणि । तानि च वागादीनि ।

**ज्ञानेन्द्रियाणि पञ्चापि पञ्चकर्मेन्द्रियाणि च ।**

(सि.शि., ८.१४)

**तत्र "उच्चारणक्रियाहेतुर्वाक्, दानादानादिक्रियाहेतुः पाणिः, गमनागमनक्रियासाधनं पादः, भुक्तजीर्णमलपरित्यागसाधनं पायुः, रेतोमूत्रपरित्यागक्रियासाधनमुपस्थकम्"।**

(शि.मं.,पृ.५४, पं.१२; शि.त.र.,भा-३, ९.३.१३)

**वाक् च पाणिश्च पादश्च पायुश्चोपस्थमित्यपि ।**

**कर्मेन्द्रियाणि पञ्चैषां गुणाः पञ्च प्रकीर्तिताः ।।**

(शि.त.र.,भा-३,९.३.१२)

(पश्यत - षट्त्रिंशत्तत्त्वानि)

## पञ्चकलाः

शान्त्यतीता, शान्तिः, विद्या, प्रतिष्ठा, निवृत्तिश्चेति पञ्चकलाः ।

**शान्त्यतीता च शान्तिश्च विद्या चैव प्रतिष्ठिका ।**

**निवृत्तिश्चेति पञ्चैव कला इत्युपवर्णिताः ।।**

(शि.त.र.,भा-१, १.७.१६)

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च।
शान्त्यतीतकलेत्येताः स्थिता ब्रह्मादिमूर्तिषु ।।

(शि.यो.प्र.,१.२६)

शान्त्यतीतादिपञ्चकलायुक्तत्वं पराशक्त्यादि पञ्चशक्तिसमुद्भूतानां शिवादिपञ्चसादाख्यानां लक्षणम् ।

शान्त्यतीतकलायुक्तं पराशक्तिसमुद्भवम् ।
शुद्धश्च शिवसादाख्यं ................ ।।
शान्त्याख्यकलया युक्तमादिशक्तिसमुद्भवम् ।
अमूर्तं केवलं लिङ्गं .................... ।।
विद्याकलासमायुक्तम् इच्छाशक्तिसमुद्भवम् ।
मूर्तं मूर्तिधरं लिङ्गं ...................... ।
प्रतिष्ठाकलया युक्तं ज्ञानशक्तिसमुद्भवम् ।
लिङ्गं कर्त्रभिधानकम् ....................।।
निवृत्तिकलया युक्तं क्रियाशक्तिसमुद्भवम् ।
क्रियाविशेषतत्त्वाख्यं कर्मरूपमुदीरितम् ।।

(सू.आ., क्रि.पा.,१.३३-३४,३६, ३८-४२, ४३-४४)

(अत्र शिवसादाख्यम् अमूर्तसादाख्यम्, मूर्तसादाख्यम् कर्तृ-सादाख्यम्, कर्मसादाख्यमिति पञ्चसादाख्यनामानि)

## पञ्चकृत्यम्

सृष्टिः, स्थितिः, संहारः, तिरोभावः, अनुग्रहः (विमुक्तिः) चेति ईश्वरस्य पञ्चकृत्यानि ।

पञ्चब्रह्माणि पञ्चानि कृत्यानि सह कारणैः ।

(सि.शि.,८.१५)

**जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः ।**

**कृत्यं सकारकफलं ज्ञेयमस्त्येतदेव हि ।।**

(मृ.आ.,२.३)

**पञ्चैव मे जगत्कृत्यं नित्यसिद्धमजाच्युतौ ।**

**सर्गः संसारसंरम्भस्तत्प्रतिष्ठा स्थितिर्मता ।।**

**संहारो मर्दनं तस्य तिरोभावस्तदुत्क्रमः ।**

**तन्मोक्षोऽनुग्रहस्तन्मे कृत्यमेव हि पञ्चकम् ।।**

(क्रि.सा.,भा-३,२१, पृ.७७, श्लो.२, ३)

## पञ्चकृत्यतनुः

पञ्चकृत्यसमर्थशरीरवान् शिवः ।

**पञ्चवक्त्राय पञ्चाय पञ्चकृत्यतनूभृते ।**

(पार.आ.,२१.१)

## पञ्चकोशाः

शरीरान्तर्गतजीवात्मावरकाः पञ्चकोशाः अन्नमयः, प्राणमयः, मनोमयः, विज्ञानमयः, आनन्दमयश्चेति ।

**अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयात्मा मे शुद्ध्यन्ताम् ।**

(म.ना.उ.,१४.१९)

(तैत्तिरीयोपनिषदि (३.२-६) पञ्चकोशाः प्रपञ्चिताः)

## पञ्चगव्यम्

पञ्चगव्यानि इति यावत् । तानि च गोक्षीरं, गोदधि, गोघृतम्, गोमूत्रम्, गोमयम् इति ।

**अथ वक्ष्ये विशेषेण पञ्चगव्यविधिक्रमम् ।**

(वा.शु.आ., अनु.३, पृ.३७९)

## पञ्चगोत्रसमुद्भवाः

सद्योजातादिपञ्चमुखेभ्यः जाताः रेणुकः, दारुकः, शङ्कुकर्णः, धेनुकर्णः, विश्वकर्णश्चेति पञ्चाचार्याः वीरादिपञ्चगोत्रेषु समुद्भूताः ।

**रेणुको दारुकश्चैव शङ्कुकर्णश्च धेनुकः ।**

**विश्वकर्णश्च पञ्चैते पञ्चगोत्रसमुद्भवाः ।।**

(वी.स.सं.,१.२९)

(पश्यत – पञ्चगोत्राधिकारिणः)

## पञ्चगोत्राधिकारिणः

ईश्वरस्य सद्योजातादि पञ्चमुखोद्भूताः वीरः, नन्दी, वृषभः, भृङ्गी,स्कन्द इति पञ्चगोत्राधिकारिणः ।

**वीरो नन्दी वृषश्चैव भृङ्गी स्कन्दस्तथैव च ।**

**मत्स्वरूपाः समुत्पन्नाः पञ्चगोत्राधिकारिणः ।।**

(वी.स.सं., १.२८)

## पञ्चज्ञानेन्द्रियाणि

ज्ञानग्राहकाणीन्द्रियाणि । ज्ञानशक्तिप्रधानत्वात् ज्ञानेन्द्रियाणि । तानि च श्रोत्रादीनि । शब्दादयस्तद्विषयाः ।

**ज्ञानेन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाणि च ।**

(सि.शि.,८.१४)

तत्र **''शब्दज्ञानैककरणं श्रोत्रम्, स्पर्शज्ञानैककरणं त्वक्, रूपज्ञानैककरणं चक्षुः, रसज्ञानैककरणं रसनम्, गन्धज्ञानैककरणं घ्राणम्''** ।

(शि.मं., पृ.५४)

**श्रोत्रत्वग्दृष्टिरसनं घ्राणं ज्ञानेन्द्रियाणि हि ।**

**शब्दस्पर्शो रूपरसगन्धाश्च विषया इह ।**

(शि.त.र.,भा-३, ९.३.१३-१४)

## पञ्चतन्मात्राणि

षट्त्रिंशत्तत्त्वमध्ये पञ्चभूतानां कारणभूताः सूक्ष्मांशाः । गन्ध-रस-रूप-स्पर्श-शब्द तन्मात्राणि इति यावत् ।

**पञ्चभूतानि सर्वाणि पञ्च तन्मात्रकाणि च ।**

(सि.शि., ८.१४)

**एतेषां (शब्दादि विषयाणां) ध्वनिवर्णशीतोष्णनीलपीत मधुराम्लसुरभ्यसुरभित्वादिविभागशून्यत्वेन सामान्यरूपत्वात् तन्मात्रत्वेन व्यपदेशः ।**

(शि.मं., पृ.५४)

**गन्धो रसश्च रूपं च शब्दः स्पर्शश्च पञ्चमः ।**

**...................... पञ्च तन्मात्रसंज्ञानि ।।**

(शि.त.र.,भा-३, ९.३.११)

## पञ्चद्रव्याणि

अभिषेक-पूजोपयोगीनि पञ्चद्रव्याणि । तानि च एला, उशीरः, लवङ्गम्, कस्तूरी, चन्द्रः (कर्पूरम्) ।

**अभिषेकाय दिव्यानि द्रव्याणि कलशे क्षिपेत् ।**

**एलोशीरलवङ्गानि कस्तूरी चन्द्रसंज्ञकम् ।।**

**पञ्चद्रव्याणि कलशे चूर्णयित्वा विनिक्षिपेत् ।**

(मकुट. क्रि.पा.,८४.३; क्रि.सा.,भा-३, पृ.६)

तनुः, मनः, भौतिकम्, आत्मा, ज्ञाता इत्येते पञ्चविषयाः पञ्चद्रव्याणि।

(च.ब.व.सं.,३८५)

## पञ्चप्राणाः = पञ्चवृत्तयः

प्राणः, अपानः, व्यानः, उदानः, समानश्च पञ्चप्राणाः ।

**प्राणापानव्यानोदानसमाना मे शुद्ध्यन्ताम् ।**

(म.ना.उ., १४.७)

**प्राणापानव्यानोदानसमानाः प्राणवृत्तयः ।**

(पैं.उ., २.३)

## पञ्चब्रह्म = ब्रह्मपञ्चकम्

१. परशिवस्य पञ्चमुखानि सद्योजातवामदेवाघोरतत्पुरुषेशा- नात्मकानि पञ्चब्रह्मशब्देन गीयन्ते ।

**पञ्चब्रह्ममिदं विद्यात् सद्योजातादिपूर्वकम् ।**

(पं.ब्र.उ.,२६)

२. पञ्चाक्षरयुक्तः प्रणवः ।

**नकारः पृथिवी ज्ञेयः मकारस्तोयमुच्यते ।**

**शिकारोऽग्निरिति प्रोक्तो वाकारो वायुरुच्यते ।।**

**य आकाश इति प्रोक्तः पञ्चब्रह्मेति च स्मृतम् ।**

(शै.र.,भा-२, ११.२९-३०)

३. प्रणवाद्यः षडक्षरमन्त्रः । तत्र ॐकारः परमात्मनः देहः । नकारादयः सद्यादि पञ्चवक्त्राणि ।

**पञ्चब्रह्मात्मको मन्त्रः प्रणवाद्यः षडक्षरः ।**

**ॐकारो मम देहः स्यान्नकाराद्यास्तथैव च ।**

**सद्यादिपञ्चवक्त्राणि क्रमादेवं वरानने ।।**

(सू.आ., क्रि.पा.,४.३७,३६)

४. मूर्तिब्रह्म, तत्त्वब्रह्म, भूतब्रह्म, पिण्डब्रह्म, कलाब्रह्मेति पञ्चब्रह्मतत्त्वानि ।

**मूर्तिब्रह्म तथापूर्वं तत्त्वब्रह्म द्वितीयकम् ।**

**भूतब्रह्म तृतीयं स्यात् पिण्डब्रह्म चतुर्थकम् ।।**

**पञ्चमञ्च कलाब्रह्म ब्रह्मपञ्चकमीरितम् ।**

(वा.शु.आ., ७.५-६)

६. शिवसादाख्यादयः क्रमेण सदाशिवः, ईशः, ब्रह्म, ईश्वरः, ईशान इति पञ्चरूपेण विद्यन्ते । एते पञ्चब्रह्मेति कथ्यन्ते ।

**.................. उक्तं सादाख्यपञ्चकम् ।**

**सदाशिवस्तथेशश्च ब्रह्मेशश्चेश्वरस्तथा ।।**

**ईशानश्चेति पञ्चैते तत्त्वभेदाः प्रकीर्तिताः ।**

(वा.शु.आ.,१.३४-३५)

## पञ्चब्रह्मतनुः

पञ्चब्रह्ममन्त्रशरीरात्मकः शिवः ।

**पञ्चब्रह्ममयतनो पञ्चकृत्यपरायण ।**

(का.आ., क्रि.पा.,८.३२)

**पञ्चब्रह्मतनुस्साक्षात् स शिवोऽभूत् सदाशिवः ।**

(वा.शु.आ., ९.७६)

**ईशानाद्यानि सूक्ष्माणि ब्रह्माण्येकाक्षराणि तु।**

**मन्त्रे नमश्शिवायेति संस्थितानि यथाक्रमम् ।।**

**मन्त्रस्त्वक्षरतस्सूक्ष्मं पञ्चब्रह्मतनुश्शिवः ।**

(पार.आ., ११.१६-१७)

पञ्चाक्षरेण मन्त्रेण पञ्चब्रह्मतनुस्तथा ।

(सि.शि., ८.२१)

मन्त्रे षडक्षरे सूक्ष्मे पञ्चब्रह्मतनुश्शिवः ।

(वी.मा.सं., पृ.२३१.११)

(पश्यत – पञ्चब्रह्म)

## पञ्चब्रह्ममन्त्राः

सद्योजातादिमन्त्राः पञ्चब्रह्ममन्त्राः ।

पञ्चब्रह्मात्मको मन्त्रः प्रणवाद्यः षडक्षरः ।

(सू.आ.,क्रि.पा.,४.३७)

१. सद्योजातमन्त्रः

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।

भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ।।

२. वामदेवमन्त्रः

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः । कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।

३. अघोरमन्त्रः

अघोरेभ्योऽथ घोरेभ्यो घोर घोरतरेभ्यः ।

सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररुपेभ्यः ।।

४. तत्पुरुषमन्त्रः

तत्पुरुषाय विद्महे महादेवाय धीमहि ।

तन्नो रुद्रः प्रचोदयात् ।।

५. **ईशानमन्त्रः**

**ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधि-पतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।**

(म.ना.उ.,१६.१-५; तै.आ.,७.४३-४७)

(पश्यत – पञ्चब्रह्म)

## पञ्चभूतानि

षट्त्रिंशत्तत्त्वान्यतमतत्त्वानि । तानि च पृथिवी, अप्, तेजः, वायुः, आकाशश्च । पञ्चतन्मात्रेभ्य एषामुत्पत्तिः । धारणम्, समूहीकरणम्, देहरक्षणम्, अवयवयोजनम्, अवकाशप्रदानञ्चेत्येतेषां क्रमशः पञ्चवृत्तयः ।

**पञ्चभूतानि तन्मात्राः पञ्चकर्मेन्द्रियाणि च ।**

(पार. आ., १७.३०)

**पृथिव्यादिगगनान्तानि पञ्चभूतान्यतः परम् ।।**

**तन्मात्रेभ्यश्च पञ्चभ्यः पञ्चभूतसमुद्भवः ।**

**धृतिः समूहीकरणं देहोऽवयवयोजनम् ।।**

**अवकाशप्रदानञ्च भूतपञ्चकवृत्तयः ।**

(शि.त.र., भा-३, ९.३.१०, २१-२२)

## पञ्चमहासूत्राणि

ईश्वरोक्तानि पञ्चाचार्यसम्बद्धानि सूत्राणि । तानि च पड्विडिः, वृष्टिः, लम्बनम्, मुक्तागुच्छः, पञ्चवर्णम् इति ।

(पश्यत – पाशु. आ., २.१११, १२५)

**पञ्चगोत्रसमुद्भूताः पञ्चसूत्रानुसारिणः।**

**तन्नाम रेवणाराध्यः सूत्रं पडिविडीत्यपि ।**

**तन्नम मरुळाराध्यस्तस्य सूत्रं च वृष्टिकम् ।**

**एकोरामेति तन्नाम तस्य सूत्रं तु लम्बकम् ।।**

**तन्नाम पण्डिताराध्यस्तत्सूत्रं मुक्तगुच्छकम् ।**

**विश्वाराध्येति तन्नाम तत्सूत्रं पञ्चवर्णकम् ।।**

(वी.स.सं., ११.४०, १.३८-५४)

## पञ्चमाः

परमेश्वरस्य ईशानमुखात् जातस्य पञ्चास्यगणपस्य पञ्चम इति प्रसिद्धिः। तद्वंशसम्भूताः पञ्चमाः । स्मरारिः (कामारिः), पुरारिः, कालारिः, मखारिः, भवारिश्चेति पञ्चमानां नामानि । एते पञ्चमा एव वीरशैवमतोद्धारा हेतवः ।

**ममेशानमुखाज्जातः पुरा पञ्चमसंज्ञकात् ।**

**तस्मात् पञ्चास्यगणपः पञ्चमेति प्रकीर्तितः ।।**

**तद्वत्तद्वंशसम्भूताः पञ्चमा इति निश्चिताः ।**

**पञ्चमा वीरशैवास्ते मन्मतोद्धारहेतवः ।**

(स्वा.आ., ८.१२५-१२६, १२९)

**मखारिश्चैव कालारिः पुरारिस्तु स्मरारि वै ।**

**वेदारिः पञ्चमश्चेति पञ्चनामानि वै शृणु ।।**

(वी.स.सं., ५.८)

## पञ्चमुखानि

ईश्वरस्य पञ्चमुखानि । तानि च - सद्योजातम्, वामदेवम्, अघोरम्, तत्पुरुषम्, ईशानम् इति । तान्येव पञ्चब्रह्माणीति कथ्यन्ते ।

**सद्योजातं च प्रथमं वामदेवं द्वितीयकम् ।**

**अघोरं च तृतीयं तु तत्पुरुषं चतुर्थकम् ।।**

**ईशानं पञ्चमं प्रोक्तं मुखानि मम सर्वशः ।**

(वी.स.सं., १.२६-२७)

**पञ्चब्रह्ममिदं विद्यात् सद्योजातादिपूर्वकम् ।**

**दृश्यते श्रूयते यच्च पञ्चब्रह्मात्मकं स्वयम् ।।**

(पं.ब्र.उ., २६)

## पञ्चमुद्राधारणम्

स्वशिष्याय जटाधारी गुरुः वीरमाहेश्वरीं दीक्षां दत्त्वा पञ्चमुद्राणां मन्त्रसंस्कारपुरस्सरं धारणं कुर्यात् ।

**पञ्चमुद्राधारणविषये समन्त्रकं प्रमाणम्।**

(वी.स.सं., ११.५७)

(पश्यत – पञ्चमुद्राः)

## पञ्चमुद्राः = पञ्चमुद्रिकाः

जङ्गमलाञ्छनानि । शिष्याय वीरमाहेश्वरदीक्षाप्रदानानन्तरं गुरुणा दीयमानाः मुद्राः । ताश्च भिक्षापात्रम्, कन्था, दण्डः, कमण्डलुः, भस्मघुटिका चेति पञ्च।

**जटाधारी शिखी मुण्डी पञ्चमुद्रासमन्वितः।**

(सू.आ., क्रि.पा., ७.७४)

**पञ्चमुद्राः सुसंपूज्याः स्वस्थदक्षिणभासके।**

(वी.स.सं., ११.५९)

**जटाधारणसम्पन्नो धारयेत् पञ्चमुद्रिकाम् ।।**

(वी.स.सं., ११.५७)

**भिक्षापात्रं दण्डकाष्ठं कन्थां काषायवस्त्रकम् ।**

**दद्यात्कमण्डलुं चैव विभूतेर्घुटिकामपि।।**

(वी.स.सं., ११.५९, ५३–५४)

## पञ्चयज्ञाः

१. कर्मयज्ञः, तपोयज्ञः, जपयज्ञः, ध्यानयज्ञः, ज्ञानयज्ञ इति पञ्चयज्ञाः ।

**कर्तव्याः पञ्चयज्ञाश्च गृहिणा स्वहितैषिणा।**

(चं.आ., क्रि.पा.,११.६१)

**कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तरः ।**

**ध्यानयज्ञो ज्ञानयज्ञः पञ्चयज्ञाः प्रकीर्तिताः ।।**

(सू.आ., क्रि.पा.,६.२६)

श्री सिद्धान्तशिखामणौ तपः, कर्मः, जपः, ध्यानम्, ज्ञानं चेति क्रमेण पञ्चयज्ञाः निरुपिताः । तत्र शिवपूजार्थं शरीरसंशोषः तपः न तु कृच्छ्र - चान्द्रायाणादिना देहसंशोषः । शिवपूजा एव कर्म, यागादि तु न । पञ्चाक्षराभ्यासः प्रणवाभ्यासो वा रुद्राध्यायादिपठनं वा जपः न त्वन्य वेदाध्ययनादिकम् । शिवरूपादिचिन्तनं ध्यानं न त्वात्मादिचिन्तनम् । शिवागमानामर्थविज्ञानं ज्ञानं न त्वन्यग्रन्थार्थवेदनम् ।

**पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः ।**

**तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम् ।।**

**शिवार्थे देहसंशोषस्तपः कृच्छ्रादिनो मतम् ।**

**शिवार्चा कर्म विज्ञेयं ब्राह्मं यागादिनोच्यते ।**

**जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा ।**

**रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम् ।**

**ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम् ।।**

**शिवागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम् ।**

**इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः ।।**

(सि.शि.,९.२१-२४)

२. देवयज्ञः, पितृयज्ञः, भूतयज्ञः, मनुष्ययज्ञः, ब्रह्मयज्ञश्चेति पञ्चयज्ञाः शैवसम्प्रदाये विद्यन्ते ।

**देवानां च पितॄणां च भूतानां च नृणामपि ।**
**ब्रह्मणश्च विनिर्दिष्टाः पञ्चयज्ञा नगात्मजे ।।**

(का.आ., क्रि.पा., ३.६८)

## पञ्चवक्त्ररुद्राक्षः

रुद्राक्षभेदः।पञ्चमुखैर्विशिष्टः रुद्राक्षः। पञ्चब्रह्मस्वरूपकः । पापनाशकः । कर्णद्वये षट्सु षट्सु रुद्राक्षेषु धारणीयेषु अन्तिमौ द्वौ पञ्चवक्त्रौ भवेताम् ।

**पञ्चवक्त्रं तु रुद्राक्षं पञ्चब्रह्मस्वरूपकम् ।**
**पञ्चवक्त्रः स्वयं ब्रह्म पुंहत्यां च व्यपोहति।।**

(रु.जा.उ., ३१)

**दशसप्त पञ्चवक्त्रान् षट् षट् कर्णद्वये वहेत् ।।**

(सि.शि.,७.५५)

## पञ्चवक्त्राणि

सद्योजातम्, वामदेवम्, अघोरम्, तत्पुरुषम्, ईशानमिति शिवस्य पञ्चवक्त्राणि ।

**सद्यादि पञ्चवक्त्राणि क्रमादेवं वरानने ।।**

(सू.आ.,क्रि.पा.,४.३६)

(पश्यत – पञ्चब्रह्म)

## पञ्चवर्णम्

वीरशैवानां पञ्चसूत्रेष्वन्यतमम् । विश्वाराध्यनामकपञ्चमाचार्येण सम्बद्धं सूत्रम्।

**विश्वाराध्यश्च तन्नाम तत्सूत्रं पञ्चवर्णकम् ।**

(पाशु.आ., २.११९)

## पञ्चविंशतितत्त्वानि

पञ्चीकरणप्रक्रियजन्यभूतांशानां व्यवस्थितमेलनाज्जाततत्त्वानि ।

**एतेषां गगनादीनां भूतानां पृथगंशकैः ।**

**अन्योन्यमेलनात्तत्त्वान्यभूवन् पञ्चविंशतिः ।।**

(शि.त.र.,भा-१,१.७.४४)

तानि च - पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चतन्मात्राणि, पञ्चभूतानि, मनः, बुद्धिः, अहङ्कारः, प्रकृतिः, पुरुषः । पञ्चविंशतितत्त्वानाम् उत्पात्तिः परशिवस्याज्ञया भवतीति आगमोक्तिः ।

**तस्याज्ञया महेशस्य प्रकतिः पुरुषोचिताम्।**

**बुद्धिं प्रसूते सा बुद्धिरहङ्कारमहङ्कृतिः ।।**

**इन्द्रियाणि दशैकं च तन्मात्रा पञ्चकं तथा ।**

**शासनादेवदेवस्य शिवस्य शिवदायिनः ।।**

**तन्मात्राण्यपि तस्यैव शासनेन महीयसा ।**

**महाभूतान्यशेषाणि भावयन्त्यनुपूर्वशः ।।**

**ब्रह्मादीनां तृणान्तानां देहिनां देहसङ्गतिम् ।**

**महाभूतान्यशेषाणि जनयन्ति शिवाज्ञया ।।**

(चं.आ.,क्रि.या.,१.१४-१७)

(पश्यत - पञ्चीकरणम्)

## पञ्चविंशतिलीलाः

शशिचूडलीला, उमाकान्तलीला, वृषभारूढलीला, ताण्डवलीला, वैवाहलीला, भिक्षाटनलीला, कामसंहारलीला, कालसंहारलीला, त्रिपुरसंहारलीला, जलन्धरवधलीला, ब्रह्मदर्पनिवारणलीला, वीरभद्रावतरणलीला, हरिध्वंसलीला, अर्धनारीश्वरलीला, किराताकारधारणलीला,

कङ्कालधारणलीला, चण्डेशानुग्रहलीला, विषापहरणलीला, एकपादलीला, सुखावहलीला, दक्षिणामूर्तिलीला, लिङ्गोद्भवलीला चेति पञ्चविंशतिलीलाः ।

**शशिचूडमुमाकान्तमृषारूढं च ताण्डवम् ।**
**वैवाहं तथा भिक्षाटनं कामाङ्गनाशनम् ।।**
**कालसंहरणं चैव पुरत्रयविनाशनम् ।**
**जलन्धरवधं चैव ब्रह्मदर्पनिवारणम् ।।**
**वीरभद्रावतरणं हरिध्वंसमतः परम् ।**
**अर्धनारीश्वरं चैव किराताकारधारणम् ।।**
**कङ्कालधारणं चैव चण्डेशानुग्रहं तथा ।**
**विषापहरणं चैव चक्रदानं ततः परम् ।।**
**विघ्नेशवरदानं च सोमास्कन्धं तथैव च ।**
**एकपादं ततो ज्ञेयं सुखावहमतः परम् ।।**
**दक्षिणामूर्तिरूपं च लिङ्गोद्भवमतः परम् ।**
**पञ्चविंशतिलीलाभिर्देवदेवो महेश्वरः ।।**

(सू.आ., क्रि.पा., १.५३-५८)

## पञ्चविषयाः = पञ्चतन्मात्रणि

ज्ञानेन्द्रियाणां ज्ञानविषयत्वाद्विषयाः । तन्मात्रणीति व्यवहारः । ते च शब्दः, स्पर्शः, रूपम्, रसः, गन्ध इति ।

**शब्दस्पर्शौ रूपरसगन्धाश्च विषया इह ।**
**गन्धो रसश्च रूपं च शब्दः स्पर्शश्च पञ्चमः ।**
**पञ्चतन्मात्रसंज्ञानि .......................।।**

(शि.त.र.,भा-३, ९.३.१४, ११)

## पञ्चशक्तयः

यदा सृष्ट्यर्थं शिवः सर्वतत्त्वान्यचिन्तयत् तदा पराशक्त्यादि पञ्चशक्तयः अजायन्त । तत्र पराशक्तेरारभ्य क्रियाशक्तिपर्यन्तं पूर्व-पूर्वशक्तेरंशन्वेन उत्तरोत्तरशक्तयः अजायन्त इति आगमसम्प्रदायः । क्रमेण पराशक्तिः, आदिशक्तिः, इच्छाशक्तिः, ज्ञानशक्तिः, क्रियाशक्तिश्चेति नामानि ।

**सृष्ट्यर्थं सर्वतत्त्वानां जगदुत्पत्तिकारणम् ।**
**योगिनामुपकाराय स्वेच्छयाऽचिन्तयच्छिवः ।।**
**ध्यायमानात्ततो देवि पराशक्तिरजायत ।**
**आदिशक्तिस्ततो जाता पराशक्त्यंशभेदतः ।।**
**आदिशक्त्यंशतः साक्षादिच्छाशक्तिरजायत ।**
**इच्छाशक्त्यंशभेदेन ज्ञानशक्तिरजायत ।।**
**ज्ञानशक्त्यंशभेदेन क्रियाशक्तिरजायत।**

(सू.आ., क्रि.पा.,१.१९-२२)

**पराशक्तिस्तथादिश्च इच्छा ज्ञानं क्रिया तथा ।**
**शक्तितत्त्वं पञ्चविधमिति गोप्यं मम प्रिये ।।**

(शि.त.र., भा-१., १.७.२४)

## पञ्चशास्त्राणि

लौकिकशास्त्रम्, वैदिकशास्त्रम्, आध्यात्मिकशास्त्रम्, अतिमार्गशास्त्रम्, मान्त्रिकशास्त्रमिति पञ्चशास्त्राणि । यस्य फलं ज्ञातं तत् लौकिकशास्त्रम् । वेदैकगम्यानां बोधकं वैदिकशास्त्रम् । आत्मज्ञानोपयुक्तं आध्यात्मिकशास्त्रंम् । रुद्रप्रणीतं अतिमार्गशास्त्रम् । शिवप्रणीतशैवागमादिग्रन्थोक्तं मन्त्रसम्बद्धं शास्त्रं मान्त्रिकशास्त्रम्।

**संग्रहात् पञ्चशास्त्राणि लौकिकं वैदिकं तथा ।**

**आध्यात्मिकातिमार्गे द्वे मान्त्रिकं चेति नामत : ।।**

**यद्दृष्टं फलकं शास्त्रं तदेव स्यात्तु लौकिकम् ।**

**शास्त्रं वेदैकगम्यानां बोधकं वैदिकं स्मृतम् ।।**

**आत्मज्ञानोपयुक्तं तदाध्यात्मिकमिदं त्रयम् ।।**

**रुद्रप्रणीतं यच्छास्त्रमतिमार्गं तदीरितम् ।**

**शिवप्रणीतं सिद्धार्थं शास्त्रं मान्त्रं प्रकीर्तितम् ।।**

(शि.त.र., भा-३, ९.४.१६-१७, २०-२१)

## पञ्चसादाख्यभेदः

शिवः निर्गुणः, सदाशिवः सगुणः । सदाशिव एव ध्यानपूजादि-कारणत्वात् सादाख्य इति कथ्यते । तत्र सादाख्यः पञ्चधा भवति। शिवसादाख्यम्, अमूर्तसादाख्यम्, मूर्तसादाख्यम्, कर्तृसादाख्यम्, कर्मसादाख्यमिति पाञ्चसादाख्यानि ।

**निर्गुणः शिव इत्युक्तः सगुणस्तु सदाशिवः ।**

**सादाख्यश्च स एवोक्तो ध्यानपूजादिकारणम् ।।**

**ततश्च पञ्चसादाख्यभेदं शृणु वरानने ।**

(सू.आ., क्रि.पा., १.२९, ३२)

एतेषां पञ्चसादाख्यानां लक्षणनि सूक्ष्मागमे दत्तानि ।

(सू.आ., क्रि.पा., १.३३ - ५५)

**प्रथमं शिवसादाख्यं अमूर्तं तु द्वितीयकम् ।**

**तृतीयं मूर्तसादाख्यं चतुर्थं कर्तृनामकम् ।।**

**पञ्चमं कर्मसादाख्यमुक्तं सादाख्यपञ्चकम् ।**

(वा.शु.आ.,१.३२-३३)

## पञ्चसूतकानि

जननसूतकम्, मरणसूतकम्, रजःसूतकम्, जातिसूतकम्, उच्छिष्ट सूतकमिति पञ्चसूतकानि।

**बाहू मम भुजौ पातु पञ्चसूतकवर्जितः ।**

(वी.आ. २.२६७)

**यथा विश्वेशनैकट्याद् गङ्गा सूतकवर्जिता ।**

**तथा लिङ्गाङ्किता भक्ता पञ्चसूतकवर्जिताः ।।**

(सि.शिखा.उ.,पृ.२८)

(पश्यत – सूतकम्)

## पञ्चसूत्रलिङ्गम्

पञ्चसूत्रात्मकं लिङ्गं इष्टसिद्ध्यर्थं धारयेदिति प्रस्तावेन लिङ्गपीठस्य दीर्घता, विस्तारः, औन्नत्यं च लिङ्गवृत्तस्य समप्रमाणं स्यात् । गोमुखस्य प्रमाणं तदर्धं स्यात् । एतदेव पञ्चसूत्रलिङ्गम् ।

**शृणुष्वावहितः पुत्र वक्ष्ये लिङ्गस्य लक्षणम् ।**

**पञ्चसूत्रात्मकं लिङ्गं पूजयेदिष्टसिद्धये ।।**

**लिङ्गवृत्तसमं पीठं दीर्घं विस्तारमुन्नतम् ।**

**तदर्धं गोमुखं चैव पञ्चसूत्रं प्रकीर्तितम् ।।**

(मकुट., क्रि.पा., ४.४५–४६; पार. आ., १६.३९–४१)

**शक्तिगोलकसंयुक्तं पञ्चसूत्रसमन्वितम् ।**

(वी.आ., २.२०२)

## पञ्चसूत्राणि

पञ्चाचार्यसम्बद्धानि पञ्चसूत्राणि । पड्विडि (पडिविडि) सूत्रम्, वृष्टिसूत्रम्, लम्बन (लम्बक) सूत्रम्, मूक्तागुच्छ (मुक्तगुच्छकं) सूत्रम्, पञ्चवर्णसूत्रम् इति पञ्च नामानि ।

(पश्यत – पञ्चमहासूत्राणि)

## पञ्चाक्षरः = पञ्चाक्षरमन्त्रः = पञ्चाक्षरीमन्त्रः = पञ्चाक्षरी

नमः शिवाय इति पञ्चभिरक्षरैः विशिष्टः मन्त्रः । स एषः सर्वेष्वपि मन्त्रेषु श्रेष्ठतमः सर्वफलदश्च । अयं च सर्वेष्वपि शुभकर्मसु उपयुज्यते । अत एवायं मूलमन्त्र इत्युच्यते । पञ्चधा यानि प्रसिद्धानि तेषां सङ्केतरूपोऽयं मन्त्रः ।

**नमः शब्दं वदेत्पूर्वं शिवायेति ततः परम् ।**

**मन्त्रः पञ्चाक्षरो ह्येष सर्वश्रुतिशिरोगतः ।।**

(सि.शि., ८.७ चं.आ., क्रि.पा., ८.५; सू.आ., क्रि.पा., ३.१३)

**एष मन्त्रो महाशक्तिः ईश्वरप्रतिपादकः ।**

**सकृदुच्चारणादेव सर्वसिद्धिप्रतिपादकः ।।**

**सप्तकोटिषु मन्त्रेषु मन्त्रः पञ्चाक्षरो महान् ।**

(सि.शि., ८.४)

**पञ्चधा पञ्चधा यानि प्रसिद्धानि विशेषतः ।**

**तानि सर्वाणि वस्तूनि पञ्चाक्षरमयानि हि ।।**

(सि.शि., ८.१६)

पञ्चाक्षरीमन्त्रः । नमः शिवाय इति पञ्चाक्षरैर्युक्तः पञ्चाक्षरमन्त्रः ।

**ज्ञाते पञ्चाक्षरीमन्त्रे .................... ।**

(सि.शि.,८.३)

**ततः पञ्चाक्षरी ..................... ।**

**पञ्चाक्षरी परा विद्या .................... ।**

(चं.आ.,११.४०., सि.शि.८.१; अ.सू.,६.४२,४३)

**तथा पञ्चाक्षरीमन्त्रात् नास्ति मन्त्रान्तरं महत् ।।**

**ज्ञाते पञ्चाक्षरीमन्त्रे किं वा मन्त्रान्तरैः फलम् ।**

(सि.शि., ८.२-३)

**पञ्चाक्षरीमन्त्रभेदः-**

१. द्विधा - चन्द्रज्ञानागमोक्तरीत्या पञ्चाक्षरीमन्त्रः सूक्ष्मपञ्चाक्षरी स्थूलपञ्चाक्षरीति द्विविधः । तत्र अ-उ-म-नाद-कला चेति पञ्चांशयुक्तप्रणवः एव सूक्ष्मपञ्चाक्षरात्मकः । नमश्शिवायेति स्थूलपञ्चाक्षरः भवति । प्रतिपाद्यविषये महत्त्वे चानयोः भेदः नास्ति । सूक्ष्मं मूलं भवति स्थूलं तद्विवरणं भवति ।

**अउमश्चैव नादश्च कला चेत्यंशपञ्चकम् ।**

**मिलित्वा प्रणवो जज्ञे सूक्ष्मपञ्चाक्षरात्मकः ।।**

**तथा नमःशिवायेति स्थूलपञ्चाक्षरो भवेत् ।**

**प्रतिपाद्ये महत्त्वेऽपि नानयोर्विद्यते भिधा ।।**

**सूक्ष्मं मूलं भवेदस्य स्थूलं विवरणं मतम् ।**

(चं.आ.,क्रि.पा.,११.४३-४५)

२. पञ्चधा - सुप्रभेदागमानुसारेण पञ्च आराध्यानां हस्तेभ्यः दीक्षितानां पञ्चपञ्चमानाम् उपदेशाय पञ्चपञ्चाक्षरीमन्त्राः भवन्ति प्रसादपञ्चाक्षरी, मायापञ्चाक्षरी, सूक्ष्मपञ्चाक्षरी, स्थूलपञ्चाक्षरी, मूलपञ्चाक्षरी चेति । तेषां स्वरूपमुक्तमस्ति । तथा हि -

१. प्रसादपञ्चाक्षरी - रेणुकाराध्यबोधिता मखारिपञ्चमेन प्राप्ता - ओं ह्रां-ह्रीं-ह्रूं-ह्रैं-ह्रौं-नमः शिवाय, इति तस्याः स्वरूपम् ।

२. मायापञ्चाक्षरी – मरुळाराध्यगुरुणा बोधिता कालारिपञ्चमेन प्राप्ता – ओं–ह्रां–ह्रीं–ह्रूं–ह्रैं–नमः शिवाय, इति तस्याः स्वरूपम् ।

३. सूक्ष्मपञ्चाक्षरी – एकोरामाराध्यगुरुणा बोधिता पुरारिपञ्चमेन प्राप्ता – ओं– ह्रां–ह्रीं–ह्रूं–नमः शिवाय, इति तस्याः स्वरूपम् ।

४. स्थूलपञ्चाक्षरी – पण्डिताराध्यगुरुणा बोधिता स्मरारिपञ्चमेन प्राप्ता – ओं–ह्रां–ह्रीं–नमः शिवाय, इति तस्याः स्वरूपम् ।

५. मूलपञ्चाक्षरी – विश्वाराध्यगुरुणा बोधिता वेदारिपञ्चमेन प्राप्ता – ओं–ह्रां–नमः शिवाय, इति तस्याः स्वरूपम् ।

१. **तस्य मन्त्रः प्रसादाख्यो दशवर्णमहामनुः ।।**
**ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं नमः शिवाय ।**
**इति मन्त्रः सदा तस्य उपदेश उदीरितः ।।**

(वी.स.सं.,५.१३–१४)

(तस्य = मखारेः)

२. **मायापञ्चाक्षराख्यश्च नववर्णो महामनुः ।**
**ओं ह्रां ह्रीं ह्रूं ह्रैं नमः शिवाय ।।**
**अयमेव महामन्त्रश्चोपदेशे प्रशस्यते ।**

(वी.स.सं.,५.२०–२१)

३. **सूक्ष्मपञ्चाक्षरी मन्त्रस्त्वष्टाक्षर समन्वितः ।**
**ओं ह्रां ह्रीं ह्रूं नमः शिवाय ।।**

(वी.स.सं.,५.२७)

४. **स्थूलपञ्चाक्षरीमन्त्रः सप्तवर्णसमन्वितः ।**
**ओं ह्रां ह्रीं नमः शिवाय ।।**

(वी.स.सं.,५.३४)

५. **मूलषडक्षरी (पञ्चाक्षरी) मन्त्रः षडक्षरसमन्वितः ।**

**ओं ह्रां नमः शिवाय ।**

(वी.स.सं.,५.४०)

## पञ्चाक्षरजपः = पञ्चाक्षरीजपः

नमः शिवाय इति पञ्चाक्षरमन्त्रस्य जपः । वाजपेयादीनां फलापेक्षया सहस्राधिकफलदायकः ।

**पञ्चाक्षरीं समुच्चार्य पुष्पं लिङ्गे विनिक्षिपेत् ।**

**यस्तस्य वाजपेयानां सहस्रफलमिष्यते ।।**

**अग्निहोत्रं त्रयो वेदाः यज्ञाश्च बहुदक्षिणाः ।**

**पञ्चाक्षरजपस्यैते कोट्यंशेनापि नो समाः ।।**

**जपेत् पञ्चाक्षरीमेतां विद्यां पाशविमुक्तये ।**

(सि.शि., ८.४२३-४४, ३३)

## पञ्चाक्षरन्यासः

लिङ्गपूजायाः पूर्वं देहस्य विद्यामयत्वसम्पादनाय क्रियमाणेषु पञ्चविधन्यासेषु एकतमः । पञ्चाक्षरमन्त्रोच्चारपूर्वकं क्रियमाणः न्यासः पञ्चाक्षरन्यासः ।

**पञ्चमः कथ्यते सद्भिर्न्यासः पञ्चाक्षरात्मकः ।**

(चं.आ.,क्रि.पा.,११.३६)

(पश्यत – न्यासविधिः)

## पञ्चाक्षरीजपस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । भक्तथलगताङ्गस्थलस्य पञ्चदशप्रभेदेष्वन्यतमं च । विभूतिरुद्राक्षधारकस्य लिङ्गाङ्गिनः नित्यलिङ्गार्चने पञ्चाक्षरीजपस्यावश्यकत्वेन तन्निरूपकं स्थलं पञ्चाक्षरीजपस्थलम् ।

**रुद्राक्षधारणं पश्चात् पञ्चाक्षरजपस्तथा ।**

**धृतश्रीभूतिरुद्राक्षः प्रयतोलिङ्गधारकः ।**

**जपेत् पञ्चाक्षरीविद्यां शिवतत्त्वप्रबोधिनीम् ।**

(सि.शि., ५.२८; ८.१)

## पञ्चाक्षरीविद्या

पञ्चाक्षरमन्त्रः । पञ्चाक्षर्याः सम्बन्धिज्ञानं पञ्चाक्षरीविद्या । पञ्चाक्षरी मन्त्रः शिवस्य अभिधानम् । शिवश्च तन्मन्त्रस्याभिधेयम् इति ज्ञानं पञ्चाक्षरीविद्या ।

**पञ्चाक्षरी परा विद्या........ ।**

(चं.आ.,क्रि.पा. ११.४०-४२; अ.सू.६.४२.४३)

**जपेत् पञ्चाक्षरीविद्यां शिवतत्त्वप्रबोधिनीम् ।।**

**तस्याभिधानमन्त्रोऽयमभिधेयश्च स स्मृतः ।**

**अभिधानाभिधेयत्वान् मन्त्रात् सिद्धः परः शिवः ।।**

(सि.शि.,८.१, ६)

## पञ्चाङ्गस्नानम्

स्नानभेदः । मन्त्रस्नानम् । सङ्कल्पः, सूक्तपठनम्, मार्जनम्, अघमर्षणम्, देवतार्पणं चेति पञ्चाङ्गयुक्तं स्नानं पञ्चाङ्गस्नानमित्युच्यते ।

**सङ्कल्पः सूक्तपठनं मार्जनं चाघमर्षणम् ।**

**देवतातर्पणं चैव स्नानं पञ्चाङ्गमुच्यते ।।**

(का.आ.,क्रि.पा.,३.२५ ; मकुट, क्रि.पा.,२.१०)

(पश्यत – मन्त्रस्नानम्)

## पञ्चाचाराः

शिवपदाकांक्षिणः पञ्चविधा आचाराः। ते च लिङ्गाचारः, सदाचारः, शिवाचारः, गणाचारः, भृत्याचार इति ।

**लिङ्गाचारः सदाचारः शिवाचारस्तथैव च ।**
**भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः ।।**

(चं.आ., क्रि.पा., ९.४)

**पञ्चाचारा वीरशैवैः सादरं स्वीकृताः सदा**

(क्रि.सा., भा-२.५.११)

(पश्यत-गणाचारः, भृत्याचारः,लिङ्गाचारः, शिवाचारः, सदाचारः)

## पञ्चाचार्याः

वीरशैवमतस्थापका ईश्वरस्य सद्योजातादिमुखसमुद्भूताः पञ्च आचार्याः । तेषां नामानि युगभेदेन भिन्नानि । तद्यथा – कृतयुगे – एकाक्षरः, द्व्यक्षरः, त्र्यक्षरः, चतुरक्षरः, पञ्चाक्षरः इति ; त्रेतायुगे-एकवक्त्रः, द्विवक्त्रः, त्रिवक्त्रः, चतुर्वक्त्रः, पञ्चवक्त्रः इति; द्वापरयुगे- रेणुकः, दारुकः, शङ्खुकर्णः, धेनुकर्णः, विश्वकर्णः इति; कलियुगे – रेवणाराध्यः, मरुळाराध्यः, एकोरामाराध्यः, पण्डितराध्यः, विश्वाराध्यः इति ।

**एतेषां प्रति नामानि युगभेदेन च शृणु ।**
**एकाक्षरो द्व्यक्षरश्च त्र्यक्षरश्चतुरक्षरः ।।**
**पञ्चाक्षरः कृतयुगे पञ्चनामानि सर्वशः ।**
**एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रश्चतुराननः ।**
**पञ्चवक्त्र इति ख्यातः त्रेतायां तु महेश्वरि ।।**
**द्वापरे रेणुकश्चाद्यो दारुकश्च द्वितीयकः ।**
**तृतीयः शङ्खुकर्णश्च चतुर्थो धेनुकर्णकः ।।**
**पञ्चमो विश्वकर्णाख्यः पञ्चनामानि वै शृणु ।**
**रेवणो मरुळश्चैकोरामः पण्डित एव च ।**
**विश्वाराध्य इति प्रोक्तः कलावपि मम प्रिये ।।**

(वी.स.सं.,१.३०-३४)

## पञ्चाणवम्

सिद्धाणवम्, त्याज्याणवम्, मलाणवम्, गुणाणवम्, योगाणवमिति आणवं पञ्चधा ।

**सिद्धाणवं त्याजमाणं मलाणवं गुणाणवम् ।।**
**योगाणवमिति प्राहुः प्रमथाः तत्त्वपारगाः ।**
**आहुः सर्वगुणोपेतं पञ्चाणवमितीशितम् ।।**

(वी.आ.उ.,भा-१, १.१६-१७)

(पश्यत - आणवम्)

## पञ्चामृतम्

काचन अभिषेकसामग्री । गवोत्पन्नक्षीरदधिघृतानां त्रयाणां मधुशर्कराभ्यां मिश्रितानां अमृततुल्यानां पञ्चविधानां द्रव्याणां संमिश्रणम् । तानि च द्रव्याणि गोक्षीरम्, गोदधि, गोघृतम्, मधु, शर्करा चेति ।

**पञ्चामृतस्नानमिदं गृह्यतां भक्तवत्सल ।**

(का.आ., क्रि.पा., ८.३२)

**मधु गव्यं दधि क्षीरं घृतं शर्करया समम् ।**
**अभिषेकाय शस्तं स्याच्छुद्धोदकमनुत्तमम् ।।**

(मकुट., क्रि.पा.,४.२)

## पञ्चाशत्रुद्राः

वीरशैवानामन्त्येष्टिविधौ एकादशे अहनि एकादशमाहेश्वरभोजनं वृषोत्सर्गाराधनं च कृत्वा खड्गेशादि पञ्चाशद् रुद्राणाम् आराधनम् आचरणीयम् । एते पञ्चाशद् रुद्राः आचारादि षड्लिङ्गस्थलसमाश्रिताः । आचारलिङ्गस्थलाश्रिताः चत्वारः रुद्राः, गुरुलिङ्गस्थलाश्रिताः षट्, शिवलिङ्गसमाश्रिताः दश, चरलिङ्गसमाश्रिताः द्वादश, प्रसादलिङ्गसमाश्रिताः षोडश, महालिङ्गसमाश्रितौ द्वौ - इति पञ्चाशत् रुद्राः ।

(१) खड्गेशः, (२) बकेशः (३) श्वेतः (४) भृङ्गीश्वरः, (आचारलिङ्गस्थलम् – भक्तस्थलम्) ; (५) छगलण्डेशः, (६) द्विरण्डेशः, (७) महाकालीश्वरः, (८) भुजङ्गेशः, (९) पिनाकीशः, (१०) दारुकेशः (गुरुलिङ्गस्थलम् – माहेश्वरस्थलम्); (११) अर्धनारीशः, (१२) उमाकान्तः, (१३) आषाडीशः, (१४) दण्डीशः, (१५) अत्रीशः, (१६) मित्रेशः, (१७) मेषेशः, (१८) लोहितेश्वरः, (१९) शिखीश्वरः, (२०) (गुरुलिङ्गस्थलम् – प्रसादिस्थलम्) क्रोधेशः, (२१) चण्डः, (२२) पञ्चान्तकेश्वरः, (२३) शिवोत्तमः, (२४) एकरुद्रेशः, (२५) कूर्मेशः, (२६) एकनेत्रः, (२७) चतुराननेश्वरः, (२८) अजेशः, (२९) शर्वः, (३०) सोमेश्वरः, (३१) लाङ्गलीशः, (३२) संवर्तकेशः (चरलिङ्गस्थलम् – प्राणलिङ्गिस्थलम्) ; (३३) श्रीकण्ठः, (३४) अनन्तेशः (३५) सूक्ष्मेशः (३६) त्रिमूर्तीशः, (३७) अमरेशः, (३८) अर्घेशः, (३९) भारभूतेश्वरः (४०) अतिथीशः, (४१) स्थण्वीशः, (४२) हरः, (४३) झिण्टीश्वरः, (४४) भौतिकेशः, (४५) सद्योजातेशः, (४६) अनुग्रहेश्वरः, (४७) अक्रूरेशः, (४८) महासेनः (प्रसादलिङ्गस्थलम् – शरणस्तलम्); (४९) लकुलीशः, (५०) शिवेश्वरः (महालिङ्गस्तलम् – ऐक्यस्थलम्)।

**आचारादिषड्लिङ्गस्थलषट्कसमाश्रयम् ।**
**अनुत्तरं च पञ्चाशद् रुद्राराधनमाचरेत् ।।**
**चत्वारः षड् दश तथा रुद्राःद्वादश षोडश ।**
**द्वावित्याचारलिङ्गादिस्थलषट्क समाश्रयाः ।।**

(मकुट.,च.पा.,६.५,१३; चं.आ.,च.पा.,४.२३
मकुट.,च.पा.,६.१४-२०)

## पञ्चीकरणम्

पञ्चविंशतितत्त्वोत्पत्त्यनुकूलपृथिव्यादिपञ्चभूतानामुक्तरीत्या पञ्चपञ्चां-शैर्वर्गीकरणम् । विभक्तानाञ्च तेषामंशानां व्यवस्थितमेलनात्पञ्चविंशतितत्त्वा-नामुत्पत्तिः ।

**एकैकं द्विविधं कृत्वा तत्रैकैकं पुथग्दिशेत् ।।**

**शिष्टैकैकं समादाय पुनश्च विभजेद् द्विधा ।**

**द्विधा विभक्ते तत्रैकं संस्थाप्यान्यं चतुर्विधम् ।।**

**कुर्यादेवं विभागे स्यात् भूतमेकं तु षड्विधम् ।**

**स्थूलांशान् पञ्चभूतानां पृथगेव विनिक्षिपेत् ।।**

**पञ्चविंशतितत्त्वानि भूतांशैः पञ्चपञ्चभिः ।**

(शि.त.र.,भा–१, १.७. ४५–४८)

(पश्यत – पञ्चविंशतितत्त्वानि)




तत्र प्रत्येकस्य भूतस्य द्वितीयार्धभागे इतरार्धभागस्यांशाः योजनीयाः। ततः पञ्चविंशतितत्त्वानामुत्पत्तिः । तत्स्वरूपं चेत्थम् –

**आकाशतत्त्वानि (आकाशजपञ्चकम्)**

व्योम्नि व्योमांशमेलनेन (१००%) ज्ञानम्, व्योम्नि वाय्वंशमेलनेन (व्योम ७५% +वायुः २५%) मनः, व्योम्नि तेजोंशमेलनेन (व्योमः ७५% + तेजस् २५%) बुद्धिः, व्योम्नि जलांशमेलनेन (व्योम ७५% + जलं २५%) चित्तम्, व्योम्नि भूम्यंशमेलनेन (व्योम ७५% + जलं २५%) चित्तम्, व्योम्नि भूम्यंशमेलनेन (व्योम ७५% + पृथिवी २५%) अहङ्कारः।



## वायुतत्त्वानि (वायुजपञ्चकम्)

वायौ वाय्वंशमेलमेन (वायुः १००%) व्यानः, वायौ व्योमांशमेलनेन (वायु : ७५% + व्योम २५%) समानः, वायौ तेजोंशमेलनेन (वायुः ७५% + तेजस् २५%) उदानः, वायौ जलांशमेलनेन (वायुः ७५% + जल २५%) अपानः, वायौ भूम्यंशमेलनेन (वायु : ७५% + भूमि : २५%) प्राणः ।




## तेजस् तत्त्वानि (तैजसपञ्चकम्)

तेजसि तेजोंशमेलनेन (तेजस् १००%) चक्षुः, तेजसि आकाशांशमेलनेन (तेजस् ७५% + अकाश : २५%) श्रोत्रम्, तेजसि वाय्वंशमेलनेन (तेजस् ७५% + वायु : २५%) त्वक्, तेजसि जलांशमेलनेन (तेजस् ७५% + जल : २५%) जिह्वा, तेजसि भूम्यंशमेलनेन (तेजस् ७५% + भूमि : २५%) घ्राणम् ।



## जलतत्त्वानि (जलजपञ्चकम्)

अप्सु अबंशमेलनेन (अप् १००%) रसः, अप्सु आकाशांशमेलेनेन (अप् ७५% + आकाश : २५%) शब्दः, अप्सु वाय्वंशमलनेन (आप् ७५% + वायु : २५%) स्पर्शः, अप्सु तेजोंशमेलनेन (अप् ७५% + तेजस् २५%) रूपम्, अप्सु भूम्यंशमलेनेन (अप् ७५% + भूमि : २५%) गन्धः।




## पृथिवीतत्त्वानि (भूमिजपञ्चकम्)

भूमौ भूम्यंशमेलनेन (भूमिः १००%) पायु, भूमौ व्योमांशमेलनेन (भूमिः ७५% + व्योम २५%) वाक्, भूमौ वाय्वंशमेलनेन (भूमिः ७५% + वायुः २५%) पाणी; भूमौ तेजोंशमेलनेन (भूमिः ७५% + तेजस् २५%) पादौ;भूमौ जलांशमेलनेन (भूमिः ७५% + जलं २५%) उपस्थम्।

(शि.त.र., भा-१, १.७.४८-५५)



## पञ्चेन्द्रियार्पणदीक्षा

मन्त्रदीक्षान्तर्गतसप्तविधदीक्षास्वेकतमा । शिष्य ! त्वमात्मानं सतीत्वेन लिङ्गं च पतित्वेन मनसि निश्चित्य सर्वदा तनुमनोभावान् इष्टादिलिङ्गेभ्यः समर्पय इत्यादेशरूपदीक्षा पञ्चेन्द्रियार्पणदीक्षेति कथ्यते ।

**दृढव्रतामिति प्रोक्त्वा दद्यात् पञ्चेन्द्रियार्पणाम् ।।**

**सत्यहं मत्पतिर्लिङ्गमिति निश्चित्य चेतसि ।**

**सदा तनुमनोभावानिष्टादिभ्यः समर्पय ।।**

(का.आ.,क्रि.पा.,१.११३-११४)

## पञ्चोपचाराः

उपचारभेदः । अभिषेकः, पूजा, नैवेद्यम्, प्रदक्षिणम्, नमस्कारः इति पञ्चोपचाराः ।

**स्नानं पूजा च नैवेद्यमुपचारस्त्रयः स्मृताः ।**

**प्रदक्षिणनमस्कारौ पञ्चैते सम्प्रकीर्तिताः ।।**

(शि.त.र.,भा-३.,८.७.४३)

(पश्यत – उपचारः)

## पञ्चोपाचार्याः

वीरशैवमते प्रसिद्धाः पञ्च उपाचार्याः । ते च कौमार्यः, मठार्यः, गणार्यः, स्तावरार्यः, मालार्य इति ।

**लोकेऽस्मिन् जगतामीश उपाचार्याश्च सन्ति वै ।**

**कौमार्यस्तावरार्यश्च मठार्यश्च गणार्यकः ।।**

**मालार्यश्चेति विख्याताः पञ्चोपचार्यनामकाः ।**

**त्वयोक्ते वीरशैवाख्ये मते सर्वोत्तमोत्तमे ।।**

(वी.स.सं., ४.२-३)

## पड्विडिः

वीरशैवपञ्चमहापीठसम्बद्धेषु पञ्चमहासूत्रेष्वेकम् । रम्भापुरीमहापीठ सम्बद्धं सूत्रम् । अस्य उपसूत्राणि द्वादश ।

**तन्नामरेवणाराध्यः सूत्रं पडिविडीत्यपि ।**

(वी.स.सं.,१.३८)

## पतिः

पशुपतिः ।

**पतिः साक्षान्महादेवः पशुरेषः तदाश्रयः ।**

(सि.शि.,१०.४०)

(पश्यत – पशुपतिः)

## पदाध्वा

अध्वभेदः । षडध्वस्वेकः । व्योमव्यापी इत्याद्यैकाशीतिपद-समुदायः। अयं च शब्दाध्वा ।

**व्योमव्यापीत्यादिकस्तु सैकाशीतिः पदाध्वकाः ।।**

**मन्त्रवर्णपदात्मानः त्रयः शब्दस्वरूपकाः ।।**

(शि.त.र.,भा–३, ९.३.८४, ८६)

## पदार्थः

१. पदार्थो द्विविधः, स्वतन्त्रः अस्वतन्त्रश्चेति । तत्र स्वतन्त्रः केवलं परमात्मा। अस्वतन्त्रश्च चेतनोऽचेतनश्चेति द्विविधः । चेतना अपि द्विविधाः – नित्यमुक्ताः, नित्यसंसारिणश्चेति । तत्र वीरनन्द्यादयः नित्यमुक्ताः । सृष्टिकर्तृब्रह्मादिमनुष्यपर्यन्तं नित्यसंसारिणः ।

**पदार्थो द्विविधः । स्वतन्त्रोऽस्वतन्त्रश्चेति । तत्र स्वतन्त्रो ह्यहमेव अस्वतन्त्रश्चेतनोऽश्चेतनश्चेति द्विविधः ।**

तत्रापि चेतनो नित्यमुक्तः नित्यसंसारी भेदात् द्विविधः । तत्र वीरनन्द्यादयः तथा एकाक्षरादयः प्रमथगणाश्च नित्यमुक्ताः । नित्यसंसारिणस्तु सृष्टिस्थित्यन्तकर्तारो ब्रह्मविष्णुमहेश्वरादयो मनुष्यान्ताः ।

(वी.स.सं., १.पृ.२)

२. पदार्थः त्रिविधः – पशुः, पतिः, पाश इति ।

**ब्रह्मादिस्तम्बपर्यन्तं पशवः परिकीर्तिताः ।**

**शिवः पतिरिति प्रोक्तः पाशः कर्ममलादिकम् ।**

(सू.आ., क्रि.पा.,५.२०)

**तत्र शैवागमाः केचन पशुपाशपतिपदार्थत्रयप्रतिपादकाः ।**

(वे.चिं., २.१६, पृ.६१)

## पदार्थकायः = पदार्थतनुः

पूजानिष्ठानां वीरशैवानां पदार्थकायः प्रसादकायश्चेति काययोरेकतरः । तत्र पूजाया आद्यन्तः पूजाद्रव्यानां भक्त्या समर्पणे निरतः भक्तः पदार्थकाय इति कथ्यते ।

**पूजादौ पूजान्ते भवेदयं भक्तितः पदार्थतनुः ।**

**पदार्थकायः पूजायां भक्तो भक्तिप्रभावतः ।।**

(अ.सू.,७.१७-१८)

(पश्यत – प्रसादकायः)

## पद्ममण्डलम्

लिङ्गार्चनपात्रविन्यासाय रचनीयेषु त्रिषु मण्डलेष्वेकतमम् ।

**सिततण्डुलचूर्णेन पद्ममष्टदलं भवेत् ।**

(का.आ.,क्रि.पा.,४.१७)

(पश्यत – मण्डलानि)

## परकायः

प्रकृतेर्वशीकरणात् मायामार्गातिक्रमणाच्च सत्यज्ञानसुखात्मकः शिवयोगी परकाय इति कथ्यते । आत्मसाक्षात्कारवान् ज्ञानी । स च शरीरी सन्नपि ज्ञानाग्निना जन्मबीजनाशितत्वात् स्वशरीरं परशरीरवत् पश्यति इति हेतोश्च परकायः इत्युच्यते ।

**वशीकृतत्वात् प्रकृतेः मायामार्गातिवर्तनात् ।**

**परकायोऽयमाख्यातः सत्यज्ञानसुखात्मकः ।।**

**परब्रह्मवपुर्यस्य प्रबोधानन्दभासुरम् ।**

**सम्यग्ज्ञानाग्निसन्दग्धजन्मबीजकलेवरः ।**

**शिवतत्त्वावलम्बी यः परकायः स उच्यते ।।**

(सि.शि., १६.४९-५१)

## परकायस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । माहेश्वरस्थलाश्रितनवविध लिङ्गस्थलेषु चान्यतमम् । परकायसंज्ञितस्य शिवयोगिनः स्थलम् । इदं परकायस्य स्थलम् ।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस ।**

**ततोऽकायस्थलं प्रोक्तं परकायस्थलं ततः ।।**

(सि.शि., १६.२-३)

(पश्यत – परकायः)

## परजङ्गमः

परजङ्गमः, चरजङ्गमः, स्वयजङ्गम इति त्रिविधजङ्गमलिङ्गान्यतमः । स्वकीयपादतीर्थेन जलं तीर्थत्वेन संपाद्य यश्चरति स परजङ्गमः । स एव परलिङ्गमिति कथ्यते ।

**स्वपादतीर्थतस्तोयं तीर्थं कृत्वा चरेत्सदा ।**
**निरञ्जनः सन् यो लोके स एव परजङ्गमः ।।**

(वी.स.सं.,१५.६७)

(पश्यत – परलिङ्गम्)

## परतत्त्वम्

परशिवतत्त्वम् । शिवतत्त्वम् । लिङ्गतत्त्वम् । सच्चिदानन्दनित्यपरिपूर्ण-लक्षणात्मकं जगदुत्पत्तिस्थितिलयकारणकं तत्त्वम् । सगुणोपाधौ परतत्त्वे भोक्तृत्वम्, भोज्यत्वम्, प्रेरकत्वं च कल्प्यते ।

**गुणत्रयविभेदेन परतत्त्वे चिदात्मनि ।**
**भोक्तृत्वं चैव भोज्यत्वं प्रेरकत्वं च कल्पितम् ।।**

(सि. शि., ५.३८)

(पश्यत – परलिङ्गम् )

## परनादः

परब्रह्मलिङ्गभूतस्य शिवलिङ्गस्य चतुर्षु भागेष्वेकतमः । तल्लिङ्गस्य ऊर्ध्वतमभागस्य परनाद इति नाम ।

**अधः स्यादपरोबिन्दुस्तदूर्ध्वमपरो ध्वनिः ।**
**तदूर्ध्वं परबिन्दुः स्यात् परनादस्तदूर्ध्वगः ।।**

(चं.आ.,क्रि.पा.,३.११)

## परप्रणवः

प्रणवभेदः । पर–अपरयोरन्यतरः । परं ब्रह्म ।

**परापरविभागेन प्रणवस्तु द्विधा मता ।**
**परः परात्परं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।।**

(शि.त.र.,भा–१,१.५.१०)

(पश्यत – प्रणवः)

## परबिन्दुः

१. परब्रह्मलिङ्गभूतस्य शिवलिङ्गस्य चतुर्षु भागेषु एकतमः । तल्लिङ्गस्य ऊर्ध्वतमभागभूतस्य परनादस्य अव्यवहिताधोभागस्य परबिन्दुरिति नाम ।

**अधः स्यादपरोबिन्दुस्तदूर्ध्वमपरो ध्वनिः ।**

**तदूर्ध्वं परबिन्दुः स्यात् परनादस्तदूर्ध्वगः ।।**

(चं.आ.,क्रि.पा.,३.१०-११)

२. शुद्धमाया एव परो बिन्दुः शब्दब्रह्मेति नामान्तरम् ।

**शुद्धमाया परो बिन्दुः शब्दब्रह्मेति कथ्यते ।।**

(पौ.आ., उल्लेखः - सोसले रेवणाराध्यस्य सि.शि. व्याख्या, २०.३३)

## परब्रह्म

शिवतत्त्वम् । परशिवः ।

**शिवरुद्रमहादेवभवादिपदसंज्ञितम् ।**

**अद्वितीयमनिर्देश्यं परं ब्रह्म सनातनम् ।।**

(सि.शि., २.६)

## परब्रह्मपुरुषः

परशिवः ।

**ऋतं सत्यं परब्रह्म पुरुषं साम्बमीश्वरम्**

(वी.प्र.,१.१)

(पश्यत - परब्रह्म)

## परब्रह्मलिङ्गम्

परब्रह्म ।

**चिदाकारं परब्रह्मलिङ्गमज्ञैर्न भाव्यते ।**

(वी.प्र.,पृ.३०, श्लो.७)

(पश्यत - परब्रह्म)

## परमपदम्

नादबिन्दुकलातीतं निष्कलं ब्रह्म । तत्र आधारमध्यहृदयव्याप्यं नादबिन्दुकलात्मकम् । तदतीतं परवस्तुस्वरूपं परमपदम् ।

**आधारमध्यहृद्व्याप्तनादबिन्दुकलात्मकम् ।**

**तदतीतं स्वरूपं यत् तदेव परमं पदम् ।।**

(शि.यो.प्र.,५.२१)

**परनिर्वाणनिष्ठानां यद्भवेत् परमं पदम् ।**

(अ.सू.,२.९)

## परमलिङ्गम्

दशविधलिङ्गान्यतमभूतमहालिङ्गम् । अस्मत्तत्त्वाभिमानि महालिङ्गम्।

**परमलिङ्गाय नम इत्यात्मतत्त्वाभिमानिनो महालिङ्गस्य (अभेदप्रतीतिः)**

(लि.धा.चं., पृ.७६)

## परमशक्तिः

परमा शक्तिः । परमशक्तिः । सच्चिदानन्दस्वरूपपरमेश्वरेण सह अविनाभावसम्बन्धयुक्ता परमाशक्तिः ।

**तस्यै मायास्वरूपायै नमः परमशक्तये ।**

**तदीया परमा शक्तिः सच्चिदानन्दलक्षणा ।**

(सि.शि.,१.९; २.१२)

(पश्यत – पराशक्तिः)

## परमात्मस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्राणलिङ्गिस्थलाश्रित–नवविधलिङ्गस्थलेष्वेकतमः । परमात्मस्वरूपावस्थितिः परमात्मा ।

शिवाद्वैतज्ञानेन संसारकारणे अज्ञाने निर्धूते सति परमात्मना सह सामरस्यात् शिवयोगी परमात्मेति कथ्यते । तस्य स्थितिः परमात्मस्थलम् ।

**स्थलानां नवकं प्रोक्तं प्राणिलिङ्गिस्थलाश्रितम् ।**

**परमात्मस्थलं पश्चात् ........................ ।**

**निर्धूते तत्प्रबोधेन मले संसारकारणे ।**

**सामरस्यात् परात्मस्थात्परमात्माऽयमुच्यते ।।**

(सि.शि.,१८.२-३, २८)

## परमात्मा

यस्य मायासमुद्रे ब्रह्माण्डबुद्बुदसमूहा उन्मज्जननिमज्जने कुर्वन्ति स एव परमात्मा ।

**ब्रह्माण्डबुद्बुदस्तोमाः यस्य माया महोदधौ ।**

**उन्मज्जन्ति निमज्जन्ति परमात्मा स उच्यते ।।**

(सि.शि., १८.३०)

(पश्यत – परमात्मस्थलम्)

## परमार्थः

वेदवाक्यप्रमाणोद्भूतार्थः परमार्थः ।

**प्रमाणं वेदवाक्यत्वात्परमार्थप्रकाशितम् ।**

(शै.र.,भा-२, ११.१९)

## परमेश्वरः

श्रेष्ठः प्रभुः, परशिवः ।

**तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ।**

**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।।**

(कै.उ.,१.२.७)

**भगवन् देवदेवेश सर्वज्ञ परमेश्वर ।**

(सू.आ., क्रि.पा.,१.७)

## परलिङ्गम्

१. परतत्त्वम् ।

**परलिङ्गे विलीनस्य परमानन्दचिन्मये ।**

(सि.शि., १६.४५)

**एकमेव परं लिङ्गमङ्गेऽस्मिन् सुप्रतिष्ठितम् ।**

(अ.सू.,६.४)

**चराचरात्मकमिदं गम्यते यत्र लीयते ।**

**उत्पद्यते यतो भूयस्तल्लिङ्गं परमिष्यते ।।**

(शि.त.र.,भा–१, १.४.२९)

२. त्रिविधचरलिङ्गेष्वेकम् । चरलिङ्गं नाम जङ्गमः । अतः चरम् इत्यनेन चरजङ्गमः उक्तः । ज्योतिर्लिङ्गस्वरूपं परलिङ्गम् । स्वयं चरं परं चेति चरलिङ्गं त्रिविधम् ।

**चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते ।**

**स्वयं चरं परं चेति त्रैविध्यं समुपागतम् ।।**

**निर्द्वन्द्वो हि सदा स्थाणुर्गमागमविवर्जितः ।**

**ज्योतिर्लिङ्गस्वरूपोऽयं परलिङ्गमुदाहृतम् ।।**

(सू.आ., क्रि.पा.,८.१८, २१)

**स्वयं परं चरं चेति तेषां लक्षणमुच्यते ।**

**स्वयमेव स्वयं भूत्वा चरतः स्वस्वरूपतः ।**

**परं नास्तीति बोधस्य परत्वमभिधीयते ।।**

(सि.शि., १५.६, ६४)

## परशिवः

परब्रह्म । परमेश्वरः । परवस्तु । सर्वेषामपि देवानां वरिष्ठः परमश्शिवः।

**चरमूर्तिःशिवस्साक्षात्पाशमुक्तः परःशिवः ।**

(वी.प्र.,पृ.१२१)

## परस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । भक्तस्थलाश्रितनवलिङ्-स्तलेष्वेकम् । स्वरूपसिद्धत्वेन सञ्चरतः शिवयोगीश्वरस्य परं नास्ति इति ज्ञानस्य परस्थलम् इत्यभिधानम् ।

**स्यमेव स्वयं भूत्वा चरतः स्वस्वरूपतः ।**
**परं नास्तीति बोधस्य परत्वमभिधीयते ।।**

(सि.शि.१५.६४)

(पश्यत – परलिङ्गम्)

## पराङ्मुखार्घ्यम्

अर्घ्यभेदः। पूजावेलायां पुनर्देवताप्रतिष्ठापनविधावुपयुज्यमानमर्घ्यम्।

**................. विसर्जन विधानकम् ।**
**पराङ्मुखार्घ्यमित्येतत् .............।**

(क्रि.सा.,भा–३, १५, पृ.४)

## परात्परम्

परलिङ्गम् । परात्परलिङ्गम् । स्थूलम्, सूक्ष्मम्, परात्परं चेति लिङ्गं त्रिविधम् । तेषु परात्परलिङ्गं तृप्तिलिङ्गमित्युच्यते । तदेव परमानन्दलक्षणं शिवाख्यं ब्रह्म ।

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम् ।**
**परात्परं तु यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते ।।**
**परात्परं तु यद्ब्रह्म परमानन्दलक्षणम् ।**
**शिवाख्यं ज्ञायते येन ज्ञानलिङ्गीति कथ्यते ।।**

(सि.शि., ६.४९-५०, १५.४९)

## परात्मा

परमात्मा । विभुः । निर्गुणतत्त्वम् ।

**नमस्तस्मै गुणातीतविभावाय परात्मने ।**

(सि.शि., १.४)

## परामुक्तिः

लिङ्गाङ्गसंयोगः ।

**तस्माल्लिङ्गाङ्गसंयोगात् परामुक्तिर्न विद्यते ।**
**मुक्तिः परतरा भक्तिः इति सत्यपरा श्रुतिः ।।**

(श.त्र., श्लो - ११४, पु-१५)

## परा विद्या

परा - अपरा इति द्विविधविद्ययोरन्यतरा । परमात्मतत्त्व-प्रतिपादकविद्या परा विद्या । पञ्चाक्षरीविद्या ।

**अथ परा यया तदक्षरमधिगम्यते**

(मुं. उ., १.१.५)

**पञ्चाक्षरी परा विद्या .................. ।**

(अ.सू., ६.४३)

(पश्यत - विद्या)

## पराशक्तिः

शक्तिभेदः। शिवस्य विमर्शाशक्तिरेव पराशक्तिः। विश्वोद्भासनकारिणी।

**विमर्शाख्या पराशक्तिः विश्वोद्भासनकारिणी**

(सि.शि.,२०.३०)

शक्तिभेदः । बिन्दुरूपा पीठिकात्मिका चेयं सर्वशक्तीनां प्रसवित्री । शिवस्य चिन्तासहस्रांशात् जायमानेयं शान्त्यतीता ।

**ध्यायमानात्ततो देवि पराशक्तिरजायत ।**

(सू.आ., क्रि.पा.,१.२०)

**बिन्दुः शक्तिः शिवो नादः ।**

(शि.त.र.,भा-१, १.४.२५)

**बिन्दुरूपा परा शक्तिः ।**

(वा.शु.आ., २.१२)

**तत्पराशक्तिरित्युक्ता पीठिका सैव नान्यथा ।**
**प्रसवित्री तु शक्तीनां पराशक्तिस्तु पीठिका ।**
**पराशक्तिस्तस्य चिन्ता सहस्रांशेन जायते ।**

(शि.त.र.,भा-१.४.२६-२७, ५०)

**शान्त्यतीता पराशक्तिः ।**

(अ.सू., ३.२५; शि.यो.प्र., १-२१)

(पश्यत – शक्तिः)

## परास्थितिः

शिवप्रसादो सेव्यः इति बुद्धिरेव परास्थितिः ।

**सेव्यः शिवप्रसादोऽयमिति शैवी परास्थितिः ।।**

(विशे.प्र.,३.८८)

## पराहन्ता

शिवजीवसाधारणीभूतात्मतत्त्वम् । तया शिवयोगी परिपूर्णविमर्शवान् सञ्जायते । पूर्णाहन्ता एव पराहन्ता । पराहन्ता नाम (समहन्ता) समष्टिरूपा अहन्ता; अहन्ता तु व्यष्टिरूपा अहन्ता ।

**पराहन्ता समावेश परिपूर्णविमर्शवान् ।**

**सर्वज्ञः सर्वगः साक्षी सर्वकर्ता महेश्वरः ।।**

**पराहन्तामयं प्राहुर्विमर्शं परमात्मनः ।।**

(सि.शि., २०.३२-३३)

**पराहन्तामये स्वात्मपावके विश्वभास्वती ।**

**पराहन्तामनुप्राप्य पश्येद्विश्वं चिदात्मकम् ।**

**गलिते ममताऽहन्ते संसारभ्रमकारणे ।**

**पराहन्तां प्रविष्टस्य कुतो देहः कुतो रतिः ।।**

(सि.शि., १४.३८, १८.३७)

(पश्यत – पूर्णाहन्ता)

## परोक्षदीक्षा

पितामहो वा प्रपितामहो वा यदि दीक्षाहीनो मृतोऽभवति तदा पित्रा सह तयोरैक्यसिद्ध्यर्थं परोक्षदीक्षा करणीयेति नियमः । वेदिकायां तस्य दर्भानिर्मितशरीरं विन्यस्य या दीक्षा क्रियते सा परोक्षदीक्षेति कथ्यते ।

**पितुः पिता तत्पिता वा दीक्षाहीनो मृतो यदि ।**

**पितुः तदैक्यसिद्ध्यर्थं दीक्षां परोक्षमाचरेत् ।।**

**स्थण्डिले कूर्चमानीय मृतमावाह्य नामतः ।**

**परोक्षदीक्षा करणे स लिङ्गी भवति ध्रुवम् ।।**

(मकुट.,च.पा.,५.२०-२१)

## पशुः

पशुपतिपाशेष्वन्यतमः । पशुः जीवः, स च किञ्चिज्ज्ञः भोक्तेत्युच्यते । जीवास्त्वनन्ताः । तथा च – शिवसम्बद्धाः, ब्रह्माद्याः स्थावरान्ताः संसारवशवर्तिनः जीवाः पशवः ।

**पशुर्जीवः ।**

(वे.चिं, २–१२)

**ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः ।**
**पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ॥**

(चं.आ.,क्रि.पा., १.१०)

## पशुपतिः

पतिपशुपाशरूप – पदार्थत्रयान्यतमः । महेश्वरः । शिवः । रुद्रः । पशूनां पतित्वात् पशुपतिः ।

**शिवो रुद्रः पशुपतिर्नीलकण्ठो महेश्वरः ।**

(सू.आ., क्रि.पा., ६.३८)

**तेषां पतित्वाद्विश्वेशः शिवः पशुपतिः स्मृतः ।**

(चं.आ.,क्रि.पा., १.११)

## पशुपाशनियामकः

षडध्वकर्ता, सर्वतत्त्वोपरि स्थितः परमात्मा एव पशुपाशनियामकः ।

**षडध्वकर्ता देवेशः सर्वतत्त्वोपरि स्थितः ।**
**एवं रूपः परत्मा हि पशुपाशनियामकः ।**

(सू.आ., क्रि.पा., २.२०)

## पाकशुद्धिः

षोडशशुद्धिष्वेकतमा ।

**भोज्यं भक्तैः परिग्राह्यं पाकशुद्धिरियं मता ।**

(चं.आ.,क्रि.पा.,९.४१)

(पश्यत – षोडशशुद्धयः)

## पादतीर्थम्

पादाम्बु । पादवारि । गुरुलिङ्गजङ्गमपादप्रक्षालितं पवित्रमुदकम् ।

**पादतीर्थं त्रिधा शम्भोः गुरुजङ्गमयोरपि ।**

**दीक्षाशिक्षा ज्ञानमिति त्रिसंज्ञं तद्भवत्यहो ।।**

**पादतीर्थं सदा पेयं भवबन्धमुमुक्षुभिः ।।**

(चं.आ., क्रि.पा., ५.५-६)

(पश्यत – पादोदकम्)

## पादवारि

पादोदकम् । पादतीर्थम् ।

**गुरुर्लिङ्गं चरश्चैव प्रसादः पादवारि च ।**

(शि.त.र., भा-१, १.३.२८)

(पश्यत – पादोदकम्)

## पादसेवनभक्तिः

भक्तिभेदः । नवविधभक्तिष्वन्यतमा ।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।**

(सि.शि., ९.२)

(पश्यत – नवविधभक्तिः)

## पादाम्बु

पादतीर्थम् ।

**सर्वसिद्धिकरं पुंसां शम्भोः पादाम्बुधारणम् ।।**

(सि.शि., ९.६८)

(पश्यत – पादोदकम्)

## पादोदकम्

पादतीर्थम् । पादाम्बु । पादवारि । गुरुलिङ्गजङ्गमपादप्रक्षालितं पवित्रमुदकम् । गुरुः, लिङ्गम्, जङ्गमः, प्रसादः, पादोदकम्, विभूतिः, रूद्राक्षः, मन्त्रः इत्यष्टावरणेषु एकम् । अष्टावरणं भक्ताङ्गमित्युच्यते । तत्र शम्भोः पादाम्बु सर्वमङ्गलदायकम् । एवं गुरुजङ्गमयोरपि ।

**गुरुर्लिङ्गं चरश्चैव प्रसादः पादवारि च ।**
**भूतिरुद्राक्षमन्त्राश्च भक्ताङ्गमिति कथ्यते ।।**

(शि.त.र.,भा-१, १.३.२८)

**पादोदकं यथा भक्त्या स्वीकरोति महेशितुः ।**
**तथा शिवात्मनोर्नित्यं गुरुजङ्गमयोरपि ।।**
**सर्वमङ्गलमाङ्गल्यं सर्वपावनपावनम् ।**
**सर्वसिद्धिकरं पुंसां शम्भोः पादाम्बुधारणम् ।।**

(सि.शि.,९.६७-६८)

**पादोदकभेदः**

**त्रिधा** – दीक्षापादोदकं गुरोः, शिक्षापादोदकं लिङ्गस्य, ज्ञानपादोदकं जङ्गमस्य चेति भेदेन पादोदकं त्रिधा ।

**पादतीर्थं त्रिधा शम्भोर्गुरुजङ्गमयोरपि ।**
**दीक्षा शिक्षाज्ञानमिति त्रिसंज्ञं तद्भवत्यहे ।।**

(चं.आ., क्रि.पा.,५.५)

**दीक्षापादोदकं पूर्वं शिक्षापादोदकं ततः ।**
**ज्ञानपादोदकं चाथ ................. ।।**

(सि.शि., १९.३)

गुरुलिङ्गजङ्गमानां मध्ये एकस्य पादोदके प्राप्ते सति त्रयाणामपि पादोदकमिति भावयित्वा स्वीकुर्यात् इति नियमः ।

**गुरोश्चरस्य चालाभे इष्टलिङ्गपदोदकम् ।**

**लब्ध्वा गुर्वादिपादोदं भावयेन्मनसैव तत् ।।**

**चरवर्जं गुरोर्लाभे लब्ध्वा गुरुपदोदकम् ।**

**गुरुजङ्गमपादोदं लब्धवानिति भावयेत् ।।**

**गुरुवर्जं चरप्राप्तौ लब्ध्वा चरपदोदकम् ।**

**तदेव गुरुपादोदमिति मत्वा पिबेत्तदा ।।**

(चं.आ., क्रि.पा.,५.७-९)

## पाद्यम्

पादप्रक्षालनायोपयुज्यमानं पवित्रं जलम् ।

**पाद्येन पादौ धौतौ ............... ।**

(क्रि.सा.,भा-३, पृ.७)

## पाशः

पशुपतिपाशेष्वन्यतमः । पशुपतिभ्यामतिरिक्तमचेतनमव्यक्तं जगदिदं सर्वं पाशः । शिवः पाशैः पशून् बध्नाति । पाशबद्धत्वाज्जन्तुः जीव इत्युच्यते ।

**तदुभयव्यतिरिक्तमचेतनं सर्वं पाशः ।**

(वे.चिं., २.१२)

**मलमायादिभिः पाशैः स बध्नाति पशून् पतिः ।**

(चं.आ., क्रि.पा., १.११)

**पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः ।।**

(वी.आ. चं., १.५२)

**पाशभेदः**

१. मलं, कर्म, माया, जगत् (बैन्दवपाशः), तिरोधानकारिणी शक्तिः – इत्येवं पाशाः पञ्च ।

**मलं कर्म च माया च मायार्थमखिलं जगत् ।**

**तिरोधानकरी शक्तिः पञ्चार्थाः पाशसंज्ञिताः ।।**

(वी.ध.शि., पृ.२३; शि.त.र.,भा–३, ९.३.९३–१००)

२. मायाकर्मभ्यां रज्जुभूताभ्यां बद्धानि चतुर्विंशतितत्त्वानि विषयाः इति कथ्यन्ते । तान्येव पाशभूतानि जीवान् बध्नन्ति ।

**चतुर्विंशति तत्त्वानि मायाकर्मगुणा अमी ।**

**विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः ।।**

**ब्रह्मादिस्तम्बपर्यन्तान् पशून् बद्ध्वा महेश्वरः ।**

**पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् ।।**

(चं.आ., क्रि.पा.,१.१२, पार.आ.,१२.६३–६४)

(पश्यत – बन्धः)

## पाशुपतम्

सांख्यम् योगः, पाञ्चरात्रम्, वेदाः, पाशुपतम् इति । पञ्चसिद्धान्तेष्वेकतमं पाशुपतम् ।

**सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।**

**एतानि मानभूतानि नोपहन्यानि युक्तिभिः ।।**

(सि.शि.,५.४)

सिद्धान्तशेखरे –

**शैवं पाशुपतं सोमं लाकुलं तच्चतुर्विधम् ।**

(वी.ध.शि.,भा–१, पृ.१३)

**अत्र पशुपतिश्चिन्त्यते अस्मिन्निति वा पशुपत्युपस्थापकत्वाद्वा, पशुपतिप्रापकत्वाद्वा पाशुपतम् इति व्युत्पत्तिर्बोध्या ।**

(वी.ध. शि.,भा–१, पृ.१४)

## पाशुपतयोगः

ज्ञानवारिपरिपूतः सन् शिवात्मा शिवमयो भूत्वा पञ्चब्रह्ममन्त्र-पुरस्सरमग्नौ दग्ध्वा संस्कृतं भस्मादायाग्निरित्यादिमन्त्रतः सर्वाङ्गं लेपयेत् । तत आत्मनि परंज्योतिस्वरूपिणमीशानमभिचिन्तयेत् । एष च विधिः पाशुपतयोगः । अयञ्च कैश्चित् पाशुपतव्रतम् अत्याश्रमव्रतम्, शाम्भवव्रतम् इत्युच्यते । ज्ञानं चानेनाभिवर्धते पशुपाशविमुक्तिश्चापि फलति ।

**तेनोद्धूल्य च सर्वाङ्गमग्निरित्यादिमन्त्रतः ।**
**चिन्तयेदात्मनीशानं परंज्योतिःस्वरूपिणम् ।।**
**एष पाशुपतो योगः पशुपाशविमुक्तये ।**
**एतद्वेदशिरोनिष्ठाः प्राहुः पाशुपतं मुने ।।**
**एतच्छिरोव्रतं प्राहुः केचिदत्याश्रमं बुधाः ।**
**केचिद्व्रतमित्याहुः केचिच्छाम्भवमैश्वरम् ।।**

(वी.स.सं., ६.२०–२१, २७, २८)

## पाशुपतव्रतम्

शाम्भवव्रतम् ।

**एतच्छिरोव्रतं प्राहुः केचिदत्याश्रमं बुधाः ।**
**केचित्तद्व्रतमित्याहुः केचिच्छांभवमैश्वरम् ।।**
**व्रतेन वा पाशुपतेन मुक्तिः ........... ।**

(वी.स.सं.,६.२७, २८)

(पश्यत – पाशुपतयोगः)

## पाशुपताः

शैवादिचतुर्विधमाहेश्वरभेदेष्वेकः ।

**माहेश्वरास्तु चत्वारः शैवाः पाशुपतास्तथा ।**

**कालसिद्धान्तिनः केचित् तथा कापालिकाः परे ।।**

(क्रि.सा.,भा-१, २.५०४)

## पाशुपतास्त्रम्

विद्याङ्गे विद्यमानेषु षडस्त्रेष्वेकतमम् ।

**शिवास्त्रं पशुपत्यस्त्रं ...................... ।**

(वा.शु.आ.,८.४५)

(पश्यत – पाशुपतास्त्रमन्त्रः)

## पाशुपतास्त्रमन्त्रः

विद्याङ्गे विद्यमानेषु षडस्त्रमन्त्रेष्वेकतमः । तत्र ॐकारः, श्लींकारः, पकारः, शुकारः, हुंकारः, फट्कारश्चेति मिलित्वा पाशुपतास्त्रमन्त्रः भवति । (ॐ–श्लीं–प–शु–हुं–फट्) ।

**ॐकारः प्रथमं बीजम्, श्लींकारश्च द्वितीयकम् ।**

**पकारः स्यात् तृतीयं तु शुकारश्च चतुर्थकम् ।।**

**हुंकारः पञ्चमं बीजं फट्कारः षष्ठबीजकम् ।**

**एष पाशुपतास्त्राख्यः मन्त्रः षड्वर्णको भवेत् ।।**

(वा.शु.आ.,८.४९–५०)

## पिण्डः

१. देहः ।शरीरम् ।

**ब्रह्माण्डे ये पदार्थाः स्युस्ते शरीरे व्यवस्थिताः ।।**

**पातालं भूधरा लोकाः तथाऽन्ये द्वीपसागराः ।**

**आदित्यादिग्रहास्सर्वे पिण्डमध्ये व्यवस्थिताः ।।**

(शि.त.र.,भा-३, ९.१.१५१, १५२)

२. शुद्धात्मा । चरमदेहः । अनेकजन्मकृतपुण्यैः मनोवाक्कायजपापसमूहे नष्टे सति निर्मलान्तःकरणवानात्मा पिण्डशब्देन कथ्यते।

**बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे ।**

**शुद्धान्तःकरणो देही पिण्डशब्देन गीयते ।।**

**शिवशक्तिसमुत्पन्ने प्रपञ्चेऽस्मिन् विकल्प्यते ।**

**पुण्याधिकः क्षीणपापः शुद्धात्मा पिण्डनामकः ।।**

(सि.शि., ५.३१-३२)

## पिण्डचित्स्थलम्

सप्तविंशतिस्थलभेदे दशमम् ।

**दशमं पिण्डचित्स्थलम् ।**

(अ.वी.सा.सं., १.५१)

(पश्यत – सप्तविंशतिस्थलानि)

## पिण्डजलिङ्गम्

देहोऽयं देवालयः, जीवश्च सदाशिवः इत्याकारकं ज्ञानं पिण्डजलिङ्गम् । महालिङ्गस्य त्रिविधलिङ्गेष्वेकतमम् ।

**महालिङ्गस्थलं चापि त्रिधा भिन्नं शृणु क्रमात् ।**

**पिण्डजं प्रथमं प्रोक्तं ..................... ।।**

**देहो देवालयः प्रोक्तो जीवो देवः सदाशिवः ।।**

**इति निश्चितसद्भावः पिण्डजं लिङ्गमुच्यते ।।**

(सू.आ., क्रि.पा., ८.२६-२७; क्रि.सा., भा-३, श्लो.८-९)

## पिण्डजस्थलम्

महालिङ्गस्थलस्य त्रिविधस्थलेष्वेकम् ।

**महालिङ्गस्थलं चापि त्रिधा भिन्नं ........ ।**

**पिण्डनं प्रथमं प्रोक्तं .............. ।।**

(सू.आ.,क्रि.पा.,८.२६-२७)

(पश्यत – पिण्डजलिङ्गम्)

## पिण्डज्ञानस्थलम् = पिण्डविज्ञानस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतभक्तस्थलस्य पञ्चदशप्रभेदेषु चान्यतमम् । पिण्डज्ञानिनः स्थलम् ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**

**पिण्डता पिण्डविज्ञानं .................... ।**

(सि.शि., ५.२७)

(पश्यत – पिण्डज्ञानी)

## पिण्डज्ञानी

शरीरात्मविवेकी पिण्डज्ञानीत्युच्यते । शरीरमेवात्मेति चार्वाका वदन्ति । केचन बुद्धिः आत्मा इति वदन्ति । परन्तु शरीरेन्द्रियबुद्धिभ्यः भिन्नः सनातन आत्मा इति यः विवेकसम्पन्नः भवति सः पिण्डज्ञानी । आत्मा शरीरात् पृथक् । ईश्वरः आत्मनः पृथक् । ईश्वर एव तत्र प्रेरकः इति यः जानाति सः पिण्डज्ञानी ।

**शरीरात्मविवेकेन पिण्डज्ञानी स कथ्यते ।**

**शरीरमेव चार्वाकैरात्मेति परिकीर्त्यते ।।**

**इन्द्रियाणां तथात्मत्वमपरैः परिभाष्यते ।**

**बुद्धितत्त्वगतैर्बौद्धैः बुद्धिरात्मेति गीयते ।**

**नेन्द्रियाणां न देहस्य न बुद्धेरात्मता भवेत् ।।**

**अहंप्रत्ययवेद्यत्वादनुभूतस्मृतेरपि ।**

**शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तस्सनातनः ।।**

**आत्मस्थिति विवेकी यः पिण्डज्ञानी स गीयते ।**

**शरीरात्पृथगात्मानम् आत्मभ्यः पृथगीश्वरम् ।**

**प्रेरकं यो विजानाति पिण्डज्ञानीति कथ्यते ।।**

(सि.शि.,५.५५-५८, ६०)

## पिण्डब्रह्म

१. मूर्तिब्रह्म, तत्त्वब्रह्म, भूतब्रह्म, पिण्डब्रह्म, कलाब्रह्म चेति पञ्चब्रह्मसु एकतमम् । तत्र चतुर्थं पिण्डब्रह्म । तत्र शिवबीजभूते हकारे अकारादि पञ्चस्वराणां सम्बन्धेन पिण्डं जायते । पिण्डस्वरूपत्वात् कर्मेश एव पिण्डब्रह्म ।

**मूर्तिब्रह्म तथा पूर्वं तत्त्वब्रह्म द्वितीयकम् ।**

**भूतब्रह्म तृतीयं स्यात् पिण्डब्रह्म चतुर्थकम् ।।**

**पञ्चमञ्च कलाब्रह्म ब्रह्मपञ्चकमीरितम् ।**

**शिवार्णे जीववर्णानां संयोगात् पिण्डमुच्यते ।**

**कर्मेशः पिण्डरूपत्वात् पिण्डब्रह्मेति कीर्तितः ।।**

(वा.शु.आ., ७.५-६, १८)

(पश्यत - पञ्चब्रह्म)

२. कर्मसादाख्यं पिण्डरूपत्वात् पिण्डब्रह्मेति कीर्तितम् । यत् कर्मसादाख्यं पिण्डरूपमित्युक्तं तत् कर्तृसादाख्यमाश्रितम् । एवमेव उत्तरोत्तरसादाख्यं पूर्वपूर्वसादाख्यमाश्रयते । एवं शिवसादाख्यम् अमूर्तसादाख्यम्, मूर्तसादाख्यम्, कर्तृसादाख्यम्, कर्मसादाख्यमिति पञ्च आहत्य पिण्डब्रह्मेति कथ्यन्ते ।

**कर्मेशः पिण्डरूपत्वात् पिण्डब्रह्मेति कीर्तितम् ।**

(कर्मेशः = कर्मसादाख्यम्)

**कर्मरूपं क्रमेणैव कर्त्रादि तु समाश्रितम् ।।**

**अनेनैव प्रकारेण चेकैकं तु समाश्रितम् ।**

**तस्मात् कर्मस्वरूपं तु पञ्च तत्त्वाश्रितं विदुः ।।**

**एतद्वै कर्मसादाख्यं पिण्डरूपमिहोच्यते ।**

(वा.शु.आ., ७.१८ ; १.३३-३४; १.८१-८३)

## पिण्डस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतभक्तस्थलस्य पञ्चदशप्रभेदेषु च अन्यतमम् ।

बहुजन्मसुकृतपुण्यवशात् क्षीणपापस्सन् निर्मलान्तःकरणश्चरमदेही यः स एवात्मा पिण्डसंज्ञकः । तत्पिण्डसम्बन्धि स्थलम् ।

**बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे ।**

**शुद्धान्तःकरणो देही पिण्डशब्देन गीयते ।**

(सि.शि., ५.३१)

## पिण्डाकाशः

अन्तःस्थितस्य पराकाशस्य अद्वैतरूपस्य शिवस्य ध्यानकर्ता शिवयोगी ।

**अन्तःस्थितं पराकाशं शिवमद्वैतलक्षणम् ।**

**भावयेद्यः मनसा पिण्डाकाशः स उच्यते ।।**

(सि.शि., १९.५३)

## पिण्डाकाशस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । शरणस्थलाश्रितद्वादश-लिङ्गस्थलेषु चान्यतमम् । यथा देहे आकाशः पूर्णः तथा आत्मा अपि पूर्णः इति यो विवेको वर्तते तदेव पिण्डाकाशस्थलमिति ज्ञायते ।

**यथा पिण्डस्थ आकाशः तथात्मा पूर्ण उच्यते ।**

**एतदर्थविवेको यः पिण्डाकाशस्थलं विदुः ।।**

(सि.शि., १९.५१)

## पितृमेधः

शिवमेध एव पितृमेधः । वीरशैवानाम् अन्त्यसंस्कारः ।

**विशिष्टः पितृमेधोऽयं शिवमेध इतीर्यते ।**

(चं.आ.,च.पा.,१.७)

(पश्यत – शिवमेधः)

## पित्राराधनम्

महेश्वरादिस्वरूपेभ्यः पितृभ्यः क्रियमाणमाराधनं पित्राराधनमिति कथ्यते । तेषां तत्त्वानि भावयित्वा कलाः पितृपात्रे आवाह्य तत्सम्पूज्य च पुत्रः स्वपितरि, पितामहे, प्रपितामहे चेति त्रिष्वैक्यसिध्यर्थं तत्त्वानि कलाश्च योजयेत् । तादृशतत्त्वसंयोजनविधौ पिता–पितामह-प्रपितामहेभ्यः निस्संशयं क्रमेण महेश्वरत्वं सदाशिवत्वं शिवत्त्वं च सिध्यन्ति। इदमेव पित्रोराराधनम् । (षट्त्रिंशत्तत्त्वानि प्रसिद्धानि। सद्योजातादिमन्त्रस्थिताः अष्टात्रिंशत्कला अत्र आयोजनीयाः) ।

**महेश्वरादभिन्नेभ्यः पितृभ्यस्तत्त्वसंयुताः ।**

**कला आवाह्य पात्रे तु समभ्यर्च्य पितुस्तदा ।।**

**वर्गत्रयैक्यसिद्ध्यर्थं तत्त्वादीन् योजयेत् सुतः ।**

**तत्त्वसंयोगविधिनाऽनुष्ठितेन यथाविधि ।**

**महेशत्वादिसंसिद्धिः पित्रादेः स्यादसंशयम् ।।**

**पितुः पितामहादीनां महेशादिस्वरूपिणाम् ।**

**षट्त्रिंशतं च तत्त्वानां कलानामष्टत्रिंशताम् ।।**

**आराधनं करिष्यामि एवं सङ्कल्पमाचरेत् ।।**

(चं.आ.,च.पा.,४.३८-३९, ४२; मकुट., च.पा.,७.९-११)

## पित्राराधनदेवताः

पित्राराधनसम्बद्धाः देवताः । पिता महेश्वरस्वरूपः, पितामहः सदाशिवस्वरूपः, प्रपितामहश्च शिवस्वरूप इति त्रिस्रः पित्राराधनदेवताः ।

**पिता महेश्वरः प्रोक्तस्तत्पिता च सदाशिवः ।**

**प्रपितामहः शिवश्चैते पित्राराधनदेवताः ।।**

(मकुट., च.पा.,९.८)

## पीठिका = पीठम्

लिङ्गस्य अधस्तनभागः । स च शक्तिस्वरूपः ।

**नादरूपः शिवः साक्षात् लिङ्गमित्यभिधीयते ।**

**तत् पीठिका महाशक्तिः सा च वै बिन्दुरूपिणी ।।**

**तयोः सम्मेलनाद्देवि ......................... ।।**

(सू.आ., क्रि.पा., ६.३)

**लिङ्गवृत्तसमं पीठं ......................... ।**

(मकुटः., क्रि.पा., ४.४६)

**शक्तिः पीठमुदाहृतम् ।**

(शि.त.र.,भा-१.४.५४)

**पीठिका परमा शक्तिः लिङ्गं साक्षात् परशिवः ।**
**शिवशक्तिसमायोगं विश्वं लिङ्गं तदुच्यते ।।**

(सि.शि.,११.३२)

## पुण्ड्रकम् = पुण्ड्रम्

भस्मनः रेखात्मकं चिह्नम् । एतच्च ऊर्ध्वपुण्ड्रम्, मध्यपुण्ड्रम्, अधःपुण्ड्रं चेति त्रिविधम् ।

**शैवागमेषु वेदेषु पुराणेष्वखिलेषु च ।**
**स्मृतीतिहासकल्पेषु विहितं भस्मपुण्ड्रकम् ।।**

(सि.शि., ७.४३)

**ऊर्ध्वपुण्ड्रं भवेत्साम मध्यपुण्ड्रं यजूंषि च ।**
**अधः पुण्ड्रमृचः साक्षात् तस्मात्पुण्ड्रं त्रियायुषम् ।।**

(चं.आ.,क्रि.पा., ६.५८)

(पश्यत – त्रिपुण्ड्रम् )

## पुण्यराशिः

भस्मनाम । भस्मनः द्वादशभेदेष्वेकः ।

**भूतिर्विभूति भसितं पुण्यराशिस्तपोमयम् ।**

(वी.ध.शि.,पृ.१२३)

(पश्यत – भस्म)

## पुण्याहवाचनम्

पवित्रविधिषु क्रियमाणः अनुष्ठानविशेषः । अहं पुण्यवान् भवेयमिति सङ्कल्पः ।

**ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते ।**
**पुण्याहं वाचयित्वाथ मण्टपं रचयेत् शुभम् ।।**

(शि.त.र., भा-३, ९.८.६)

## पुत्रवर्गः

पुत्रवर्गः शिष्यवर्गश्चेति मठस्थले विद्यमानयोः वर्गयोः एकः । द्वावपि वर्गौ वीर – नन्दि–भृङ्गि–वृषभ–स्कन्देति पञ्चगोत्राधिकारिणां माहेश्वराणां वंशोत्पन्नौ । पुत्रवर्गमठस्थलं नाम एकगोत्रसूत्रसम्बद्धानां माहेश्वरा–णामेकस्मिन् वंशे पुत्रपौत्रादिक्रमेण गुरुपट्टाधिकारसम्प्रदाययुक्तम् ।

**पूर्वोक्तपञ्चकानां च वीरनन्द्यादयो मताः ।**

**गोत्राधिकारिणस्तेषां द्वौ वर्गौ च मठस्थले ।।**

**प्रथमः पुत्रवर्गः स्याद् द्वितीयः शिष्यवर्गकः ।**

**वंशानुसारतो यत्र गुरुपट्टाभिषेचनम् ।**

**क्रियते सर्वदा तस्मात् पुत्रवर्ग इतीरितः ।।**

(वी.स.सं.,१४.५-६)

## पुरत्रयम्

परमात्मन अंशभूतः जीवः मायावशात् शरीरं धृत्वा स्त्रीः–अन्नं–पानं–इत्यादिभोगैः तृप्तिं प्राप्नोति । एषः जाग्रदवस्थायां स्थूलशरीरद्वारा जीवस्य व्यवहारः । स्वप्नावस्थायां स एव स्वमायया कल्पितलोके सूक्ष्मशरीरद्वारा सुखदुःखमनुभवति । सुषुप्त्यवस्थायां सकले विलीने कारणशरीरद्वारा सुखरूपं प्राप्नोति । एवं जीवः तिसृषु अवस्थासु त्रिषु शरीरेषु प्रविष्टः सन् क्रीडति । शरीरत्रयमेव पुरत्रयम् ।

**स एव माया परिमोहितात्मा शरीरमस्थाय करोति सर्वम् ।**

**स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति ।।**

**स्वप्ने तु जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके ।**

**सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ।।**

**पुरत्रये क्रीडति यश्च जीवः ततस्तु जातं सकलं विचित्रम् ।।**

**आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च ।।**

(कै.उ., १२-१५)

## पुरश्चरणम्

श्रीगुरोः सकाशात् दीक्षापूर्वकं मन्त्रं लब्ध्वा गुरोरनुज्ञां च संप्राप्य सङ्कल्पपूर्वकं पौनःपुन्येन क्रियमाणं जपकर्म पुरश्चरणमित्युच्यते । सङ्कल्पानन्तरम् अनश्नन् प्रतिदिनम् अष्टोत्तरसहस्रवारं मन्त्रं जपेत् । एतद्व्रतं आजीवपर्यन्तं क्रियमाणम् । तत्र प्रत्यक्षरं चतुर्लक्षवारमिति क्रमेणाहत्य विंशतिलक्षवारं जपेत् । तदेव पुरश्चरणमित्युच्यते । तस्य कर्ता पौरश्चरणिक इति ज्ञायते ।

**दीक्षापूर्वं गुरोर्लब्ध्वा मन्त्रमाज्ञां समाहितः ।**

**सङ्कल्प्य च जपेन्नित्यं पुरश्चरणपूर्वकम् ।।**

**यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्रकम् ।**

**अनश्नन् तत्परो भूत्वा स याति परमां गतिम् ।।**

**जपेदक्षरलक्षं वै चतुर्गुणितमादरात् ।**

**युक्ताशी संयमी यः स पौरश्चरणिकः स्मृतः ।।**

(चं.आ., क्रि.पा., ८.४८-५०; पार. आ., ११.७५-७८)

## पुरारिः

परमेश्वरस्य ऊर्ध्वमुखात् (ईशानमुखात्) समुत्पन्नस्य पञ्चमुखगणेश्वरस्य मुखोद्भूताः पञ्चपुत्राः पञ्चमाः इत्यागमेषु कथ्यन्ते । तेषु पञ्चमेषु तृतीयः पुरारिः इति । तस्य केदारपीठसम्बद्धभृङ्गिगोत्रम्, शङ्कुकर्णाख्यशाखा, लम्बक (लम्बन) सूत्रम्, एकोरामाराध्यगुरुः, सूक्ष्मपञ्चाक्षरी च मन्त्रः (ओं-ह्रां-ह्रीं-ह्रं-नमः शिवाय) । अतिवर्णाश्रमी, गृहस्थः, इष्टलिङ्गार्चनापरश्च सः ।

ममोर्ध्वमुखसञ्जतः पञ्चवक्त्रगणेश्वरः ।
तस्य वक्त्रेषु सम्भूताः पञ्चमाः पञ्चसंख्यकाः ।
मखारिश्चैव कालारिः पुरारिस्तु स्मरारि वै ।
वेदारिः पञ्चमश्चेति पञ्च नामानि वै शृणु ।।

(वी.स.सं., ५.४-५,८)

पुरारि पञ्चमस्याथ भृङ्गिगोत्रं प्रकीर्तितम् ।
तच्छाखा शङ्कुकर्णाख्या प्रवरस्त्र्यक्षरो मतः ।।
तत्सूत्रं लम्बकं प्रोक्तं मूलवर्णः शिकारकः ।
कलशः कृष्णवर्णः स्याद्रामाचार्यो महागुरुः ।।
सूक्ष्मपञ्चाक्षरी मन्त्रस्त्वष्टाक्षरसमन्वितः ।
ओं ह्रां ह्रीं ह्रूं नमःशिवायेत्युपदेशाधिकारकः ।।
अतिवर्णी गृहस्थः स्यादिष्टलिङ्गार्चनापरः ।

(वी.स.सं.,५.४, ८, २५-२८)

## पुरुषः

१. षट्त्रिंशत्तत्त्वेष्वेकम् । पुर्यष्टके पुरे शेते इति पुरुषः । परमेश्वराद् इच्छाशक्तिवशाद्विभक्तः मायाशक्तौ प्रतिबिम्बगत्या प्रविष्टः प्रकाशः पुरुषतत्त्वम् । प्रकृतिभोगोद्युक्तः सः पञ्चकञ्चुकसंयुक्तो अविद्यादिसमायुक्तश्च ।

**स्वान्तर्लीनचराचरात्परमेश्वरात् काष्ठयोगेन वह्नेर्विस्फुलिङ्ग-विर्भाववत् तदिच्छाशक्तिवशाद्विभक्तस्सन् उक्तलक्षणमायाशक्तौ प्रतिबिम्बगत्या प्रविष्टो यः प्रकाशः स पुरुषतत्त्वम् ।**

(शि.मं.,पृ.५२-५३)

पञ्चकञ्चुकसंयुक्तः प्रकृतिं भोक्तुमुद्यतः ।
अविद्यादिसमायुक्तः पुरुषः परिकीर्तितः ।।

(शि.त.र.,भा-१, १.७.३५)

२. लिङ्गम् ।

**अङ्गं प्रकृतिराख्यातं लिङ्गं पुरुष ईरितः ।**

(अ.सू., ५.३१)

३. परशिवः । परवस्तु । ब्रह्म ।

**पुरुष एवेदं सर्वं यद्भूतं यच्चभव्यम् ।**

(ऋ.वे.,१०.९०.२)

**पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।**

**एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ।।**

(मुं. उ., २.१.१०)

## पुर्यष्टकम्

१. शैवदर्शने जीवत्रैविद्ये प्रलयाकलः द्वितीयः । तत्र प्रलयाकलो द्विविधः । पक्वपाशद्वयः तद्विलक्षणश्चेति । तत्र प्रथमः मोक्षं प्राप्नोति द्वितीयः पुर्यष्टकरूपेण स्थित्वा नानाविधजन्मभाग् भवति । पुर्यष्टकं नाम अन्तःकरणं, बुद्धिः, कर्म, इन्द्रियाणि च ।

**प्रलयाकलेषु येषामपक्वमलकर्मणी व्रजन्त्येते ।**

**पुर्यष्टकदेहयुता योनिषु निखिलासु कर्मवशात् ।।**

**स्यात् पुर्यष्टकमन्तःकरणं धीकर्मकरणानि ।**

(त.प्र.,१.११-१२)

२. यथोक्तं अघोरशिवाचार्येण –

**''पुर्यष्टकं नाम प्रतिपुरुषं नियतः सर्गादारभ्यकल्पान्तं मोक्षान्तं वा स्थितः पृथिव्यादि कलापर्यन्तस्त्रिंशत्तत्त्वात्मकः सूक्ष्मो देहः ।''**

**तथा चोक्तं तत्त्वसंग्रहे –**

**वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कलान्तोऽयम् ।**

**पर्यटति कर्मवशात् भुवनजदेहेष्वयं च सर्वेषु ।।**

३. कालोत्तरोत्त्यनुसारेण शब्दः, स्पर्शः, रूपम्, रसः, गन्धः, बुद्धिः, मनः, अहङ्कारश्च पुर्यष्टकम् ।

**शब्दःस्पर्शस्तथारूपं रसो गन्धश्च पञ्चकम् ।**

**बुद्धिर्मनस्त्वहङ्कारः पुर्यष्टकमुदाहृतम् ।।**

(पश्यत – स.द.सं – शैवदर्शनम् – पृ.२७८–२८०)

## पूजा

शिवार्चनम् ।

**शिवार्चनं भवेत् पूजा ।**

(वी.प्र.,३.३६)

### पूजाभेदः

शैवागमोक्तदिशा प्रथमं पूजा त्रिविधा । लघ्वी, गुर्वी, महती चेति । पुनः अवसरा इत्यन्या पूजा विहिता । भोजनात्पूर्वं प्रातःकालादिषु अवसरा पूजा कर्तव्या । यः महतीं पूजां करोति सः उत्तमः, यः गुर्विं करोति स मध्यम इति कथ्यते । तयोः करणे ह्यशक्तः लघ्वीं कुर्यादिति नियमः ।

**मत्पूजा त्रिविधा लघ्वी गुर्वी च महती तथा ।**

**उत्तमो महतीं कुर्यात् गुर्वीं मध्यम एव च ।।**

**लध्वीमशक्तः कुर्याच्च सायं माध्याह्नके तथा ।**

**अवसरा भोजने प्रोक्ता प्रातरादिषु सुव्रते ।।**

**त्रिकालमर्चनां कुर्यात् शक्तः षट्कालमेव वा ।**

(का.आ., क्रि.पा., ४.४–६; मकुट., क्रि.पा., ३.२–४)

(अत्र चतस्रसु पूजासु मण्डलभेदः, वर्तिकासंख्याभेदः, दीपानां संख्याभेदः, जपसंख्याभेदः, नीराजनदर्शनसंख्याभेदः, नैवेद्यभेदश्चेति

नियमाः सन्ति । प्रपञ्चार्थं मकुटागमे क्रियापादे तृतीयपटलम् कारणागमे चतुर्थपटलं च परिशील्यताम् । पश्यत–लघ्वी इत्यादिपूजाः प्रत्येकतया दत्ताः)

## पूर्णम्

१. परशिवस्य सत्, चित्, आनन्दः, नित्यं, पूर्णमिति पञ्चतत्त्वेष्वन्यतमम् ।

**सच्च चिच्च ततोऽनन्दो नित्यं पूर्णमिति क्रमात् ।**

**शिवतत्त्वं पञ्चविधं तद्भेदं शृणु पार्वति ।।**

(शि.त.र.,भा–१, १.७.२५)

२. हानादानाभ्यां न्यूनाधिक्यभावरहितत्वं पूर्णत्वम्

**ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।**

**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।**

(ई.उ.शान्तिमन्त्रः)

## पूर्णाहन्ता

शिवोऽहम्, गुरुरहम्, चराचरं, विश्वमहमिति यया चिन्तया सम्यग्विज्ञायते सा पूर्णाहन्तेति कथ्यते । इयमेव मूलाहङ्कारशब्देन गीयते । पराहन्ता इत्यपि कथ्यते ।

**अहं शिवो गुरुश्चाहमहं विश्वं चराचरम् ।**

**यया विज्ञायते सम्यक् पूर्णाहन्तेऽति सा स्मृता ।।**

(सि.शि., १४.३९)

(पश्यत – पराहन्ता)

## पूर्वशाम्भवी

पूर्वशाम्भवी, उत्तरशाम्भवीति द्विविधशाम्भवीमुद्रयोरन्यतरा । नासिकाग्रदृष्ट्या नादानुसन्धाननिरतमनसा च युक्ता शाम्भवीमुद्रा पूर्वशाम्भवीत्युच्यते ।

**एषा सा शाम्भवीमुद्रा सर्वतन्त्रेषु गोपिता ।**

**शाम्भवी द्विविधा प्रोक्ता पूर्वोत्तरविभेदतः ।।**

**मूलावलोकिनी पूर्वमुखी सन्धानरूपिणी ।**

**बोधमुद्रा ध्यानमुद्राशाम्भवी त्येकवाचकम् ।।**

(शि.यो.प्र., पृ. १४६–१४७, व्याख्याने उद्धृतौ श्लोकौ)

## पूर्वशैवः

शैवभेदः । अविवाहितकन्याजातः पञ्चगोत्रविशिष्टः शिवद्विजः ।

**पूर्वशैवा हि विज्ञेयाः कानीनास्तु शिवद्विजाः ।**

**अनूढासु हि कन्यासु प्रभूताः पञ्चगोत्रिणः ।।**

(चं.आ.,क्रि.पा., १०.११)

## पूर्वाश्रयः

इष्टलिङ्गदीक्षायाः पूर्वं यद्धर्माचरणमाश्रितं तदेव पूर्वाश्रय इत्युच्यते ।

**लिङ्गैकनिष्ठहृदयः सदा माहेश्वरो जनः ।**

**पूर्वाश्रयगतान् धर्मान् त्यजेत्स्वाचाररोधकान् ।।**

(सि.शि., १०.३०)

## पूर्वाश्रयनिरसनस्थलम्

स्थलभेदः । माहेश्वरस्थलगतनवविधाङ्गस्थलेष्वेकतमम् । पूर्वाश्रयनिरासकसम्बन्धिस्थलम् ।

**माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पूरा ।**

**पूर्वाश्रयनिरासश्च तथाद्वैतनिराकृतिः ।।**

(सि.शि. १०.४–५)

(पश्यत – पूर्वाश्रयनिरासकः)

## पूर्वाश्रयनिरासकः

लिङ्गनिष्ठाप्रतिकूलान् ब्राह्मणत्वादिधर्मान् यः माहेश्वरः त्यजति सः पूर्वाश्रयनिरासक इति ज्ञायते ।

**स्वजातिकुलजान् धर्मान् लिङ्गनिष्ठाविरोधिनः ।**

**त्यजन्माहेश्वरो ज्ञेयः पूर्वाश्रयनिरासकः ।।**

(सि.शि., १०.३१)

## पृथिवीतत्त्वपञ्चकम् = भूमिजपञ्चकम्

षट्त्रिंशत्तत्त्वान्यतमं पृथिवीतत्त्वम् । पृथिवीतत्त्वे इतरतत्त्वमेलन-जातानीतरतत्त्वेषु च पृथिवीतत्त्वमेलनजातानीति तानि द्विधा ।

१. पृथिवीतत्त्वे इतरतत्त्वमेलनजातानि वाक्, पाणिः, पादः, उपस्थः, पायुश्च ।

**भूमौ भूम्यंशतः पायुर्भुवो व्योमांशतस्तु वाक् ।।**

**भूमौ वाय्वंशतः पाणी पादौ भूमौ तु तेजसः ।**

**भूमौ जलांशेनोपस्थमिति भूमिजपञ्चकम् ।।**

(शि.त.र.,भा-१, १.७.५४-५५)

२. इतरतत्त्वेषु पृथिवीतत्त्वमेलनजातानि अहङ्कार एव वियत्, प्राण एव वायुः, घ्राणमेव अग्निः, गन्धः एवोदकम्, पायुरेव पृथिवी । एतत् पृथिव्यां तत्त्वपञ्चकम् ।

**अहङ्कारो वियत्प्राणो वायुर्घ्राणं हुताशनः ।**

**आपो गन्धो मही पायुः पृथिव्यां तत्त्वपञ्चकम् ।।**

(शि.यो.प्र., ४.२४)

(पश्यत – पञ्चीकरणम्)

## पैतामहधर्मः

पितामहस्य अयं पैतामहः । पितामहश्च ब्रह्मा । ततश्च पितामहेन ब्रह्मणा कथितः वर्णाश्रमव्यवस्थारूपः धर्मः पैतामहधर्मः । स च शिवसंस्कारभिन्नानाम् ।

**वर्णाश्रमादिधर्माणां व्यवस्था हि द्विधा मता ।**
**एका शिवेन निर्दिष्टा ब्रह्मणा कथिताऽपरा ।।**
**शिवोक्तधर्मनिष्ठा तु शिवाश्रमनिषेविणाम् ।**
**शिवसंस्कारहीनानां धर्मः पैतामहः स्मृतः ।।**

(सि.शि., १०.३५-३६)

## पौरश्चरणिकः

पुरश्चरणकुशलः पौरश्चरणिकः । संयतमनसा युक्तः पुरश्चरणपूर्वकं नित्यजपशाली पुरुषः पौरश्चरणिक इत्युच्यते । लोके तत्समः कोऽपि नास्तीति उच्यते ।

**नक्ताशीः संयतमनाः पौरश्चरणिको मतः ।**

(पार.आ., ११.७८)

दीक्षासमये गुरोः सकाशात् मन्त्रं तज्जपानुज्ञां च लब्ध्वा सङ्कल्पपूर्वकं पुरश्चरणपूर्वकं तं मन्त्रं जपेदिति नियमः । तत्र एकैकाक्षरं चतुर्गुणितं कृत्वा एकैकस्य लक्षजपः इति क्रमेण यः जपं कृत्वा मन्त्रसिद्धिं प्राप्नोति सः पौरश्चरणिक इति कथ्यते ।

**दीक्षापूर्वं गुरोर्लब्ध्वा मन्त्रमाज्ञां समाहितः ।**
**सङ्कल्प्य च जपेन्नित्यं पुरश्चरणपूर्वकम् ।।**
**जपेदक्षरलक्षं वै चतुर्गुणितमादरात् ।**
**युक्ताशी संयमी यः स पौरश्चरणिकः स्मृतः ।।**

(चं.आ., क्रि.पा., ८.४८-५०; पार.आ., ११.७५-७८)

## पौरुषलिङ्गम्

देवैर्वा ऋषिभिर्वा स्वात्मसाक्षात्काराय मन्त्रपूर्वकं स्वहस्तेन निर्मितं शुद्धभूतले स्थापितं लिङ्गं पौरुषलिङ्गमित्युच्यते । इदमेव प्रतिष्ठितलिङ्गम्, अर्थान् स्थावरलिङ्गम् ।

**दैवैश्च ऋषिभिश्चापि स्वात्मसिद्ध्यर्थमेव हि ।**
**समन्त्रेणात्महस्तेन कृतं यच्छुद्धभूतले ।।**
**शुद्धभावनया चैव स्थापितं लिङ्गमुत्तमम् ।**
**तल्लिङ्गं पौरुषं प्राहुः तत्प्रतिष्ठितमुच्यते ।।**

(कि.सा.,भा.-१, ३.३५४-३५६)

## पौष्टिकभस्म

चन्द्रज्ञानागमोक्तभस्मत्रैविध्ये एकम् । तत्र सावधानतया गोः निसृतं गोमयं भूमिपातात् पूर्वं गृहीत्वा षडङ्गमन्त्रैः तस्य दहनं कृत्वा यद् रूपितं तद्भस्म पौष्टिकमित्युच्यते ।

**शान्तिकं पौष्टिकं भस्म कामदं च त्रिधा भवेत् ।**
**सावधानेन गोयोनिनिसृतं गोमयं तु यत् ।**
**अन्तरिक्षे गृहीत्वा तं षडङ्गेन दहेत् ततः ।।**
**पौष्ठकं तु समाख्यातं .................... ।।**

(चं.आ., क्रि.पा., ६.३१-३२ क्रि.सा., भा-२, ६.७-८)

## प्रकृतिः

१. षट्त्रिंशत्तत्त्वान्यतमम् । अशुद्धाध्वतत्त्वम् । मायोद्भवा। त्रिगुणात्मिका ।

**अथ प्रकृतितत्त्वं तु क्रमप्राप्तं निरूप्यते ।**
**तच्च मायोद्भवं यस्मात् कलातः स्थूलतां गतम् ।।**

(शि.त.र.,भा-१, १.७.३६)

**मायां तु प्रवृतिं विद्यान्मायिनं तु महेश्वरम् ।**

(श्वे.उ.,४.१०)

**यामाहुः सर्वलोकानां प्रकतिं शास्त्रपारगाः ।**

**तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम् ।।**

(सि.शि., १.८)

**अथ प्रकृतितत्त्वात्तु गुणतत्त्वमजायत ।**

**सत्त्वादीनां समावस्थां प्राप्तः सत्त्वगुणात्मकः ।।**

(शि.त.र.,भा-१, १.१.७.३७)

शिवाद्वैतमञ्जरीमते प्रकृतिः चतुर्विंशं तत्त्वम् । सा च त्रिगुणसाम्यावस्था, त्रयोविंशतितत्त्वानां मूलकारणं च ।

**अथ औन्मुख्यगर्भितेच्छाशक्तिरेव प्रतिस्फुरणगत्या स्वगतज्ञान-क्रियाऽन्योन्याभावलक्षणमायाप्रतिस्फुरणरूपं सुखदुःखमोहप्रदानां सत्त्वरजस्तमसां साम्यावस्थालक्षणं महदहङ्कारादिभूम्यन्तत्रयोविंशतितत्त्वमूलकारणं प्रकृतितत्त्वं भवति ।**

(शि.मं., पृ. ५३)

२. अङ्गम्

**अङ्गं प्रकृतिराख्यातम् ।**

(अ.सू., ५.३१)

## प्रणवः = प्रणवमन्त्रः

१. प्रणवः सर्वेषां देवानां नाम । सर्वदेवमयः । सर्वेषां मन्त्राणां प्राणः ।

**प्रणवं सर्वदेवाख्यं सर्वदेवमयं विदुः ।**

**सर्वेषां चैव मन्त्रेण प्रणवः प्राण उच्यते ।।**

(वा.शु.आ., ६.३)

२. अकार – उकार–मकाररूपत्रिविधाङ्गविशिष्टः ।

अकारः उकारः मकारश्चेति त्रिवर्णात्मकः प्रणवः । तत्र अकारः ब्रह्मबीजं, उकारः विष्णुबीजं, मकारश्च रुद्रबीजं एवं त्रिवर्णदेहात्मकः शिवः । अकारः प्रकृतिः, उकारः पुरुषः, मकारः तयोर्नियन्ता तदुत्पन्नः नादः साक्षात्सदाशिवात्मकः । अकारः इच्छाशक्तिः, उकारः क्रियाशक्तिः, मकारः ज्ञानशक्तिश्च, नादः साक्षात् परशिवः । अकारः रक्तवर्णः, उकारः श्यामलः, मकारः स्फटिकवर्णः, वर्णातीतः शिवः । अकारः राजसः, उकारस्तामसः, मकारः सात्विकः, नादः त्रिगुणात्मकः । अकारः ब्रह्मरूपः, उकारः विष्णुरूपः, मकारः रुद्रात्मकः, ॐकारस्तु सदाशिवः । अकारः बिन्दुरूपः, उकारः नादरूपः, मकारश्च कलारूपः ।

(सू.आ.,क्रि.पा.,४.९–१७; वा.शु.आ., ६.८–९)

ॐकारः, प्रणवमन्त्रः । प्रकृष्टेन नवः नित्यनूतनः । नित्यनूतन–ब्रह्मवाचकत्वात् सदा नूतनः । सृष्टेर्नवकारणम् । प्रकर्षेण नवहेतुत्वात्परम–प्रणवप्राप्तिहेतुत्वाद्वा प्रणवः । 'सोऽहम्' इत्यत्र व्यक्तवर्णयोः सकारहकारयोः भ्रूमध्ये विलीनयोः अवशिष्टः नादात्मकः शब्दः ॐकारः एव प्रणवः । सर्वेषां मन्त्राणां शिर इव प्रधानः । सर्वेष्वपि शुभकर्मसु अयमुपयुज्यते। सर्वान् प्राणान् परमात्मानि नमनं गमयति अर्थात् ऐक्यं गमयतीति प्रणवः उच्यते।

**प्राणान् सर्वान् परमात्मनि प्रणामयतीत्येतस्मात् प्रणवः ।**

(अथ. शिखा., १.१०)

**अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एव ऋग्यजुस्सामाथर्वा–ङ्गीरसश्च यज्ञे ब्रह्म च ब्राह्मणेभ्यः प्रणामयति तस्मादुच्यते प्रणवः ।**

(अथ. शिरस्, ४६)

अत एव अयं मूलमन्त्रः इत्युच्यते ।

**प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ।**

**परमप्रणवप्राप्तिहेतुत्वात्प्रणवोऽथवा ।।**

(शि.त.र.,भा-१, १.५.१२)

**अजपानामगायत्रीमन्त्रवर्णद्वयं यदा ।**

**त्रिवेणीसङ्गमे लीनं स शब्दः प्रणवो भवेत् ।।**

(शि.यो.प्र.,२.३३)

**सर्वेषु मन्त्रजालेषु मुख्यः प्रणव ईरितः ।**

**सर्वेषामेव मन्त्राणां मातृस्थानमितीरितम् ।।**

(सू.आ.,क्रि.पा., ४.४)

(पश्यत – प्रणवनामानि, ॐकारः)

३. प्रणवः परब्रह्मप्रकाशकः अथवा निष्कलशिवद्योतकः । **प्रणवांशीभूत अकार–उकार–मकाराणां सच्चिदानन्दस्वरूपत्वात् परशिवब्रह्मवाचकः ।**

(सि.शि.तत्त्व.प्र.,८.१९)

**प्रणवेनैकवर्णेन परब्रह्म प्रकाश्यते ।**

**प्रणवेनैव मन्त्रेण बोध्यते निष्कलशिवः ।**

(सि.शि.,८.१९,२१)

(पश्यत – प्रणवपञ्चकम्, प्रणवनामानि, ॐकारः)

**प्रणवभेदः**

१. साकल्यम्, शाम्भवम्, सौख्वम्, सावश्यम्, सायुज्यम् चेति प्रणवः पञ्चभेदः । एते पञ्चभेदाः परशिवस्य सद्योजातादि पञ्चवक्त्रेभ्य आविर्भूताः ।

**सोऽयं पञ्चविधः प्रोक्तः साकल्यादि प्रभेदतः ।**

**साकल्यं प्रथमं प्रोक्तं शाम्भवं तु द्वितीयकम् ।।**

**सौख्यं तृतीयमित्युक्तं सावश्यं तु चतुर्थकम् ।**

**सायुज्यं पञ्चमं प्रोक्तं भेदमेषां शृणु क्रमात् ।।**

(सू.आ., क्रि.पा., ४.५-६; वा.शु.आ., ६.४-५)

अ. साकल्यप्रणवः

आद्यस्वरं अकारं पञ्चमस्वरेण उकारेण सह प्रयुज्य मकारप्रयोगानन्तरं नादात्मकस्य हकारस्य योजने कृते साकल्यप्रणवः । अस्य स्वरूपम् - अ-उ-म-ह । अयं सद्योजातमुखोद्भूतः ।

**आद्यं पञ्चमसंयुक्तं नादो मान्तेन संयुतः ।**

**साकल्यं प्रणवो ज्ञेयः पूर्ववक्त्रसमुद्भवः ।।**

(सू.आ., क्रि.पा., ४.१९; वा.शु.आ., ६.१०-११)

आ. शाम्भवप्रणवः

आदिस्वरः अकारः, पञ्चमस्वरः उकारः, षष्ठ-(पञ्चम?)-वर्गान्तः मकारः, हकारः तृतीयस्वरः इकारश्च शाम्भवं नाम प्रणवः । अस्य स्वरूपम् = अ-उ-म-ह-इ । अयं प्रणवः वामदेवमुखोद्भूतः ।

**स्वरादिपञ्चमयुतं षष्ठान्तं नादसंयुतम् ।**

**तृतीयसहितं देवि शाम्भवं दक्षिणोद्भवम् ।।**

(सू.आ., क्रि.पा., ४.२०)

अथवा

अस्य मन्त्रस्य स्वरूपम् - अ-उ-म-ह-ई

**आदिबीजं चतुर्थान्तं भान्तं भूतान्तसंयुतम् ।।**

**चतुर्थस्वरसंयुक्तं शाम्भवं दक्षिणानने ।**

(वा.शु.आ., ६.११-१२)

इ. सौख्यप्रणवः

अकारः, उकारः, मकारः, हकारः, ईकारश्च सौख्यप्रणवः । अस्य स्वरूपम् – अ–उ–म–ह–इ । अयं प्रणवः अघोरमुखोद्भूतः ।

**वर्गादि पञ्चमं चैव षष्ठान्तं जीवसंयुतम् ।**

**तृतीयस्वरसंयुक्तं सौख्यं वै पश्चिमानने ।**

**वर्गान्तं स्वरवर्णादिपञ्चमं नादसंयुतम् ।**

**तथा स्वरयुतं सौख्यं पश्चिमाननसंभवम् ।।**

(वा.शु.आ., ६.१२–१३; सू.आ.,क्रि.पा., ४.२१)

ई. सावश्यप्रणवः

अकारः, उकारः, मकारः, हकारः, एकादश स्वरः एकारश्च सावश्यप्रणवः । अस्य स्वरूपम् – अ–उ–म–ह–ए । स च तत्पुरुषमुखोद्भूतः ।

**आद्यं पञ्चमयुक्तं च नादो वर्गान्तसंयुतः ।**

**एकादशयुतं प्रोक्तं सावश्यं चोत्तरोद्भवम् ।।**

(सू.आ., क्रि.पा., ४.२२; वा.शु.आ., ६.१४)

उ. सायुज्यप्रणवः

अकारः, उकारः, मकारः, हकारः, औकारश्च सायुज्यप्रणवः । स च ईशानमुखसम्भवः । अस्य स्वरूपम्–अ–उ–म–ह–औ।

**अकारः पञ्चमोपेतो वर्गान्तो नादसंयुतः ।**

**चतुर्दशस्वरोपेतं सायुज्यं चोर्ध्वसम्भवम् ।।**

(सू.आ., क्रि.पा.,४.२३; वा.शु.आ., ६.१५)

२. परापरभेदाद्द्विधा । परः सूक्ष्मः, सच्चिदानन्दनित्यपरिपूर्णात्मकब्रह्म–स्वरूपः । वागजन्यत्वादयमवाग्जप्रणवः। अपरः शब्दस्वरूपः ।

**परः परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।।**
**प्रकर्षेण नवं यस्मात्परं ब्रह्म स्वभावतः ।**
**अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।।**

(शि.त.र.,भा-१, १.५.१०-११)

३. अवान्तरभेदात्पञ्चधा । तत्र अकारप्रणवः नादात्मकः जाग्रदवस्थानकः । उकारप्रणवः बिन्दुरूपात्मकः स्वप्नस्थानकः । मकारप्रणवः कलारूपः सुषुप्तिस्थानकः । ओङ्कारः शक्तिरूपः तुर्यस्थानकः । अवाग्जः शिवरूपः तुर्यातीतस्थानकः ।

**अवाग्जं पञ्चमं विद्यात्पञ्चप्रणवभेदकम् ।**
**अकारं नादरूपेण जाग्रत्स्थाने निवेशयेत् ।।**
**बिन्दुरूपमुकारञ्च स्वप्नस्थाने निवेशयेत् ।**
**कलारूपं मकारञ्च सुप्तिस्थाने निवेशयेत् ।।**
**ओंकारं शक्तिरूपं च तुर्यस्थाने निवेशयेत् ।**
**तुर्यातीते ह्यवाग्जं च शिवरूपं विनिक्षिपेत् ।।**

(शि.त.र.,भा - १, १.५.१७-१९)

## प्रणवनामानि

१. ॐकारः, प्रणवः, सर्वव्यापी, अनन्तः, तारम्, सूक्ष्मम्, शुक्लम्, वैद्युतम्, परं ब्रह्म, रुद्रः, ईशानः, भगवान्, महेश्वरः, महादेवः, इत्येतानि प्रणवनामानि ।

**'य ॐकारः स प्रणवो, यः प्रणवः स सर्वव्यापी, यः सर्वव्यापी सोऽनन्तः, योऽनन्तः तत्तारम्, यत्तारं तत् सूक्ष्मम्, यत् सूक्ष्मं तच्छुक्लम्, यच्छुक्लं तद्वैद्युतम्, यद्वैद्युतं तत् परं ब्रह्मेति, स एकः स एको रुद्रः स ईशानः स भगवान् स महेश्वरः, स महादेवः ।**

(अथ.शिरस्.,४४)

(एकैकस्य नाम्नः निष्पत्तिः तत्रैव ४५-६० इत्येतेषु दत्ता)

२. ॐकारः, प्रणवः, ब्रह्म, ज्ञानम्, शिवात्मकम्, तेजोबीजम्, निष्कलम्, तारकम्, निष्कलात्मकम्, नादः, नादादिः, हृन्नादः, वेदादिः, वेदभूः, मुक्तिबीजम्, मन्त्रबीजम्, वर्णबीजम्, महेश्वरः इति प्रणवस्य अष्टादशनामानि।

**ॐकारो प्रणवश्चैव ब्रह्मज्ञानं शिवात्मकम् ।**

**तेजोबीजं निष्कलं स्यात्तारकं निष्कलात्मकम् ।।**

**नादो नादादिहृन्नादो वेदादिर्वेदभूरपि ।**

**मुक्तिबीजं मन्त्रबीजं वर्णबीजं महेश्वरः ।।**

**इत्यष्टादशभेदानि नामानि प्रणवस्य वै ।।**

(शि.त.र., भा -१, १.५.२६-२८)

## प्रणवन्यासः

लिङ्गपूजायाः पूर्वं देहस्य विद्यामयत्वसम्पादनार्थं क्रियमाणेषु पञ्चविधन्यासेषु एकतमः । नमोऽन्तं प्रणवपूर्वकं (प्रणवाय नमः इति) क्रियमाणो न्यासः प्रणवन्यासः ।

**तृतीयः प्रणवन्यासः .............**

(चं.आ.,क्रि.पा.,११.३६)

## प्रणवपञ्चकम्

सद्योजातादि पञ्चवक्त्रेभ्यः क्रमेण साकल्यम् शाम्भवम्, सौख्यम्, सावश्यम्, सायुज्यमिति पञ्चप्रणवाः आविर्भूताः ।

**सद्यादि पञ्चवक्त्रेषु जातं प्रणवपञ्चकम् ।**

(सू.आ., क्रि.पा.,४.७)

(पश्यत – प्रणवः)

## प्रणवलिङ्गम्

महालिङ्गजन्यसृष्टिजनकतत्त्वम् । महालिङ्गतः प्रकटपराशक्त्युभय-संयोगजन्यनादबिन्दुकलारूपत्रिविधप्रणवयुताखण्डप्रणवात्मकलिङ्गम् । चराचरविश्वमयं प्रणवः आत्मन्युन्नयति । तत्र च लीयते जगदिति प्रणवः लिङ्गम् ।

**तस्मान्निष्कललिङ्गाच्च महालिङ्गमभूत्स्वयम् ।।**
**तस्मात्प्रणवलिङ्गं तु सृष्ट्युन्मुखमजायत ।**

(शि.त.र.,भा-१, १.३.६-७)

**नादबिन्दुकलारूपत्रिविधप्रणवेन तु ।**
**लिङ्गमाविरभूदेकमखण्डप्रणवात्मकम् ।।**
**ऊर्ध्वमुन्नयत्येष ओङ्कारो विश्वमात्मनि ।**
**लीयते गम्यते यत्र लिङ्गे विश्वं चराचरम् ।।**

(शि.त.र.,भा-१, १.५.५-६)

## प्रणवाकृतिलिङ्गस्थलम्

सप्तविंशतिस्थलेष्वेकम् । तत्र च सप्तमम् ।

**...................... प्रणवाकृतिलिङ्गकम् ।**
**सप्तमम् ................................ ।।**

(अ.वी.सा.सं.,१.५०)

## प्रतिष्ठा = प्रतिष्ठाकला

कलाभेदः । षड्विधकलासु एकतमा । प्रतिष्ठाकला नाम ज्ञानशक्तिः ।

**प्रतिष्ठा ज्ञानरूपिणी ।**

(अ.सू.,३.२५)

**बहिर्मुखज्ञानशक्त्यपरपर्यायमकारमयप्रतिष्ठाकलेति ।**

(शि.मं.,पृ.३९)

## प्रतिष्ठितलिङ्गम्

मन्त्रसहितं स्वहस्तेन शुद्धभूतले कृतं शुद्धभावनया स्थापितं लिङ्गम्। पौरुषस्य ऐश्वर्यस्य च फलदायकम् ।

**समन्त्रेणात्महस्तेन कृतं यच्छुद्धभूतले ।**
**शुद्धभावनया चैव स्थापितं लिङ्गमुत्तमम् ।।**
**तल्लिङ्गं पौरुषं प्राहुस्तत्प्रतिष्ठितमुच्यते ।**
**तल्लिङ्गपूजया नित्यं पौरुषैश्वर्यमाप्नुयात् ।।**

(क्रि.सा.,भा–१, ३.३५५–३५६)

इदमेव स्थिरलिङ्गमित्युच्यते ।

**देवालये पाणिपीठे संविधायाष्टबन्धनाम् ।**
**प्रतिष्ठितं शिलालिङ्गं स्थिरलिङ्गं तदुच्यते ।।**

(पार. आ., १६.११)

## प्रत्याहारः

अष्टाङ्गयोगे एकमङ्गम् । सविकल्पकनिदिध्यासनाङ्गम् । योगशास्त्रे–

**इन्द्रियाणि (मनश्च) स्वस्वविषयेभ्यः प्रतीपमाह्रियन्ते इति प्रत्याहारः।**

(वी.आ. चं.,पृ.६)

वीरशैवमते – चित्तस्यान्तर्मुखीभावः प्रत्याहारः ।

**चित्तस्यान्तर्मुखीभावः प्रत्याहारः स उच्यते ।**

(वी.आ.चं., पृ–५, श्लो–४ ; श.त्र., पृ.१५, श्लो.१२३)

**चित्तस्यान्तर्मुखेन प्रतिहतबहुचैतन्यकल्लोलजाल –**

**स्योत्पन्नस्यास्य नानाविपुलमतिविकारस्य संवित्तिरेव ।**

**तत्तन्नानाविकारग्रसनमिति तथा कथ्यते योगविद्भिः**

**प्रत्याहारस्स एवाविचलितसुमनास्तं सदाहं भजामि ।।**

(शि.यो.प्र., ४.८)

## प्रमथः

शिवेन सृष्टस्य प्रमथगणस्य सदस्यः । प्रबोधानन्दपरिप्लावितमानसाः जगन्निर्माणसमर्थाश्च प्रमथाः ।

**प्रबोधपरमानन्दपरिवाहितमानसान् ।**

**प्रमथान्विश्वनिर्माणप्रलयापादनक्षमान् ।।**

(सि.शि.,२.२६)

**तत्र वीरनन्द्यादयस्तथैकाक्षरादायः प्रमथगणान्ताः चेतना नित्यमुक्ताः।**

(वी.स.सं., १, पृ.२)

## प्रमथगणः

शिवपरिवारः । शिवगणः । शिवेन सृष्टः शिवसमबलयुतानां प्रमथानां समुदायः । चेतनाः नित्यमुक्ताश्च ।

**इत्येवं प्रार्थितः शम्भुः ब्रह्मणा विश्वयोनिना ।**

**ससर्जात्मसमप्रख्यान् सर्वगान् सर्वशक्तिमान् ।।**

(सि. शि., २.२५)

**तत्र वीरनन्द्यादयस्तथैकाक्षरादयः प्रमथगणान्ताश्चेतना नित्यमुक्ताः ।**

(वी.स.सं., १.पृ.२)

## प्रमथवर्गः

प्रमथगणः ।

**तेषु प्रमथवर्गेषु सृष्टेषु परमात्मना ।**

(सि.शि.,२.२७)

(पश्यत – प्रमथगणः)

## प्रमथाधीशाः

नन्दीश – भृङ्गीश – वीरेशादयः ।

**श्रीनन्दिकेशभृङ्गीशवीरभद्रादिकानहम् ।**

**नमामि प्रमथाधीशान्समस्तानामितौजसः ।।**

(पं.च.,पृ.२, श्लो.७)

## प्रलयः

प्रलीयते अत्र । प्रलयनम् । जीवानां कर्मविश्रान्तिः ।

**देहिनां कर्मजातानि भोक्तुं सर्वासु योनिषु ।**

**भ्रमतां कर्मविश्रान्त्यै शिवेन प्रलयः कृतः ।।**

(शि.त.र., भा–३, ९.३.१२३)

## प्रवरशैवः

शैवभेदः । अनादिशैवादिसप्तशैवान्यतमः ।

१. कुलालाः, पार्श्वकाः इत्यादि शैवाः प्रवरशैवाः ।

**कुलालः पार्श्वकाद्यश्च प्रवरशैव उच्यते ।**

(सू.आ., क्रि.पा.,७.१४)

२. आवाहनादिविसर्जनान्तविधिना परमेश्वरमूर्तेः अर्चकः ।

**परस्य मूर्तिमावाह्य विसर्जनपरश्च यः ।**

**प्रोक्तः प्रवरशैवश्च सर्वतन्त्रेषु तत्त्वतः ।।**

(वी.स.सं., ८.९)

## प्रविविक्तद्रव्यम्

आत्मोपभोगयोग्यानां त्रिविधद्रव्याणामेकतमम् । तत्र रुचिः प्रविविक्तद्रव्यमिति कथ्यते । रुचिरेषा अन्तरङ्गार्पणे योग्या । अर्थात् सूक्ष्मशरीरार्पणे अपेक्षिता । प्राणलिङ्गे रुचिद्रव्यार्पको जीवः तैजसः इत्युच्यते ।

**आत्मोपभोगजातानि द्रव्याणि त्रिविधानि हि ।।**

**स्थूलाख्यं प्रविविक्ताख्यमानन्दाख्यमिति त्रिधा ।**

**..................... प्रविविक्तं रुचिर्भवेत् ।।**

**..................... अन्तरङ्गार्पणे रुचिः ।।**

**रुचिद्रव्यार्पकः साक्षात् प्राणलिङ्गे तु तैजसः ।।**

(अ.सू.,७.९-१३)

(पश्यत – त्रिविधद्रव्याणि)

## प्रवृद्धशीलम्

सदाचारान्तर्गतत्वेनोक्तेष्वष्टशीलेष्वेकम् ।

**प्रवृद्धं शीलमित्युक्तं .................. ।**

(चं.आ.,क्रि.पा.,९.२६)

(पश्यत – सदाचारः)

## प्रसादः

गुरुलिङ्गजङ्गमादिषु अष्टावरणेष्वन्यतमम् ।

१. प्रसन्नस्य भावः । चित्तस्य नैर्मल्यम्, निर्मलत्वचिह्नं प्रसादः।

**नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते ।**

**शिवप्रसादो यद्द्रव्यं शिवाय विनिवेदितम् ।**

**निर्माल्यं तत्तु शैवानां मनोनैर्मल्यकारणम् ।।**

(सि.शि.,११.६-७)

२. गुरुलिङ्गजङ्गमानां भुक्तशेषोऽपि प्रसादः, प्रसन्नताजनकत्वात् ।

**गुरुलिङ्गजङ्गमानां भुक्तशेषः प्रसादकः ।**

(चं.आ., क्रि.पा., ५.२०)

३. ईश्वर एव प्रसादः ।

**प्रकारोऽयं प्रसादः स्यात्साकारो भक्तिरुच्यते ।**

**प्रसादपूर्विका भक्तिर्मुक्तिदेति दकारतः ।।**

**प्रसाद ईश्वरः साक्षात् सच्चिदानन्दलक्षणः ।**

(विशे.प्र.,३.५२, पृ.५०; ३.४)

**प्रसादभेदः**

१. स च शुद्धः सिद्धः प्रसिद्धश्चेति त्रिधा । तत्र गुरुप्रसादः शुद्धप्रसादः, लिङ्गप्रसादः सिद्धप्रसादः, जङ्गमप्रसादश्च प्रसिद्धप्रसादः ।

**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्त्यैकसाधनः ।**

(चं.आ., क्रि.या.,५.२१; शि.त.र.,भा-३, ९.९.१८)

(पश्यत – त्रिविधप्रसादः)

२. गन्धप्रसादः, रसप्रसादः (रुचिप्रसादः), रूपप्रसादः, स्पर्शप्रसादः, शब्दप्रसादः, सङ्कल्पप्रसाद इति षोढ़ा ।

**गन्धप्रसादं सद्भक्त्या चित्तहस्तेन चार्पयेत् ।**

**बुद्धिहस्तेन तु रुचिं निष्ठाभक्त्या समर्पयेत् ।**

**भक्त्याऽवधानया रूपमहङ्कारेण चार्पयेत् ।**

**भक्त्यानुभवया मनोहस्तेन स्पर्शमर्पयेत् ।**

**............................शब्दप्रसादकम् ।**

**आनन्दभक्त्या सुज्ञानहस्तेनैव समर्पयेत् ।।**

**..............................सङ्कल्पमर्पयेत् ।**

**सद्भावाभिख्यहस्तेन भक्त्या समरसाख्यया ।।**

(का.आ.,क्रि.पा.,७.६०–६५)

## प्रसादकायः = प्रसादतनुः

पूजानिष्ठानां वीरशैवानां पदार्थकायः प्रसादकायश्चेति काययोरेकतरः। पूजान्तात् पुनः पूजापर्यन्तं भक्तः प्रसादकाय इति कथ्यते ।

**पूजान्ते पूजादौ प्रपद्येत् पुनरेष हि प्रसादतनुम् ।**

**प्रसादकायः पूजान्ते पुनः पूजाक्रियावधि ।।**

(अ.सू.,७.१७–१८)

## प्रसादग्राहकः

भक्ष्यभोज्यादिकं वा फलपुष्पादिकं वा सौरभं वा आदौ शिवाय (गुरुलिङ्गजङ्गमात्मकाय) अर्पयित्वा ततः यः स्वयं भुङ्क्ते सः प्रसादग्राहकः ।

**भक्ष्यभोज्यादिकं वापि फलं पुष्पं च सौरभम् ।।**

**एवमादीनि वस्तूनि शिवायादौ निवेद्य च ।**

**स्वयं ततोऽनुभुञ्जीत प्रसादग्राहको मतः ।।**

(सू.आ.,क्रि.पा.,६.४९–५०)

## प्रसादपञ्चाक्षरी

पञ्चपञ्चाक्षरीमन्त्रेष्वेकतमा । रेणुकाराध्यसम्बद्धवीरगोत्रोत्पन्नानां मन्त्रः ।

**तस्य मन्त्रः प्रसादाख्यो दशवर्णमहामनुः ।।**

**ओं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं नमः शिवाय ।**

(वी.स.सं.,५.१३-१४)

(पश्यत – पञ्चाक्षरीमन्त्रः)

## प्रसादमाहात्म्यस्थलम्

शिवप्रसादमाहात्म्यस्थलम् । एकोत्तरशतस्थलेष्वन्यतमम् । तत्र प्रसादिस्थलस्य सप्तविधङ्गस्थलेष्वेकम् । तत्र च सप्तमम् । गुरुलिङ्गजङ्गमादिमहत्त्वानुभवस्थितिः यस्मात् कारणादुत्पद्यते तदेव शिवप्रसादमाहात्म्यमित्युच्यते ।

**प्रसादिस्थलमित्येतत् अस्य माहात्म्यबोधकम् ।**

**अन्तरस्थलभेदेन सप्तधा परिकीर्तितम् ।।**

**शिवप्रसादमाहात्म्यमिति सप्तप्रकारकम् ।**

**गुरुलिङ्गादिमाहात्म्यविशेषानुभवस्थितिः ।**

**यस्माच्छिवप्रसादात्स्यात्तदस्य महिमोच्यते ।।**

(सि.शि., ११.३-५,६७)

## प्रसादलिङ्गम्

षट्स्थलसम्बद्धाचारलिङ्गादिषड्विधलिङ्गेष्वेकम् । शरणस्थलसम्बद्धम् । भावादिलिङ्गत्रयं द्विविधं द्विविधं भवति । तत्र भावलिङ्गं महालिङ्गम्, प्रसादलिङ्गं चेति द्विविधम् । इदं प्रसादलिङ्गम् ईशानमुखसंज्ञितम् ।

**भावादिलिङ्गत्रितयं द्विविधं द्विविधं भवेत् ।**

**भावलिङ्गं महालिङ्गप्रसादाभिख्यकं द्वयम् ।**

**प्रसादलिङ्गं कथितं ईशानमुखसंज्ञकम् ।।**

(चं.आ., क्रि.पा.,३.२६)

**एकमेकस्थलं भूयो द्विविधं द्विविधं भवेत् ।**

**महालिङ्गं प्रसादाख्यं लिङ्गमित्युभयस्थलम् ।**

**भावलिङ्गं भवत्येव स्वानुभूतिप्रमाणतः ।।**

**प्रसादलिङ्गसंयुक्तम् अङ्गं हि शरणस्थलम् ।।**

(अ.सू.,३.१६, १८; ५.८०)

आदिप्रसादि, अन्त्यप्रसादि, सेव्यप्रसादि इत्येवं तत् त्रिधा ।

(पश्यत – तत्तत् स्थलशब्दसन्दर्भम्)

## प्रसादलिङ्गपूजकः

प्रसादलिङ्गभक्तभेदः । प्रसादलिङ्गमोही, प्रसादलिङ्गभक्तः, प्रसादलिङ्गपूजकः, प्रसादलिङ्गवीरः, प्रसादलिङ्गप्रसादी, प्रसादलिङ्गप्राणी इति प्रसादलिङ्गस्य षड्विधभक्तेष्वन्यतमः । परमैत्र्यादिरहितः प्रसादलिङ्गस्यैव पूजकः प्रसादलिङ्गपूजकः ।

**प्रसादपूजको देवि परमैत्र्यादि वार्जितः ।।**

(सू.आ.,क्रि.पा., ८.६४)

**देवि प्रसादलिङ्गस्य पूजकोऽनन्यपूजकः ।**

(शि.त.र.,भा–३, ९.९.५८)

(पश्यत – प्रसादलिङ्गभक्तः)

## प्रसादलिङ्गप्रसादी

प्रसादलिङ्गभक्तभेदः । आदानप्रदानार्थं यः करौ न प्रसारयेत् यश्चान्यप्रसादविमुखः सः प्रसादलिङ्गप्रसादी ।

**आदानार्थं च दानार्थं करौ नैव प्रसारयेत् ।।**

**नान्यत् किञ्चित्प्रसादान्यत्प्रसादी क्वापि संस्पृशेत् ।**

(सू.आ.,क्रि.पा.,८.६६; शि.त.र.,भा-३, ९.९.५९-६०)

## प्रसादलिङ्गप्राणी

प्रसादलिङ्गभक्तभेदः । यः जीवहिंसां न करोति कारयति वा यश्च आत्मबोधक स प्रसादलिङ्गप्राणी ।

**न कुर्याज्जीवहिंसां च परैर्वा नापि कारयेत् ।**

**प्रसादलिङ्गप्राणी स्यात् स भवेदात्मबोधकः ।।**

(सू.आ., क्रि.पा.,८.६७)

**प्रसादलिङ्गप्राणी स्यात्सः भवेदात्मभावकः ।**

**इत्थं प्रसादलिङ्गैकपरो भूतदयान्वितः ।।**

(शि.त.र.,भा-३, ९.९.६१)

## प्रसादलिङ्गभक्तः

प्रसादलिङ्गभक्तभेदः । प्रसादलिङ्गभक्तो नाम पूर्वतननिषिद्धाहार-निरासकः ।

**प्रसादलिङ्गभक्तस्तु पूर्वाहारनिरासकः ।**

(सू.आ.,क्रि.पा.,८.६४; शि.त.र.,भा-३, ९.९.५७)

## प्रसादलिङ्गमोही

प्रसादलिङ्गभक्तभेदः । पूर्वभोज्यादिकं त्यक्त्वा अन्यद्रव्यरुचिं विहाय, अन्यमोहरहितश्च सन् प्रसादैकाकाङ्क्षी प्रसादलिङ्गमोही ।

**प्रसादलिङ्गमोहीस्यादन्यमोहविवर्जितः ।।**

(सू.आ., क्रि.पा.,८.६३)

**अन्यद्रव्यरुचिं त्यक्त्वा पूर्वभोज्यादिवर्जितः ।**

(शि.त.र.,भा-३, ९.९.५६)

## प्रसादलिङ्गवीरः

प्रसादलिङ्गमोहीत्यादि षड्विधप्रसादलिङ्गभक्तेष्वन्यतमः । परवित्त - परस्त्री - परमैत्री - पराश्रयादिकं त्यक्त्वा प्रसादलिङ्गैकपरः निस्पृहात्मा ।

**करेण परवित्तं तु कदापि न हि संस्पृशेत् ।**

**स तु प्रसादलिङ्गैकवीरः स्यान्निस्पृहः सदा ।।**

(सू.आ.,क्रि.पा.,८.६५)

**परवित्तं परस्त्रीं च परमैत्रीं पराश्रयम् ।**

**त्यक्त्वा प्रसादलिङ्गैकपरः स्यान्निस्पृहस्सदा ।**

(शि.त.र.,भा-३, ९.९.५८-५९)

## प्रसादलिङ्गस्थलम्

भावलिङ्गभेदः । प्रसादलिङ्गमेव प्रसादलिङ्गस्थलम् । अनुभवसूत्रे प्रसादलिङ्गस्थलमिति दृश्यते ।

**प्रसादलिङ्गसंयुक्तमङ्गं हि शरणस्थलम् ।।**

(अ.सू.,५.८०)

(पश्यत - प्रसादलिङ्गम्)

## प्रसादिस्थलम्

षट्स्थलेषु तृतीयम् ।

१. येन मनःप्रसादः प्राप्यते तेन च निर्मलज्ञानं प्राप्यते । एतादृशशिवप्रसादं स्वीकुर्वन् साधकः प्रसादीति कथ्यते । तस्य स्थितिः प्रसादिस्थलम् ।

**प्रसादिस्थलमित्येतदस्य माहात्म्यबोधकम् ।**

(सि.शि.,११.३)

**प्रसादिस्थलभेदः**

(१) अङ्गस्थलानि ।

सप्तधा-(१) प्रसादिस्थलम्, (२) गुरुमाहात्म्यस्थलम्, (३) लिङ्गमाहात्म्यस्थलम्, (४) जङ्गममाहात्म्यस्थलम्, (५) भक्तमाहात्म्यस्थलम्, (६) शरणमाहात्म्यस्थलम्, (७) प्रसादमाहात्म्यस्थलम्।

(सि.शि.,११.३-५)

(२) लिङ्गस्थलानि ।

प्रसादिस्थलसम्बद्धानि नवलिङ्गस्थलानि भवन्ति । तानि - कायानुग्रहस्थलम्, इन्द्रियानुग्रहस्थलम्, प्राणानुग्रहस्थलम्, कायार्पितम्, करणार्पितम्, भावार्पितम्, शिष्यस्थलम्, सुश्रूषुस्थलम्, सेव्यस्थलम् ।

(सि.शि ., १७.२-४)

२. स्थलभेदः । एकोत्तरशतस्थलेष्वेकम्। प्रसादिस्थलाश्रितसप्तविधाङ्ग-स्थलेषु प्रथमम् । चित्तस्य निर्मलत्वं प्रसाद इति कथ्यते । स च प्रसादः लिङ्गरूपस्य परशिवस्य अनुग्रहादेव प्राप्यते, शिवाय समर्पितं यद् द्रव्यं तत् शिवप्रसादरूपमेव । तन्निर्माल्यं वीरशैवानां मनोनैर्मल्यकारणम् । शिवप्रसादस्वीकारेण प्रसादी भवति, इत्यादि बोधकं स्थलम् ।

**प्रसादिस्थलमित्येतदस्य माहात्म्यबोधकम् ।**
**अन्तरस्थलभेदेन सप्तधा परिकीर्तितम् ।।**
**प्रसादिस्थलमादौ तु गुरुमाहात्म्यकं ततः ।**
**नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते ।**
**शिवस्य लिङ्गरूपस्य प्रसादादेव सिध्यति ।।**
**शिवप्रसादं यद् द्रव्यं शिवाय विनिवेदितम् ।**

**निर्माल्यं तत्तु शैवानां मनोनैर्मल्यकारणम् ।।**

**मनः प्रसादसिद्ध्यर्थं निर्मलज्ञानकारणम् ।**

**शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ।।**

(सि.शि.,११.३-४, ६-८)

## प्रसादी

भक्तः, माहेश्वरः, प्रसादी, प्राणलिङ्गी, शरणः, ऐक्यम् - इति षट्स्थलान्यतमम् । माहेश्वरस्थलोक्तलिङ्गनिष्ठादिस्थलपरिज्ञानपूर्वकम् आचरणद्वारा यः ध्वस्तपापसमूहः माहेश्वरः भवति स एव मनोनैर्मल्य-सम्बन्धेन प्रसादीति निगद्यते ।

**लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।**

**मनः प्रसादयोगेन प्रसादीत्येष कथ्यते ।।**

(सि.शि.,११.२)

## प्रसिद्धप्रसादः

शुद्धप्रसादः, सिद्धप्रसादः, प्रसिद्धप्रसाद इति त्रिविधप्रसादेष्वन्यतमः। जङ्गमभुक्तशेषः प्रसिद्धप्रसादः ।

**प्रसादलिङ्गत्रैविध्यमपि शृणु वरानने ।**

**शुद्धं सिद्धं प्रसिद्धं च भेदश्चैषामथोच्यते ।।**

**चरार्पितप्रसादोऽयं प्रसिद्धः परिकीर्तितः ।**

(सू.आ.,क्रि.पा.,८.२२, २५; चं.आ.,क्रि.पा.,५.२१)

## प्राकृतः (प्राणायामः)

प्राकृतः, वैकृतः, केवलकुम्भकः, अमनस्क इति चतुर्विध-प्राणायामेष्वन्यतमः । तत्र मन्त्रयोगः प्राकृतप्राणायामः । स च उच्छ्वासनिश्श्वासरेचकपूरकयुक्तः ।

**निश्श्वासोच्छ्वासरूपेण रेचपूरस्वभावतः ।**

**प्राणानिले वर्तमाने प्राकृतस्स उदीरितः ।।**

**प्राकृतो मन्त्रयोगस्स्यात् .................. ।**

(शि.यो.प्र., २.२३, २६)

## प्राकृतमानुषाः

विशुद्धः प्राकृतः इति द्विविधमनुष्ययोरन्यतरः । तत्र शिवसंस्काररहितः प्राकृतः ।

**विशुद्धाः प्राकृताश्चेति द्विविधा मानुषाः स्मृताः ।**

**शिवसंस्कारिणः शुद्धाः प्राकृता इतरे मताः ।।**

(सि.शि.,१०.३४)

(पश्यत – विशुद्धमानुषाः)

## प्राकृतलिङ्गम्

लिङ्गभेदः । महद्भिः शिल्पेन कल्पयित्वा मन्त्रविधिना प्रतिष्ठापितं लिङ्गम् । तच्च प्राकृतैश्वर्यभोगदायकम् ।

**महद्भिश्च शास्त्रज्ञैः राजभिश्च महाधनैः ।**

**शिल्पेन कल्पितं लिङ्गं मन्त्रेण स्थापितं च यत् ।।**

**प्रतिष्ठितं प्राकृतं हि प्राकृतैश्वर्यभोगदम् ।**

(क्रि.सा.,१, ३.३५७–३५८)

## प्राज्ञः

१. जीवात्मविशेषः । विश्वः, तैजसः, प्राज्ञः इति त्रिविधजीवेष्वेकः । सुषुप्त्यवस्थाविशिष्टः । स च कारणशरीरस्थभावलिङ्गोपासकः । एष एव योगाङ्गमित्युच्यते ।

**विश्वो जाग्रदवस्थायां स्वप्नाख्यायां तु तैजसः ।**

**प्राज्ञः सुषुप्त्यवस्थायां लिङ्गत्रयमुपासते ।।**

**योगाङ्गं प्राज्ञ एव स्यात् .................... ।**

(अ.सू.,५.६२; ४.१०)

२. परमात्मा एव प्राज्ञः । विश्वतैजसस्वरूपौ जीवात्मान्तरात्मानौ ततः भिन्नौ ।

**जीवात्मा विश्व एव स्यादन्तरात्मा तु तैजसम् ।**

**परमात्मा भवेत् प्राज्ञ इति तत्त्वविदो विदुः ।।**

(अ.सू.,५.६१)

## प्राणप्रतिष्ठा

१. करपीठस्थे लिङ्गे गुरुणा शिष्यप्राणमादाय प्रतिष्ठापनम् । त्रिविधदीक्षासु मान्त्रीदीक्षानन्तरं श्रीगुरुः शिष्यस्य मस्तके शैवीं कलां विभाव्य तां स्वदृष्टावानीय शिष्यकरपीठस्थिते लिङ्गे तद् विनिवेशनं करोति सा प्राणप्रतिष्ठेति कथ्यते । तत्र प्राणप्रतिष्ठामन्त्रोऽपि प्रयोक्तव्यः ।

**शैवी कलां स्वमनसा विभाव्य च ततः परम् ।**

**दृष्टावानीय च तया शिष्यवामकरस्थिते ।**

**लिङ्गे निवेशयेत् क्षिप्रं मूलमन्त्रमनुस्मरन् ।।**

**या कला परमा सूक्ष्मा तत्त्वानां बोधिनी परा ।**

**तामाकृष्य यथान्यायं लिङ्गे समुपवेशयेत् ।**

**प्राणप्रतिष्ठामन्त्राच्च मूलमन्त्रं पठेदपि ।।**

(का.आ.,क्रि.पा.,१.१२०, १२४)

**(एषः इष्टलिङ्गप्राणप्रतिष्ठाक्रमः)**

**सर्वलक्षणसम्पन्ने तस्मिन् लिङ्गे विशोधिते ।।**

**पीठस्थितेऽभिषिक्ते च गन्धपुष्पादिपूजिते ।**

**मन्त्रपूते कलां शैवीं योजयेद्विधिना गुरुः ।।**

**शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत् ।**

(सि.शि.,६.२३-२५; शि.त.र.,भा-३, ९.८.७८-८१)

२. शिल्पिनः हस्तात् शिलामयं देवस्थानं स्वीकृत्य तत्र लिङ्गं संस्थाप्य प्राणप्रतिष्ठांमन्त्रेण क्रियते ।एषः स्थावरलिङ्गप्राणप्रतिष्ठाक्रमः ।

**मया कृतमिदं गेहं दृढं सौम्य शिलामयम् ।**

**गृहाणाहं प्रदास्यामि प्रतिष्ठायै शिवस्य च ।।**

**इत्युक्त्वा कारको भक्त्या दद्यात् गेहं प्रहर्षितः ।**

**गेहं लब्ध्वा ततो लिङ्गं तत्र संस्थापयेत् शुभम् ।।**

**प्राणप्रतिष्ठां मन्त्रेण तत्र कुर्वीत मन्त्रवित् ।**

(शि.त.र.,भा-१, ५.१०.१४०-१४२)

(तत्रैव प्राणप्रतिष्ठामन्त्रः दत्तः)

## प्राणलिङ्गम्

सुजनानामनुग्रहार्थं महालिङ्गमेव भावलिङ्गं प्राणलिङ्गं इष्टलिङ्गंचेति त्रिविधं जातम् । तत्र प्राणलिङ्गं मनसा ग्राह्यं सकलनिष्कलं च । प्राणलिङ्गं सूक्ष्मलिङ्गमिति कथ्यते, स्थूल- सूक्ष्म - परात्परेषु त्रिविधलिङ्गेष्वेकतमम् ।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया ।**

**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम् ।।**

**तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं मतम् ।**

**प्राणलिङ्गं मनोग्राह्यं भवेत् सकलनिष्कलम् ।।**

(चं.आ., क्रि.पा.,३.२३-२४)

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम् ।**

**प्राणलिङ्गमिदं सूक्ष्मं यदन्तर्भावनामयम् ।**

(सि.शि., ६.४९-५०)

आधारादिषु स्थानेषु प्राणलिङ्गं ध्येयम् ।

**आधारे कनकप्रख्यं हृदये विद्रुमप्रभम् ।**

**भ्रूमध्ये दीपसङ्काशं प्राणलिङ्गं प्रकीर्तितम् ।।**

**ज्योतिर्लिङ्गमिदं विद्वन् ध्यानस्थानं महेशितुः ।**

**ज्योतिर्लिङ्गं विभाव्यैव तत्र ध्येयः परः शिवः ।।**

**प्राणेष्वन्तर्मनः स्थानं हृदयाब्जगतं शिवम् ।**

**लिङ्गं यत् तदिह ग्राह्यं प्राणलिङ्गमहाह्वयम् ।।**

**ज्योतीरूपं तदेव स्यात् स्थानं मुख्यं महेशितुः ।**

**तत्र निध्यायमानन्तु शम्भुर्मोचयतेऽचिरात् ।।**

(चं.आ.,क्रि.पा., ३.३३-३६; सि.शि., ६.४०)

## प्राणलिङ्गस्थलम्

१. त्रिविधलिङ्गस्थलेष्वन्यतमं प्राणलिङ्गस्थलम् । प्राणलिङ्गशब्देन प्राणलिङ्गस्थलमुच्यते । प्राणलिङ्गं सूक्ष्मतनोर्भवति ।

**लिङ्गस्थलं त्रिधा ज्ञेयं तद्भेदो वर्ण्यते क्रमात् ।**

**प्रथमं भावलिङ्गं स्यात् द्वितीयं प्राणलिङ्गकम् ।।**

**तृतीयमिष्टलिङ्गं स्यादित्येतत् त्रिविधं स्मृतम् ।**

(अ.सू., ३.५-६)

**इष्टं स्थूलतनोः प्रोक्तं प्राणं सूक्ष्मतनोः स्मृतम् ।**

**भावाख्यं कारणस्यैवं तनुत्रयगतं त्रयम् ।।**

(चं.आ., क्रि.पा., ३.४५)

२. योगाङ्गादित्रिविधाङ्गस्थलेषु एकतमस्य भोगाङ्गस्य भेदः। एवमङ्ग-षट्स्थलेषु चतुर्थम् । योगाङ्गं सूक्ष्मशरीरमिति कथ्यते । शिवेन सह भोगकारणात्तद्भोगाङ्गम् ।

**अङ्गस्थलं त्रिधा ज्ञेयं आचार्यैः सूक्ष्मदर्शिभिः ।**
**योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं तु द्वितीयकम् ।।**
**त्यागाङ्गं तु तृतीयं स्यादेवमेव त्रिधा भवेत् ।**
**शिवेन सह भोगेन भोगाङ्गमिति कथ्यते ।**
**...................... भोगाङ्गं सूक्ष्ममुच्यते ।**

(अ.सू.,४.५-८)

**भक्तो माहेश्वरश्चैव प्रसादी प्राणलिङ्गकः ।**
**शरणः शिवलिङ्गैक्यः षट्स्थलानि हि पार्वति ।।**

(सू.आ.,क्रि.पा.,८.३२; क्रि.सा.,भा-३,पृ.२४)

३. शिवप्राणयोर्योगः । सर्वतत्त्वमयस्य प्राणस्य सर्वज्ञानमयस्य शिवस्य (लिङ्गस्य) च योगः प्राणलिङ्गम् । प्राणवायुर्यस्मिन् परब्रह्ममयशिवलिङ्गे भास्करे तुहिनमिव लयं याति तत्प्राणलिङ्गम् । वीरागमे-

**सर्वतत्त्वमयः प्राणः सर्वज्ञानमयः शिवः ।**
**अनयोर्योगमेवैतत् प्राणलिङ्गमिहोच्यते ।।**

(कै.सा.,पृ.५७, इत्यत्रोदाहृतः)

**प्राणो यत्र लयं याति भास्करे तुहिनं यथा ।**
**तत् प्राणलिङ्गमुद्दिष्टं तद्धारी स्यात् तदाकृतिः ।।**

(सि.शि.,१२.७)

## प्राणलिङ्गार्चनम्

१. इष्टलिङ्गार्चनं कृत्वा मनसा यत् तस्य ध्यानं तदपि प्राणलिङ्गार्चनं भवति।

**तद्ध्यानं मनसा यत्र प्राणलिङ्गार्चनं मतम् ।**

(सू.आ., क्रि.पा., ६.४७)

२. अन्तर्गतचिदाकारलिङ्गस्य भावोपचारैरर्चनम् । कथं पूजनीयमिति चेत् उच्यते – अन्तः प्राणवायुव्याप्ते, अतिसूक्ष्माकाशविलसिते मूर्धनि ब्रह्मरन्ध्रगतपूर्णचन्द्रमण्डलात् विगलता सुधासेकेन अतिशीतले, प्रतिबद्ध-श्रोत्रादीन्द्रियनवद्वारे शिवज्ञानप्रदीपे ऊर्ध्वहृदयस्थानस्थितपद्मपीठे स्थितायां द्वादशदलकर्णिकायां समासीनं मङ्गलमूर्तिं चिल्लिङ्गं प्राणलिङ्गत्वेन भावयित्वा गुरूपदिष्टरीत्या ध्यात्वा भाववस्तुभिः पूजयेत् इति यदर्चनं भवति तत्प्राणलिङ्गार्चनम् ।

कानि तानि वस्तूनीति चेत् उच्यते – क्षमा अभिषेकोदकम्, नित्यानित्यवस्तुविवेकः वसनम्, सत्यमलङ्कारः, वैराग्यं कुसुममालिका, समाधिसम्पत्तिः गन्धः, निरहङ्कारः अक्षता, श्रद्धा धूपः, विश्वप्रकाशकं महाज्ञानं दीपः, भ्रन्तिमूलप्रपञ्चस्य निवेदनं नैवेद्यम्, मौनं घण्टानादः, विषयाणां समर्पणं ताम्बूलम्, विषयभ्रमरहितत्वं प्रदक्षिणम्, बुद्धेः लिङ्गरूपताप्राप्तौ सामर्थ्यं नमस्कारक्रिया च ।

**अन्तर्गतं चिदाकारं लिङ्गं शिवमयं परम् ।**
**पूज्यते भावपुष्पैर्यत्प्राणलिङ्गार्चनं हि तत् ।।**
**अन्तः पवनसंस्पृष्टे सुसूक्ष्माम्बरशोभिते ।**
**मूर्धन्यचन्द्रविगलत्सुधासेकातिशीतले ।।**
**बद्धेन्द्रियनवद्वारे बोधदीपे हृदालये ।**
**पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम् ।।**

**भावयित्वा सदाकालं पूजयेद्भाववस्तुभिः ।**
**क्षमाऽभिषेकसलिलं विवेको वस्त्रमुच्यते ।**
**सत्यमाभरणं प्रोक्तं वैराग्यं पुष्पमालिका ।।**
**गन्धः समाधिसम्पत्तिरक्षता निरहङ्कृतिः ।**
**श्रद्धा धुपो महाज्ञानं जगद्भासि प्रदीपिका ।।**
**भ्रान्तिमूलप्रपञ्चस्य निवेद्यं तन्निवेदनम् ।**
**मौनं घण्टापरिस्पन्दस्ताम्बूलं विषयार्पणम् ।।**
**विषयभ्रान्तिराहित्यं तत्प्रदक्षिणकल्पना ।**
**बुद्धेस्तदात्मिका शक्तिर्नमस्कारक्रिया मता ।।**

(सि.शि.,१२.१३–१९; शि.त.र.,भा–३,८.७.८१, ८३)

## प्राणलिङ्गार्चनस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्राणलिङ्गस्थलान्तर्गत–पञ्चविधाङ्गस्थलेष्वेकम् । शिवयोगसाधनद्वारा अन्तःशरीरे प्राणवायुव्याप्तेः अतिसूक्ष्माकाश–शोभिते ब्रह्मरन्ध्रस्थितपूर्णचन्द्रमण्डलतः स्रवता सुधासेकेन शीतलीकृते बद्धेन्द्रियनवद्वारे ऊर्ध्वहृदयसद्मनि पद्मपीठे (द्वादशदलकमलपीठे) विद्यमानं मङ्गलमूर्तिं प्राणलिङ्गात्मकं चिल्लिङ्गं गुरूपदिष्टरीत्या ध्यात्वा भाववस्तुभिः या पूजा विधीयते तस्याः सम्बद्धं स्थलं प्राणलिङ्गार्चनस्थलम् । तानि भाववस्तूनि क्षमादीनि ।

**प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम् ।**
**प्राणलिङ्गिस्थलं चादौ प्राणलिङ्गार्चनं ततः ।।**

(सि.शि.,१२.४)

(पश्यत – प्राणलिङ्गार्चनम्)

## प्राणलिङ्गिस्थलम्

१. स्थलभेदः । षट्स्थलेषु चतुर्थम् ।

**आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम् ।**

**प्रसादिस्थलमन्यत्तु प्राणलिङ्गिस्थलं ततः ।।**

(सि.शि.,५.२४)

**प्राणलिङ्गिस्थलभेदः**

अ. प्राणलिङ्गिस्थलगतअङ्गस्थलानि पञ्च । तानि प्राणलिङ्गिस्थलम्, प्राणलिङ्गार्चनस्थलम्, शिवयोगसमाधिस्थलम्, लिङ्गनिजस्थलम्, अङ्गलिङ्गस्थलं चेति ।

(सि.शि.,१२.४-५)

आ. प्राणलिङ्गिस्थलगतलिङ्गस्थलानि नव । तानि - आत्मस्थलम्, अन्तरात्मस्थलम्, परमात्मस्थलम्, निर्देहागमस्थलम्, निर्भावागतस्थलम्, नष्टागमस्थलम्, आदिप्रसादिस्थलम्, अन्त्यप्रसादिस्थलम्, सेव्य-प्रसादिस्थलं चेति ।

(सि.सि.,१८.२-४)

२. स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्राणलिङ्गिस्थलगत-पञ्चविधाङ्गस्थलेष्वेकतमम्, तत्र प्रथमम् । बाह्यलिङ्गं तत्पूजासाधनभूतानि वस्तूनि च विहाय यः चिद्रूपप्राणलिङ्गविचारे मग्नो योगी स प्राणलिङ्गीति ज्ञायते । माया विकल्पजातं विश्वं त्यजनीयमिति सम्यग्विभाव्य यो योगी सच्चिदानन्दरूपे लिङ्गे विलीनस्तिष्ठति स प्राणलिङ्गवान् । तादृशस्य प्राणलिङ्गिनः माहात्म्यबोधकमिदं स्थलम् ।

**प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम् ।**

**प्राणलिङ्गिस्थलं चादौ प्राणलिङ्गार्चनं ततः ।।**

**संविल्लिङ्गपरामर्शी बाह्यवस्तुपराङ्मुखः ।**

**यः सदा वर्तते योगी प्राणलिङ्गी स उच्यते ।।**

**मायाविकल्पजं विश्वं हेयं सञ्चिन्त्य नित्यशः ।**
**चिदानन्दमये लिङ्गे विलीनः प्राणलिङ्गवान् ।।**

(सि.शि.,१२.४, १०-११)

## प्राणलिङ्गी

भक्तादित्रिविधस्थलेषु कर्मप्राधान्यम् आश्रित्य, पक्केन मनसा ज्ञानयोगसम्पन्नः प्राणलिङ्गीति कथ्यते । तस्य कर्मयोगापेक्षायाः ज्ञानयोगो विशिष्यते ।

**भक्तो माहेश्वरश्चैषः प्रसादीति च कीर्तितः ।**
**कर्मप्राधान्ययोगेन ज्ञानयोगोऽस्य कथ्यते ।।**

(सि.शि.,१२.२)

प्राणलिङ्गिनः लक्षणम् –

चिद्रूपं शिवलिङ्गमेव ब्रह्म । तस्य प्रणवात्मकप्राणस्वरूपवती शक्तिश्च। अनयोः सम्मिलितस्वरूपविज्ञानी प्राणलिङ्गी भवति । यः बाह्यवस्तुपराङ्मुखः सन् अर्थात् स्थावरलिङ्गादितत्पूजासाधनानि च विहाय केवलं संविद्रूपलिङ्गं यो योगी सर्वदा परामृशति स एव प्राणलिङ्गी । प्राणमयीं शक्तिं सत्तारूपेण प्राणलिङ्गं च प्राणस्फुरणयुक्तेन उत्तमपुरुषमयेन सद्रूपेण (अहं स्वरूपेण) ज्ञात्वा यः तत्सामरस्यं अनुभवति सः प्राणलिङ्गीति कथ्यते ।

**लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी ।**
**तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते ।।**
**संविल्लिङ्गपरामर्शी बाह्यवस्तुपराङ्मुखः ।**
**यः सदा वर्तते योगी प्राणलिङ्गी स उच्यते ।।**
**सत्ता प्राणमयी शक्तिः सद्रूपं प्राणलिङ्गकम् ।**
**तत्सामरस्यविज्ञानात् प्राणलिङ्गीति कथ्यते ।।**

(सि.शि.,१२.३, १०, १२)

**प्राणाः एव हि लिङ्गं चेत्यनुसन्धानवान् पुमान् ।।**

**स एव प्राणलिङ्गीति प्रोच्यते सूक्ष्मदर्शिभिः ।**

(क्रि.सा.,भा-३, पृ-११२)

## प्राणानुग्रहः

परशिवस्वरूपस्य परब्रह्मकायस्य इन्द्रियानुग्रहसम्पन्नस्य च शिवयोगिनः यत् प्राणवायुनिरोधेन तत्परत्वदर्शनं भवति तदेव प्राणानुग्रह इत्युच्यते । तत्परत्वं नाम परमकारणे परशिवे प्राणस्य लयनमित्यर्थः । तादृशस्य शिवयोगिन इन्द्रियस्फूर्तिर्वा संसारदर्शनं वा नास्ति ।

**शिवस्य परकायस्य यत् तात्पर्यावलोकनम् ।**

**तत्प्राणानुग्रहः प्रोक्तः सर्वेषां तत्त्वदर्शिभिः ।।**

**प्राणो यस्य लयं याति शिवे परमकारणे ।**

**कुतस्तस्येन्द्रियस्फूर्तिः कुतः संसारदर्शनम् ।।**

(सि.शि.,१७.२४-२५)

## प्राणानुग्रहस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्रसादिस्थलगतनवविध लिङ्गस्थलेष्वन्यतमम् । प्राणानुग्रहसम्पन्नस्य स्थलं प्राणानुग्रहस्थलम् ।

**स्थलभेदा नव प्रोक्ताः प्रसादिस्थलसंश्रिताः ।**

**कायानुग्रहणं पूर्वमिन्द्रियानुग्रहं ततः ।।**

**प्राणानुग्रहणं पश्चात् ...................... ।**

(सि.शि.,१७.२-३)

(पश्यत – प्राणानुग्रहः)

## प्राणायामः

सविकल्पकनिदिध्यासनाङ्गम् । योगशास्त्रे –

**प्राणायामस्तु श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः । स च रेचकपूरककुम्भकभेदेन त्रिविधः । बाह्यवृत्तिश्वासो रेचकः । अन्तर्वर्तिप्रश्वासः पूरकः । अन्तस्तम्भवृत्तिः कुम्भकः ।**

(वी.आ.चं.,पृ–५)

प्रकारान्तरेण त्रिधा –

प्राकृतः, वैकृतः, केवलकुम्भकश्चेति । तत्र निश्वासोच्छ्वासस्वरूपेण रेचकपूरकस्वभावेन प्राणानिले वर्तमाने सति प्राकृतः प्राणायामः । आगमोक्तविधानेन यदि रेचकपूरककुम्भकैः त्रिविधैरपि प्राणनियन्त्रणं क्रियते चेत् स वैकृतः प्राणायामः । रेचकपूरकौ क्षणमात्रं कृत्वा ताभ्यां विना प्राणवायोः स्तम्भनं केवलकुम्भकः प्राणायामः ।

**प्राणायामस्त्रिधा प्रोक्तः प्राकृतो वैकृतस्तथा ।**
**ताभ्यां विना जृम्भतेऽसौ केवलः कुम्भकस्स्वयम् ।।**
**निश्वासोच्छ्वासरूपेण रेचपूरस्वभावतः ।**
**प्राणानिले वर्तमाने प्राकृतः स उदीरितः ।।**
**आगमोक्तविधानेन रेचपूरककुम्भकैः ।**
**यदि प्राणनिरोधश्चेत् वैकृतः स उदीरितः ।।**
**प्राकृतं वैकृतं चेति द्वयमेतन्महात्मनः ।**
**क्षणात्संस्तम्भयेद्यस्तु स हि केवलकुम्भकः ।।**

(शि.यो.प्र.,२.२२–२५)

## प्रासादमन्त्राः

वातुलशुद्धागमोक्तदिशा तत्त्वज्ञानिनां हृत्कमले सर्वदा साक्षीभूतं यत् शिवचक्रं (वा.शु.आ.,३.१) अस्ति तस्मिन् स्थितिमार्गेण प्रासादमन्त्रं

समुद्धरेत् इति प्रस्तावः । तत्र ''प्रसादय'' इति गुरुवाण्या अस्य मन्त्रस्य प्रासादत्वं प्राप्तम् । 'प्रा' – शब्दः शिवः, 'सा'–शब्दः शक्तिः, 'द' – शब्दः तयोः संयोगः । एवं 'प्रासादः' शिवशक्तिसंयोगस्वरूपः । एवं त्रिभिः वर्णैः प्रासादशब्दः त्रीणि स्वरूपाणि व्यनक्ति । 'द' शब्देन मुक्तेरुक्तत्वादयं मन्त्रः प्रासादमन्त्र इति कथ्यते । उत्कृष्टशिवज्ञानमेव प्रासादज्ञानम् ।

**तच्चक्रे स्थितिमार्गेण प्रासादं तु समुद्धरेत् ।**

**प्रसादयेति प्रासादः गुरुवाण्यैव लक्षणात् ।।**

**प्रा शब्दः स्यात् शिवो ज्ञेयः सा शब्दः शक्तिरुच्यते ।**

**तत्स्वरूपं तु दशशब्दः त्रिवर्णमभिधीयते ।।**

**एतद्वै तत्परं ज्ञानं प्रासादं चेति कीर्तितम् ।**

(वा.शु.आ.,५.१४–१५, १९)

**प्रासादमन्त्रभेदः**

प्रासादमन्त्रः पञ्चधा उच्यते – शुद्धप्रासादः, मूलप्रासादः, तत्त्वप्रासादः, आदिप्रासादः, आत्मप्रासादश्चेति ।

**प्रासादः पञ्चधा प्रोक्तः तद्भेदो वक्ष्यतेऽधुना ।।**

**शुद्धो मूलं तथा तत्त्वं आदिरात्मेति पञ्चधा ।**

**पञ्चप्रासादमित्युक्तं शुद्धप्रासाद उच्यते ।।**

(वा.शु.आ.,५.१९–२०)

१. **शुद्धप्रासादः** – शुद्धः शिव इति शुद्धप्रासाद उक्तः । नादाख्यं परं बीजं अर्थात् 'ह्' इति शिवबीजं अकारेण युक्तं चेत् 'ह' इति शुद्धप्रासादमन्त्रः भवति अयं मन्त्रः चिच्छक्तिदीप्तियुक्तो मोक्षप्रदश्च ।

**शुद्धःशिव इति प्रोक्तः तस्मात् शुद्धःप्रकीर्तितः ।**

**नादाख्यं यत्परं बीजं आदिस्वरसमन्वितम् ।।**

**तच्छुद्धमिति विज्ञेयं सर्वकारणकारणम् ।**

**मुक्तिदं परमं दिव्यं सर्वसिद्धिप्रदायकम् ।।**

(वा.शु.आ.,५.२०-२२)

२. **मूलप्रासादः** - शिवस्य समस्ततत्त्वमूलकारणत्वात् हकाररूपं शिवबीजं शुद्धप्रासाद इत्युक्तम् । यदा सः स्थितिमार्गावलम्बनद्वारा षष्ठाभिधानेन रेफेण, त्रयोदशाभिधानेन औकारेण, पञ्चमाभिधानेन अनुस्वारेण युक्तस्सन् 'ह्रौं' इति मूलप्रासादमन्त्रः भवति । अस्य मन्त्रमूर्तेः नादः किरीटम्, बिन्दुः मुखम् । अस्य मन्त्रस्य ज्ञाता समस्तपापात् विमुक्तः भवति ।

**सर्वेषामेव तत्त्वानां मूलं शिव इति स्मृतः ।**

**तस्मान्मूलमिति प्रोक्तं मूलमन्त्रस्तदुच्यते ।।**

**षष्ठं त्रयोदशान्तं च पञ्चमे विनियोजयेत् ।**

**शिवशक्तिसमायुक्तः शिवमन्त्र इति स्मृतः ।।**

**शिवमेकं विजानीयात् मन्त्रमूर्तिं शिवं परम् ।**

**नादः किरीटमित्युक्तं बिन्दुः वक्त्रमुदाहृतः ।।**

(वा.शु.आ.,५.२४-२६)

३. **तत्त्वप्रासादः** - शिवस्वरूपत्वात् तत्त्वप्रासादमन्त्रः शिवमन्त्र इत्युच्यते । तत्त्वान्ते हकारे आदिबीजरूपं अकारं संयोज्य, अनुस्वारे योजिते सति 'हं' इति सर्वतत्त्वात्मकः तत्त्वप्रासादमन्त्रः भवति ।

**तत्त्वं हि शिवभावत्वात् शिवमन्त्र इति स्मृतम् ।**

**तत्त्वं चैवादिबीजं च तत्त्वान्ते विनियोजयेत् ।।**

**कार्यकारणसंयुक्तं सर्वतत्त्वात्मकं विदुः ।**

**तत्त्वप्रासाद इत्युक्तः ............... ।।**

(वा.शु.आ.,५.४०-४१)

४. **आदिप्रासादः** – सर्वपूर्वभावित्वात् आदिप्रासाद मन्त्रः इत्युच्यते। जीवान्ते 'ह' कारे आकारौकारयोः योजनेन अनुस्वारयोजनेन च 'हौं' इत्यादिप्रासादमन्त्रः भवति । अस्य शिवमयबीजत्वात् सर्वसिद्धिकरत्वं सिद्धम्।

**आदिस्तु पूर्वभावित्वात् आदिरित्यभिधीयते ।**

**आद्यं चतुर्दशं चैव जीवान्ते विनियोजयेत् ।।**

**आधाराधेयसंयुक्तं आदिबीजमिहोच्यते ।**

**कला चतुर्दशार्णं च जीवान्ते विनियोजयेत् ।।**

**आधाराधेयसंयुक्तं सर्वसिद्धिप्रदायकम् ।**

(वा.शु.आ.,५.४२-४४)

५. **आत्मप्रासादः** – आत्मा जीवः, जीवश्च शिव इति अकारस्य शिवबीजत्वात् आत्मबीजत्वं सिद्ध्यति । तेन अकारेण सह भूतान्तरूपं हकारं सकारेण सह उद्धृत्य तयोर्मध्ये बिन्दुः (अनुस्वारः) योज्यते चेत् 'हंस' इति आत्मप्रासादमन्त्रः भवति । अस्य हृत्कमलमध्यस्थितत्वात् समस्तकारणत्वं सिद्धम् । अयं जीवप्रासादमन्त्र इति कथ्यते । एतेषां प्रासादमन्त्राणां शिवबीजत्वात् शिवमन्त्रत्वं सिद्धम् । एतान् प्रासादमन्त्रान् स्थितिमार्गे एव उद्धरेत् ।

**आत्मानं जीवमित्युक्तं जीवः शिव इति स्मृतः ।**

**तस्मादेतच्छिवार्णत्वात् आत्मबीजमिति स्मृतम् ।।**

**भूतान्तं तु समुद्धृत्य आदिप्रकृतिसंयुतम् ।**

**प्रथमं तु समुद्धृत्य आदिप्रकृतिसंयुतम् ।।**

**तयोर्मध्यगता शक्तिरात्मबीजमिति स्मृतम् ।**

**हृत्सरोरुहमध्ये तु संस्थितं सर्वकारणम् ।।**

**आत्मप्रासाद इत्युक्तः जीवप्रासाद उच्यते ।**

**एते वै शिवबीजत्वात् शिवमन्त्रा इति स्मृताः ।।**

**शुद्धादि चात्मपर्यन्तं स्थितिमार्गेण चोद्धरेत् ।**

(वा.शु.आ.,५.४६-५०)

## प्रायश्चित्तम्

व्रतानुष्ठानादीनां नियमभङ्गे अपराधक्षमायाचनार्थमनुष्ठेयं कर्म । सर्वत्रापि पञ्चाक्षरीमन्त्रजपः प्रायश्चित्तविधित्वेन परिगण्यते ।

**प्रमादान्नियमे लुप्ते मूलपञ्चाक्षरीं जपेत् ।**

**प्रायश्चित्तमिदं देवि व्रतजातादिलोपने ।।**

(वी.स.सं.,७.४९)

## प्रारब्धम्

सञ्चितम्, आगामि, प्रारब्धम् इति त्रिविधकर्मस्वन्यतमम् । फलं दातुमारब्धं कर्म प्रारब्धकर्म । प्रारब्धकर्मान्तं संसारः । प्रारब्धं च कर्मानुभोगेनैव नाशनीयम् ।

**यावत् प्रारब्धकर्माणि संसारः प्रतिभासते ।**

**तावत् कर्माणि कुर्वीत वेदतन्त्रोदितानि च ।।**

(श.त्र., पृ.५४, श्लो-५४)

## प्रेरयिता

भोक्ता, भोज्यम्, प्रेरयिता चेति तत्त्वत्रयेऽन्यतमम् । महेश्वरः । स च शुद्धोपाधिः, सर्वज्ञः, सर्वकर्ता, नित्यमुक्तश्च ।

**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।**

(श्वे.उ., १.१२)

**भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम् ।**

**अत्र प्रेरयिता शम्भुः शुद्धोपाधिर्महेश्वरः ।**

**सर्वज्ञः प्रेरकः शम्भुः ................. ।**

(सि.शि., ५.४१-४३)

# ब

## बन्धः

पाशः । स च बन्धः (पाशः) पञ्चविधः । मायेयबन्धः, कर्मबन्धः, मलबन्धः, बैन्दवबन्धः, रोधश्चेति । कलादिपृथिव्यान्ततत्त्वस्वरूपयुक्तः बन्धः मायेयबन्ध इति कथ्यते । ज्योतिष्टोमब्रह्महत्यादिभिरार्जितः, अपूर्वसंज्ञकः संस्कारः कर्मबन्ध इति कीर्त्यते । स च सुखदुःखमोहादि-फलयुक्तः सन् पुर्यष्टके बुद्धितत्त्वं समाश्रित्य तिष्ठति । आत्मनो स्वरूपभूतः तस्य ज्ञानक्रिये समावृत्य व्यवस्थितः नित्यः, व्यापकः, जडात्मकः बन्धः मलबन्धः (आणवमलस्वरूपः) । विद्येश्वरादीनां शरीराणां कारणं सूक्ष्मादिवैखर्यन्तस्य वाचः कारणं च बैन्दवबन्धः । मायेयम्, आणवम्, कर्म, बैन्दवं चेति चतुर्णां पाशानां कारणीभूता ऐश्वरी रोधशक्तिः तिरोधानबन्धः (रोधबन्धः) ।

**कलादिपृथिव्यन्तभुवनादिस्वरूपवान् ।।**
**बन्धो मायेयसंज्ञस्तु विद्वद्भिः परिकीर्तितः ।**
**ज्योतिष्टोमब्रह्महत्याद्युत्पन्नेऽपूर्वसंज्ञकाः ।**
**संस्कारः कर्मशब्देन बन्धोऽन्यः परिकीर्त्यते ।**
**पुर्यष्टकान्तरगतं बुद्धितत्त्वमुपाश्रितः ।।**
**सुखदुःखविमोहादि फलयुक्तश्च जायते ।**
**बन्धो मलाभिधानस्तु स्वरूपाण्यात्मनां पृथक् ।।**
**ज्ञानक्रियां च सततं समावृत्य व्यवस्थितः ।**

**नित्यश्चव्यापकश्चैव भवेदपि जडात्मकः ।।**

**विद्याविद्येश्वरादीनां शरीराणां च करणम् ।**

**सूक्ष्मादिवैखर्यन्तस्य कारणं बैन्धवाभिधः ।।**

**मायेयमाणवं कार्मं बैन्दवं च चतुष्टयम् ।**

**पाशानां कारणीभूता तेषु बन्धेषु या पुनः ।।**

**सा शक्तिरैश्वरी रोधः पाशश्चेति निगद्यते ।**

(शि.त.र.,भा.३.,९३-१००)

## बहिर्यज्ञः (यागः)

अन्तर्यागः, बहिर्यागः (यज्ञः) इति द्विविधयागयोरन्यतरः । तत्र अग्निष्टोमादियज्ञाद्यं कर्म बहिर्यागः । अस्य हिंसादिदोषयुक्तत्वात् हेयत्वम् । तत्र देवताः पाषाणमृण्मयाः । अन्तर्यागस्तु ध्यानज्ञानस्वरूपः । तत्र परशिवो हृदयस्थ एव ।

**बहिर्यज्ञरतानां तु देवाः पाषाणमृण्मयाः ।**

**अन्तर्यागवतां देवि हृदयस्थ सदाशिवः ।।**

**ज्ञानं ध्यानं न यस्यास्ति स न वेत्ति परं शिवम् ।**

**तस्माद्यज्ञादिकं बाह्यं त्यक्त्वा स्वर्गादिसाधनम् ।**

**गुरोर्लब्ध्वा परं ज्ञानं ध्यानयोगरतो भवेत् ।।**

(सू.आ., क्रि.पा., ६.३१ -३३)

## बाणलिङ्गम्

स्फाटिकम्, शैलजम्, चन्द्रकान्तम्, बाणम्, सूर्यकान्तं चेति पञ्चविधलिङ्गेष्वेकतमम् ।

**स्फाटिकं शैलजं वापि चन्द्रकान्तमयं तु वा ।**

**बाणं वा सूर्यकान्तं वा लिङ्गमेकं समाहरेत् ।।**

(सि.शि.,६.२२)

## बाह्यपीठार्चनम्

बाह्यपीठार्चनं करपीठार्चनं चेति अर्चनस्य द्वैविध्यम् । तत्र बहिः करपीठं विहाय अन्यत्र पीठे लिङ्गं विन्यस्य या पूजा विधीयते तत् बाह्यपीठार्चनम् । बाह्य- पीठार्चनापेक्षया करपीठार्चनं प्रशस्ततरम् । तदेव मुमुक्षुभिः वीरशैवैराद्रियते ।

**बाह्यपीठार्चनादेतत् करपीठार्चनं वरम् ।**
**सर्वेषां वीरशैवानां मुमुक्षूणां निरन्तरम् ।।**

(सि.शि., ६.५५)

**न्यूनाधिकारिणां बाह्यपीठार्चनमुक्तम् ।**
**अथोच्यते बहिर्पिठं ततो न्यूनाधिकारिणः ।**

(पार. आ., १३.१०)

## बाह्यभक्तिः

भक्तिभेदः । बाह्यभक्तिः आभ्यन्तरभक्तिरिति द्विविधभक्त्योरन्यतरः । तत्र बाह्या स्थूला इत्युच्यते । शुद्धदेशे रत्नविरचिते सिंहासने शिवलिङ्गस्य या पूजा सा बाह्यभक्तिरिति निगद्यते ।

**सा भक्तिः द्विविधा ज्ञेया बाह्याभ्यन्तरभेदतः ।**
**बाह्या स्थूलान्तरा सूक्ष्मा वीरमाहेश्वरादृता ।।**
**सिंहासने शुद्धदेशे सुरम्ये रत्नचित्रिते ।**
**शिवलिङ्गस्य पूजा या सा बाह्या भक्तिरुच्यते ।।**

(सि.शि., ९.६-७)

## बाह्यलिङ्गम्

बहिरिन्द्रियगोचरं लिङ्गम् । अत्रेष्टलिङ्गमेव बाह्यलिङ्गम् ।

**बहिरिन्द्रिययोग्यं च बाह्यलिङ्गमुदाहृतम् ।**

(क्रि.सा.,भा-१, ४.२८)

## बाह्यलिङ्गधारणम् = बहिर्लिङ्गधारणम्

बहिरिन्द्रियगोचरबाह्यलिङ्गस्य धारणम् । स्थूलशरीरे इष्टलिङ्गधारणमेव बहिर्लिङ्गधारणम् । अन्तर्लिङ्गधारणे शक्तो अशक्तो वा बाह्यलिङ्गधारणं तु अनिवार्यमेव, यतः बाह्यलिङ्गस्य आन्तरलिङ्गसद्रूपत्वात् ।

**अन्तर्धारयितुं लिङ्गमशक्तः शक्त एव वा ।**

**बाह्यं च धारयेल्लिङ्गं तद्रूपमिति निश्चयात् ।।**

(सि.शि.,६.४८)

**एवमस्यामुपनिषदि ज्योतिर्लिङ्गानुसन्धानरूपान्तर्लिङ्गधारणं विधाय इष्टलिङ्गरूपबाह्यलिङ्गधारणमपि विधीयते । ''सर्वलिङ्गं स्थापयति'' (तै.आ., १०.१६.१) इति ।**

(लि.धा.चं., पृ.३५)

**''इह तु लक्षणां विनैव देवधारणो भूयासमित्यत्र बहिर्लिङ्ग-धारणे मोक्षरूपफलविधानेन सर्वसामञ्जस्यकरणे को भार इति ।''**

(लिं.धा.चं., पृ.११३)

## बिन्दुः

प्रपञ्चसृष्टेः कारणीभूतेषु नादबिन्दुकलातत्त्वेष्वन्यतमः । मूलतः जगत्कारणं लिङ्गं बिन्दुनादात्मकमुच्यते । तत्र शक्तिः मातास्वरूपिणी बिन्दुः, शिवः पितृस्वरूपः नादः । तयोः संयोग एव कलेत्युच्यते ।

**बिन्दुनादात्मकं लिङ्गं जगत्कारणमुच्यते ।**

**माता देवी बिन्दुरूपा नादरूपः शिवः पिता ।**

(चं.आ., क्रि.पा.,३.१६-१७)

**बिन्दुः शक्तिः शिवो नादः कला संयोग एव च ।**

**शिवशक्त्योर्भवेद्योगो जगत्सृष्ट्यर्थकारणम् ।।**

(शि.त.र.,भा-१, १.४.२५)

## बिन्द्वाकाशः

सदाशिवादितत्त्वानां कारणं परशिवः विभुत्वात् व्यापकः सः बिन्दुरूप इत्यपि ध्येयः । कारणत्वात् बिन्दुः, व्यापकत्वात् आकाश इव विभुः इत्यस्मिन्नर्थे शिव एव बिन्द्वाकाश इत्युच्यते । शिवेनैकात्म्यं प्राप्तवान् शिवयोगी अपि बिन्द्वाकाशः ।

**सदाशिवादितत्त्वानां कारणं व्यापकः परः ।**

**बिन्दुरूपः शिवो ध्येयो बिन्द्वाकाश इतीर्यते ।।**

(कि.आ.– मरितोण्टदार्यस्य तत्त्वप्रदीपिकायामुद्धृतम्, सि.शि.– तत्त्व.प्र.,पृ.४८४)

## बिन्द्वाकाशलिङ्गम्

बिन्द्वाकाश एव बिन्द्वाकाशलिङ्गम् । आकाशवदात्मा सर्वातीतः सर्वव्यापकश्चेति अनुसन्धानस्थितिः । आत्मानम् आकाशे, आकाश-मात्मनि अनुसन्धानमित्यर्थः ।

**ध्यात्वात्मानं यथाकाशे ध्यात्वाकाशं तथात्मनि ।**

**आत्माकाशमयं लिङ्गं बिन्द्वाकाशमुदाहृतम् ।।**

(क्रि.सा.,भा–३, पृ.१२१; शि त.र.,भा–३, ९.९.३१–३२)

## बिन्द्वाकाशस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेषु चान्यतमम्। शरणस्थलगत-द्वादशलिङ्गस्थलेष्वेकतमम् । बिन्द्वाकाशसम्पन्नस्य शिवयोगिनः स्थलम् । सर्वेषां प्राणिनामुपरि वर्तमान आकाशो यथा विभुः सन् ज्ञायते तथा अस्य पिण्डाकाशस्थलसम्पन्नस्य शिवयोगिन आत्मा आकाशवद् व्यापकः सन् ज्ञायते इत्युपमानार्थं यदुक्तं तद् बिन्द्वाकाशस्थलम् ।

**यथाकाशो विभुर्ज्ञेयः सर्वप्राण्युपरि स्थितः ।**

**तथात्मेत्युपमानार्थं बिन्द्वाकाशस्थलं विदुः ।।**

(सि.शि., १९.५९)

## बीजाक्षराणि

दैवोपासननिर्दिष्टमन्त्रारम्भे उपयुज्यमानाक्षराणि । ॐकारपूर्वकाणि ह्रां, ह्रीं इत्यादीन्यक्षराणि बीजाक्षराणीत्युच्यते । तद्यथा पञ्च कलशप्रोक्षणे – "ॐ ह्रां ईशानाय नमः । ॐ ह्रीं वामदेवाय नमः । ॐ ह्रूं अघोराय नमः । ॐ ह्रें सद्योजाताय नमः । ॐ ह्रैं तत्पुरुषाय नमः" इत्येवं मन्त्रोच्चारणे ह्रांकारादयः बीजक्षराणि ।

**ह्रां ह्रीं ह्रूं च ततो ह्रें ह्रैं बीजैरोङ्कारपूर्वकैः ।**

**इशानादि नमोऽन्तैस्तु प्रोक्षयेत्कलशान्क्रमात् ।।**

(शि.त.र.,भा-३, ९.८.२४)

## बुद्धिः

१. षट्त्रिंशत्तत्त्वान्यतमम् । अन्तःकरणेष्वन्यतमम् । बुध्यते अनया इति बुद्धिः निश्चयकारिणी । अहङ्कृतेर्गुणः ।

**अथ बोध्यते यच्च बुध्यते बुद्धिरुच्यते ।**

(वी.ध.शि.,पृ.२४३)

**अहङ्कृतेर्गुणो बुद्धेः गुणस्त्वध्यवसायकः ।**

**इदं रजतमेवेति निश्चयोऽध्यवसायकः ।।**

(शि.त.र.,भा-३, ९.३.३०)

**अहङ्कारात् ततो बुद्धिः बुद्धेश्चित्तस्य सम्भवः ।**

(अ.सू.,६.२९)

२. महेश्वरस्य उपाङ्गषट्के एकतमा ।

**भक्तिः कर्मक्षयो बुद्धिर्विचारो दर्पसंक्षयः ।**

(पार.आ.,६.४१)

(पश्यत – उपाङ्गषट्कम्)

## बुद्धिहस्तः

बुद्धिः माहेश्वरस्य हस्तः । माहेश्वरस्थले ज्ञानशक्तिके रसनाङ्गे गुरुलिङ्गाभिधवामदेववक्त्रे रुचिपदार्थं निष्ठाभक्त्या समर्पयेदिति नियमः ।

**माहेश्वरस्थले ज्ञानशक्तिके रसनाङ्गके ।**
**गुरुलिङ्गाभिधे वामदेववक्त्रे विशेषतः ।।**
**बुद्धिहस्तेन तु रुचिं निष्ठाभक्त्या समर्पयेत् ।।**

(का.आ., क्रि.पा.,७.६१)

(पश्यत – अहङ्कारहस्तः)

## बैन्दवः = बैन्दवपाशः = बिन्दुपाशः

बन्धः, पाशः । बैन्दवः, आणवः, कार्मिकः, मायेयः रोधशक्तिः इति बन्धा पञ्च । तत्र बैन्दवोऽप्यन्यतमः ।

विद्या, विद्येश्वरादीनां शरीरिणां कारणं सूक्ष्मादि वैखर्यन्तं बैन्दवः ।

**विद्या विद्येश्वरादीनां शरीराणां च कारणम् ।**
**सूक्ष्मादि वैखर्यन्तस्य कारणं बैन्दवाभिधः ।।**

(शि.त.र.,भा–३.९.३.९८)

**तत्र शुद्धाध्ववर्तिनां बैन्दवः रोधशक्तिश्चेति पाशद्वयम् । मिश्राध्ववर्तिनां बैन्दवः रोधशक्तिः, आणवः, कार्मिकश्चेति पाशचतुष्टयम्। अशुद्धाध्ववर्तिनां तु बैन्दवादिचतुर्भिः सह मायीयश्चेति पञ्चपाशाः ।**

(शै.सि.दी., पृ–७)

**अत्र बैन्दवमायेयपाशावागन्तुकावुभौ ।**

(शि.त.र.,भा-३, ९.३.१०७)

**शुद्धाध्ववर्तिनां बिन्दुरोधौ पाशावुभौ मतौ ।।**

**मिश्राध्ववर्तिनामुक्तौ द्वौ द्वौ कामाणवाभिधौ ।**

**एवमेतद्धि बद्धानां चतुष्टयमुदाहृतम् ।।**

**मायेयसहितास्ते च पश्चाशुद्धाध्ववर्तिनाम् ।**

(शि.व.र.,भा-३, ९.३.१००-१०२)

## ब्रह्म

बृहत्वात् बृंहणत्वाच्च ब्रह्म । शिवः । लिङ्गम् । शिवतत्त्वम् । शून्यम् । परशिवः । परवस्तु । सकलसृष्टेः मूलभूतकारणं परात्परं वस्तु परतत्त्वम् ।

**विश्वोत्पत्तिविनाशसंस्थितिकृते तस्मै नमो ब्रह्मणे ।**

**बृहत्वात् बृंहणत्वाच्च ब्रह्मेति परिकीर्तितम् ।।**

(वा.शु.आ.,७.१-२)

**निष्कलं च निराकारं परं ब्रह्म शिवाभिधनम् ।।**

(कै.उ.,शा.व्या.,२.५)

**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः ।**

**ब्रह्मेति व्यपदेशस्य विषयं यं प्रचक्षते ।**

**वेदान्तिनो जगन्मूलं तं नमामि परं शिवम् ।।**

(सि.शि.,१.१-२)

**लयं गच्छति यत्रैव जगदेतच्चराचरम् ।**

**पुनः पुनः समुत्पत्तिं तल्लिङ्गं ब्रह्म शाश्वतम् ।।**

(सि.शि., ६.३७)

**अथातो ब्रह्मजिज्ञासेत्यस्मिन् सूत्रे यदीरितम् ।**
**तद्ब्रह्म केवलं लिङ्गं ज्ञातव्यं च मुमुक्षुभिः ।।**

(क्रि.सा., २.५६)

**नित्यं पूर्णं चिदानन्दं सद्रूपं ब्रह्म कीर्तितम् ।**

(शि.त.र., भा-१, १.३.१४)

(पश्यत – लिङ्गम्)

**ब्रह्मभेदः**

प्रथमं ब्रह्म पञ्चविधम् । एकैकमपि ब्रह्म पुनः पञ्चविधम् । एवं ब्रह्म पञ्चविंशतिभेदयुक्तम् । निष्कलशिवतत्त्वस्वरूपं ब्रह्म सकलतत्त्वैः युक्तं सत् पञ्चब्रह्मतत्त्वं भवति । मूर्तिब्रह्म, तत्त्वब्रह्म, भूतब्रह्म, पिण्डब्रह्म, कलाब्रह्म चेति ब्रह्मपञ्चकम् । प्रणवः ब्रह्मादित्रिमूर्तिस्वरूपम् । अतः ब्रह्मण मूर्तिरूपं । साकल्यादि पञ्चप्रणवस्वरूपमेव मूर्तिब्रह्म । अकार–उकार–मकारणां हकाररूपं शिवबीजमेव प्रभुः । शुद्धप्रासादादारभ्य आत्मप्रासादपर्यन्तं पञ्चप्रासादस्वरूपमेव तत्त्वब्रह्म । लकारः मांसबीजम् । तदेव पार्थिवं बीजम्। वकारः मेधोबीजम् । तदेव अबीजम् । रेफः तृतीयं भूतबीजम् । तदेव तेजोबीजम् । यकारः चतुर्थं भूतबीजम् । तदेव मारुतबीजम् । हकारः पञ्चमभूतबीजम् । तदेव व्योमबीजम् । एतानि पञ्चभूतबीजानि आहत्य भूतब्रह्मेत्युच्यन्ते । शिवबीजभूते हकारे अकारादिपञ्चजीवस्वराणां सम्बन्धेन पिण्डः भवति । पिण्डस्वरूपत्वात् कर्मेश एव पिण्डब्रह्म । ईशान–तत्पुरुष–अघोर–वामदेव–सद्योजातानां पञ्चब्रह्मणां तत्त्वस्वरूपमेव कलाब्रह्म । तत्र ईशानादि पञ्चब्रह्मणां मन्त्राः आहत्य अष्टात्रिंशत् कलायुक्ताः भवन्ति । तस्मात् ईशानादयः कलाब्रह्म ।

**ब्रह्मतत्त्वमिति ज्ञेयं भवेद् तद् ब्रह्म पञ्चधा ।**
**पञ्चब्रह्मप्रकारेण पञ्चविंशति भेदकम् ।।**
**एभिर्भेदैर्युतं पञ्चविंशतिस्तत्त्वसंयुतम् ।**
**इत्येतत् पञ्चभेदत्वात् ब्रह्मपञ्चकमीरितम् ।।**

मूर्तिब्रह्म तथापूर्वं तत्त्वब्रह्म द्वितीयकम् ।
भूतब्रह्म तृतीयं स्यात् पिण्डब्रह्म चतुर्थकम् ।।
पञ्चपञ्च कलाब्रह्म ब्रह्मपञ्चकमीरितम् ।
ब्रह्मा विष्णुश्च रुद्रश्च मूर्तयः प्रणवाधिपाः ।
तस्मात् प्रणवरूपं तु मूर्तिरूपमुदाहृतम् ।।
साकल्यादिस्तु यत्पञ्च मूर्तिब्रह्मस्तदुच्यते ।
एतेषां चैव तत्त्वानां शिवतत्त्वं प्रभुः स्मृतम् ।
एतच्छिवमयं बीजं शिवार्णं चेति कीर्तितम् ।
तस्मात् शुद्धादिचात्मान्तं तत्त्वब्रह्मप्रकीर्तितम् ।
प्रथमं मांसबीजं स्यात् द्वितीयं मेधसो भवेत् ।
तृतीयं षष्ठबीजं स्यात् चतुर्थं सप्तमं तथा ।।
पञ्चमं पञ्चमं विद्यात् पाञ्चभौतिकमुच्यते ।
मांसं वै पार्थिवं बीजं मेधसो ह्याप उच्यते ।।
षष्ठं तेजो विनिर्दिष्टं सप्तमं मारुतात्मकम् ।
पञ्चमं व्योमबीजं स्यात् भूतब्रह्मेति कीर्तितम् ।।
शिवार्णे जीववर्णानां संयोगात् पिण्डमुच्यते ।
कर्मेशः पिण्डरूपत्वात् पिण्डब्रह्मेति कीर्तितः ।।
ईशानः पुरुषश्चैव अघोरो वामदेवकः ।
सद्योजातश्च पञ्चैते कलाब्रह्म प्रकीर्तिताः ।।

(वा.शु.आ., ७.३-१२, १८-१९)

## ब्रह्मघातकः

ब्रह्मघ्नः । ब्रह्मघ्नः, सुरापः, स्तेयी, गुरुतल्पगः एषां सम्पर्कवान् इति पञ्चपातकिष्वन्यतमः । शास्त्रश्रवणहीनः, गोविघ्नकर्ता, पिशुनः, क्रूरः, उद्वेगजनकः, ब्रह्मघातकः इत्युच्यते ।

**ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।**
**महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ।।**
**यः श्रोतॄणां शाङ्करीयं शास्त्रं काव्यादिकं तथा ।**
**न श्रावयत्यभिज्ञस्सन् तमाहुर्ब्रह्मघातकम् ।।**
**पिशुनः सर्वलोकेषु रन्ध्रान्वेषणतत्परः ।**
**उद्वेगजनकः क्रूरस्तमाहुर्ब्रह्मघातकम् ।।**

(वी.स.सं, २.४३–४५, ४७)

## ब्रह्मचक्रम्

योगशास्त्रसम्बद्धेषु शरीरस्थितनवचक्रेष्वेकतमम् । तच्च प्रथमं। त्रिरावृत्तम्, भगसदृशम् । अपाने मूलकन्दस्वरूपम् । तत् कामरूपं, वह्निकुण्डमिति कथ्यते । तत्र जीवरूपिणीं कुण्डलिनीं ध्यायेत् मुक्तिहेतवे । कुण्डलिनी एवाभीष्टदा शक्तिः । (इदमेवाधारचक्रं स्यात् ।)

**नवस्वेव हि चक्रेषु ..................... ।।**
**प्रथमं ब्रह्मचक्रं स्यात् त्रिरावृत्तं भगाकृति ।।**
**अपाने मूलकन्दाख्यं कामरूपं च तज्जगुः ।**
**तदेव वह्निकुण्डं स्यात् तत्त्वकुण्डलिनी तथा ।।**
**तां जीवरूपिणीं ध्यायेज्ज्योतिष्ठं मुक्तिहेतवे ।**

(यो.रा.उ.,५–७)

**मूलाधारे त्रिधावर्तं ब्रह्मचक्रं भगोपमम् ।**
**तत्र हेमनिभां ध्यायेदधः शक्तिमभीष्टदाम् ।।**

(शि.यो.प्र.,३.८)

## ब्रह्मचर्यम्

ब्रह्मचारिणः भावः ब्रह्मचर्यम् । ब्रह्मचारिणः धर्म इति यावत् । गुरुकुलवासः, भिक्षाचर्यम्, वेदाध्ययनमित्यादिकं ब्रह्मचारिणः धर्मः । स एव प्रथमाश्रमधर्म इति कथ्यते ।

**अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा**

(सि.शि., १६.५९)

**तत्र गुरुकुलवासभिक्षाचरणवेदाध्ययनादिकं प्रथमाश्रमधर्मः ।**

(वी.उ.,पृ.१५)

(पश्यत – ब्रह्मचारी)

## ब्रह्मचारी

ब्रह्मणि चरतीति ब्रह्मचारी । ब्रह्म च वेदः । तदध्येता ब्रह्मचारी । शिष्येष्वन्यतमः । मुख्यशिष्यान्यतरः ।

**ब्रह्मवेदस्तदध्येता ब्रह्मचारीति गीयते ।**

**ब्रह्मचारी गृही चेति द्विधा मुख्यो विभिद्यते ।**

(वी.स.सं., १४.१-२)

**ब्रह्मचारिभेदः**

१. स च त्रिधा–पट्टाधिकारी, चराधिकारी, निराभारीति भेदात्।

**उक्तलक्षणसम्पन्नो ब्रह्मचारी पुनस्त्रिधा ।।**

**पट्टाभिषेकवानाद्यः प्रोक्तश्चरपतिस्तथा ।**

**निराभारस्तृतीयः स्यात्सर्वलोकेषु विश्रुतः ।।**

(वी.स.सं, १४.३.४)

२. स च नैष्ठिकः, भौतिकः इति द्विधा । यः बाल्यादारभ्य आजीवनं ब्रह्मचारी सः नैष्ठिकः । यः नियमितकालपर्यन्तं ब्रह्मचारी सः भौतिकः । नैष्ठिकः मध्यमः । भौतिकः अधमः ।

**ब्रह्मचारी द्विधा प्रोक्तो नैष्ठिको भौतिकस्त्विति ।**

**नैष्ठिको मध्यमो ज्ञेयो भौतिकस्तु ततोऽधमः ।।**

**आकौमाराद् ब्रह्मचारी यावज्जीवं स नैष्ठिकः ।**

**व्यवस्थीकृतकालान्तं ब्रह्मचारी पुनर्गृही ।।**

**स भौतिकः .......................... ।**

(क्रि.सा.,भा-३, २५.३-५)

## ब्रह्मज्ञानम्

ब्रह्मणः शिवस्य परात्परवस्तुनः ज्ञानम् । परतत्त्वस्य ज्ञानम् । सत्ताकारं जगन्मयं भेदरहितमानन्दमेव ब्रह्म इति ज्ञानमेव ब्रह्मज्ञानम् । तस्मिन् ज्ञाने समुत्पन्ने सति सर्वं चिद्रूपेण दृश्यते ।

**अपरिच्छिन्नमानन्दं सत्ताकारं जगन्मयम् ।**

**ब्रह्मेति लक्षणं ज्ञानं ब्रह्मज्ञानमिहोच्यते ।।**

**ब्रह्मज्ञाने समुत्पन्ने विश्वोपाधिविवर्जिते ।**

**सर्वं संविन्मयं भाति तदन्यन्नैव दृश्यते ।।**

(सि.शि.,१९.९४-९५)

## ब्रह्मनिष्ठा

ब्रह्मणि स्थिता गुणत्रयात्मिका विमर्शाशक्तिः । भोक्ता, भोज्यम्, प्रेरयिता इति वस्तुत्रयजननी ।

**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।**

(श्वे.उ., १.१२)

**गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी ।**

**तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा ।।**

**भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम् ।**

(सि.शि.,५.३९, ४१)

## ब्रह्मन्यासः

लिङ्गपूजायाः पूर्वं देहस्य विद्यामयत्वसम्पादनार्थं क्रियमाणेषु पञ्चविधन्यासेषु एकतमः । तत्र पञ्चब्रह्मणां नमोऽन्तं नामस्मरणपूर्वकं (सद्योजाताय नमः इत्यादि) क्रियमाणः न्यासः ब्रह्मन्यासः ।

**तत्राद्यो मातृकान्यासो ब्रह्मन्यासः ततः परम् ।**

(चं.आ.,क्रि.पा.,११.३६)

## ब्रह्मपञ्चकम्

मूर्तिब्रह्मेत्यादि ब्रह्मपञ्चकम् ।

**पञ्चमञ्च कलाब्रह्म ब्रह्मपञ्चकमीरितम् ।**

(वा.शु.आ.,७.६)

(पश्यत – ब्रह्म, पञ्चब्रह्म)

## ब्रह्मपुरम्

ब्रह्मणः निवासस्थलम् । तच्च शरीरम् । ब्रह्मणः सर्वत्र विद्यमानत्वेऽपि तत्र अगोचरत्वात् शरीरे पुनः अभिव्यक्तेः शरीरं ब्रह्मपुरमित्युच्यते ।

**ब्रह्म यत्सच्चिदानन्दं परिपूर्णं च सर्वतः ।**
**सर्वत्र दृश्यते नैव करणागोचरत्वतः ।**
**दृश्यते तच्छरीरेऽस्मिन् तस्माद्ब्रह्मपुरं च तत् ।।**

(क्रि.सा. भा–१, २.१३६–१३७)

## ब्रह्मभूतः

मूलाहङ्काररूपेण चिच्छक्तिः यस्मिन् परबिन्दौ विभाति स बिन्दुः ब्रह्मभूतः ।

**अन्तःकरणरूपेण जगदङ्कुररूपतः ।**
**यस्मिन् विभाति चिच्छक्तिः ब्रह्मभूतः स उच्यते ।।**

(सि.शि., २०.३७)

**चिच्छक्तिः, स्थूलवेद्यतिरोभावलक्षणा जगदङ्कुरकारणीभूतेन मूलाहङ्काररूपेण यस्मिन् परबिन्दौ भाति सः विमर्शाख्यपरबिन्दुरेव ब्रह्मभूतः परब्रह्माख्यपरशिव इत्युच्यते । महालिङ्गमित्यर्थः ।**

(सि.शि.तत्त्व.प्र.,२०.३७)

## ब्रह्माण्डम्

अनेकजीवराशिविशिष्टं जगत् ।

**यथा ज्योतींषि भासन्ते भूताकाशे पृथक् पृथक् ।**

**तथा भान्ति पराकाशे ब्रह्माण्डानि विशेषतः ।।**

(सि.शि.,१९.७४)

**ब्रह्माण्डकोटयस्तस्य निर्मातुर्लिङ्गरूपिणः ।**

(वी.प्र.,पृ.६०.श्लो.१०)

**चतुर्दशभुवनं सकलानां प्रजानामावासभूमिः ब्रह्माण्डम् ।**

(शै.सि.दी.,पृ.३)

## ब्रह्मास्त्रम्

विद्याङ्गे विद्यमानेषु षडस्त्रेष्वेकतमम् ।

**शिवास्त्रं पशुपत्यस्त्रं ब्रह्मास्त्रं क्षुरिकास्त्रकम् ।**

(वा.शु.आ.,८.४५)

## ब्रह्मास्त्रमन्त्रः

विद्याङ्गे विद्यमानेषु षडस्त्रमन्त्रेष्वेकतमः । ॐकारः, ब्रकारः, ह्माकारः, स्त्राकारः, यकारः, फट्कारश्चेति षड्वर्णात्मकः ब्रह्मास्त्रमन्त्रो भवति । (ॐ-ब्र-ह्मा-स्त्रा-य-फट्)

**ॐकारः प्रथमं बीजं ब्रकारस्तु द्वितीयकम् ।**

**ह्माकारः स्यात् तृतीयं तु स्त्राकारस्तु चतुर्थकम् ।।**

**यकारः पञ्चमं बीजं षष्ठं फट्कारको भवेत् ।**
**अयं ब्रह्मास्त्रमन्त्रश्च षड्वर्णः शुभदो भवेत् ।**

(वा.शु.आ.,८.५१-५३)

## ब्रह्माण्डगोलकः

ब्रह्माण्डम् ।

**ज्ञानकोटिप्रविस्तीर्णः स च ब्रह्माण्डगोलकः ।**

(शि.त.र.,भा-३, ९.३.११६)

# भ

## भक्तः

यस्मिन् शिवभक्तिः समुत्पन्ना स भक्तः ।

गुरुलिङ्गजङ्गमेषु भक्तिमान् त्यक्तदेहाद्यभिमानवान् भक्तः । पूर्णम्, नित्यम्, चित्प्रकाशम्, परानन्दम्, चिद्रसम्, अखण्डत्वम् इति भक्तस्य षड्विधं लक्षणम् । एतच्च लक्षणं शिवतत्त्वरत्नाकारोक्तरीत्या ।

**शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते ।**

(सि.शि.,५.२६)

**त्यक्ताभिमानो देहादौ भक्त इत्युच्यते बुधैः ।**

(शि.त.र.,भा-३, ९.९.३६)

**अखण्डपूर्णं नित्यं च चित्प्रकाशं प्रकीर्तितम् ।**
**परानन्दं चिद्रसं च षड्विधं भक्तलक्षणम् ।**

(शि.त.र.,भा-१, १.३.२१-२२)

**भक्तभेदः**

१. गुरुभक्तः, लिङ्गभक्तः, चरभक्तः (जङ्गमभक्तः) इति भक्तः त्रिविधः ।

**गुरुभक्तो लिङ्गभक्तश्चरभक्तस्तथैव च ।**

**एवं भेदसमायुक्तः स भक्तः त्रिविधो भवेत् ।।**

(सू.आ., क्रि.पा.,८.३६; शि.त.र., भा-३, ९.९.३९; क्रि.सा.,भा-३, पृ.१२२)

२. स च आचारलिङ्गादीनाम् एकैकस्य भक्तः, मोही, पूजकः, वीरः, प्रसादी, प्राणी इति षोढ़ा । आहत्य षड्विधलिङ्गानां षट्त्रिंशद् भक्ताः ।

**मोही भक्तः पूजकश्च तथा वीरप्रसादवान् ।**

**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

(सू.आ.,क्रि.पा.,८.३७)

(पश्यत – भक्तभेदः)

## भक्तदेहिकलिङ्गस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतमाहेश्वर-स्थलस्य नवविधप्रभेदेषु च अन्यतमम् ।

**अथैवं शिवस्य जगन्मयत्वेपि .......... भक्तहृदये**

**प्रकाशत इति भक्तदेहिकलिङ्गस्थलं ................ ।**

(सि.शि.तत्त्व.प्र.,१०.७१, भूमिका)

**समस्तजगदात्मापि शङ्करः परमेश्वरः ।**

**भक्तानां हृदयाम्भोजे विशेषेण विराजते ।।**

(सि.शि.,१०.७१)

**शिव एव जगद्रूपजगव्द्यतिरिक्तरूपद्वयसमर्थ इति मत्वा, तं शिवं स्वस्मिन् आलिङ्ग्य स्थितमाहेश्वरे तथाविधः शिवः भक्तदेहिकदेहः**

**सन् स्थितभेदः यथा इत्याकाङ्क्षायामनन्तरं भक्तदेहिकलिङ्गस्थल-मित्युच्यते ।**

(कै.सा., पृ.४२)

## भक्तमार्गक्रियास्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतभक्तस्थलस्य पञ्चदशप्रभेदेषु चान्यतमम् । अस्मिन् स्थले नवविधभक्तिः भक्तेः बाह्याभ्यन्तरभेदः । तस्याः शिवप्रसादपूर्वकत्वम्, वीरशैवानां पञ्चयज्ञाः, वीरशैवमार्गावलम्बिनां विशेषाचाराश्च निरूपिताः । विभूतिरुद्राक्षाणि धृत्वा पञ्चाक्षरीं जप्त्वा नित्यलिङ्गार्चनरतस्य साङ्गक्रियावर्तननिरूपकं स्थलम् ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**
**भक्तमार्गक्रिया चैव गुरोर्लिङ्गस्य चार्चनम् ।।**

(सि.शि.,५.२७,२९)

**अथ भक्तमार्गक्रियास्थलं निरूपयितुं पूर्वं उक्तमपि भक्तस्थलं विशेषतः स्मारयति श्रीरेणुकः ।**

(सि.शि.तत्त्व.प्र.,९.१, भूमिका)

**शिवयोगी शिवः साक्षात् इति कैङ्कर्यभक्तितः ।**
**पूजनं सुमनाः कुर्वन् यः सः भक्त इतीरितः ।।**

(कै.सा.,पृ.२०)

## भक्तमाहात्म्यस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतप्रसादिस्थलस्य सप्तविधप्रभेदेषु अन्यतमम् ।

**प्रसादिस्थलमादौ तु गुरुमाहात्म्यकं ततः ।**
**ततो भक्तस्य माहात्म्यं ततः शरणकीर्तनम् ।।**

(सि.शि., ११.४-५)

**गुरोर्लिङ्गस्य माहात्म्यकथनाच्छिवयोगिनाम् ।**
**सिद्धं भक्तस्य माहात्म्यं तथाप्येष प्रशस्यते ।।**
**मे भजन्ति महादेवं परमात्मानमव्ययम् ।**
**कर्मणा मनसा वाचा ते भक्ता इति कीर्तिताः ।।**

(सि.शि.,११.४५-४६)

## भक्तस्थलम्

षड्विधप्रधानषट्स्थलेषु प्रथमम् । अस्यान्तर्गतत्वेन पञ्चदशाङ्गस्थलानि नवलिङ्गस्थलानि च उक्तानि । भक्तस्य लक्षणमुक्तम् । तेन क्रियमाणानां धर्माणां वचनं भक्तस्थलं भवति ।

**शैवीभक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते ।**
**तस्यानुष्ठेयधर्माणामुक्तिः भक्तस्थलं भवेत् ।।**

(सि.शि.,५.२६)

### १. पञ्चदशाङ्गस्थलानि

१. पिण्डस्थलम्, २. पिण्डज्ञानस्थलम्, ३. संसारहेयस्थलम्, ४. गुरुकारुण्यस्थलम्, ५. लिङ्गधारणस्थलम्, ६. भस्मधारणस्थलम्, ७. रुद्राक्षधारणस्थलम्, ८. पञ्चाक्षरीजपस्थलम्, ९. भक्तमार्गक्रियास्तलम्, १०. उभयस्तलम्, ११. त्रिविधसम्पत्तिस्थलम्, १२. चतुर्विधसारायस्थलम्, १३. सोपाधिदानस्तलम्, १४. निरुपाधिदानस्तलम्, १५. सहजदानस्थलम् चेति ।

(सि.शि., ५.२७-३०)

### २ नवलिङ्गस्थलानि

१. दीक्षागुरुस्थलम्, २. शिक्षागुरुस्थलम्, ३. ज्ञानगुरुस्थलम्, ४. क्रियालिङ्गस्थलम्, ५. भावलिङ्गस्थलम्, ६. ज्ञानलिङ्गस्थलम्, ७. स्वयस्थलम्, ८. परस्थलम्, ९. चरस्थलम् ।

(सि.शि.,१५.५-६)

## भक्तिः

भजनम्, सेवा । प्रसादाश्रिता इयं मुक्तिविधायिनी निर्माया च ।

**साङ्गा न्यूना च या सेवा सा भक्तिरिति कथ्यते ।**

(सि.शि.,९.१५)

### भक्तिभेदः

### १. द्विधा –

बाह्यभक्तिः, आभ्यन्तरभक्तिरिति भेदेन भक्तिर्द्विधा ।

सिंहासने शिवलिङ्गस्य पूजा ब्राह्यभक्तिः । सा स्थूला । लिङ्गे प्राणं प्राणे लिङ्गं च समाधाय स्वस्थेन मनसा ध्यायते चेत् सा आभ्यन्तरा भक्तिः । सा च सूक्ष्मा । एषा एव वीरमाहेश्वरैः आदृता । तादृशो भक्तिमतः जीवनं भ्रष्टबीजवत् पुनर्न जननकारणम् ।

**सा भक्तिः द्विविधा ज्ञेया बाह्याभ्यन्तरभेदतः ।**

(सि.शि.,९.६)

(पश्यत – बाह्यभक्तिः, आभ्यन्तर भक्तिः)

### २.१ त्रिधा

एताः कायिकी, मानसी, वाचिकी चेति तिस्रः भक्तयः क्रमशः बाह्या भक्तिः, आभ्यन्तरा भक्तिः बाह्याभ्यन्तराभक्तिश्चेति त्रिधा कथ्यन्ते ।

**बाह्यमाभ्यन्तरं चैव बाह्याभ्यन्तरमेव वा ।**

**मनोवाक्कायभेदैश्च त्रिधा तद्भजनं विदुः ।।**

**अन्यात्मविदितं बाह्यं शम्भोरभ्यर्चनादिकम् ।**

**तदेव तु स्वसंवेद्यमाभ्यन्तरमुदाहृतम् ।**

**मनो महेशप्रवणं बाह्याभ्यन्तरमुच्यते ।।**

(सि.शि.,९.१७,२०)

**२.२** अन्यरीत्याऽपि सा भक्तिः त्रिविधा । उत्तमा, मध्यमा, कनिष्ठा चेति । इष्टलिङ्गापेक्षया जङ्गमे या अधिका भक्तिः मा उत्तमा । जङ्गमेष्टलिङ्गयोः उभयोरपि समाना भक्तिः मध्यमा । इष्टलिङ्गापेक्षया जङ्गमे या न्यूना भक्तिः सा भक्तिः कनिष्ठा । तत्र उत्तमा भक्तिरेवाश्रयणीया ।

**चरेधिका स्वेष्टलिङ्गादुत्तमा भक्तिरुच्यते ।**
**चरेष्टलिङ्गयोस्तुल्या मध्यमेति निगद्यते ।**
**चरे न्यूना स्वेष्टलिङ्गात् कनिष्ठाभक्तिरुच्यते ।।**
**तस्माद्धि कुशलो नित्यं उत्तमां भक्तिमाश्रमेत् ।।**

(चं.आ., क्रि.पा.,४.३१-३२)

**२.३** साङ्गा भक्तिः मनोवाक्कायलक्षणकरणैः (मानसी, वाचिकी, कायिकी इति) त्रिधा भिन्ना । तत्र शिवलिङ्गादिस्वरूपचिन्ता मानसी । शिवमन्त्रजपस्तुतिरूपा वाचिकी । कायेन विधीयमाना शिवलिङ्गार्चनं कायिकी (सेवा) इत्यर्थः ।

**सा पुनः भिद्यते मनोवाक्कायसाधनैः ।**
**शिवरूपादिचिन्ता या सा सेवा मानसी स्मृता ।।**
**जपादिवाचिकी सेवा कर्मपूजा तु कायिकी ।।**

(सि.शि.,९.१६-१७)

**३. पञ्चधा**

सिद्धान्तशिखमणौ पञ्चयज्ञत्वेन निरूपितरीत्या वीरशैवप्रदीपिकोक्तरीत्या च भक्तिः पञ्चधा ।

**पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः ।**
**तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम् ।।**

(सि.शि.,९.२१; वी.प्र.,पृ.२४)

(पश्यत – पञ्चयज्ञाः)

### ४. षोढा

षट्स्थलाश्रितभक्तिः षड्विधा – समरसभक्तिः, आनन्दभक्तिः, अनुभावभक्तिः, अवधानभक्तिः, निष्ठाभक्तिः, श्रद्धाभक्तिश्चेति।

ऐक्यस्थले समरसरूपा, शरणस्थले आनन्दरूपा, प्राणलिङ्गिस्थले अनुभावरूपा, प्रसादिस्थले अवधानरूपा, माहेश्वरस्थले निष्ठा, भक्तस्थले च श्रद्धारूपा ।

**षट्स्थलेषु प्रविश्यैषा भक्तिः षड्विधरूपिणी ।**
**क्रमात् प्रवर्तते तत्तल्लक्षणोपाधिभेदतः ।।**
**षड्विधाकारतो भिन्ना भक्तिः साक्षाच्छिवात्मिका ।**
**षण्णां ऐक्यादि भक्तान्तस्थलानां वर्तते पदे ।।**
**भक्तिस्समरसाकारा प्रथमा परिगीयते ।**
**आनन्दाकारतो भाति द्वितीया भक्तिरुत्तमा ।।**
**तृतीयाऽनुभवाकारा भक्तिर्भवविनाशिनी ।**
**चतुर्थी परमा भक्तिरवधानात्मिका मता ।।**
**पञ्चमी नैष्ठिकी भक्तिः षष्ठी सद्भक्तिरीरिता ।**
**षड्धा भक्तिस्समेतानामङ्गानामनुपूर्वशः ।।**

(अ.सू.,४.२१, २३, २५–२७)

### ५. अष्टधा

शिवभक्तवात्सल्यम्, शिवपूजानुमोदनम्, शिवार्चनम्, शिवसेवा, शिवकथाश्रवणम्, शिवकथागायनम्, शिवकथागानम्, शिवदर्शनम्, शिवस्मरणम् इति भक्तिरष्टधा ।

**भक्तिरष्टविधा ह्येषा सर्वशास्त्रेषु दृश्यते ।**
**मद्भक्तजनवात्सल्यं पूजायाश्चानुमोदनम् ।**
**स्वयमभ्यर्चनं भक्त्या ममार्थे चाङ्गचेष्टनम् ।।**

**मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ।**

**ममानुस्मरणं नित्यं यच्च मामुपजीवति ।।**

(शै.र.,भा-१.७.६३-६५)

**६. नवधा**

श्रवणम्, कीर्तनम्, स्मरणम्, पादसेवनम्, अर्चनम्, वन्दनम्, दास्यम्, सख्यम्, आत्मनिवेदनम् इति भेदेन भक्तिर्नवधा ।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।**

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**

**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना ।**

(सि.शि.,९.२-३)

(पश्यत – नवविधभक्तिः)

एषा भक्तिः पारमेश्वरागमोक्तदिशा उपाङ्गषट्के एकतमा ।

**भक्तिः कर्मक्षयो बुद्धिर्विचारो दर्पसंश्रयः ।**

**सम्यग्ज्ञानमिति ....................... ।।**

(पार.आ.,६.४१)

(पश्यत – उपाङ्गषट्कम्)

## भक्तिकाण्डः

कर्मकाण्डः, ज्ञानकाण्डः, भक्तिकाण्डश्चेति त्रिविधकाण्डेष्वेकतमः । नाहं धर्माऽधर्मकर्मणः कर्ता, नाहं कर्तृत्वसाक्षी वा शिव एव कर्ता स एव साक्षी इत्युभयाभिमानरहितत्वं भक्तिकाण्ड इत्युच्यते ।

**न कर्ताहं न साक्षी च शिव एवेति कर्मणोः ।**

**द्वयाभिमानराहित्यं भक्तिकाण्डोऽयमुच्यते ।।**

(अ.सू.,८.२२)

(पश्यत – कर्मकाण्डः, ज्ञानकाण्डः)

## भक्तिचिह्नानि

१. रुद्राक्षधारणे प्रीतिः, भस्मत्रिपुण्ड्रे विश्वासः, मङ्गले पञ्चाक्षरे श्रद्धा, शिवशब्दे आसक्तिः, लिङ्गधारणे गौरवम्, चराचरेषु परमप्रीतिः, शिवकार्यार्थं मनोनिग्रहः, शैवशास्त्रे परमश्रद्धा, तद्बोधनं नित्यकार्यम्, स्वयं अध्ययनं चेति दश भक्तिचिह्नानि । एतान्येव चरलक्ष्माणि चरलक्षणानि इत्यपि कथ्यन्ते ।

**वक्ष्यामि भक्तिचिह्नानि प्रीती रुद्राक्षधारणे ।**
**भस्मत्रिपुण्ड्रे विश्वासः श्रद्धा पञ्चाक्षरे शुभे ॥**
**आसक्तिः शिवशब्दे चात्यादरो लिङ्गधारणे ।**
**चराचरे परा प्रीतिः शिवकार्ये मनोजयः ॥**
**शैवशास्त्रे परा श्रद्धा तदध्यापनमन्वहम् ।**
**स्वयमध्ययनं चापि चरलक्ष्माणि निश्चिनु ॥**

(चं.आ.,क्रि.पा.,४.९-११)

२. अपराणि भक्तिचिह्नानि दश उक्तानि । कण्ठे विकारः, गद्गदवाक्, जिह्वास्पन्दः ओष्ठयोः स्फुरणं च, शरीरकम्पनम्, रोमाञ्चः, स्वेदः, स्वलनम्, बाष्पनिर्गमनम्, रोदनम्, परवशता चेति दश भक्तेश्चिह्नानि ।

**कण्ठे विकारः प्रथमं गद्गदाख्यं द्वितीयकम् ।**
**जिह्वास्पन्दस्तृतीयं तु स्फुरणं त्वोष्ठयोरपि ॥**
**कम्पनं च शरीरस्य चतुर्थं भक्तिलक्षणम् ।**
**रोमाञ्चः पञ्चमं षष्ठः स्वेदश्च कीर्तितम् ॥**
**स्खलनं सप्तमं ज्ञेयमष्टमं बाष्पनिर्गमः ।**
**रोदनं नवमं चिह्नं दशमं पारवश्यकम् ॥**
**इमानि दशचिह्नानि भक्तेरुक्तानि शूलिना ॥**

(चं.आ.,क्रि.पा.,४.२०-२२)

## भक्तोपासनम्

भक्तेन अनुष्ठीयमानम् उपासनम् । तच्च ईशस्य सेवा ।

**भक्तोपासनमीशस्य सेवैव सततं भवेत् ।**

(पं.च.,१३.६५)

## भद्रमण्डलम्

लिङ्गार्चनपात्रविन्यासाय रजनीयेषु त्रिषु मण्डलेष्वेकतमम् ।

**भद्रमण्डलमाख्यातं भद्रदं मुक्तिदं परम् ।**

(का.आ.,क्रि.पा.,४.२२)

(पश्यत – मण्डलानि)

## भवः

शिवस्य नामाष्टके एकतमम् ।

१. भवतीति भवः । नामरूपात्मकजगद्रूपेण यः भवति सः भवः। स च महेश्वरः ।

**भव शर्वो मृडो रुद्रो हरश्शम्भुर्महेश्वरः ।।**

(चं.आ., क्रि.पा., ६.१७)

**कार्यात्मा सर्वभूतेशः सर्वेषामेव जीवनः ।**

**भव इत्युच्यते देवो भगवान् वेदवादिभिः ।।**

(श्रुति.भा.,पृ.५४)

२. संसारः । जननमरणरूपसंसारचक्रं निरन्तरं भवतीति संसारो भव इत्युच्यते । शिवस्य तु संसाराभावात् स अभवः इत्युच्यते । स एव च संसारसंहर्ता, भवनाशकः, भवहर इति कथ्यते ।

**भविष्यद्भवसंहर्तुरशेषभवहारिणः ।**

**साक्षाद्भवस्य विजितभावजस्याभवस्य च ।।**

(पं.च.,२.५५)

## भवरोगः

जननमरणे, अशनपिपासे, धनकनकवस्तुवाहनवनिताद्यभिलाषा इत्येतद्विशिष्टः संसारः । अयमेव भवः । भव एव रोगः भवरोगः । ज्वरादिरोगाणां दुःखहेतुत्वघातकत्वमिव भवस्यापि दुःखजनकत्व-घातकत्वात् ।

**आशानिबद्धः शतशो मृताः पुरा**
**तथैव चान्नात्खलु कोटिशो मृताः ।**
**नितम्बिनीस्वर्णभुवां कृते मृताः**
**सहस्रशस्ते भवरोगपीडिताः ।।**
**विचार्यमाणे बहुधा गुहेश्वर**
**त्वदर्थमेकोऽपि मृतो न दृश्यते ।**

(भ.गी.भा.,३.१६, पृ.९९, अत्रास्य उल्लेखः)

## भवलिङ्गम्

दशविधलिङ्गान्यतमभूतगुरुलिङ्गवाचकम् ।

**''भवलिङ्गाय नमः'' इत्यनेन गुरुलिङ्गस्तवः क्रियते, ''ज्येष्ठा जलमयी तत्र स्थित्युत्पादानरूपिणी । भवस्तदीशस्य ज्येष्ठो ज्येष्ठा तच्छक्तिरीरिता।।'' इति जलतत्त्वाधिष्ठितगुरुलिङ्गेन भवलिङ्गाभेदात् ।''**

(लिं.धा.चं, पृ.७५)

(पश्यत – दशविधलिङ्गानि)

## भवशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडश-शुद्धिष्वेकतमा ।

**जन्मराहित्यसम्पत्तिर्भवशुद्धिर्निगद्यते ।।**

(चं.आ.,क्रि.पा.,९.४३)

(पश्यत – षोडशशुद्धयः)

## भवी

भवः संसार अस्य अस्तीति भवी । बद्धः । प्राकृतजनः । स च मलपाशविशिष्टत्वात् सन्मार्गाचारविमुखः ।

**स्वमार्गाचारविमुखैर्भविभिः प्राकृतात्मभिः ।**

(सि.शि.,९.३०)

## भसितम्

पञ्चविधभस्मसु अन्यतमम् । तत्त्वानां भासनात् भसितमिति व्यवहारः। एतद् वामदेवमुखोद्भूतास्याः भद्रायाः गोमयेन उत्पन्नम् । नैमित्तिकेषु कार्येषु भसितं धारयेत् इति विधिः ।

**शिवाभिधातं यत् प्रोक्तं भासनात् भसितं तथा ।**

(बृ.जा.उ.,१.१५; सि.शि.,७.१)

**............ भसितं तत्त्वभासनात् ।**

**नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा ।।**

**पञ्च गावो विभोर्जाताः सद्योजातादिवक्त्रतः ।।**

**सद्योजाताद्विभूतिश्च वामाद्भसितमेव च ।**

**धारयेन्नित्यकार्येषु विभूतिं च प्रयत्नतः ।**

**नैमित्तिकेषु भसितं ................ ।।**

(सि.शि.,७.५-१०)

**वामदेवादुदकम् तस्मात् प्रतिष्ठा । तस्याः कृष्णवर्णा भद्रा। तद्गोमयेन भसितं जातम् ।**

(बृ.जा.उ.,१.११)

## भस्म

१. महाभस्म । शिवः । निरुपाधिकभस्म ।

**महाभस्मेति संचिन्त्य महादेवं प्रभामयम् ।**

(सि.शि.,७.२)

२. अष्टावरणेषु अन्यतमम् । तत्र भकारस्य दीप्तिः, सकारस्य सङ्ग्राह्यं, मकारस्य च मन्यते इत्यर्थः । तच्च दीप्त्यर्थं सङ्ग्राह्यमिति मन्यमानं भस्म ।

**भदीप्त्यर्थं हि सङ्ग्राह्यं मन्यते पूज्यतेऽपि च ।**

**भस्म शब्दार्थमेवं हि शिवः पूर्वं तथाकरोम् ।।**

(क्रि.सा.,भा-१, ३.३८१, पृ.१६१)

३. पञ्चविधेषु भस्मसु अन्यतमम् । पापानां भर्त्सनात् भस्म एतत् अघोरमुखसञ्जातायाः सुरभिनाम्न्यः गोः गोमयेन उत्पन्नम् । सर्वेषु प्रायश्चित्तेषु भस्मं धारयेत् ।

**पापानां भर्त्सनात् भस्म ।**

**अघोरात् भस्म सञ्जातम् ।**

**प्रायश्चित्तेषु सर्वेषु भस्म नाम यथावधि ।।**

(सि.शि.,७.५,८,११)

**अघोराद्वह्निः । तस्माद्विद्या । तस्याः रक्तवर्णा सुरभिः । तद्गोमयेन भस्म जातम् ।**

(बृ.जा.उ.,१.१२)

**भस्मनामानि**

स्कन्दपुराणोक्तदिशा भस्मनः भूतिः, विभूतिः, भसितम्, पुण्यराशिः, तपोमयम्, यज्ञमूर्तिः, वेदमूर्तिः, ज्ञानबीजम्, जगद्वपुः, अक्षरम्, तारकम्, भस्म इति द्वादशनामानि ।

**भूतिर्विभूतिर्भसितं पुण्यराशिस्तपोमयम् ।**

**यज्ञमूर्तिर्वेदमूर्तिर्ज्ञानबीजं जगद्वपुः ।।**

**अक्षरं तारकं भस्म द्वादशैतानि भस्मनः ।**

**पुण्यानि नामधेयानि ब्रह्मज्ञा मुनयो विदुः ।।**

(वी.ध.शि.,पृ.१२३)

**भस्मभेदः**

१. द्विधा

निरुपाधिकभस्म उपाधिकभस्म (सोपाधिकभस्म) चेति भस्मनोः एकतरम् ।

**अत्रादौ निरुपाधिकभस्मधारणं ........... ।**

(सि.शि.,तत्त्व.प्र.,७.२.,भूमिका)

**उपाधिकं भस्म सोपाधिकं भस्मेत्याहुः ....... ।**

(सि.शि.,तत्त्व.प्र.,७.३)

२. त्रिधा –

अ) चन्द्रज्ञानागमे – शान्तिकम्, पौष्टिकम्, कामदं चेति भस्म त्रिधा ।

**शान्तिकं पौष्टिकं भस्म कामदं च त्रिधा भवेत् ।**

(चं.आ.,६.३१; क्रि.सा., भा–२,६.६–७, पृ.१७)

आ) क्रियासारोक्तप्रकारेण भस्म शिवाग्निजम् लोकाग्निजम्, वेदाग्निजं चेति त्रिधा ।

**विभूतिस्त्रिधा प्रोक्ता लोकवेदशिवाग्निभिः ।**

(क्रि.सा.,भा–१, ३.३७२, पृ.१६१)

३. चतुर्धा

भस्मोत्पादनभेदात् भस्म कल्पम्, अनुकल्पम्, उपकल्पम्, अकल्पम् इति चतुर्धा ।

**भस्मोत्पादनमुद्दिष्टं चतुर्धा तन्त्रवेदिभिः ।**
**कल्पं चैवानुकल्पं तु उपकल्पमकल्पकम् ।।**

(सि.शि.,७.१३)

(तुलयत – बृ.जा.उ., ३.३६–३७)

४. पञ्चधा

ऐश्वर्याधिकरणत्वात् भंस्म विभूतिः, भसितम्, भस्म, क्षारम्, रक्षा इति पञ्चधा।

**विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः ।**

**एतानि पञ्चनामानि हेतुभिः पञ्चभिः भृशम् ।।**

(सि.शि.,७.४; शै.र., ७.९; बृ.जा.उ.,१.१५)

५. सप्तधा

चन्द्रज्ञानागमोक्तरीत्या भस्म, शिवग्निजम्, विरजाग्निजम्, औपासनाग्निजम्, समिदग्निजम्, अग्निहोत्राग्निजम्, पचनाग्निजम्, दावाग्निजम् इति सप्तधा । एतानि क्रमेण शिवयोगिभिः, महामुनिना, गृहस्थैः, ब्रह्मचारिभिः, त्रैवर्णिकैः (ब्राह्मण–क्षत्रिय–वैश्यैः), शूद्रैः, अन्यैः सर्वैः धारणीयानि ।

**शिवाग्निजनितं भस्म शस्तं स्याच्छिवयोगिनाम् ।**

**विरजानलजं चैव धार्यं भस्म महामुने ।।**

**औपासनसमुत्पन्नं गृहस्थानां विशिष्यते ।**

**समिदग्निसमुत्पन्नं शस्तं वै ब्रह्मचारिणाम् ।।**

**त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ।**

**शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ।।**

**अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ।।**

(चं.आ., क्रि.पा.,६.३४–३६)

## भस्मज्योतिः

शास्त्रेषु ज्योतिरूपेण भस्म वर्ण्यते ।

**स एष भस्मज्योतिरिरिति याज्ञवल्क्यः ।**

(बृ.जा.उ.,७.२,४,६)

**स एष भस्मज्योतिः स एष भस्मज्योतिः ।**

(बृ.जा.उ.,७.१४)

ज्योतिरूपेण भावितस्य भस्मनः धारणेन साधकः संसारसागरं तीर्त्वा मोक्षफलं प्राप्नोति । भस्मधारणादेव सर्वतीर्थानां फलं लभ्यते । सर्वपापानां भस्मसात्करणेन तद्भस्म, तदेव शम्भोः ज्योतिरिति कथ्यते ।

**भस्मज्योतिः समाम्नातमवश्यं तस्य धारणात् ।**
**संसारसागरं तीर्त्वा कैवल्यफलमश्नुते ।।**
**भस्मसंधारणादेव सर्वतीर्थफलं भवेत् ।**
**भस्मसंधारणात्सर्वं भस्मीभवति किल्बिषम् ।।**
**भस्मेदं शाम्भवं ज्योतिः .................... ।**

(चं.आ.,क्रि.पा.,६.६४–६६)

## भस्मतत्त्वम्

भस्मनः परशिवत्वेन मूलस्वरूपम्, "स एष भस्म ज्योतिः स एष भस्म ज्योतिः" इति बृ. जा.उ. इत्यत्र उक्तत्वात् ।

भस्मोद्धूलनादि भस्मधारणप्रकाराः तत्फलानि च इत्येवं सर्वं भस्मतत्त्वम् । तादृशं तत्त्वं गुरुः जानाति इति कृत्वा तं भस्मतत्त्वविवेकी इति गुरुलक्षणे उक्तम् ।

**भस्मोद्धूलननिष्णातं भस्मतत्त्वविवेकिनम् ।**
**....................श्रीगुरुं शिववादिनम् ।।**

(सि.शि.,६.५–६)

## भस्मत्रिपुण्ड्रधारणम्

'नमः शिवाय' इति मन्त्रेण सप्तवारं भस्म अभिमन्त्र्य देहे भस्मत्रिपुण्ड्रं धारयेत् ।

**नमश्शिवायेति भस्म कृत्वा सप्तभिर्मन्त्रितम् ।**
**उद्धूलयेच्छरीरं तु त्रिपुण्ड्रं चापि धारयेत् ।।**

(शि.त.र.,भा-३, ८.५.७२)

(पश्यत – त्रिपुण्ड्रधारणम्)

## भस्मत्रिपुण्ड्रधारी

भस्मकृतत्रिपुण्ड्रस्य धर्ता । स च सर्वपापैःविमुच्यते ।

**भस्मत्रिपुण्ड्रधारी चेन्मुच्यते सर्वकिल्बिषैः ।**

(वी.प्र.,पृ.९०, श्लो-२०)

## भस्मधारणम्

कामदहनं कृतं, करिष्यते इत्येतद्द्योतनार्थं भस्मधारणम् । अनेन च कान्तिर्वर्धते । आगमोक्तदिशा शरीरस्य निर्दिष्टेषु स्थानेषु तत्तन्मन्त्रपुरस्सरं भस्मधारणं कर्तव्यम् । एतच्च उद्धूलनम् अवगुण्ठनम्, त्रिपुण्ड्रम् इति त्रिधा ।

**अनेन (षडक्षरमन्त्रेण) मन्त्रितं भस्म धारयेत् स्नानपूर्वकम् ।**
**गङ्गादिसर्वतीर्थेषु स्नातो भवति मानवः ।।**

(सू.आ.,क्रि.पा., ३.५८)

**उद्धूलनं ततश्चैवम् अवगुण्ठनमेव च ।**
**त्रिपुण्ड्रं चेति विख्यातं त्रिविधं भस्मधारणम् ।।**

(चं.आ., क्रि.पा.,६.४०)

(पश्यत – त्रिपुण्ड्रदारणस्थानानि)

## भस्मधारणफलम्

भस्मधारणं पवित्रम् । सकलसिद्धिसाधकम् । संसारसागरतरणम्, कैवल्यप्राप्तिः, किल्बिषनाशः, शिवदर्शनम्, भूतप्रेतपिशाचमहारोगाणां पलायनम्, इत्यादिफलानि भस्मधारणाद्भवन्ति ।

भस्म ज्योतिः समाम्नातमवश्यं तस्य धारणात् ।
संसारसागरं तीर्त्वा कैवल्यफलमश्नुते ।।
भस्मसंधारणादेव सर्वतीर्थफलं भवेत् ।
भस्मसंधारणात् सर्वं भस्मीभवति किल्बिषम् ।।
भस्मेदं शाम्भवं ज्योतिस्तद्ध्यानात् ध्यात ईश्वरः ।
भस्मसंदर्शनादेव शिवदर्शनमश्नुते ।।
भूतप्रेतपिशाचाश्च महारोगाश्च दुस्सहाः ।
भस्मदर्शनमात्रेण पलायन्ते न संशयः ।।

(चं.आ., क्रि.पा.,६-६४-६७)

(सि.शि.,७.१)

भस्मधारणसंयुक्तः पवित्रो नियताशयः ।
इहेष्टान् सकलान् प्राप्य यात्यन्ते परमं पदम् ।।

(शै.र.,७.१७६ ; भ.जा.उ.,१.११)

## भस्मधारणविधानम्

स्वकीयस्य दक्षिणकरस्य मध्याङ्गुलित्रयेण यत् भस्मनः धारणं तिर्यग्रीत्या क्रियते तत् त्रिपण्ड्रकमित्युच्यते । वामहस्ततले भस्म निवेश्य दक्षिणपाणिना आच्छाद्य अग्निरित्यादिमन्त्रेण अभिमन्त्र्य उक्तस्थानेषु त्रिपुण्ड्रकस्य धारणं करणीयम् ।

मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु ।
षडङ्गुलायतं मानमपि वाऽलिकमानकम् ।।
...................... दध्यात् त्रिपुण्ड्रकम् ।
वामहस्ततले भस्म क्षिप्त्वाऽच्छाद्यान्यपाणिना ।

**अग्निरित्यादिमन्त्रेण स्पृशन्वाराभिमन्त्र्य च ।।**

**त्रिपुण्ड्रकमुक्तस्थानेषु दद्यात् सजलभस्मना ।।**

(सि.शि.,७.३६–३७, ३४–३५; पार.आ.,१७.५२–५६; भ.जा.उ.१.४–६)

## भस्मधारणस्थलम्

विभूतिधारणस्थलम् । स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । भक्तस्थलाश्रितेषु अङ्गस्थलेषु पञ्चदशान्यतमम् । शैवागमेषु पुराणेषु स्मृतीतिहासकल्पसूत्रेषु च भस्मधारणं विहितम् । अतः समस्ताः शैवाः भस्मधारणं कुर्यादिति विधीयमानं स्थलम् ।

**दीक्षालिङ्गधृतिश्चैव विभूतेरपिधारणम् ।**

(सि.शि.५.२८)

"अत भूत्यै न प्रमदितव्यम्" इति श्रुतिप्रसिद्धभस्मधारणस्थलं निरूपयति श्रीरेणुकः ।

(सि.शि.तत्त्व.प्र.,७.१ भूमिका)

## भस्ममाहात्म्यस्थलम्

सप्तविंशतिस्थलभेदः । तत्र च नवदशतमं स्थलम् । भस्मनः माहात्म्यप्रतिपादकं स्थलम् ।

**...................... नवदशमुदीर्यते ।**

**भस्ममाहात्म्यंरुद्राक्षमाहात्म्यं विंशतिः स्मृतम् ।**

(अ.वी.सा.सं., १.५४–५५)

**शैवागमेषु वेदेषु पुराणेष्वखिलेषु च ।**

**स्मृतीतिहासकल्पेषु विहितं भस्मपुण्ड्रकम् ।।**

**धारणीयं समस्तानां शैवानां च विशेषतः ।।**

(सि.शि.,७.४३)

## भस्मशय्या

भस्मनः शय्या । भस्ममयत्वम् ।

**भस्मच्छन्नो भस्मशय्या शयानो रुद्राध्यायी मुच्यते सर्वपापैः ।**

(पं.च., ३.२५, पृ.३०)

## भस्मस्नानम्

भस्मधारणप्रकारेषु एकः । भस्मना अनुष्ठीयमानं स्नानं भस्मस्नानम् । अस्य आग्नेयमिति व्यवहारः । गङ्गोदकदिव्यवायव्यादि स्नानानि बाह्यदोषान् अपहरन्ति । भस्मस्नानं तु बाह्यान् आभ्यन्तरांश्च दोषान् अपहरति । अतः भस्मस्नानं सर्वश्रेष्ठम् ।

**भस्ममुष्टिं समादाय संहितामन्त्रमाश्रितम् ।**
**मस्तकात्पादपर्यन्तं भस्मस्नानं समाचरेत् ।।**

(चं.आ., क्रि.पा.,६.३७)

**भस्मना विहितं स्नानमिदमाग्नेयमुत्तमम् ।**
**स्नानेषु वारुणाद्येषु मुख्यमेतन्मलापहम् ।।**
**भस्मस्नानवतां पुंसां यथायोगं दिने दिने ।**
**वारुणाद्यैरलं स्नानैर्बाह्यदोषापहारिभिः ।।**

(सि.शि.,७.२३-२४)

## भस्मस्नानफलम्

भस्मस्नानं महत्फलदायकम् । मुक्तिरपि तस्य फलं कल्प्यते ।

**आर्द्रं तु प्रकृतिं विन्द्यात् प्रकृतिं बन्धनं विदुः ।**
**प्रकृतेस्तु प्रहाणार्थं भस्मना स्नानमिष्यते ।।**
**भस्मस्नानयुताः सर्वे शिवभक्तिपरायणाः ।**
**निर्मुक्तदोषकलिलाः नित्यशुद्धा भवन्ति हि ।।**

(सि.शि.,७.२६, २८)

**भीमागमे –**

**सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।**

**तत्फलं कोटिगुणितं भस्मस्नानान्न संशयः ।**

(अ.वी.सा.सं., १९.४३)

**तस्मादेतच्छिवस्नानमाग्नेयं यस्समाचरेत् ।**

**भवेत्पापाच्च निर्मुक्तः शिवलोके महीयते ।**

(शि.त.र.,भा–३, ८.७.६७)

**यः स्नानमाचरेन्नित्यमाग्नेयं संयतेन्द्रियः ।**

**कुलैकविंशमुत्तार्य स गच्छेत् परमं पदम् ।।**

(कालोत्तरपुराणे – अ.वी.सा.सं., १९.४७)

**भस्मस्नानविशुद्धात्मा जितक्रोधो जितेन्द्रियः ।**

**मत्समीपमुपागम्य न स भूयोऽभिजायते ।।**

(शि.त.र.,भा–३, ८.५.७०)

**भुक्तिमुक्तिमदाग्नेयं स्नानं शुद्धेन भस्मना ।।**

(वी.प्र.,पृ.८०)

## भस्मस्नानविधिः

कलशादिपात्रेषु भिन्नतया स्थापितेष्वेव भस्मसु एकतमं भस्म आदाय त्रिकालमेककालं वा स्नानं कुर्यादेव ।

**भस्मस्नानकाले स्वच्छोदकेन हस्तौ पादौ प्रक्षाल्य वामकरतले भस्म संस्थाप्य दक्षिणपणिना आच्छाद्य दक्षिणोरौ निवेश्य मौनी भूत्वा मूलेन (प्रणवेन) अष्टवारम् अभिमन्त्र्य शिरोमुखहृदयनाभिपादेषु प्रणतिपूर्वकैः ईशानादिमन्त्रैः अभ्युक्षयेत्, प्रणवेन सर्वाङ्गं प्रोक्षयेदित्यर्थः ।**

(सि.शि.तत्त्व.प्र.,७.२०–२२)

**भस्मस्नानविधिं वक्ष्याम्यशेषाघौघनाशनम् ।**

**भस्ममुष्टिं समादाय संहितामन्त्रमन्त्रितम् ।।**

**मस्तकात् पादपर्यन्तं भस्मस्नानं समाचरेत् ।।**

(चं.आ., क्रि.पा.,६.३७)

**स्नानकाले करौ पादौ प्रक्षाल्य विमलाम्भसा ।**

**वामहस्ततले भस्म क्षिप्त्वाऽऽच्छाद्यान्यपाणिना ।।**

**अष्टकृत्वोऽथ मूलेन मौनी भस्माभिमन्त्र्य च ।**

**शिर ईशानमन्त्रेण पुरुषेण मुखं तथा ।।**

**हृत्प्रदेशमघोरेण वामदेवेन गुह्यकम् ।**

**पादौ सद्येन सर्वाङ्गं प्रणवेनैव सेचयेत् ।।**

(सि.शि.,७.२०-२२)

## भस्मोत्पादनम् = भस्मसम्पादनम्

भस्मनः उत्पादनम् । गोममेन भस्मन उत्पादनं विहितम् ।

**भस्मोत्पादनमुद्दिष्टं चतुर्धा तन्त्रवेदिभिः ।**

(सि.शि.,७.१३)

**विधान्तरं प्रवक्ष्यामि भस्मसंपादनं लघु ।**

(चं.आ., क्रि.पा.,६.२९)

## भस्मोत्पादनविधिः

भस्मसम्पादनविधिः मन्त्राणामभिमन्त्रणपूर्वकं गोमयम् अग्निना दग्ध्वा भस्म कुर्यात् ।

पञ्चाक्षरेण मन्त्रेण प्रथमं धेनुमभिमन्त्रयेत् । अष्टोत्तरशतेनाभिमन्त्रितं तृणं जलं च दद्यात् । शुक्लपक्षे कृष्णपक्षे वा चतुर्दश्यां तिथौ उपवासं कृत्वा प्रातरुत्थाय शुचिर्भूतः स्थिरमतिश्च साधकः स्नात्वा शुभ्रवस्त्रं धृत्वा क्षीरार्थं गां सज्जीकुर्यात् । गां उत्थाप्य गायत्रीमन्त्रेण मूत्रं यथाशक्ति सौवर्णादि पात्रे

आहरेत्। अभूमिपातं गोमयं स्वीकुर्यात् । गोमूत्रं गोमयं च मूलमन्त्राष्टकेन जप्त्वा शोधयेत्। "भवाय नमः" इति मन्त्रेण गोमये गोमूत्रं मिश्रीकृत्य "शर्वाय नमः" इति मन्त्रेण चतुर्दशपिण्डान् कुर्यात् । तान् पिण्डान् रविकिरणैः सप्तमूलेन संशोषयेत् । अनन्तरं अग्निं प्रतिष्ठाप्य तस्मिन् अद्यन्तप्रणवेन पिण्डान् निक्षिपेत्। विविधैर्मन्त्रैः सर्वाहुतिर्हुत्वा सद्यादिमन्त्रैः शैवाग्नौ दग्धं शोषितं च भस्म संशोधयेत् । पुनः गोमूत्रेण मिश्रीकृत्य यथोचितं वटकान् (घुण्टिकाः) कुर्यात् ।

(चं.आ.,क्रि.पा.,६.६-२८; पार.आ.,१७.४४-५१)

(बृ.जा.उ.,५-३१, इत्यत्र भस्मोत्पादनस्य क्रमः वैशद्येन वर्णितः । तत्रान्ये मन्त्राः प्रयुक्ताः ।)

अत्र संक्षेपः -

**विधान्तरं प्रवक्ष्यामि भस्मसम्पादनं लघु ।**
**सद्येन गो शकृद् ग्राह्यं वामेन त्वभिमन्त्रयेत् ।।**
**अघोरेण दहेत् पिण्डं ग्राह्यं तत्पुरुषेण तु ।**
**नित्यमीशानमन्त्रेण स्वाङ्गे धार्यं प्रयत्नतः ।।**

(चं.आ.,क्रि.पा.,६.२९-३०; सि.शि.,७.१४-१८)

उत्पादनक्रमभेदेन अनुकल्पम्, उपकल्पम्, उपोपकल्पम्, अकल्पं चेति भस्म चतुर्विधम् । अयं भेदः बृहज्जाबालोषनिषदुक्तरीत्या ।

**अथ चतुर्विधं भस्मकल्पम् । प्रथममनुकल्पम् । द्वितीय-मुपकल्पम् । उपोपकल्पं तृतीयम् । अकल्पं चतुर्थम् ।**

**अग्निहोत्रसमुद्भूतं विरजालजमनुकल्पम् । वने शुष्कं शकृत् संगृह्य कल्पोक्तविधिना कल्पितमुपकल्पं स्यात् । अरण्ये शुष्कगोमयं चूर्णीकृत्यानुसंगृह्य गोमूत्रैः पिण्डीकृत्य कल्पोक्तविधिना कल्पितं उपोपकल्पम् । शिवालयस्थम् अकल्पं शतकल्पं च ।**

(बृ.जा.उ.,३.३६-३८)

सिद्धान्तशिखामणौ तावत् अन्यरीत्या कल्पादिभस्मप्रकाराः उक्ताः। कल्पम्, अनुकल्पम्, उपकल्पम्, अकल्पं चेति भस्म चतुर्विधम् । तेषु कल्पभस्म श्रेष्ठम् । तस्याभावे अन्यानि भस्मानि उपयुज्यन्ते ।

**भस्मोत्पादनमुद्दिष्ट चतुर्धा तन्त्रवेदिभिः**

**कल्पं चैवानुकल्पं तु उपकल्पमकल्पकम् ।।**

**तेषामादिममुत्कृष्टमन्यत्सर्वमभावतः ।**

(सि.शि.,७.१३–१४)

(सि.शि.,७.१४–१८, इत्यत्र तेषां सम्पदनक्रमः उक्तः)

## भस्मोद्धूलनम्

**भस्मोद्धूलननिष्णातं भस्मतत्त्वविवेकिनम् ।**

(सि.शि.,६.५)

(पश्यत – उद्धूलनम्)

## भाजनस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । ऐक्यस्थलान्तर्गत-नवविधलिङ्गस्थलेष्वेकम् ।

**स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते ।**

**भाण्डस्थलं ततः प्रोक्तं भाजनस्थलमुत्तमम् ।**

(सि.शि.,२०.१, ५)

समस्तभुवनानां सृष्ट्यादिकारणीभूतस्य विमर्शनपरबिन्दोः यत् भाण्डस्थलसम्पन्ने शिवयोगिनि भासनं तद् भाजनमित्युच्यते ।

**समस्तजगदण्डानां सर्गस्थित्यन्तकारणम् ।**

**विमर्शो भासते यत्र तद् भाजनमिहोच्यते ।।**

(सि.शि.,२०.३५)

## भाण्डशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडशशुद्धिषु एकतमा ।

**भाण्डजातं परिग्राह्यं भाण्डशुद्धिः प्रकीर्तिता ।**

(चं.आ.,क्रि.पा.,९.३६)

(पश्यत – षोडशशुद्धयः)

## भाण्डस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । ऐक्यस्थलान्तर्गत-लिङ्गस्थलस्य नवविधप्रभेदेषु एकतमम् ।

**भाण्डस्थलं ततः प्रोक्तं भाजनस्थलमुत्तमम् ।**

(सि.शि.,२०.५)

अनेककोटिब्रह्माण्डानां सृष्टिस्थितिलयान् प्रत्याधारभूतो यो विमर्शः अस्य चराचरमलविनाशशालिनः शिवयोगिनः शब्दब्रह्मविचारोऽस्ति, तत् भाण्डस्थलमित्युच्यते ।

**ब्रह्माण्डशतकोटीनां सर्गस्थितिलयान् प्रति ।**
**स्थानभूतो विमर्शो यस्तद्भाण्डस्थलमुच्यते ।।**

(सि.शि.,२०.२९)

## भावः

चित्तगतपदार्थानां शिवार्पणं भावः । शिवोऽहमिति भावः शुद्धभावः । अयं च मोक्षकारणम् ।

**चित्तस्थसकलार्थानां मननं यत्तु मानसे ।**
**तदर्पणं शिवे साक्षात् मानसो भाव उच्यते ।।**
**भाव एव हि जन्तूनां कारणं बन्धमोक्षयोः ।**

**भावशुद्धौ भवेन्मुक्तिः विपरीते तु संसृतिः ।।**

**भावस्य शुद्धिराख्याता शिवोऽहमिति योजना ।**

(सि.शि.,१७.५१-५२)

## भावनिष्पत्तिस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । शरणस्थलाश्रित द्वादशलिङ्गस्थलेष्वेकतमम् ।

**शरणस्थलमाश्रित्य स्थलद्वादशकं मया ।**

**उच्यते नाम सर्वेषां स्थलानां शृणु तापस ।।**

**भावनिष्पत्तिकं चाथ ज्ञाननिष्पत्तिकं ततः ।**

(सि.शि.,१९.२-४)

क्रियानिष्पत्तिमति परकाये प्रतीयमानः भावो यस्मात् शुक्तिरजतवत् कल्पितः तस्मादयं क्रियानिष्पत्तिमान् शिवयोगी एव भावनिष्पत्तिमान् भवति । तत्सम्बन्धिस्थलं भावनिष्पत्तिस्थलम् ।

**भावः प्रतीयमानोऽपि परकाये तु कल्पितः ।**

**शुक्तौ रजतवद्यस्माद्भावनिष्पत्तिमानयम् ।।**

(सि.शि.,१९.३७)

## भावप्रकाशनम्

तरङ्गाद्यः यथा समुद्रे न भिद्यन्ते तथा शिवयोगिचैतन्ये बुद्ध्यादयो भावाः न भिधन्ते इत्येतद्भावप्रकाशनम् ।

**तरङ्गाद्य यथा सिन्धौ न भिद्यन्ते तथाऽत्मनि ।**

**भावबुद्ध्यादयः सर्वे यत्तद्भावप्रकाशनम् ।।**

(सि.शि.,१९.८३)

(पश्यत – भावप्रकाशनस्थलम्)

## भावप्रकाशनस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । शरणस्थलगतद्वादशलिङ्ग-स्थलेष्वन्यतमम् ।

**शरणस्थलमाश्रित्य स्थलद्वाशकं मया ।**
**उच्यते नाम सर्वेषां स्थलानां शृणु तापस ।।**
**भावप्रकाशनं पश्चात्ततो ज्ञानप्रकाशनम् ।**

(सि.शि.,१९.२, ६)

तरङ्गफेनादयः भावाः यथा समुद्रे न भिद्यन्ते तथा सर्वे बुद्ध्यदयो भावाः क्रियासम्पन्ने शिवयोगिचैतन्ये न भिद्यन्ते इति यत् तद्भावप्रकाशन-मित्युच्यते। तत्सम्बन्धि स्थलं भावप्रकाशनस्थलम् ।

(पश्यत – भावप्रकाशनम्)

## भावलिङ्गम्

सुजानानां अनुग्रहेच्छया महालिङ्गं भावलिङ्गं, प्राणलिङ्गम्, इष्टलिङ्गं चेति त्रिधा जातम् । तत्र भावलिङ्गं निष्कलम्, भावग्राह्यम् परात्पर च । इदं भावलिङ्गम् परात्परलिङ्गम्, तृप्तिलिङ्गं चेति उच्यते । सच्चिदानन्देषु भावलिङ्गं सद्रूपमित्युच्यते ।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया ।**
**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम् ।।**
**तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं मतम् ।**
**निष्कलं भावलिङ्गं स्याद्भावग्राह्यं परात्परम् ।।**

(चं.आ.,क्रि.पा.,३.२३–२४)

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम् ।**
**परात्परं तु यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते ।।**

(सि.शि.,६.४९–५०)

**लिङ्गस्थलं त्रिधा ज्ञेयं तद्भेदो वर्ण्यते क्रमात् ।**

**प्रथमं भावलिङ्गं स्याद् द्वितीयं प्राणलिङ्गकम् ।।**

**तृतीयमिष्टलिङ्गं स्यादित्येतत्त्रिविधं स्मृतम् ।**

**निष्कलं भावलिङ्गं स्यात् भावग्राह्यं परात्परम् ।।**

**सन्मात्रं भावलिङ्गं स्यात् इति निष्ठा महात्मनाम् ।**

**सद्रूपं भावलिङ्गं स्याच्चिद्रूपं प्राणलिङ्गकम् ।।**

(अ.सू.,३.५-१३)

## भावलिङ्गस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । भक्तस्थलगतनवविधलिङ्ग-स्थलेष्वेकतमम् ।

**आदौ नवस्थलानीह भक्तस्थलसमाश्रयात् ।**

**कथ्यन्ते गुणसारेण नामान्येषां पृथक् श्रुणु ।।**

**दीक्षागुरुस्थलं पूर्वं ...................... ।**

**भावलिङ्गस्थलं चाथ ज्ञानलिङ्गस्थलं ततः ।**

(सि.शि.,१५.४,६)

यथा क्रियालिङ्गे (इष्टलिङ्गे) क्रियालयः सञ्जायते तथा भावलिङ्गे भावलयं भवति । तत्सम्बन्धि शिवयोगिनः स्थलं भावलिङ्गस्थलम् ।

**क्रिया यथा लयं प्राप्ता तथा भावोऽपि लीयते ।**

**यत्र तद्देशिकैरुक्तं भावलिङ्गमिति स्फुटम् ।।**

(सि.शि.,१५.३७)

## भाववस्तूनि = भावपुष्पाणि

प्राणलिङ्गपूजायामुपयुज्यमानानि क्षमाविवेकादीनि भाववस्तूनि । प्रतिबद्धश्रोत्रादिनवद्वारे शिवज्ञानप्रदीपे पद्मपीठे समासीनं प्राणलिङ्गं भावयित्वा भाववस्तुभिः पूजयेत् इति नियमः ।

**बद्धेन्द्रियनवद्वारे बोधदीपे हृदालये ।**

**पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम् ।**

**भावयित्वा सदाकालं पूजयेद्भाववस्तुभिः ।।**

(सि.शि.,१२.१५)

(पश्यत – प्राणलिङ्गार्चनम्)

## भावशुद्धिः

चित्तस्य मनसश्च विकाररूपभावस्य शुद्धिः भावशुद्धिः । जन्तूनां भोगमोक्षयोः कारणं भाव एव । भावशुद्धौ मुक्तिः विपरीते संसारः ।

१. शिवोऽहमिति स्वस्वरूपानुभवयोगः एव भावशुद्धिः ।

**भाव एव हि जन्तूनां कारणं बन्धमोक्षयोः ।**

**भावशुद्धौ भवेन्मुक्तिर्विपरीते तु संसृतिः ।।**

**भावस्य शुद्धिराख्याता शिवोऽहमिति योजना ।**

**विपरीतसमायोगे कुतो दुःखनिवर्तनम् ।।**

(सि.शि.,१७.५२-५३)

२. लिङ्गे भावसमर्पणं भावशुद्धिः ।

**दत्वा च भावनां लिङ्गे भावशुद्धिरिहोच्यते ।**

(वी.प्र.,पृ.१४४, श्लो.१८)

## भावहस्तः

चित्तहस्तः, बुद्धिहस्तः, अहङ्कारहस्तः, मनोहस्तः, ज्ञानहस्तः, भावहस्त इति षट् हस्तेषु षष्ठम् । भाव एव हस्तः भावहस्तः । अयं च ऐक्यस्य पूर्णात्मनः सम्बद्धः । अत एव अयं हस्तः आत्माङ्गमित्युच्यते ।

**ऐक्यस्य भावो हस्तस्यात् एवमेवोत्तरोत्तरम् ।**

**आत्माङ्गं भावहस्तं स्यात् महालिङ्गार्चने रतम् ।।**

(अ.सू.,६.३५)

कारणागमोक्तदिशा (क्रि.पा.,७.६५) ऐक्यस्थले महालिङ्गमुद्दिश्य समरसभक्त्या भावहस्तेन (सद्भावहस्तेन) सङ्कल्पपदार्थः समर्पणीयः ।

(पश्यत – अर्पणम्)

## भावागमस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । माहेश्वरस्थलगत-नवविधलिङ्गस्थलेष्वेकम् ।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस ।**

**क्रियागमस्थलं पूर्वं ततो भावागमस्थलम् ।।**

(सि.शि.,१६.२)

विरागिणः ज्ञानिनश्च शिवयोगिनः यानि भावचिह्नानि सन्ति तानि सर्वेषां देहभृतां भावागमत्वेन वर्तन्ते ।तादृश शिवयोगिनः स्थलं भावागमस्थलम् ।

**भावचिह्नानि विदुषो यानि सन्ति विरागिणः ।**

**तानि भावागमत्वेन वर्तन्ते सर्वदेहिनाम् ।।**

(सि.शि.,१६.१५)

## भावाचारः

धर्माचारसम्पन्नस्य शिवयोगिन भावः एव सर्वेषां प्राकृतानां जनानां भावाचारः भवति ।

**भाव एवास्य सर्वेषां भावाचारः प्रकीर्तितः ।**

(सि.शि.,१६.६७)

## भावाचारस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । माहेश्वरस्थलगत-नवविधलिङ्गस्थलेष्वन्यतमम् ।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस ।**

**क्रियागमस्थलं ........................ ।**

**धर्माचारस्थलं चाथ भावाचारस्थलं ततः ।।**

(सि.शि., १६.२.४)

धर्माचारसम्पन्नस्य शिवयोगिनः भाव एव सर्वेषां प्राकृतानां भावाचार इति परिकीर्तितः । भावो नाम मनोव्यापाररूपः परिपूर्णतया शिवाश्रयः । तादृशः शिवयोगिनः स्थलं भावाचारस्थलम् ।

**भाव एवास्य सर्वेषां भावाचारः प्रकीर्तितः ।**

**भावो मानसचेष्टात्मा परिपूर्णशिवाश्रयः ।।**

(सि.शि., १६.६७)

## भावाभावलयस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । ऐक्यस्थलाश्रितनवविध-लिङ्गस्थलेष्वेकतमम् । भावाभावरहितस्थितिः ।

**स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते ।**

**तत्स्वीकृतप्रसादाख्यस्थलमादौ प्रकीर्तितम् ।।**

**भावाभावविनाशं च ज्ञानशून्यस्थलं ततः ।**

(सि.शि., २०.२,५)

**प्रतीयमानौ विद्येते भावाभावौ न कुत्रचित् ।**

**लिङ्गैक्ये सति यत्तस्मात् भावाभावलयस्थलम् ।।**

(सि.शि., २०.५९)

## भावार्पितम्

शिवे निश्चलभावेन भावानां यत्समर्पणं तद्भावार्पितम् ।

**करणार्पितमाख्यातं ततो भावार्पितं मतम् ।।**

(सि.शि., १७.३)

(पश्यत – भावार्पितस्थलम्)

## भावार्पितस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्रसादिस्थलगत नवविध-लिङ्गस्थलेष्वन्यतमम् । शिवे निश्चलभावेन भावानां यत्समर्पणं तद्भावार्पितम् । तादृशभावार्पितनिष्ठस्य शिवयोगिनः स्थलं भावार्पितस्थलम् ।

**स्थलभेदा नव प्रोक्ताः प्रसादिस्थलसंश्रिताः ।**

**करणार्पितमाख्यातं ततो भावार्पितं मतम् ।।**

**शिवे निश्चलभावेन भावानां यत्समर्पणम् ।**

**भावार्पितमिदं प्रोक्तं शिवसद्भाववेदिभिः ।।**

(सि.शि.,१७.२-३, ५०)

## भिक्षाटनलीला

शिवस्य पञ्चविंशतिलीलास्वेका । चतुर्मुखो ब्रह्मा पञ्चवदनस्य शिवस्य निन्दां कृत्वा स्वयमपि पञ्चमं मुखमधारयत् । तदनु शिवः भैरवाकारं धृत्वा ब्रह्मणः पञ्चमं मुखं चिच्छेद । ततः प्रसृतं रुधिरं अजकपालेन धृत्वा शिवः फालाग्निना अशोषयत् । ततः स्वहस्तगतकपालतोषणार्थं दिव्यरूपधारी भिक्षाटनं कृतवान् । सैषा लीला भिक्षाटनलीलेति निगद्यते ।

**पुरा कल्पान्तरे ब्रह्मा मायया परिमोहितः ।**

**अहमेव परं ब्रह्म मत्तोऽन्यो न हि विद्यते ।।**

**इत्यवद्यार्थवाक्यानि जजल्पाहंकृतो विधिः ।**

**तं दृष्ट्वा शङ्करः क्रुद्धो नखाग्रैरच्छिनच्छिरः ।।**

**शिरसस्तरसा तस्मात् प्रसस्रे रुधिरं बहु ।**

**तेनैवाजकपोलेन धृत्वा तद्रुधिरं पुनः ।।**

**ललाटशिखिना चैतच्छोषयित्वा ततः शिवः ।**

**तद्दाहशमनार्थं वै भिक्षाटनमथाकरोत् ।।**

(सू.आ., क्रि.पा., २.२०-२३)

## भुवनाध्वा

अध्वभेदः । षडध्वस्वेकः । तत्र च अयम् अर्थाध्वा । तत्र कालाग्निभुवनमारभ्य शिवलोकपर्यन्तं पञ्चत्रिंशदुत्तरद्विशतं (२३५) भुवनानि विद्यन्ते । इमान्येव भुवनाध्वा इत्युच्यन्ते ।

**अधः कालाग्निभुवनमारभ्य शिवविष्टपम् ।**
**द्विशतं भुवनानि स्युः पञ्चत्रिंशत्समन्वितम् ।।**
**भुवनाध्वपदेनेदं सर्वमेवाभिधीयते ।**

(शि.त.र.,भा-३,९.३.८२-८३)

दीक्षाङ्गत्वेन स्थापितात् कलशात् जलं स्वीकृत्य इष्टलिङ्गाभिषेकं कुर्यात् । ततः लिङ्गे शिवकलास्थापनार्थं अध्वन्यासाः करणीयाः । तत्र भुवनाध्वना लिङ्गपट्टिकायां अधः न्यासः करणीयः ।

**ततः शिवकलावाहनार्थं कुर्याद्यथाविधि ।**
**अध्वन्यासान् षडप्यत्र लिङ्गे सङ्कल्पपूर्वकम् ।।**
**भुवनाभिख्यमध्वानं पट्टिकायामधो न्यसेत् ।**
**अर्थरूपं च भुवनाध्वानं न्यसेच्छिरस्यापि ।।**

(का.आ.,क्रि.पा.,१.६६-६७, ८१)

## भूतनायकाः

हृदयस्थानीयो ब्रह्मा, कण्ठस्थो विष्णुः, भ्रूमध्यगो रुद्रः, भ्रूमध्यादूर्ध्वस्थिता स्वरदेवता, ललाटान्तगः सदाशिवः - इत्येते पञ्चभूतनायकाः।

**हृदि स्थाने स्थितो ब्रह्मा कण्ठे विष्णुस्समाश्रितः ।**
**भ्रूमध्ये संस्थितो रुद्रः तदूर्ध्वे च स्वरस्स्मृतः ।।**
**सदाशिवो ललाटान्ते पञ्चैते भूतनायकाः ।**

(शि.त.र..भा-३, ९.१.१६६-१६७)

## भूतब्रह्म

मांसबीजभूतः लकारः प्रथमभूतबीजम् । मेधोबीजभूतः वकारः द्वितीयं भूतबीजम् । षष्ठः रेफः तृतीयं भूतबीजम् । सप्तमः यकारः चतुर्थं भूतबीजम् । पञ्चमः हकारः पञ्चमभूतबीजम् । एतत् पाञ्चभौतिकबीजम् । तत्र प्रथमं पार्थिवबीजम् । द्वितीयम् अबीजम् । तृतीयं तेजोबीजम् । चतुर्थं वायुबीजम् । पञ्चमं व्योमबीजम् । पृथिव्यादि पञ्चभूतानि भूतब्रह्म ।

**प्रथमं मांसबीजं स्यात् द्वितीयं मेधसो भवेत् ।**
**तृतीयं षष्ठबीजं स्यात् चतुर्थं सप्तमं तथा ।।**
**पञ्चमं पञ्चमं विद्यात् पाञ्चभौतिकमुच्यते ।**
**मांसं वै पार्थिवं बीजं मेधसो ह्याप उच्यते ।।**
**षष्ठं तेजो विनिर्दिष्टं सप्तमं मारुतात्मकम् ।**
**पञ्चमं व्योमबीजं स्यात् भूतब्रह्मेति कीर्तितम् ।।**

(वा.शु.आ., ७.१०-१२)

## भूतशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडश-शुद्धिष्वेकतमा ।

**भूतदूषणराहित्यं भूतशुद्धिः समीरिता ।**

(चं.आ.,क्रि.पा.,९.४४)

(पश्यत – षोडशशुद्धयः)

## भूताङ्गम्

चराचरात्मकं जगत् परशिवस्याङ्गम् । अस्याङ्गेश्वरस्य परमेश्वरस्य अङ्गभेदः षडात्मकः, शिवाङ्गादारभ्य समान्याङ्गपर्यन्तम् । तत्र भूताङ्गं द्वितीयम् ।

**................ भूताङ्गं च द्वितीयकम् ।**

(वा.शु.आ.,८.६)

## भूताङ्गमन्त्रः

चराचरात्मकं जगत् परशिवस्याङ्गम् । अथाङ्गेश्वरस्य परमेश्वरस्य षडङ्गान्युक्तानि शिवाङ्गादीनि । तत्सम्बद्धाः मन्त्राः शिवाङ्गादिमन्त्राः । तत्र भूताङ्गमन्त्र एकतमः । लकारः (पृथिवीबीजं), हकारः (जीवः), आकारः (द्वितीयस्वरः), अनुस्वारश्चेति मिलित्वा ''ह्लां'' इति प्रथमभूताङ्गबीजम् ; हकारः (शिवबीजम्), वकारः (जीवनबीजम् अर्थात् वरुणबीजम्), ई कारः (चतुर्थस्वरः), अनुस्वारश्चेति मिलित्वा ''ह्वीं'' इति द्वितीयं भूताङ्गबीजम्; हकारः (पञ्चमबीजम्), रेफः (षष्ठबीजम्), ऊकारः (षष्ठस्वरः), अनुस्वारश्चेति मिलित्वा ''ह्रूं'' इति तृतीयं भूताङ्गबीजम्; हकारः (भूतान्तबीजम्), यकारः (अनिलबीजम्), ऐकारः (पञ्चसप्त = द्वादशस्वरः), अनुस्वारश्चेति मिलित्वा ''ह्यैं'' इति चतुर्थं भूताङ्गबीजम्; हकारः (तत्त्वान्तबीजम्), औकारः (अन्त्यस्वरः), अनुस्वारश्चेति मिलित्वा ''हौं'' इति पञ्चमं भूताङ्गबीजम् ; हकारद्वयम् विन्यस्य तत्र प्रथमहकारे अकारानुस्वारौ योजयित्वा उद्धृतः ''हंह्'' इति षष्ठं भूताङ्गबीजम् । (ह्लां–ह्वीं–ह्रूं–ह्यैं–हौं–हंह्) ।

**पार्थिवं जीवसंयुक्तं द्वितीयस्वरभूषितम् ।**
**बिन्दुनादसमायुक्तं प्रथमं बीजमुच्यते ।।**
**शिवार्णं जीवनोपेतं चतुर्थस्वरभूषितम् ।**
**शिवशक्तिसमायुक्तं द्वितीयं बीजमुच्यते ।।**
**पञ्चमं षष्ठसंयुक्तं पञ्चमान्तकलायुतम् ।**
**आधाराधेयसंयुक्तं तृतीयं बीजमुच्यते ।।**
**भूतान्तमनिलोपेतं पञ्चसप्तकलान्वितम् ।।**
**परापरसमायुक्तं चतुर्थं बीजमुच्यते ।।**

**तत्त्वान्तं तत्त्वसंयुक्तं कलान्तेन समन्वितम् ।**
**कार्यकारणसंयुक्तं पञ्चमं बीजमुच्यते ।।**
**शक्त्यन्तं शिवसंयुक्तं आदिबीजं कलान्वितम् ।**
**तयोर्मध्यगतो बिन्दुः षष्ठं बीजमुदाहृतम् ।।**
**एवं भूताङ्गमाख्यातं .................... ।।**

(वा.शु.आ.,८.२१-२७)

## भूताद्यहङ्कारः

तामसाहङ्कार एव भूताद्यहङ्कारः ।

**वैकृतो रजसोऽत्कृष्टो भूतादिस्तमसाधिकः ।**
**अहङ्काराच्च भूतादेः .................... ।।**

(शि.त.र.,भा-१, १.७.४१-४२)

(पश्यत – अहङ्कारः)

## भूताधिपतिः

भूतानाम् अधिपतिः । शिवः । अत एव सः पशुपतिः इत्युच्यते ।

**यत्सर्वभूताधिपतिं विश्वेशानं विनिन्दति ।**
**न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ।।**

(वी.प्र., पृ-१७, श्लो-४२)

## भूतिः

विभूतिः । भूतिः, भसितम्, भस्म, क्षारम्, रक्षेति पञ्चविध-विभूतिष्वन्यतमा ।

**कपिलवर्णायाः नन्दायाः गोमयेन जाता विभूतिः । तस्याः कपिलवर्णा नन्दा । तद्गोमयेन विभूतिर्जाता ।**

(बृ.जा.उ.,१.१०)

**विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः ।**

**एतानि पञ्चनामानि हेतुभिः पञ्चभिर्भृशम् ।।**

**नन्दादीनां तु ये वर्णाः कपिलाद्याः प्रकीर्तिताः ।**

**त एव वर्णा विख्याता भूत्यादीनां यथाक्रमम् ।।**

(सि.शि.,७.४,१२)

## भूतिपट्टदीक्षा

सप्तविधक्रियादीक्षास्वन्यतमा । मलपरिहारकेण भस्मना मस्तकादिषु स्थानेषु स्नानम्, उद्धूलनम्, धारणं च भूतिपट्टदीक्षा ।

**अनादिमलसंहृत्त्यै भूतिपट्टाख्यदीक्षया ।**

**स्नानमुद्धूलनं भूत्या धारणं चापि कारयेत् ।।**

(का.आ.,क्रि.पा.,१.८३)

## भूम्यङ्गम्

आत्माङ्गम्, व्योमाङ्गम्, अनिलाङ्गम्, अनलाङ्गम्, जलाङ्गम्, भूम्यङ्गं चेति षडङ्गानि । भूम्यङ्गं नाम भक्तस्थलम् । यस्मिन् चित्तहस्तेन आचारलिङ्गार्चनं क्रियते ।

**भूम्यङ्गं चित्तहस्तं च सदाचारार्चने रतम् ।।**

**भक्तस्थलमिति प्राहुः शिवसिद्धिन्तवेदिभिः ।।**

(अ.सू.,६.४०-४१)

## भूरुद्राः

भूलोकस्य रुद्राः । ते च जङ्गमाः । त एव वीरमाहेश्वराः ।

**भूरुद्राणां जङ्गमानां पादमध्येषु पार्वति ।**

**वीरमाहेश्वराणां च नखमध्येषु नाकिनः ।**

(वी.आ.उ., ४.२४६-२४७)

## भृत्याचारः

लिङ्गाचारः, सदाचारः, शिवाचारः, गणाचारः, भृत्याचारः, इति पञ्चाचारेष्वन्तिमः । तत्र भृत्याचारो नाम शिवभाक्तजनानां सर्वश्रेष्ठत्वं संभाव्य तेषामहं भृत्यः इत्येवंरूपः आचारः भृत्याचारः । अयं भृत्याचारः भृत्यत्वं, वीरभृत्यत्वं चेति द्विधा । गुरुलिङ्गजङ्गमानां कैङ्कर्यस्य आचरणं भृत्याचारः । मुक्त्यैकपरायणता वीरभृत्यत्वम् ।

**शिवभक्तजनाः सर्वे वरिष्ठाः पृथिवीतले ।**
**तेषां भृत्योऽहमिति यद् भृत्याचार इति स्मृतः ।।**
**भृत्यत्वं वीरभृत्यत्वं भृत्याचारो द्विधा मतः ।**
**गुरुलिङ्गजङ्गमानां कैङ्कर्याचरणं हि यत् ।।**
**भृत्यत्वमिति निर्दिष्टं देवदेवेन शम्भुना ।।**
**मुक्तिमेव परां काङ्क्षमाणो यदवतिष्ठते ।**
**तन्मतं वीरभृत्यत्वं शिवानुग्रहसाधनम् ।।**

(चं.आ.,क्रि.पा.,९.९,१२४, १२६)

## भोक्ता

भोक्ता, भोज्यम्, प्रेरयिता इति वस्तुत्रयान्यतमम् । जीवः । पशुः । स च सम्मिश्रोपाधिः । किञ्चित्सत्त्वयुतः । रजोगुणमिश्रचैतन्यम् । किञ्चिज्ज्ञः ।

**भोक्ता भोज्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।**

(श्वे.उ.,१.१२)

**गुणत्रयविभेदेन परतत्त्वे चिदात्मनि ।**
**भोक्तृत्वं चैव भोज्यत्वं प्रेरकत्वं च कल्पितम् ।।**
**किञ्चित् सत्त्वरजोरूपं भोक्तृसंज्ञकमुच्यते ।**
**किञ्चिज्ज्ञो जीव उच्यते ।**

(पश्यत – वस्तुत्रयम्)

(सि.शि.,५.३८, ४०, ४३)

## भोगसाधनतत्त्वानि

षट्त्रिंशत्तत्त्वान्तर्गतपृथिव्यादिकलातत्त्वान्तानि त्रिंशत्तत्त्वानि पुरुषस्य भोगसाधनानि ।

**एतेषामिह जीवानां भोगे नियतसाधनम् ।।**

**पृथिव्यादीनि तत्त्वानि कलातत्त्वावधीनि च ।**

**त्रिंशत्तत्त्वानि विद्यन्ते प्रतिजीवं पृथक् (पृथक्) ।।**

(शि.त.र.,भा-३, ९.३.६-७)

(पश्यत – षट्त्रिंशत्तत्त्वानि)

## भोगाङ्गम्

अङ्गस्य (जीवस्य) त्रैविध्ये एकम् । तत्र द्वितीयम् । तच्च प्राणलिङ्गिस्थलम्, प्रसादिस्थलम् इत्युभयस्थलात्मकम् । भोगाङ्गमेव सूक्ष्मशरीरम्। शिवेन सह भोगेन भोगाङ्गमिति कथ्यते । तत् स्वप्नावस्थारूपम् तदेव तैजसजीवः ।

**योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं च द्वितीयकम् ।।**

**त्यागाङ्गं तु तृतीयं स्यादेवमेव त्रिधा भवेत् ।।**

**प्राणलिङ्गिप्रसादीति द्वयं भोगाङ्गमिष्यते ।।**

**.................... भोगाङ्गं सूक्ष्ममुच्यते ।**

**शिवेन सह भोगेन भोगाङ्गमिति कथ्यते ।**

**.......................... भोगाङ्गं स्वापनाभिधा ।**

**.......................... भोगाङ्गं तैजसो भवेत् ।**

(अ.सू.,४.५,१२, ८, ७, ९-१०; क्रि.सा.,भा-३, २४, पृ.१०९)

(पश्यत – अङ्गस्थलम्)

## भोज्यम्

भोक्ता, भोज्यम्, प्रेरयिता इति वस्तुत्रयान्यतमम् । अव्यक्तम् । प्रकृतिः । शुद्धतामसरूपकं जडतत्त्वम् । 'पाशः' इत्यप्यस्य व्यवहारः ।

**भोज्यमव्यक्तमित्युक्तं शुद्धतामसरूपकम् ।**
**अत्यन्तगूढचैतन्यं जडमव्यक्तमुच्यते ।।**

(सि.शि.,५.४३)

(पश्यत – वस्तुत्रयम्)

## भौतिकब्रह्मचारी

शिष्यभेदः । ब्रह्मचारिभेदः । वंश्यशिष्यभेदभूतमुख्यशिष्यभेदः ब्रह्मचारी । नैष्ठिकब्रह्मचारी भौतिकब्रह्मचारीति द्विविधब्रह्मचारिणोरन्यतरः ।

निर्दिष्टकालपर्यन्तं ब्रह्मचारी भूत्वानन्तरं यो गृहस्थः भवति स भौतिकः ।

**व्यवस्थीकृतकालपर्यन्तं ब्रह्मचर्यपालकः ।।**
**ब्रह्मचारी द्विधा प्रोक्तो नैष्ठिको भौतिकस्त्विति ।**
**नैष्ठिको मध्यमो ज्ञेयः भौतिकस्तु ततोऽधमः ।।**
**व्यवस्थीकृतकालान्तं ब्रह्मचारी पुनर्गृही ।**
**स भौतिक इति ज्ञेयः ......................**

(शि.त.र.,भा–३, ९.७.४७–४९)

## भौतिकी दीक्षा

शिवधर्मिणीदीक्षायाः भौतिकी नैष्ठिकीति द्विविधदीक्षयोरन्यतरा । व्रतमोक्षसमायुक्ता दीक्षा ।

**भौतिकी नैष्ठिकी चेति द्विधा सा शिवधर्मिणी ।**
**व्रतमोक्षसमायुक्ता भौतिकीति निगद्यते ।।**

(शि.त.र.,भा–३, ९.७.२४)

**भृत्यसज्जनः**

षड्विधसज्जनेष्वेकतमः । यः अकुलीनं कुलीनं वा नमस्कृत्य भोजयित्वा शेषान्नं भुङ्क्ते सः भृत्यसज्जनः ।

**अकुलं कुलवन्तं वा नमस्कृत्य च भोजयेत् ।**
**शेषान्नं भुज्यते देवि भृत्यभावस्तु सज्जनः ।।**

(अ.वी.सा.सं.,भा-२, २२.२८)

# म

**मकारः**

ॐ नमः शिवाय इत्यत्र उच्चार्यमाणः द्वितीयः वर्णः । स वर्णः जलरूपः शुभ्रः । विष्णुः अस्य देवता । लक्ष्मीः अस्य शक्तिः, जलं च आधारः, त्रिष्टुप् छन्दः, विश्वामित्रो ऋषिः, उत्तरवक्त्रं स्थानम्, वामदेवः ब्रह्म, पद्मं च आयुधम्, प्रतिष्ठा कला । द्रवस्वभावः अस्य गुणः, चन्द्रार्धाकृतिः चक्रम्, चन्द्रप्रकाशवत् प्रकाशः, बुद्धिः करणम्, अपानो वायुः, जिह्वा ज्ञानेन्द्रियम् । एवं मकारस्य षोडशविषयाः कथिताः । नमः इति अक्षरद्वयमपि लिङ्गस्य पीठम् । मकारः गुरुलिङ्गम् ।

**मकारं जलरूपं च दैवं विष्णुस्तथैव च ।**
**लक्ष्मीः शक्तिरिति प्रोक्ता चाधारं जलमेव च ।।**
**त्रिष्टुप्छन्दः समायुक्तं विश्वामित्र ऋषिस्तथा ।**
**स्थानमुत्तरतो वक्त्रं ब्रह्म वै वामदेवकम् ।।**
**आयुधं पद्ममेवोक्तं प्रतिष्ठाख्यकलायुतम् ।**

**गुणस्तु द्रवसंयुक्तश्चक्रमर्धसुधाकरः ।।**

**सोमस्यैव प्रकाशश्च करणं बुद्धिरेव च ।**

**अपानवायुसंयुक्तं जिह्वा ज्ञानेन्द्रियं भवेत् ।।**

**इत्येवं षोडशानां तु मकाराक्षरमुच्यते ।**

(चं.आ.,क्रि.पा.,८.२६-२९)

**नमः पीठमिति प्रोक्तम् .................... ।**

(सि.सा., पश्यत - लिं.धा.चं.,पृ.४६)

**आचाराख्यं नकारः स्यान्मकारो गुरुलिङ्गकम् ।**

(अ.सू.,६.४९)

## मखारिः

पञ्चमुखगणेश्वरस्य पुत्रभूतेषु पञ्चमेषु मखारिः नाम प्रथमः । मखारिपञ्चमस्य गोत्रं वीरगोत्रं पडिविडि सूत्रं च ।

**मखारिश्चैव कालारिः पुरारिस्तु स्मरारि वै ।**

**वेदारिः पञ्चमश्चेति पञ्चनामानि वै शृणु ।।**

**मखारिपञ्चमाख्यस्य वीरगोत्रं वरानने ।**

**तच्छाखा रेणुकाभिख्य सूत्रं पडिविडीत्यपि ।।**

(वी.स.सं., ५.८,११.१२)

## मठः

मठश्छात्रादिनिलयः (अ.को.,२.२.८) इत्यनुसारं मठः संन्यासिनां छात्राणां च वासस्थानम् ।

**तत्र रम्यं मठं कुर्यात् सूक्ष्मद्वारं च निर्व्रणम् ।**

(शि.यो.प्र.,२.१६; श.कौ.,भा-५, पृ.२१०७)

(पश्यत - शि.यो.प्र.,२.१७-१९)

## मठार्यः

मठनिवासी, तस्य च मठस्य अधिपतिः सन्यासी गुरुर्वा । कौमार्यादि-पञ्चोपाचार्येषु एकतमः । परमेश्वरस्य हृदयात् समुद्भूतः मठार्यकः ।

**कौमार्यस्तावरार्यश्चमठार्यश्चगणार्यकः ।**

**मालार्यश्चेति विख्याताः पञ्चोपाचार्य नामकाः ।।**

**मद्हृदयाद् समुद्भूत उपार्याख्यो मठार्यकः ।**

(वी.स.सं.,४.२-३, १५)

## मणिपूरकचक्रम्

चक्रभेदः। नाभिचक्रम् । तच्च तृतीयं चक्रम् । नाभिस्थाने विद्यमानमेतत् दशदलात्मकम् । अत्र च प्रत्येकस्मिन् दले सुषुप्तिः, तृष्णा, ईर्ष्या, पिशुनता, लज्जा, भयम्, अनुग्रहः, मोहः कषायरसः, विषादः, इत्येकैकः गुणः आश्रितः । नाभिचक्रं पञ्चावर्तम् ।

**नाभौ दशदलं चक्रं मणिपूरकसंज्ञकम् ।**

**सुषुप्तिरतितृष्णा स्यादीर्ष्या पिशुनता तथा ।**

**लज्जा भयं घृणा मोहः कषायोऽथ विषादिता ।**

**क्रमात्पूर्वादिपत्रेषु स्याद्धानुभवनं च तत् ।**

(शि.त.र.,भा-३, ९.१.१३६-१३७)

**पञ्चावर्तं नाभिचक्रम् ।**

(शि.यो.प्र.,३.१०)

## मण्डलानि

मण्डलानि त्रीणि पद्मम्, भद्रम्, तत्त्वं चेति । एतानि अर्चनोचितपात्राणां स्थापनाय विहितानि ।

**पद्मं भद्रं तथा तत्त्वमण्डलं हि क्रमोत्तमम् ।**

**अर्चनोचितपात्राणां विन्यासाय प्रकीर्तितम् ।।**

(का.आ.,क्रि.पा.,४.१७)

१. **पद्ममण्डलम्** – इदं मण्डलम् सिततण्डुलचूर्णेन निर्मीयते। तच्चाष्टदलात्मकपद्मस्वरूपम् ।

**सिततण्डुलचूर्णेन पद्ममष्टदलं भवेत् ।।**

(का.आ.,क्रि.पा.,४.१७)

२. **भद्रमण्डलम्** – अष्टदलपद्मं तस्य आकारः। पूर्वदिशः आरभ्य पश्चिमदिशं प्रति अष्टौ दीर्घरेखाः करणीयाः । अनन्तरं अष्टौ तिर्यग्रेखाः लिखेत् । एवं एकोनपञ्चाशत् कोष्ठयुक्तं चित्रं निर्मितं भवति । तत्र षट्त्रिंशत् कोष्ठेषु सूक्ष्मपद्मानि रचयेत् । मध्यस्थितेषु त्रयोदशकोष्ठेषु अष्टदलपद्मानि लिखेत् । अनन्तरं मण्डलं परितः चतुर्षु पार्श्वेषु दश आयुधानि रचयेत् । तथा हि पूर्वे स्वस्तिकं शङ्खं च, आग्नेये कमलम्, दक्षिणे चामरं छत्रं च, नैरृत्यां पञ्चकोणात्मिकां आकृतिम्, पश्चिमे नागबन्धम्, वायव्ये षट्कोणात्मि-काकृतिम्, उत्तरे डमरुम्, शूलं च, ईशान्ये अष्टकोणात्मकं शूलं च रचनीयम् ।

**अष्टौ पूर्वाग्रगा रेखा लिखेत् तिर्यक् तथा पुनः ।**

**एकोनपञ्चाशत्कोष्ठचक्रमेवं भवेत् ततः ।।**

**सूक्ष्मपद्मानि विन्यस्येत् षट्त्रिंशत्कोष्ठके तथा ।**

**तयोर्दशसु मध्येषु लिखेदष्टदलाम्बुजम् ।।**

**दशायुधानि विन्यस्येत् परितो मण्डलं पुनः ।।**

**पूर्वे तु स्वस्तिकं शङ्खमाग्नेये कमलं तथा ।**

**दक्षिणे चामरं छत्रं नैरृत्यां पञ्चकोणकम् ।।**

**पश्चिमे नागबन्धं च वायौ षट्कोणमेव च ।**

**उत्तरे डमरुं शूलमैशाने त्वष्टकोणकम् ।।**

**एतल्लिङ्गार्चनापात्रविन्यासार्हं मम प्रियम् ।**

**भद्रमण्डलमाख्यातं भद्रदं मुक्तिदं परम् ।।**

(का.आ.,क्रि.पा.,४.१८-२२)

३. **तत्त्वमण्डलम्** - तत्त्वमण्डलमेवं लिख्यते - सप्तत्रिंशत् रेखा ऊर्ध्वतः अधस्तात् तथा तिर्यक् च लेखनीयाः । एवं षण्णवत्युत्तरद्वादश-कोष्ठात्मकमण्डलं भवति। तस्य मध्ये षट्त्रिंशत्दलकं कमलं रचनीयम् । चतुर्षु पार्श्वेषु शिष्टेषु कोष्ठकेषु लघुकमलानि रचयितव्यानि । चतुर्षु पार्श्वेष्वेव दश आयुधानि लिखेत् । इदं इष्टलिङ्गार्चनपात्राणां विन्यासाय श्रेष्ठं तत्त्वमण्डलम् । तत्त्वानुभवसाधनत्वात् तस्य तन्नाम । महापूजायामिदं मण्डलमपेक्ष्यते ।

**सप्तत्रिंशल्लिखेल्लेखा ऊर्ध्वाग्रस्तिर्यगप्यथ ।**

**षण्णवत्युत्तरद्वादशशतात्मककोष्ठकम् ।।**

**चक्रं भवति तन्मध्ये षट्त्रिंशद्दलवारिजम् ।**

**परितः सर्वकोष्ठेषु सूक्ष्मपद्मानि संलिखेत् ।**

**दशायुधानि विनस्येत् परितो मण्डलं बुधः ।।**

**इष्टलिङ्गार्चनापात्रविन्यासायोत्तमोत्तमम् ।।**

(का.आ.,क्रि.पा.,४.२३-२५)

**गुर्व्यां महत्यामपि च भद्रं तत्त्वं हि मण्डलम् ।।**

(मकुट.,क्रि.पा.,३.५)

## मतप्रवर्तकाः

गुरुपीठस्य अधिपतयः मतप्रवर्तकाः ।

**मतप्रवर्तकाः सर्वे गुरुपीठाधिरोहिणः ।**

**महेश्वरसमीपे ते वर्तन्ते शूलपाणयः ।।**

(क्रि.सा.,भा-१, १.१३, पृ.१२)

## मध्यमभक्ताः

सूक्ष्मागमोक्तरीत्या चतुविधभक्तेष्वेकतमाः ।

**भक्ताश्चतुर्विधा लोके नानालक्षणसंयुताः ।**

**कनिष्ठा मध्यमाश्चैवमुत्तमा उत्तमोत्तमाः ।।**

(सू.आ.,क्रि.पा.,९.४)

(पश्यत – चतुर्विधभक्ताः)

## मध्यमरुद्राक्षः

पुरुषप्रयत्नेन रन्ध्रीकृतो रुद्राक्षः ।

**स्वयमेव द्वारयुक्तं रुद्राक्षं स्यान्महोत्तमम् ।**

**यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ।।**

(शि.त.र.,भा–३, ८.६.१५)

## मध्यमा भक्तिः

जङ्गमे तथा इष्टलिङ्गे च यदि समप्रमाणेन भक्तिभावो विद्यते तर्हि सा भक्तिः मध्यमा भक्तिरित्युच्यते ।

**चरेष्टलिङ्गयोस्तुल्या मध्यमेति निगद्यते ।**

(चं.आ.,क्रि.पा.,४.३१)

(पश्यत – भक्तिः)

## मनुदीक्षा

दीक्षाभेदः । मन्त्रदीक्षा ।

**वेधामनुक्रियाभिख्य दीक्षा त्रितयशोभितम् ।**

(चं.आ.,क्रि.पा., १.४७)

(पश्यत – मन्त्रदीक्षा)

## मनोलयः

मनसः विलीनावस्था । इयं च ध्यानोत्तरकालिका, सुप्तकालिका इति द्विधा । तत्र सुप्तौ सर्वेषां विना प्रयत्नेन मनोलयः सहजमेव । ध्यानान्तिका तु साधनानुगम्या जाग्रदवस्थायां योगिभिः अनुभूयमाना । एषा च कोटिध्यानफलदायिनी ।

**पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः ।**
**जपकोटिसमं ध्यानं ध्यानकोटिर्मनोलयः ।।**

(शि.त.र.,भा-३,८.७.८३)

## मनोहस्तः

षड्विधहस्तेष्वेकतमः । अयं प्राणलिङ्गिस्थलसम्बन्धी हस्तः । प्राणलिङ्गिस्थले उपास्यभूतं चरलिङ्गं पूजयितुं अयं हस्तः नियुक्तः ।

**मनोहस्तो भवत्येव महतः प्राणलिङ्गिनः ।**
**अनिलाङ्गं मनोहस्तं चरलिङ्गार्चने रतम् ।।**

(अ.सू.,६.३४, ३७)

(पश्यत – हस्ताः)

## मनःप्रसादः

मनसः नैर्मल्यं प्रसादः शिवप्रसादरूपेण यत् शिवविनिवेदितं तत् मनो नैर्मल्यकारणम् । निर्मलज्ञानकारणं शिवप्रसादं मनःप्रसादसिद्ध्यै स्वीकुर्वन् माहेश्वर एव प्रसादी भवति ।

**नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते ।**
**शिवस्य लिङ्गरूपस्य प्रसादादेष सिद्ध्यति ।।**
**शिवप्रसादं यद्द्रव्यं शिवाय विनिवेदितम् ।**
**निर्माल्यं तत्तु शैवानां मनो नैर्मल्यकारणम् ।।**

**मनःप्रसादसिध्यर्थं निर्मलज्ञानकारणम् ।**

**शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ।।**

(सि.शि..११.६-८)

## मनश्चक्रम्

चक्रभेदः । षड्दलात्मकमिदं स्वप्नादिफलदायकम् ।

**ततोऽप्यस्ति मनश्चक्रं षड्दलं तत्फलानि तु ।**

**स्वप्नो रसोपयोगश्च घ्राणरूपोपलम्भनम् ।**

**स्पर्शनं शब्दबोधश्च पूर्वादिषु दलेष्विति ।।**

(शि.त.र.,भा-३, ९.१.१४६-१४७)

## मन्त्रः

वीरशैवानामष्टावरणेष्वेकतमम् । यः ॐकारपूरकत्वे षडक्षरमन्त्र इति कथ्यते सः पञ्चाक्षरमन्त्रः वीरशैवानां विशिष्टः मन्त्रः । अयं च मन्त्रः श्रीरुद्राध्यायस्य नमकाध्याये अष्टमानुवाके विद्यते । मननात् त्रायते इति मन्त्रः । जप-होम-पूजादिषु उच्चार्यमाणः विशिष्टफलदायको अयं मन्त्रः ।

**मननं सर्वपक्षेषु त्राणं संसारसागरात् ।**

**मननत्राणधर्मित्वात् मन्त्र इत्यभिधीयते ।।**

(वा.शु.आ.,५.८)

पूर्वं नमः शब्दं प्रयुज्य तदनन्तरं शिवाय इति प्रयोक्तव्यः । इयमेव पञ्चाक्षरी विद्या सर्वश्रुतिशिरोगता ।

**आदौ नमः प्रयोक्तव्यं शिवायेति ततः परम् ।**

**सैषा पञ्चाक्षरीविद्या सर्वश्रुतिशिरोगता ।।**

(चं.आ.,क्रि.पा.,८.५)

**नमः शब्दं वदेत् पूर्वं शिवायेति ततः परम् ।**

**मन्त्रः पञ्चाक्षरो ह्येष सर्वश्रुतिशिरोगतः ।।**

**ॐकारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः ।**
**शैवागमेषु वेदेषु षडक्षर इति स्मृतः ।।**

(सि.शि.,८.७,१७)

## मन्त्रकायः

परिशुद्धदेहः । गुरोः पादोदकप्रसादाभ्यां पवित्रः, तस्य करकमलसञ्जातः कायः ।

**पादोदकप्रसादेन पवित्रेण समन्वितः ।**
**गुरोः कराब्जसम्भूतः मन्त्रकायो वरानने ।।**

(वी.शै.उ., ४.२०६)

## मन्त्रदीक्षा = मान्त्री दीक्षा

दीक्षाभेदः ।

क्रियादीक्षा, मन्त्रदीक्षा, वेधादीक्षा इति त्रिसृषु दीक्षास्वन्यतमा । गुरुणा शिष्यस्य दक्षिणकर्णे मन्त्रोपदेशात्मिका दीक्षा ।

**गुरुणोदीरिता कर्णे सा हि मन्त्रात्मिका भवेत् ।**

(का.आ.,क्रि.पा.,१.१४)

**सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः ।**
**वेधारूपा क्रियारूपा मन्त्ररूपा च तापस ।।**
**मान्त्री दीक्षेति सा प्रोक्ता मन्त्रमात्रोपदेशिनी ।**

(सि.शि.,६.१२, १४)

अस्यां दीक्षायां एकाग्रमतिः दृढव्रता पञ्चेन्द्रियार्पणम्, अहिंसा, लिङ्गनिष्ठा, लिङ्गमनोलयम्, सद्योमुक्तिश्चेति सप्तप्रकाराः सन्ति ।

**तत्रैकाग्रमतिस्त्वाद्या द्वितीया तु दृढ़व्रता ।**
**पञ्चेन्द्रियार्पणाभिख्या तृतीया परिकीर्तिता ।।**
**अहिंसाख्या तुरीया स्याल्लिङ्गनिष्ठा तु पञ्चमी ।**

**अनन्तरा विनिर्दिष्टा षष्ठी लिङ्गमनोलया ।**

**सप्तमी तु समाख्याता सद्यो मुक्तिसमाह्वाया ।।**

(का.आ.,क्रि.पा., १.११०-१११)

(प्रत्येकतथा तासां लक्षणानि दत्तानि)

## मन्त्रन्यासः

मन्त्रन्यासः नाम पञ्चाक्षरीमन्त्रन्यासः । तस्य ओंकारपूर्वकत्वात् षडक्षरीमन्त्रन्यास इत्येव ।

**मन्त्रन्यासादिभूतेन प्रणवेन महामनोः ।**

(सि.शि.,८.१८)

(पश्यत – न्यासविधिः)

## मन्त्रयोगः

मन्त्रयोगः, लययोगः, हठयोगः, राजयोगः, शिवयोगः इति पञ्चयोगेष्वन्यतमः । जपपूजादिसन्दर्भपठनोपयुज्यमानमन्त्रैः सह एकाग्रता । प्राकृतप्राणायामेन मन्त्रयोगसिद्धिः । मन्त्रयोगिसम्बन्धी योगः ।

**प्राकृतो मन्त्रयोगः स्यात् ।**

(शि.यो.प्र.,२.२६)

(पश्यत – मन्त्रयोगी)

## मन्त्रयोगी

मन्त्रयोगनिरतः साधकः सिद्धो वा । ओंकारम् (एकाक्षरम्), हंसः अथवा सोऽहम् (द्व्यक्षरम्), ओं नमः शिवाय (षडक्षरम्), ओं ह्रीं हूं नमः शिवाय (अष्टाक्षरम्) वा मन्त्रं जपन् मन्त्रेयोगी भवति ।

**एकाक्षरं द्व्यक्षरं वा षडक्षरमथापि वा ।**

**अष्टाक्षरं वा मोक्षाय मन्त्रयोगी जपेत्सदा ।।**

(शि.यो.प्र., १.५)

(पश्यत – मन्त्रयोगः)

## मन्त्रस्नानम्

स्नानभेदः । मलस्नानमन्त्रस्नानयोरन्यतरम् । सङ्कल्पः, सूक्तपठनम्, मार्जनम्, अघमर्षणम्, देवतातर्पणं चेति पञ्चाङ्गयुक्तं स्नानं मन्त्रस्नानं इत्युच्यते । इदमेव पञ्चाङ्गस्नानमुच्यते ।

........................ **मन्त्रस्नानमथ शृणु ॥**

**सङ्कल्पः सूक्तपठनं मार्जनं चाघमर्षणम् ।**

**देवतातर्पणं चैव स्नानं पञ्चाङ्गमुच्यते ॥**

(का.आ.,क्रि.पा.,३.२४-२५; मकुट., क्रि.पा.,२.१०)

(पश्यत – पञ्चाङ्गस्नानम्)

## मन्त्राङ्गम्

शिरोभूतः नकारः, शिखास्वरूपः मकारः, कवचात्मकः शिकारः, नेत्रस्वरूपः वाकारः, अस्त्ररूपः यकारः, नमः, स्वाहा, वषट्, हुं, वौषट्, फट्–इति षट् (पल्लवाः) वर्णः, दैवम्, शक्तिः, आधारः, छन्दः, ऋषिः, स्थानम्, ब्रह्म, आयुधम्, कला, गुणः, चक्रम्, प्रकाशः, करणम्, वायुः, ज्ञानेन्द्रियम् – इति षोडशानां समुदायश्च मन्त्राङ्गमित्युच्यते ।

पारमेश्वरागमोक्तदिशा मूलविद्या (मन्त्रः) हृदयम्, शङ्करस्वरूपः नकारः शिरः, मकारः शिखा, शिकारः कवचम्, वाकारः त्रीण्यक्षीणि, यकारश्चास्त्रं, नमः – स्वाहा – वषट्– हुं – वौषट् – फट् – इति षट् पल्लवाश्च मन्त्राङ्गानि ।

**नकारः शिर उच्येत मकारस्तु शिखोच्यते ।**

**शिकारः कवचं तद्वद्वाकारो नेत्रमुच्यते ॥**

**यकारोऽस्त्रं नमः स्वाहा वषट् हुं वौषडित्यपि ।**

**फडित्यपि च वर्णानां मन्त्राङ्गत्वं यथा तथा ॥**

**वर्णं दैवं तथा शक्तिराधारं छन्द एव च ।**

**कला गुणश्च चक्रं च प्रकाशः करणं तथा ।।**

**वायुर्ज्ञानेन्द्रियं चैव षोडशैते क्रमोदिताः ।**

(चं.आ.,क्रि.पा.,८.१८-२१)

**हृदयं मूलविद्येयं नकारः शङ्करः शिरः ।**

**शिखा मकारः कवचं शिकारो वाऽपि दृक्त्रयम् ।।**

**यकारोऽस्त्रं नमः स्वाहा वषड् हुं च यथाक्रमम् ।**

**वौषट् फडिति देवेशि पल्लवाः षट् प्रकीर्तिताः ।।**

(पार.आ.,११.४५-४६)

## मन्त्राध्वा

मूलब्रह्माङ्गरूपेण मन्त्रादिभिः एकादशात्मकः मन्त्राध्वा ।

**मूलब्रह्माङ्गरूपेण मन्त्राद्यैकादशात्मकः ।**

(शि.त.र.,भा.३,९.३.८४)

**............... ततः आज्यप्रधारिके ।**

**मन्त्रध्वानं शब्दरूपं विन्यस्यैवं मुखे तथा ।।**

(का.आ., क्रि.पा.,१.८१)

## मरुत्तत्त्वपञ्चकम्

वायुतत्त्वपञ्चकम् । वायुगतानि पञ्चतत्त्वानि । तानि च वायूत्पन्नानि मनः, व्यानः, चर्म, स्पर्शः, पाणिः इति पञ्चतत्त्वानि । तत्र मनः आकाशतत्त्वम्, व्यानः वायुतत्त्वम्, चर्म अग्नितत्त्वम्, स्पर्शः जलतत्त्वम्, पाणिश्च पृथिवीतत्त्वम्।

**मन एव वियद्व्यानो वायुश्चर्म धनञ्जयः ।**

**स्पर्शोऽम्भश्च क्षमापाणिर्मरुतस्तत्त्वपञ्चकम् ।।**

(शि.यो.प्र.,४.२१)

(पश्यत -वायुतत्त्वपञ्चकम्, पञ्चीकरणम्)

## मलम्

१. पाशभेदः । पापम् । अज्ञानम् । स्वरूपाच्छादकम् । जीवानां संसारकारणम् ।

........................ **पाशः कर्ममलादिकम् ।**

(सू.आ.,क्रि.पा.,५.२०)

(पश्यत – पाशः, बन्धः)

२. विशिष्टः कालः । सूर्यास्तानन्तरं चन्द्रे मेषलग्नं प्रविष्टे सति, तल्लग्नकालो मलम् इत्यागमज्ञैरुच्यते । अथवा यस्मिन् मासे सङ्क्रान्तिः (मेषादिसङ्क्रान्तिः) नास्ति तन्मासो मलमित्याहुरागमाः । शाम्भव्रतनिष्ठा वीरशैवा मलमासे दीक्षां न कुर्वन्ति ।

**सूर्ये चापगते चन्द्रे मेषलग्नं गते सति ।**
**तल्लग्नं मलमित्याहुः आगमार्थप्रशोधनाः ।।**

(वी.शै.उ., ३.११०)

**सङ्क्रान्तिहीनं यन्मासं मलमित्याहुरागमाः ।**
**मलमासं परित्यज्य दीक्षां कुर्वन्ति शाम्भवाः ।।**

(वी.शै.उ., ३.१७०)

(पश्यत – मलपाशः)

## मलभेदः

१. आणवम्, कार्मिकम्, मायिकमिति मलं त्रिधा । तच्च तनुत्रयाश्रितम् । तत्र आणवं कारणशरीरगतम् । मायिकं सूक्ष्मशरीरगतम् । कार्मिकं च स्थूलशरीरगतम् । इदं च दीक्षात्रयेण विलयति । तत्र वेधादीक्षया भावलिङ्गस्थापनेन कारणशरीरस्थितम् आणवमलं विनश्यति । मान्त्री-दीक्षया प्राणलिङ्गस्थापनेन सूक्ष्मशरीरगतं मायिकमलं विनश्यति । क्रियादीक्षया च इष्टलिङ्गस्थापनेन स्थूलशरीरगतं कार्मिकमलं विनश्यति ।

**आणवं मायिकं चैव कार्मिकं च यथाक्रमम् ।**

**मलत्रयमनादीदं तनुत्रयगतं भवेत् ।।**

(चं.आ.,क्रि.पा.,३.४६)

**तनुत्रयगतानादिमलत्रयमिदं गुरुः ।**

**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत् ।।**

(चं.आ., क्रि.पा., ३.४७; लिं.धा.चं.,पृ.१९६)

**तनुत्रयगतानादि मलत्रयविशोधनाः ।**

**लिङ्गत्रयानुसन्धानविशोषितभवाब्धयः ।।**

(मकुट.,क्रि.पा.,१.११)

२. आणवम्, मायिकम्, कार्मिकम्, बैन्दवमिति भेदात् मलं चतुर्धा ।

**मायेयमाणवं कार्मं बैन्दवं च चतुष्टकम् ।**

**पाशानां कारणीभूतं तेषु बन्धेषु मा (या) पुनः) ।।**

(शि.त.र., भा-३, ९.३.९९)

## मलत्रयम्

संसारबन्धनकारणभूतं आणवम्, मायिकम्, कार्मिकम् इति त्रिविधं मलम् ।

**आणवं मायिकं चैव कर्मिकं च यथाक्रमम् ।**

**मलत्रयमनादीदं तनुत्रयगतं भवेत् ।।**

(चं.आ.,क्रि.पा.,३.४६)

**(पश्यत – मलम्, आणवमलम्, कार्ममलम्, मायामलम्)**

## मलपाशः

पाशभेदः । मलरूपः पाशः – बन्धः । जडः, नित्यः, व्यापकश्च अयं पाशः आत्मनो स्वरूपं ज्ञानं क्रियां समावृत्य तिष्ठति ।

**.................. पाशः कर्ममलादिकम् ।**

(सू.आ.,क्रि.पा., ५.२०)

**बन्धो मलाभिधानस्तु स्वरूपाण्यात्मनां पृथक् ।**
**ज्ञानक्रियां च सततं समावृत्य व्यवस्थितः ।**
**नित्यश्च व्यापकश्चैव भवेदपि जडात्मकः ।।**

(शि.त.र., भा-३, ९.३.९६-९७)

(पश्यत – मलम्, पाशः)

## मलस्नानम्

स्नानभेदः । मलस्नानमन्त्रस्नानयोरन्यतरम् । नद्यादिषु विशेषरूपेण क्रियमाणं स्नानं मलस्नानं ।

**नद्यादिकान् समागम्य स्नानं कुर्यात् विशेषतः ।**
**मलस्नानमिदं प्रोक्तं ...................... ।।**

(का.आ., क्रि.पा.,३.२४)

(पश्यत – मन्त्रस्नानम्)

## मलाणवम्

आणवमलभेदः । जीवे आत्मवताबुद्धिः ।

**जीवे आत्मवताबुद्धिः मलाणवमितीरितम् ।**

(वी.आ.उ.,१.१९)

(पश्यत – आणवम्, पञ्चाणवम्)

## महतीपूजा

महती, गुर्वी, लघ्वी चेति मध्याह्ने क्रियमाणसु पूजासु एकतमा ।

**ततो माध्याह्निकी पूजा कार्या गुर्वी लघुस्तु वा ।**
**महती वा यथाशक्ति श्रद्धाभक्तियुतात्मना ।।**

(का.आ.,क्रि.पा.,३.७२)

मकुटागमोक्तरीत्या एताः पूजाः – अरुणोदयः, सूर्योदयः, सङ्गवः, मध्याह्नः, सायाह्नः, अर्धरात्रिश्चेति दिनस्य षट्सु कालेषु अथवा प्रातःसन्ध्या, मध्याह्नसन्ध्या, सायंसन्ध्या चेति त्रिविधसन्ध्यासु करणीयाः ।

**महतीं वा गुरुं वापि लघ्वीं वा यतचेतनः ।**

**कालेषु षट्सु पूज्योऽहं त्रिसन्ध्यमथवा पुनः ।।**

अस्यां महतीपूजायां तत्त्वमण्डलम्, अष्टोत्तरशतं वा त्रिशतं वा सहस्रं वा दीपद्वयं वा वर्तिकाः, दीपचतुष्कं वा, दशशतं मूलमन्त्रजपः, एकादशनीराजनानि च विहितानि ।

**गुर्व्यां महत्यामपि भद्रं तत्त्वं हि मण्डलम् ।**

**अष्टोत्तरशतं वापि त्रिशतं वा सहस्रकम् ।**

**गुर्व्यां महत्यामपि च वर्तिका ज्वालयेदपि ।।**

**लघ्व्यामवसरायां वा दीप एकः समीरितः ।**

**चत्वारो वा तथा द्वौ वा महत्यां च गुरावपि ।।**

**गुर्व्यां महत्यामपि च मूलं दशशतं जपेत् ।**

**सानुरागं च ताम्बूलाभिख्यं पूर्वोदितैः सह ।।**

**एकादश महत्यां च गुर्व्यां नीराजनानि हि ।**

(मकुट., क्रि.पा.,३.५–९, १३;
का.आ.,क्रि.पा.,४.२६.२७,२८,३२,३५)

**महतीं वा गुरुं वापि ...................... ।**

(मकुट., क्रि.पा.,२.४०)

**(पश्यत – महापूजाविधिक्रमः)**

## महाकाशस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । शरणस्थलगतद्वादशलिङ्ग-स्थलेष्वेकम् । ब्रह्माण्डपिण्डाण्डगतमाकाशं यथा न भिद्यते तथा

बिन्द्वाकाशसम्पन्नस्य शिवयोगिनः आत्मनश्चैतन्यात् परमात्मा न भिद्यते इत्येतादृशानुभवयुक्तं यत् स्थलं तन्महाकाशस्थलम् ।

**पिण्डाण्डस्थं यथाकाशं न भिन्नं तद्वदात्मनः ।**

**अभिन्नः परमात्मेति महाकाशस्थलं विदुः ।।**

(सि.शि.,१९.६५)

## महातन्त्रम्

शिवेनोक्तं कामिकादि वातुलान्तं शैवागमसमुदाय एव महातन्त्रम् । तस्य सिद्धान्तमित्यपरं नाम । तस्योत्तरभागे विशिष्टं वीरशैवमतं प्रतिपादितम्।

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।**

**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ।।**

(सि.शि.,५.१४)

(पश्यत – तन्त्रम्, शैवतन्त्रम्)

## महापूजाविधिक्रमः

वीरशैवानाम् इष्टलिङ्गार्चने विद्यमानः षट्स्थलपूजात्मकः क्रमः । अस्यैव महार्चनम् , षट्स्थलोपासनम्, शिवलिङ्गार्चनक्रम इति नामान्तराणि । महापूजाविधिक्रम इति नाम्ना सप्रपञ्चमयमुक्तः कारणागमे । स्नानं कृत्वा शुचिर्भूत्वा मनोनिग्रहं संपाद्य अधरीयोत्तरीयौ धौताम्बरौ धृत्वा शिवसन्ध्या- वन्दनमाचरेत् । अनन्तरं संगृह्य पुष्पादिसमग्रीः भद्रादिमण्डलस्थितपात्रेषु निवेशयेत् । तदनन्तरं सुखासीनो भूत्वा चतुरः दीपान् द्वौ दीपौ वा प्रज्वालयेत्। शिवगणानां नामोच्चारणपूर्वकम् आचमनप्राणायामौ च कुर्यात्। इष्टलिङ्गप्रीत्यर्थं देशकालौ संकीर्त्य रङ्गवल्यां सामान्यमर्घ्यपात्रं निवेश्य तस्मिन् भस्मचन्दनपुष्पाणि निक्षिप्य तन्निर्मलजलेनापूरयेत् । बिन्दुस्रवद् अमृतधारया तत्पात्रं पूरितमिति भावनां कृत्वा पञ्चब्रह्ममन्त्रैः षडङ्गमन्त्रैश्च अभिमन्त्रयेत् । पदार्थानां शुद्धीकरणसाधनानीति मन्यमानानि

निरीक्षण – प्रोक्षण–ताडन–अवगुण्ठन–अभ्युक्षणानीति पञ्चभिः धेनुमुद्रया अमृतसमानं कृत्वा पद्मलिङ्गे प्रदर्शयेत् । (पञ्चब्रह्ममन्त्राः, षडङ्गमन्त्राः इत्यनयोः स्वरूपं ज्ञातुं पश्यत – पञ्चब्रह्ममन्त्राः, षडङ्गमन्त्राश्च । धेनुमुद्रा नाम उभयोः करयोः चतस्रः चतस्रः अङ्गुलीः गोस्तनाकारेण प्रदर्शनम्) ।

अनन्तरं पाद्य – अर्घ्य – आचमनीयपात्राणि क्रमेण सरण्यां निवेश्य तत्र पाद्यपात्रे सिद्धार्थान् (श्वेतसर्षपान्), कुङ्कुमम्, दूर्वाम्, कुष्ठम्, कर्पूरः, भस्म, चन्दनम्, पुष्पाणि च निक्षिपेत् । षडङ्गमन्त्रैः तत् पात्रं जलेनापूर्य सद्योजातादिपञ्चब्रह्ममन्त्रैः अभिमन्त्रयेत् । पाद्यपात्रानन्तरं स्थिते अर्घ्यपात्रे कुशादीन् प्रक्षिपेत् । अर्घ्यपात्रे च अर्धभागं यावत् जलेनापूर्य, मूलमन्त्रेण (पञ्चाक्षरमन्त्रेण) अभिमन्त्रयेत् । तदनन्तरं विन्यस्ते आचमनपात्रे भस्मादीन् विन्यस्य षडङ्गमन्त्रैः तत् तज्जलेनापूर्य सद्योजातादिमन्त्रैरभिमन्त्रयेत् । तेषां त्रयाणां पाद्यादिपात्राणां पुरतः त्याग–ज्ञान–आनन्दपात्राणि विन्यसेत् । त्यागपात्रे भस्मचन्दनपुष्पाणि विन्यस्य उष्णजलेन पूरयेत् । प्रासादमन्त्रेणाभिमन्त्रयेच्च (प्रासादमन्त्रः पञ्चविधः शुद्ध–मूल–तत्त्व–आदि–आत्मानश्चेति । क्रमेण तेषां स्वरूपाणि ह–ह्रौं–हं–हौं–हंसश्चेति । (पश्यत प्रासादमन्त्रः तद्भेदश्च)। तदनन्तरं ज्ञानपात्रे भस्मादीनि विन्यस्य चन्दनमिश्रितजलेनापूर्य अघोरमन्त्रेणाभिमन्त्रयेत् (अघोरमन्त्रो नाम पञ्चब्रह्ममन्त्रेषु तृतीयः) । पश्चादानन्दपात्रे भस्मादीनि विन्यस्य शीतलोदकेनापूर्य वामदेवमन्त्रेणाभिमन्त्रयेत् (वामदेवमन्त्रः पञ्चब्रह्ममन्त्रेषु द्वितीयः)। तेषां पात्राणां पूर्वं स्नान – पादोदक – प्रसादजलार्थं त्रीणि आधारपात्राणि एकस्यां श्रेण्यां विन्यसेत् । सामान्यार्घ्यपात्रस्य पुरतः शिवकुम्भं विन्यसेत् । तस्मिन् भस्मादीनि विन्यस्य पेयेन जलेन तदापूरयेत् । "आ कलशेषु" इति मन्त्रेण शिवकुम्भार्धं जलेनापूर्य "आपो वा इदं" इति मन्त्रेणाभिमन्त्रयेत् । पूजाद्रव्याणि सामान्यार्घ्यादिपात्राणि च शिवकुम्भोद्धृतजलेन संप्रोक्ष्य मूलमन्त्रेण सम्पूज्यानन्तरं सामान्यार्घ्यस्थितं जलं पाद्यार्घ्याचमनीयपात्रेषु निक्षिपेत् । पश्चात् गुरुं "यस्य देवे परा भक्तिः यथा देवे तथा गुरौ" इति

श्वेताश्वतरमन्त्रेण विधिपूर्वकं संपूज्य, शिवपूजायोग्यतां सम्पादयितुं तत्तीर्थप्रसादौ स्वीकुर्यात् ।

एतत्सर्वं पूजासामग्रीसंग्रहणं पात्राणां सम्यग्विन्यसनं जलादिपूरणं च भक्तस्थलसम्बद्धत्वेन गृह्यते । अनन्तरं माहेश्वरादिस्थलान्तर्गतत्वेन तत्तन्मन्त्रपुरःसरमिष्टलिङ्गार्चनं कुर्यात् । एतदेवोक्तम् -

माहेश्वरस्थले "अयं मे हस्तो भगवान्" इति मन्त्रेण हस्तशुद्धिं विधाय "सर्वभूतस्थं" इति मन्त्रेण हस्ते भस्मासनं विरच्य "वेदाहमेतं पुरुषं महन्तम्" इति मन्त्रेणेष्टलिङ्गं सज्जिकातः बहिरानीय "सर्वलिङ्गं स्थापयति" इति मन्त्रेण हस्तमध्ये तल्लिङ्गं विन्यसेत् । "रुद्र यत्ते दक्षिणं मुखम्" इति मन्त्रेणावाहयेत् । (इष्टलिङ्गविषये सिद्धान्तशिखामण्यादिषु उक्तप्रकारेण आवाहनविसर्जने यद्यपि न स्तः तथापि अत्र सामान्यतया आवाहनमुक्तम्) । अनन्तरं गुरुं ध्यात्वा षडङ्गन्यासं सम्यक् कृत्वा सहस्रवारं शतषट्कवारं वा षडक्षरमन्त्रं जपेत् ।

प्रसादिनामके स्थले लिङ्गे भस्मना संप्रोक्ष्य "एको देवः" इति शिवं ध्यायन् विगलितवेद्यान्तरो भवेत्पूजकः । अवधानभक्तिविधिना स्वेष्टलिङ्गं सम्यग्विभाव्य प्रीतिपूर्वकं "या ते रुद्र शिवा तनूः" इति मन्त्रेण सानुरागाख्यं नीराजनं कुर्यात् ।

प्राणलिङ्गिस्थले तावत् लिङ्गस्योपरि भस्म निधाय (भस्मलेपनं कृत्वा) मूलमन्त्रेण पुष्पाणि विन्यस्य "असव्यः" इति मन्त्रेण मन्त्रितं दर्शनाख्यं नीराजनं कुर्यात् । तदनन्तरं तत्तत्पात्रजलेन पाद्यार्घ्याचमनान्यर्पयेत् । त्यागपात्रस्थितजलेनैव इष्टलिङ्गस्य शुद्धोदकस्नानं विदद्यात् । आधार-पात्रस्थजलमानीय पूजकः स्वशिरसि संप्रोक्ष्य "आवहन्ति" इति मन्त्रेणाभिमन्त्र्य सादरमिष्टलिङ्गं वस्त्रेण संमार्ज्य हस्तमध्यस्थितभस्मासने विन्यसेत् । इष्टलिङ्गस्य पादौ मनसि विभाव्य प्रणामं समर्पयेत् । ज्ञानपात्रस्थजलेन पाद्यपात्रमापूर्य तत्पाद्यजलं आधारपात्रादानीय साधकः "कद्रुद्राय" इति मन्त्रेणाभिमन्त्र्य "ऋतं सत्यं" इति मन्त्रं पठन् तज्जलं

पिबेत् । पश्चात् मूलमन्त्रं जपन् गन्धादिभिरिष्टलिङ्गमलंकृत्वा ''यो वै रुद्रः स भगवान्'' इति मन्त्रेण अवसराख्यं नीराजनं कृत्वा, फलादिकं समर्प्य, आनन्दपात्रस्थजलं समर्पयेत् । तज्जलं पीत्वा तत्पात्रमधोमुखं विन्यसेच्च । अथ आचमनपात्रस्थजलं समर्पयेत्। ''तत्सवितुर्वरेण्यम्'' इति मन्त्रं पठन् त्यागपात्रात् जलमानीय नमकादिरुद्रसूक्तानि पठन्, इष्टलिङ्गाभिषेकं कुर्यात्। ''नमः शम्भवे'' इति मन्त्रेण तज्जलं स्वशिरसि संप्रोक्षयेत् । अभिषेकानन्तरम् ''अवहन्ति'' इति मन्त्रेणेष्टलिङ्गं वस्त्रेण संमार्ज्य, भस्मासने विन्यस्य तत्पादोदकं स्वीकुर्यात् । तदनन्तरं ''यो वै रुद्रः स भगवान्'' इति मन्त्रेण धूमरहितस्य अङ्गारस्योपरि धृत्वा इष्टलिङ्गं तापयेत् । ''यो वै रुद्रः स भगवान्'' इति अनेनैव मन्त्रेण दशाङ्गधूपं अर्पयेत् । ''उद्दीप्यस्व'' इति मन्त्रेण माङ्गल्याख्यं नीराजनं कुर्यात् । ''यस्तन्तुनाभि'' इति मन्त्रेण वस्त्रद्वयं समर्प्य, ''अग्निरिति भस्म'' इत्यादि मन्त्रैः जलेन सम्मिश्र्य भस्म लेपयेत् । ''नमो हरिकेशाय'' इति मन्त्रेण यज्ञोपवीतं विन्यस्य ''गन्धद्वारां'' इति मन्त्रेण साक्षतं गन्धं समर्पयेत् । ''उमासहायम्'' इति मन्त्रेण गन्धं लेपयेत् । ''आकाशात्'' इति मन्त्रेण ''हिरण्यपात्रं'' इति मन्त्रेण च कर्पूरनीराजनं कुर्यात् । ''तदेवर्तं'' इति मन्त्रेण पुष्पमालां, ''नमो हिरण्यबाहवे'' इति मन्त्रेण च किरीटादीनि धारयेत् । ''या ते रुद्र शिवा तनूः'' इति मन्त्रेण शृङ्गाराख्यं नीराजनं दद्यात्। ''निधनपतये नमः'' इति वेदसारसहस्रेण मूलमन्त्रेण च पुष्पाणि समर्पयेत् । ''वादित्य'' इति मन्त्रेण बिल्वपत्राणि, ''यो वै रुद्रः'' इति मन्त्रेण भस्म, ''नम ईंद्रियाय'' इति मन्त्रेण च श्वेतच्छत्रं समर्पयेत्। ''नमो वात्याय'' इति मन्त्रेण चामरस्य, ''चन्द्रमा मनसो जातः'' इति मन्त्रेण तालवृन्तस्य च सेवां कुर्यात् । ''स यश्चायं पुरुषः'' इति मन्त्रेण दर्पणं प्रदर्शयेत्, ''यो वेदादौ'' इति मन्त्रेण घण्टानादं श्रावयेच्च। 'अध्यवोचदधिवक्ता' इति मन्त्रेण शङ्खं नादयेत्, ''शिवेन वचसा त्वा''इति मन्त्रेण गीतं श्रावयेच्च। ''असव्योऽवसर्पति'' इति मन्त्रेण नृत्यम्, ''उद्यन्तमस्तं यन्तम्' इति मन्त्रेण सव्यहस्तस्थितलिङ्गं परितः (ऊर्ध्वाङ्गुष्ठदक्षिणमुष्टिना) प्रदक्षिणानि च कुर्यात् । ''नमोस्तु नीलग्रीवाय''

इति मन्त्रेण नमस्कारम्, ''नमो वृद्धाय'' इति मन्त्रेण च स्तुतिमेकाग्रमनसा च कुर्यात् । ''दैवीयो मानुषो गन्धः'' इति मन्त्रेण धूपम्, ''न तत्र सूर्यो भाति'' इति मन्त्रेण महानीराजनं प्रदर्शयेत् । ''ईशं वहत'' इति मन्त्रेण दीपं समर्प्य, ''ज्योतिष्मतीं'' इति मन्त्रं पठन् दीपान् दीपयेच्च । ''या ते रुद्रा शिवा तनूः'' इति मन्त्रं पठन् एकाग्रचित्तो भूत्वा शिवं प्रार्थयेत् । ''वेदान्तविज्ञान-सुनिश्चितार्थाः'' इति मन्त्रेण पुष्पाञ्जलिं समर्पयेत् । नैवेद्यसमये इष्टलिङ्गस्योपरि विन्यस्तानि पत्रपुष्पाणि भोज्यवस्तूनामुपरि पतेयुरिति तद्वारणाय एकं पुष्पं विहाय शेषं निर्माल्यं विसृज्य इष्टलिङ्गस्य मस्तकं यथा शून्यं न भवति तथा करणीयम् ।

शरणाख्ये स्थले ''अग्निरिति भस्म'' इति मन्त्रेण भोज्यपदार्थानामुपरि जलसहितं भस्म विकीर्य, व्याहृतिसहितं (ॐ भूर्भुवस्वरों-सहितं) सवितृगायत्रीं रुद्रगायत्रीं च पठन्, जलेन पुनः भोज्यवस्तूनि प्रोक्षयेत् । अन्ते ''स्वाहान्तैः'' मन्त्रैः आचारादिलिङ्गेभ्यः जलप्रोक्षणं कुर्वन् नैवद्यपदार्थान् समर्पयेत् । षड्लिङ्गार्पणविशेषः उक्तः । (''तत्सवितुर्वरेण्यं'' इत्यादि मन्त्रः सवितृगायत्री, ''तत्पुरुषाय विद्महे'' इत्यादि मन्त्रः रुद्रगायत्री)। भक्तादिस्थलमाश्रित्य अङ्गं, लिङ्गं, भक्तिं, शक्तिम्, मुखम्, हस्तम्, प्रसादं च ज्ञात्वा यत्समर्पणं क्रियते तत् षड्लिङ्गार्पणमित्युच्यते । (अस्य प्रपञ्चार्थं पश्यत-षड्लिङ्गार्पणम्, समर्पणम्) । उपर्युक्तदिशा महापूजान्तर्गतत्वेन षड्लिङ्गार्पणं षट्स्थलात्मकत्वेन शरणस्थलेऽपि करणीयम् ।

ऐक्यस्थले मूलमन्त्रेण इष्टलिङ्गस्योपरि पुष्पाणि विन्यस्य धूपं समर्प्य, आनन्दाख्यं नीराजनं ''यतो वाचो निवर्तन्ते'' इति मन्त्रेण समर्पयेत् । ''स विश्वकृत्' इति मन्त्रेण ताम्बूलं समर्प्य ''आरम्य'' इति मन्त्रेण च ताम्बूलाख्यं नीराजनं समर्पयेत् । ''यो ब्रह्माणं'' इति, ''ईशानः'' इति च मन्त्रद्वयं पठन् मन्त्रपुष्पाञ्जलिरूपेण पुष्पाणि प्रक्षिपेत् । ''असंख्याता सहस्राणि'' इति मन्त्रेण असंख्याताख्यं नीराजनं कुर्यात् । ''सोऽब्रवीत्'' इति मन्त्रं पठन् इष्टलिङ्गं वस्त्रेणावृत्य ''अणोरणीयान्'' इति मन्त्रेण सज्जिकायां तद्विन्यसेत् । इदं महाफलयुक्तं महार्चनम् ।

**अथ वक्ष्ये महादेवि महापूजाविधिक्रमम् ।**

(अस्य प्रपञ्चः का.आ.,क्रि.पा.,७.३–७४ श्लोकेषु सम्यक् प्रदर्शितः, विस्तारभयात् श्लोकाः नात्र दत्ताः)।

## महाभस्म

महादेव एव महाभस्म । एवं ध्यायमानाः वीरशैवा एव मुख्यभस्मधारिणः ।

**शिवाभिधानं यत्प्रोक्तं भासनात् भसितं तथा ।।**

**महाभस्मेति सञ्चिन्त्य महादेवं प्रभामयम् ।।**

**वर्तन्ते ये महाभागाः मुख्यास्ते भस्मधारिणः ।**

(सि.शि.,७.१–२)

## महाभूतानि

पृथिवी, आपः, तेजः, वायुः, आकाशम् – इत्येतानि पञ्च महाभूतानि। परशिवाज्ञया ब्रह्मादितृणान्तानां शरीरिणां शरीरनिर्माणं महाभूतानि कुर्वन्ति ।

**ब्रह्मादीनां तृणान्तानां देहिनां देहसंगतिम् ।**

**महाभूतान्यशेषाणि जनयन्ति शिवाज्ञया ।।**

(चं.आ.,क्रि.पा.,१.१७)

(पश्यत – पञ्चभूतानि)

## महामखः

शिवयोग एव महामखः । स च ज्ञानध्यानेत्युभयात्मकः सूक्ष्मः ।

**ज्ञानध्यानात्मकः सूक्ष्मः शिवयोगो महामखः ।**

**विशिष्टः सर्वयज्ञानां असंख्यातैर्महामखैः ।।**

(क्रि.सा.,भा–३, पृ.२११; शिवधर्मोत्तरात् उद्धृतः)

## महामाया

माया । परमेश्वरी ।

**सदाशिवमुखाशेषतत्त्वमौक्तिकशुक्तिकाम् ।**

**वन्दे माहेश्वरीं शक्तिं महामायादिरूपिणीम् ।।**

(सि.शि., २.२)

## महाराजयोगः

राजयोगान्तर्गतामनस्कयोगः । स च निष्पत्तियोग इत्युच्यते । 'सोऽहम्' इत्यस्य सकारेण पूरकं हकारेण रेचकं कृत्वा वायुं भ्रूमध्यस्थ-त्रिकोणस्थाने संस्थाप्यते चेत् साऽऽरम्भभूमिका । सा मन्त्रयोगात्मिका । अनन्तरं मनो मारुतैः मिलित्वा गगनमण्डले स्थिरतां प्राप्ते सति घटभूमिका । सा लययोगात्मिका । अनन्तरं रेचकपूरककुम्भकैर्युक्तं सेन्द्रियसमष्टि मनो गम्भीरदुन्दुभिध्वाने मग्नं चेत् प्रचयभूमिका । सा हठयोगात्मिका । तदनन्तरं पूर्वोक्तगम्भीरनादः परनादे विलीने सति ध्यनध्येयभेदरहितत्वेन महाशून्ये समरसभावप्राप्तिः निष्पत्तिभूमिका । सा महाराजयोगात्मिका । जीवन्मुक्तिरेव तस्याः फलम् ।

**मन्त्रलयावारम्भकघटसंज्ञौ हठः प्रचयः स्यात् ।**

**सन्निष्पत्तिरिति स्मृत एष महाराजयोगस्तु ।।**

(शि.यो.प्र., ५.५१)

## महार्चनम्

वीरशैवानां महापूजा एव महार्चनम् ।

**अथ वक्ष्ये महादेवि महापूजाविधिक्रमम् ।**

**एवं महार्चनं प्रोक्तं महादेवि महाफलम् ।।**

(का.आ., क्रि.पा., ७.३,७४)

(पश्यत – महापूजाविधिक्रमः)

## महालिङ्गम् = महालिङ्गस्थलम्

चिच्छक्तियुक्तः परशिव एव महालिङ्गम् । निष्कलम्, निष्क्रियम्, शान्तम्, अनिन्द्यम्, निरञ्जनस्वरूपम्, सच्चिदानन्दलक्षणं यत् तन्महालिङ्गम् । यस्मिन् सर्वभेदाः समाप्यन्ते । यश्च सत्तामात्रम् अगोचरम् इत्यादिलक्षणयुक्तम्। ऐक्यस्थलसम्बद्धलिङ्गस्थलयेव महालिङ्गस्थल-मित्युच्यते । शिवः यदा साक्षात् स्वचिच्छक्त्या युक्तो भवति तदा महालिङ्गस्थलं भवति ।

**शिव एव स्वचिच्छक्त्या महालिङ्गस्थलं भवेत् ।**

(अ.सू.,३.३५)

**निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।**
**प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।।**
**ऋतं सत्यं परं ब्रह्म सच्चिदानन्दलक्षणम् ।**
**अनन्यं परमं ब्रह्म तदतो ध्येयमास्तिकैः ।।**
**ततस्सर्वं परित्यज्य महालिङ्गैकतत्परः ।**

(चं.आ., क्रि.पा., ३.२०-२२; अ.सू.,३.२८)

**महालिङ्गस्थलभेदः**

स्थलमिदं भिद्यते अनेकधा ।

त्रिधा - पिण्डजलिङ्गस्थलम्, अण्डजलिङ्गस्थलम्, बिन्द्वाकाश-लिङ्गस्थलम् इति भेदेन महालिङ्गस्थलमिदं त्रिधा ।

**महालिङ्गस्थलं चापि त्रिधा भिन्नं शुणु क्रमात् ।**
**पिण्डजं प्रथमं प्रोक्तमण्डजं च ततः परम् ।।**
**बिन्द्वाकाशं ततो ज्ञेयमेषां लक्षणमुच्यते ।**

(सू.आ.,क्रि.पा.,८.२६; क्रि.सा.,भा-३, २४, पृ.१२१)

## महालिङ्गपूजकः

महालिङ्गमोही, महालिङ्गभक्तः, महालिङ्गपूजकः, महालिङ्गवीरः, महालिङ्गप्रसादी, महालिङ्गप्राणी इति महालिङ्गभक्तस्य षड्विधप्रभेदेषु अन्यतमः। अन्यसंसर्गं त्यक्त्वा शुद्धसात्त्विकसम्पर्कवान् महालिङ्गपूजकः ।

**त्यजेत्संसर्गमन्येषां सहवासादिकं त्यजेत् ।।**

**शुद्धसत्वाश्रयो यस्तु स महालिङ्गपूजकः ।**

(शि.त.र., भा-३, ९.९.७६)

## महालिङ्गप्रसादी

महालिङ्गमोहीत्यादिमहालिङ्गभक्तस्य षड्विधप्रभेदेषु अन्यतमः । सर्वान् पूर्वकर्मादिकान् अन्तर्लिङ्गे निवेद्य पङ्क्तिभोजनवर्जितः महालिङ्गप्रसादी।

**पूर्वकर्मादिकान् सर्वानन्तर्लिङ्गे निवेदयेत् ।**

**महालिङ्गप्रसादी स्यात्पङ्क्तिभोजनवर्जितः ।**

(सू.आ.,क्रि.पा.,८.७३)

## महालिङ्गप्राणी

महालिङ्गमोहीत्यादि महालिङ्गभक्तस्य षड्विधप्रभेदेषु अन्यतमः । बाह्यार्चनादिकं त्यक्त्वा अन्तरङ्गपूजकः आत्मार्पकश्च ।

**बाह्यार्चनादि सन्त्यज्य भवेदान्तरपूजकः ।**

**आत्मार्पको महालिङ्गप्राणी भवति पार्वति ।।**

(सू.आ.,क्रि.पा.,८.७४)

## महालिङ्गभक्तः

महालिङ्गभक्तस्य षड्विधप्रभेदेष्वन्यतमः । अन्यभक्तिं विना केवलमहालिङ्गभक्तिमान् महालिङ्गभक्तः ।

**पूर्वभक्तस्थलं त्यक्त्वा पूर्वकर्मादि वर्जयेत् ।।**

**स महालिङ्गभक्तः स्यादन्यभक्तिविवर्जितः ।**

(सू.आ.,क्रि.पा., ८.७०)

## महालिङ्गभेदः

भावलिङ्गम्, प्राणलिङ्गम्, इष्टलिङ्गमिति महालिङ्गं त्रिधा ।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया ।**

**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम् ।।**

**तृतीयमिष्टलिङ्गं स्यात् इत्येवं त्रिविधं मतम् ।।**

(चं.आ., क्रि.पा.,३.२३)

(पश्यत – त्रिविधलिङ्गम्)

## महालिङ्गमोही

महालिङ्गमोहीत्यादिमहालिङ्गभक्तस्य षड्विधप्रभेदेषु अन्यतमः । अन्यमोहविवर्जितः केवलमहालिङ्गमोहवान् महालिङ्गमोही ।

**त्यक्तलोकसमाचारो लिङ्गनिष्ठैकमानसः ।**

**स महालिङ्गमोही स्यादन्यमोहविवर्जितः ।।**

(सू.आ.,क्रि.पा.,८.६९)

## महालिङ्गवीरः

महालिङ्गमोहीत्यादिमहालिङ्गभक्तस्य षड्विधप्रभेदेषु अन्यतमः । अन्यचित्ताश्रयं विना, जीववृत्तिं चापि विस्मृत्य, सृष्टिस्थितिलय-मचिन्त्यमानः सन् महालिङ्गनिष्ठः महालिङ्गवीरः ।

**सृष्टिस्थितिलयाद्यं हि जीवकृत्यं च न स्मरेत् ।।**

**स महालिङ्गवीरः स्यान्नान्यचित्तसमाश्रयः ।**

(सू.आ.,क्रि.पा.,८.७२)

## महाव्रती

वीरशैव एव महाव्रती । सः सततं भक्त्या गुरुलिङ्गजङ्गमानां पूजकः। पादोदक–प्रसाद स्वीकारे अनुरक्तः, भूति–रुद्राक्ष–मन्त्रनिष्ठो वीरशैवो महाव्रती ।

**एवमाचारसंयुक्तो वीरशैवो महाव्रती ।**
**पूजयेत् सततं भक्त्या गुरुलिङ्गं च जङ्गमम् ।।**

(वी.शै.प्र.,पृ.५२, श्लो.१)

## महाशक्तिः

पञ्चाक्षरीमन्त्रः ।

**एष मन्त्रो महाशक्तिरीश्वरप्रतिपादकः ।**

(वी.शै.प्र., पृ.१०८, श्लो.१३)

## महाशून्यम्

अनादिजङ्गमस्वरूपम् ।

**महानादं महाबिन्दुं महाशून्यं तु जङ्गमम् ।**
**महाशून्यमिदं सर्वमादिनाथं तु जङ्गमम् ।।**

(अ.वी.सा.सं., ३.७)

## महाशैवम्

शैवभेदः । अनादिवीरशैवादिसप्तशैवान्यतमम् । शैवदीक्षोक्तमार्गेण दीक्षितः ब्राह्मणः शिवस्य पञ्चमुखस्वरुपं मनसि ध्यात्वा यः अर्चयति सः महाशैवः । महाशैवैराश्रितं मतम् महाशैवम् ।

**अनादिशैवः प्रथमं आदिशैवस्ततः परम् ।**
**महाशैवस्ततो ज्ञेयस्त्वनुशैवस्ततः परम् ।।**

(सू.आ.,क्रि.पा.,७.५; पार.आ., १.१६)

**शैवदीक्षोक्तमार्गेण दीक्षिता ब्राह्मणाः शिवे ।**
**महाशैवास्तु ते ज्ञेया महान्तो लोकपूजिताः ।।**

(सू.आ.,क्रि.पा.,७.१२)

**शिवस्य मुखरूपं यो ध्यात्वा मनसि पूजयेत् ।**
**महाशैवमिति प्रोक्तं परसंज्ञकलिङ्गकम् ।।**

(अ.वी.सा.सं.,८.६–७)

## महासादाख्यम्

शिवसादाख्यादि पञ्चसादाख्यानि प्रसिद्धानि । सृष्ट्यर्थं यदा शिवः जगदुत्पत्तिकारणरूपाणि सर्वतत्त्वान्यचिन्तयत् तदा तस्य शक्तेः अदि-शक्त्यादि पञ्चभेदता सञ्जाता । ताभिश्च शक्तिभिः पञ्चसादाख्यानि समुत्पन्नानि । षट्स्थलात्मकसाधनमार्गस्य प्रस्तावे तत्सम्बद्धानि आचारलिङ्गादि महालिङ्गपर्यन्तं षड्लिङ्गस्थलानि पूर्वोक्तषडङ्गस्थलैः सम्बद्धानि भवन्ति । यकारादि 'ओं'कारान्तं निवृत्तिमार्गे षडक्षरमन्त्र-स्थाक्षराणि आचारलिङ्गादिषड्लिङ्गानां सङ्केतानि भवन्ति। तदनुगुणत्वेन पञ्चसादाख्यैस्सह महासादाख्यमपि परिगण्यते । प्रथमः पराशक्तिस्वरूपः य–वर्णः शिवसादाख्यम्, द्वितीयः आदिशक्तिस्वरूपः वा–वर्णः अमूर्तसादाख्यम्, तृतीयः इच्छाशक्तिस्वरूपः शि–वर्णः मूर्तसादाख्यम्, चतुर्थः ज्ञानशक्तिस्वरूपः म–वर्णः कर्तृसादाख्यम्, पञ्चमः क्रियाशक्तिस्वरूपः न–वर्णः कर्मसादाख्यम्, षष्ठः चिच्छक्तिस्वरूपः ओंकारः महासादाख्यम् । एवं निवृत्तिमार्गे महासादाख्यं महालिङ्गमेव । तदेव परशिवः ।

**यकारस्तु पराशक्तिरादिशक्तिश्च वाऽक्षरः ।**
**इच्छाशक्तिः शिकारः सुज्ञानशक्तिर्मकारकः ।।**
**क्रियाशक्तिर्नकारस्स्यात् प्रणवो हि चिदात्मकः ।**
**प्रथमं शिवसादाख्यममूर्तं च ततः परम् ।।**

**ततश्च मूर्तसादाख्यं ततो वै कर्तृनामकम् ।**

**कर्मसादाख्यमपरं महारूपमनन्तरम् ।।**

**यादिप्रणवपर्यन्तमेवं ज्ञेयं वरानने ।**

**प्रसादश्च चरश्चैव शिवलिङ्गं गुरुस्तथा ।**

**आचारश्च महालिङ्गं यादि तारान्तगोचरम् ।।**

(सू.आ.,क्रि.पा.,४.४१–४४)

(पश्यत – सादाख्यम्, षट्सादाख्यानि)

## महासूत्राणि

ईश्वरोक्तानि पञ्चाचार्यसम्बद्धानि सूत्राणि । तानि च – पड्विडिः, वृष्टिः, (लम्बकम् लम्बनम्) मुक्तगुच्छः, पञ्चवर्णम् – इति पञ्चधा ।

**महासूत्रस्य चैकस्य चोपसूत्राणि द्वादश ।**

**उपसूत्राणि लिख्यन्ते महासूत्रोद्भवानि च ।।**

(वी.स.सं.,१.६२,२.१)

(पश्यत – सूत्रम्; वी.स.सं., १.३८, ४१, ४४, ४८, ५१)

## महेश्वरः

महेशः । महेश्वरः ।

**यो वै महेश्वर इति प्रोक्तः सर्वजगत्प्रभुः ।**

**निर्गुणः सगुणश्चैव स एवाहं न संशयः ।।**

(सू.आ.,क्रि.पा.,२.५)

## महेशतत्त्वम्

शिवसदाशिवादित्रिविधतत्त्वान्यतमम् । इदं सकलमुच्यते । सादाख्याख्यसदाशिवतत्त्वजन्यं पञ्चविंशतिलीलामूर्तिजनकं च । पञ्चविंशतिलीलामूर्तयोऽपि महेशतत्त्वम् । अत एव महेशतत्त्वं

पञ्चविंशतिभेदकम् । पञ्चविंशतिलीलामूर्तयः एव पञ्चविंशति तत्त्वान्यपि । सोमधार्युमापतिवृषभारूढ़नटराजाद्यश्च ताः सादाख्यजन्यद्विपञ्चाशन्मूर्ति-ष्वन्यतमाः ।

**तत्त्वं तु त्रिविधं ज्ञेयं तस्य भेदं शृणुष्व च ।**
**शिवं सदाशिवं चैव महेशं त्रिविधं स्मृतम् ।।**
**महेशं सकलं विद्यात् .................. ।**
**महेशं तु महासेन पञ्चविंशतिभेदकम् ।**

(शि.त.र.,भा-१, १.६.९-१२)

## महेश्वरषडङ्गानि

सर्वज्ञता, तृप्तिः, अनादिबोधः, स्वतन्त्रता, अलुप्तशक्तिः, अनन्तशक्तिः- इत्येवं षट् महेशस्य षडङ्गानि ।

**सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।।**

(पार.आ., ६.३३)

## महेश्वरी

जङ्गमेभ्यः विहिता तत्त्वनाशनिरोधिनी दीक्षा ।

**मीनलग्ने तत्त्वनाशं हरते या महेश्वरी ।**
**सा दीक्षा यतिराजानां जङ्गमानां जगत्प्रिये ।।**

(वीर.उ.,३.८८)

## मातृकान्यासः

लिङ्गपूजायाः पूर्वं देहस्य विद्यामयत्वं सम्पादयितुं न्यासाः करणीयाः इति नियमः । तत्र आद्यः मातृकान्यासः, ब्रह्मन्यासो द्वितीयः, प्रणवन्यासो तृतीयः, हंसन्यासः चतुर्थः, पञ्चाक्षरन्यासस्तु पञ्चमः । तत्र वर्णन्यास एव मातृकान्यासः ।

**तत्राद्यो मातृकान्यासः ................ ।**

(चं.आ.,क्रि.पा.,११.३६)

(पश्यत – वर्णन्यासः)

## मानसजपः

जपभेदः । वाचिकः, उपांशुः, मानसश्चेति त्रिविधजपेष्वेकः । अधरं अस्पृष्ट्वा जिह्वाग्रस्य अस्पन्दितत्वेन अन्तरात्मनि मन्त्रं वर्णरूपेण भाव्यते चेत् स मानसजपः । स च त्रिविधजपेषु श्रेष्ठः ।

**स जपस्त्रिविधः प्रोक्तो वाचिकोपांशुमानसैः ।**
**मन्त्रार्थं मनसा ध्यायन् वर्णाद्वर्णं पदात्पदम् ।।**
**आवृत्य गणनात्पूर्वं जपेन्मानस उच्यते ।**
**त्रयाणामपि चैतेषां वरं स्यादुत्तरोत्तरम् ।।**

(सू.आ.,क्रि.पा.,३.४१, ४३)

**उत्तमो मानस प्रोक्त उपांशुर्मध्यमस्तथा ।**
**अधमो वचिकः प्रोक्त इत्येतच्छिवशासनम् ।।**
**धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।**
**शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः ।**

(चं.आ.,क्रि.पा., ८.५६, ५९; पार. आ. ११.८८-८९)

**जपस्तु त्रिविधः प्रोक्तो वाचिकोपांशुमानसः ।**
**अस्पृष्ट्वाऽधरमस्पन्दि जिह्वाग्रं योऽन्तरात्मना ।**
**भाव्यते वर्णरूपेण स मानस इति स्मृतः ।।**
**मानसो हि जपः श्रेष्ठो घोरसंसारनाशकः ।**

(सि.शि.,८.२७, २९, ३२)

## मानसस्नानम्

स्नानभेदः । परशिवब्रह्मणा सह आप्यमाणं तादात्म्यं मानसस्नानम् ।

**मानसब्रह्मतादात्म्यं स्नानान्येतानि वै विदुः ।**

(शि.त.र.,भा-३, ८.५.६४)

## मानसी दीक्षा

दीक्षाभेदः । मनस्सन्निधिमात्रेण शिष्याय अनुग्रहात्मकदीक्षा ।

**मनस्सन्निधिमात्रेण मानसीत्यभिधीयते ।**

(शि.त.र.,भा-३, ९.७.३०)

## मानसी सेवा

सेवाप्रभेदः । मानसी भक्तिः । कायिकी सेवा, वाचिकी सेवा, मानसी सेवा इति त्रिविधसेवास्वन्यतमा । तत्र शिवलिङ्गशिवरूपादिचिन्ता मानसी सेवा ।

**शिवरूपादिचिन्ता या सा सेवा मानसी स्मृता ।**

(सि.शि.,९.१६)

(पश्यत – सेवा)

## मान्त्रिकजङ्गमम्

जङ्गमतत्त्वभेदः । इष्टलिङ्गादीनां मान्त्रिकं जङ्गमतत्त्वम् । मान्त्रिकं सहजं चेति द्विविधजङ्गमयोरेकतमम् । तत्र मन्त्रसामर्थ्यात् शिवभावं आवाह्य महाशैवैः वीरशैवैः यत् ध्रियमाणं चरलिङ्गादिकमस्ति तत् मान्त्रिकजङ्गमतत्त्वम् ।

**जङ्गमं द्विविधं प्रोक्तं मान्त्रिकं सहजं त्विति ।।**
**मान्त्रिकं मन्त्रसामर्थ्यादावाहनमुदीरितम् ।**
**ध्रियमाणं महाशैवैश्चरलिङ्गादिकं मुने ।।**

(चं.आ.,क्रि.पा.,४.६-७)

(पश्यत – जङ्गमम्)

## मान्त्री दीक्षा

दीक्षाभेदः। वेधादीक्षा, मान्त्रीदीक्षा, क्रियादीक्षा चेति त्रिविधदीक्षा-स्वन्यतमा । शिष्यस्य दक्षिणश्रौत्रे मन्त्रोच्चारणपूर्वकं गुरुणा शिष्याय दीयमाना दीक्षा ।

**गुरुरुच्चारयेन्मन्त्रं मन्त्रदीक्षेयमीरिता ।**

(शि.ध.शि., पु-१९२, पं-७)

**मान्त्री दीक्षेति सा प्रोक्ता मन्त्रमात्रोपदेशिनी ।**

(सि.शि.,६.१४)

(पश्यत – मन्त्रदीक्षा)

## माया

मायाशक्तिः । तमः । प्रकृतिः । षट्त्रिंशत्तत्त्वान्यतमम् ।

**सा माया शक्तिराख्याता ।**

(अ.वी.सा.सं., १.१२०)

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**

(श्वे.उ.,४.१०)

**स्वमायया कल्पितभूतधाम्ने ।**

(अ.सू.,१.३)

**नित्यं व्यापकं समस्तात्मकर्मसम्बन्धं मायातत्त्वम् ।**

(शै.सि.,पृ.३)

(पश्यत – मायाशक्तिः)

## मायापञ्चाक्षरी

पञ्चपञ्चाक्षरीमन्त्रेष्वेकतमः। मरुळाराध्यसम्बद्धनन्दिगोत्रोत्पन्नानां मन्त्रः ।

**मायापञ्चाक्षराख्यश्च नववर्णो महामनुः ।**

**ओं ह्रां ह्रीं ह्रूं ह्रैं नमः शिवाय ।।**

(वी.स.सं.,५.२०)

(पश्यत – पञ्चाक्षरः)

## मायापाशः

१. पतिः, पशुः, पाशश्चेति तत्त्वत्रये एकतमः । तत्र मलमायादयः पाशः । मायीयपाशो नाम ज्ञानशक्तेः सङ्कोचः । सर्वज्ञत्वविशिष्टस्य परमात्मनः अंशीभूतः जीवः ज्ञानशक्तिसङ्कोचेन अल्पज्ञः भवति । एष एव मायीयपाशः । स एव मायीयमलः ।

**मलमायादिभिः पाशैः स बध्नाति पशुं पतिः ।**

(चं.आ.,क्रि.पा., १.११; पार.आ., १२.६२)

२. शिवतत्त्वरत्नाकरोक्तरीत्या मायेयपाशः, कार्मपाशः, मलपाशः, बैन्दवपाशः, तिरोधानपाशश्चेति पञ्चविधपाशेष्वेकतमः । तत्र मायापाशः कलादिपृथिव्यन्तत्रिंशत्तत्त्वस्वरूपी मायापाशः ।

**सर्वेषामात्मनां पाशः पञ्चधा परिकीर्तिता ।**

**कलादिकपृथिव्यन्त भुवनादि स्वरूपवान् ।**

**बन्धो मायेयसंज्ञस्तु विद्वद्भिः परिकीर्तितः ।।**

(शि.त.र.,भा-३, ९.३.९३-९४)

## मायामलम् = मायेयमलम् = मायिकमलम् = मायीयमलम्

त्रिविधमलेष्वेकम् । अनेन मलेन ज्ञानशक्तेः सङ्कोचः जायते । तेन जीवे भेदबुद्धिः जायते । तस्मात् जीवः परशिवादहं भिन्नः इति मन्यते ।

**भिन्नवेद्यप्रथारूपं मायीयमलम्**

(प्र.हृ.,सू.९, क्षेमराजस्य व्याख्यानम्)

## मायाशक्तिः

परमात्मनः जगद्रूपत्वेन प्रकटनाय कारणीभूतशक्तिः मायाशक्तिः । मायाशक्तिवशादेव सर्वज्ञत्वादिविशिष्टः प्रभुः नानामूर्तिधरो भवति ।

**मायाशक्तिवशादीशो नानामूर्तिधरः प्रभुः ।**
**सर्वज्ञः सर्वकर्ता च नित्यमुक्तो महेश्वरः ।।**

(सि.शि.,५.४६)

मायाशक्तिरेव तिरोधानशक्तिर्भूत्वा यदा जीवात्मानं आवृणोति तदा शिवे भेदविकल्पना जायते । यदा च सा तिरोधानशक्तिः विनाशं गच्छति तदा शिवजीवैक्यरूपमद्वैतमेव दृश्यते नान्यत् ।

**मायाशक्तितिरोधानाच्छिवे भेदविकल्पना ।**
**आत्मनस्तद्विनाशे तु नाद्वैतात्किञ्चिदिष्यते ।।**

(सि.शि.,१४.८)

## मायी

महेश्वरः । माया अस्य अस्तीति मायी ईश्वरः ।

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**

(श्वे.उ.,४.१०)

**मायी महेश्वरस्तेषां प्रेरको हृदि संस्थितः ।।**

(सि.शि.,५.३५)

## मायोपाधिकः

माया उपाधिः यस्य सः । शिवः । सदाशिवः । लिङ्गम् ।

**यो मायोपाधिको देवो लिङ्गरूपी सदाशिवः ।**

(लिं.धा.चं., पृ.१७७)

## मार्गशुद्धिः

पञ्चाचारेष्वेकतमे शिवाचारे अन्तर्भूतेषु षोडशशुद्धिष्वेकतमा ।

१. पद्भ्यां सञ्चरमाणे सति पिपीलिकादीनां यथा हिंसा न भवेत् तथा वर्तनं मार्गशुद्धिः ।

**द्रव्यक्षेत्रगृहादीनां षोडशानां विशोधनाम् ।**

**शिवशास्त्रोक्तमार्गेण शिवाचार इति स्मृतः ।।**

**पद्भ्यां पिपीलिकादीना न यथा हिंसनं भवेत् ।**

**गमनं हि परिग्राह्यं मार्गशुद्धिरियं मता ।।**

(चं.आ.,क्रि.पा.,९.३२, ४६)

२. त्रिष्वपि सन्ध्यासु क्रियमाणेन ध्यानेन आप्यमाणा शुद्धिः मार्गशुद्धिः ।

**त्रिसन्ध्यं ध्यानतो देवि मार्गशुद्धिरिहोच्यते ।**

(वी.शै.प्र., पृ.१४४, श्लो.२३)

## मार्गशैवम्

शैवभेदः । उपनिषत्सु आगमानामुत्तरभागे च उपदिष्टाभिः वेधा – मनु – क्रियेति दीक्षाभिः सम्पन्नः षट्स्थलज्ञानी, अरुणोदय – सूर्योदय – सङ्गव – मध्याह्न – सायाह्न – अर्धरात्रिरिति षट्कालेषु शिवपूजासक्तः षट्शतोत्तरैक-विंशतिसहस्रवारं प्रतिदिनं षडक्षरीमन्त्रजपकर्ता, लिङ्गाङ्गैक्यभावयिता ईश्वरप्रतिपादितधर्माचारमार्गस्य पालनकर्ता मार्गशैवः । तेन सम्बद्धं शैवं मार्गशैवम् ।

**मार्गशैवं प्रवक्ष्यामि मुक्तिसन्निधिमार्गकम् ।**

**वेदागमान्तगदितदीक्षात्रयपरिग्रहः ।।**

**षट्स्थलज्ञानसम्पत्तिः षट्कालशिवपूजनम् ।**

**एकविंशतिसाहस्रयुतषच्छतसंख्यया ।।**

**षडक्षरीजपो नित्यं लिङ्गैक्यविभावनम् ।**

**धर्मोऽयं मार्गशैवानामीश्वरेण प्रकीर्तितः ।।**

(चं.आ.,क्रि.पा.,१०.२५, २६)

## माहेश्वरः

१. यदा वैराग्यगौरवात् स्थिरविवेकत्वाद् भक्तेः समुत्कर्षः जायते तदा भक्तः एव माहेश्वरः इति कथ्यते । ब्रह्मादिस्थानविमुखश्च अयं सहजदाननिष्णातः ।

**केवले सहजै दाने निष्णातः शिवतत्परः ।**

**ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः ।।**

**भक्तेर्यदा समुत्कर्षो भवेद्वैराग्यगौरवात् ।**

**तदा माहेश्वरः प्रोक्तो भक्तः स्थिरविवेकवान् ।।**

(सि.शि.,१०.२-३)

२. माहेश्वरस्थलापन्नः वीरशैवः । स च गुरुलिङ्गजङ्गमविभूतिरुद्राक्ष-पादोदकप्रसादमन्त्ररूपाष्टावरणयुक्तः, परद्रव्यपरस्त्र्यादिवर्जितः शुद्धात्मा, सदाचारसम्पन्नः । आगमानुसारी अयं कर्मयज्ञनिरतः ।

**परद्रव्यपरस्त्र्यादिवर्जितो भावशुद्धिमान् ।**

**लिङ्गनिष्ठानियुक्तात्मा माहेश्वर इति स्मृतः ।।**

(श.त्र.,पृ.६, श्लो.३९)

**तेषां माहेश्वराणां च भक्तानां प्रीतिपूर्वकम् ।**

**नृणां संपत्करं स्तोत्रं वेदमूर्ध्नि प्रतिष्ठितम् ।।**

(वी.उ.,२.८१, पृ.६९)

सहजजङ्गम एव माहेश्वर इत्यभिधीयते । चरः; भक्तः, शैवः, जङ्गमः इत्यादीनि माहेश्वरस्य नामान्तराणि ।

सहजो जङ्गमो माहेश्वर इत्यभिधीयते ।

**माहेश्वरश्चरो भक्तः शैवो जङ्गम इत्यपि ।**

**सहजस्याभिधानानि भवन्तीश्वरशासनात् ।।**

(चं.आ.,क्रि.पा.,४.६-७)

## माहेश्वराः

पाशुपताः, कालसिद्धान्तिनः, कापालिकाः, शैवाः – इति माहेश्वराः चत्वारः ।

**माहेश्वरास्तु चत्वारः शैवाः पाशुपतास्तथा ।**

**कालसिद्धान्तिनः केचित् तथा कापालिकाः परे ।।**

(क्रि.सा., भा–१,२.५०४)

## माहेश्वरप्रशंसास्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । माहेश्वरस्थलान्तर्गत-नवाङ्गस्थलेष्वेकतमम् । समस्तदेवदानवदीनामनुग्रहकर्ता "एको हि रुद्रो न द्वितीयाय तस्थुः" इति श्वेताश्वतरोक्तदिशा अद्वितीयः, रुद्रः (परशिवः) सर्वस्मात् अधिक इति यस्य बुद्धिर्दृढा स वै माहेश्वरेत्यादि माहेश्वरमहत्वप्रतिपादकं स्थलम् ।

**माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पुरा ।**

**माहेश्वरप्रशंसादौ लिङ्गनिष्ठा ततः परम् ।।**

**विश्वस्मादधिको रुद्रो विश्वानुग्रहकारकः ।**

**इति यस्य स्थिरा बुद्धिः स वै माहेश्वरः स्मृतः ।।**

(सि.शि.,१०.४,८)

## माहेश्वरस्थलम्

षट्स्थलेष्वेकतमम् । इदम् द्वितीयं स्थलम् । भक्तेः समुत्कर्षः, वैराग्यगौरवम् स्थिरविवेकश्चेति त्रीणि माहेश्वरस्य विशेषलक्षणानि । माहेश्वरस्थलाश्रितानि नवाङ्गस्थलानि नवलिङ्गस्थलानि चोक्तानि । अत्र भक्तेः समुत्कर्षः नाम निष्ठाभक्तिः इत्यर्थः । ब्रह्मादिदेवताजालं विहाय महेश्वरे एव मग्नः माहेश्वरः । एवं तस्य वैराग्यस्य महत्त्वं प्रकाशते ।

स्वेष्ठलिङ्गमात्रे शिवं परिभाव्य अन्यत्र तस्य स्थितस्यापि नास्ति इति भावेन स्वेष्ठलिङ्गे सर्वस्वं भाव्यमानः माहेश्वरः स्वाचारेण विशिष्टः भवति ।

**आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम् ।**
**भक्तेर्यदा समुत्कर्षो भवेद्वैराग्यगौरवात् ।।**
**तदा माहेश्वरः प्रोक्तो भक्तः स्थिरविवेकवान् ।**

(सि.शि.,५.२४; १०.३)

**लिङ्गैक्यनैष्ठिकतया सह वीरवृत्तम् ।**
**माहेश्वरस्थलमिति प्रवदन्ति सन्तः ।।**

(अ.सू.,४.३२)

(माहेश्वलक्षणानि ज्ञातुं पश्यत– सि.शि.,१०.१५–२०)

**माहेश्वरस्थलभेदः**

**अङ्गस्थलानि–नव**

१. माहेश्वरप्रशंसास्थलम्, २. लिङ्गनिष्ठास्थलम्, ३. पूर्वाश्रय-निरसनस्थलम्, ४.सर्वाद्वैतनिरसनस्थलम्, ५. आह्वाननिरसनस्थलम्, ६. अष्टमूर्तिनिरसनस्थलम्, ७. सर्वगत्वनिरसनस्थलम्, ८. शिवजगन्मयस्थलम्, ९. भक्तदेहिकलिङ्गस्थलम् ।

(सि.शि.,१०.४–६)

**लिङ्गस्थलानि – नव**

१. क्रियागमस्थलम्, २. भावागमस्थलम्, ३. ज्ञानागमस्थलम्, ४. सकायस्थलम्, ५. अकायस्थलम्, ६. परकायस्थलम्, ७. धर्माचारस्थलम्, ८. भावाचारस्थलम्, ९. ज्ञानाचारस्थलम् ।

(सि.शि., १६.२–४)

## मिश्रतन्त्रम्

तन्त्रभेदः । वामादिचतुर्विधशैवतन्त्रेष्वन्यतमम् । ब्राह्मीत्यादिसप्त-मातृकापरं तन्त्रं मिश्रतन्त्रम् ।

**तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।**

**वामं च क्षक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ।।**

**सप्तमातृपरं मिश्रं सिद्धान्तं वेदसंमतम् ।।**

(सि.शि., ५.११)

(पश्यत – शैवतन्त्रम्)

## मिश्रशैवम्

शैवभेदः । शिवाधिक्यबुद्ध्या शिवधर्मसहितः सन्नपि अन्यधर्मानपि यः समाचरति सः मिश्रशैवः । तस्य मतं मिश्रशैवम् ।

**मिश्रस्य शुद्धाद्वैताख्यो.............. ।**

(चं.आ., क्रि.पा.,१०.५१)

आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् एकपीठे स्थापयित्वा ये अर्चयन्ति ते मिश्रपूजाकारणात् मिश्रशैवा इति उच्यन्ते । तेषां शिवदीक्षा नास्ति । शिवाधिक्यभावानमपि न ते धारयन्ति । केवलं भस्मरुद्राक्षधारणात् तेषां शैवत्वम्। अन्तः शाक्ताः बहिः शैवाः सभामध्ये वैष्णवाः, एवं मिश्राः ते दृश्यन्ते । तस्मादपि ते मिश्रशैवाः ।

**मिश्रशैवमतो वक्ष्ये सुराचार्य समाशृणु ।।**

**आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् ।**

**एकपीठे सन्निवेश्य मिश्रीकृत्यार्चयन्ति ये ।**

**मिश्रशैवा इति हि ते प्रोच्यन्ते मिश्रपूजनात् ।।**

**नैतेषां शिवदीक्षा स्यान्न शिवाधिक्यभावना ।**

**भस्मरुद्राक्षधरणाच्छैवत्वं मिश्रपूजनात् ।।**

**मिश्रत्वं विद्यते यस्मान्मिश्रशैवाः प्रकीर्तिताः ।**

**अन्तः शाक्तं बहिःशैवं सभामध्ये तु वैष्णवम् ।**

**मिश्रितं दृश्यन्ते यस्मान्मिश्रशैवाः प्रकीर्तिताः ।।**

(चं.आ., क्रि.पा.,१०.१९-२२; तुलयत-सू.आ.,क्रि.पा.,७.१९-२१; पार.आ., १७.८-११)

## मिश्राध्वा

शुद्धाद्यध्वभेदः । षट्त्रिंशत्तत्त्वेषु कला, विद्या, कालः, रागः, नियतिः इति पञ्चतत्त्वानां समूहः ।

**आरागादाकलातत्त्वं मिश्राध्वाख्यं तु पञ्चकम् ।**

(शि.त.र.,भा-३.९.३.३८)

## मुक्तः

बन्धरहितः जीवः । जननादिदुःखरहितः जीवः मुक्तः । स च शिवसमानः । मुक्तिर्नाम सच्चिदानन्दलक्षणा परा तृप्तिः । नित्यतृप्तः मुक्तः । तस्य अन्यैः भोगसाधनैः किमपि प्रयोजनं नास्ति । यस्य ज्ञानज्ञेयज्ञातृरूप-त्रिपुटीसम्बन्धः नास्ति सः मुक्तः । यः व्यापारशून्ये क्षोभरहिते शिवलिङ्गैक्यसम्पन्ने स्वहृदये सदा वर्तते सः शिवयोगी मुक्तः इत्युच्यते ।

**प्रसन्ने सति मुक्तोऽभून्मुक्तश्शिवसमो भवेत् ।।**

**मुक्तिरेव परा तृप्तिः सच्चिदानन्दलक्षणा ।**

**नित्यतृप्तस्य मुक्तस्य किमन्यैर्भोगसाधनैः ।।**

**मुक्तस्य ज्ञानसम्बन्धो ज्ञेयाभावः स्वभावतः ।**

**उपाधिसहितं ज्ञानं न भेदमतिवर्तते ।।**

**वृत्तिशून्ये स्वहृदये शिवलीने निराकुले ।**

**यः सदा वर्तते योगी स मुक्तो नात्र संशयः ।।**

(सि.शि.,९.१४; १८.७४; १९.९१, १४.३३)

**प्रकृत्याद्यष्टबन्धेन निर्मुक्तो मुक्त उच्यते ।**
**प्रकृत्यादिवशीकारो मोक्ष इत्युच्यते बुधैः ।।**

(क्रि.सा.,भा-१, ३.३१६)

(पश्यत - अष्टप्रकृतयः, अष्टबन्धः)

## मुक्तागुच्छम्

ईश्वरोक्तपञ्चमहासूत्रेष्वन्यतमम् । धेनुकर्ण - (पण्डिताराध्य) - नामक चतुर्थाचार्यसम्बद्धं महासूत्रम् ।

**तत्पुरुषाख्यमुखोत्पन्नो धेनुकर्णेति विश्रुतः ।।**
**तन्नाम पण्डिताराध्यः तत्सूत्रं मुक्तगुच्छकम् ।**

(वी.स.सं., १.४७-४८)

## मुक्तिः

यस्य चित्तवृतौ जगत् समालीनं भवति तस्य शिवयोगिनः यो शिवानन्दपरिस्फूर्तिः विद्यते सा मुक्तिरिति कथ्यते । जननमरणादिक्लेश-विरहिते दोषरहिते चिदाकाशे सामरस्यभावेन लीनस्य या स्थितिः भवति, तस्याः सत्तानन्दप्रकाशकं जगन्मोहनिवर्तनसमर्थं ज्ञानमेव मुक्तिरिति उच्यते। अन्यच्च सच्चिदानन्दस्वरूपिणी परा तृप्तिरेव मुक्तिरित्यपि उच्यते ।

**चित्तवृत्तिसमालीन जगतः शिवयोगिनः ।**
**शिवानन्दपरिस्फूर्तिर्मुक्तिरित्यभिधीयते ।।**
**निरस्तविश्वसम्बाधे निष्कलङ्के चिदम्बरे ।**
**भावयेल्लीनमात्मानं सामरस्यस्वभावतः ।।**
**सैषा विद्या परा ज्ञेया सत्तानन्दप्रकाशिनी ।**
**मुक्तिरित्युच्यते सद्भिः जगन्मोहनिवर्तिनी ।।**
**मुक्तिरेव परा तृप्तिः सच्चिदानन्दलक्षणा ।**

(सि.शि.,१४.१५, ४२-४३; १८.७४)

## मुख्यशिष्यः

शिष्यप्रभेदः । वंश्य आगन्तुकश्चेति शिष्यो द्विविधः । तत्र वंश्यशिष्यस्य मुख्यः सामान्यः इति द्विविधभेदयोरन्यतरः । स च ब्रह्मचारी, गृहस्थः इति द्विधा ।

**मुख्यः सामान्यः इत्येवं पुनर्वंश्यो द्विधा मतः ।।**
**बेह्मचारी गृही चेति द्विधा मुख्यो विभिद्यते ।**

(वी.स.सं., १४.२, ३, पृ.१७७)

(पश्यत – शिष्य)

## मुद्रा

शिवयोगप्रदीपिकोक्तदिशा खेचरीमुद्रा शाम्भवीमुद्रा चेति मुद्रा द्विविधा। तत्र खेचरीशाम्भवीमुद्रयोः भेदः स्थानभेदमवलम्बते । तत्र खेचरीमुद्रायाः लक्षणे सैव शाम्भवीमुद्रा इत्युक्तम् । तथा हि –

**लक्ष्यलीनमनसाऽनिलेन यो वर्ततेऽचलिततारया भवेत् ।**
**खेचरीयमथ सैव शाम्भवी मुद्रया स तु तया जगद्गुरुः ।।**

(शि.यो.प्र.,५.३)

नासिकाग्रस्थानभेदेन सा एव खेचरीमुद्रा शाम्भवी मुद्रेत्युच्यते । तथा हि –

**नासाग्रदत्तनिमिषोन्मिषबाह्यदृष्ट्या ।**
**लक्ष्ये सदाशिवविमर्शकगूढ़दृष्ट्या ।।**
**ज्योतिस्वरूपमचलं हृदि बाह्यहीनम् ।**
**पश्यन्ति ये त इह संयमिनः कृतार्थाः ।।**

(शि.यो.प्र.,५.७)

इयमेव खेचरीमुद्रा नासिकाग्रदृष्ट्या नादानुसन्धानमनसा च युक्ता पूर्वशाम्भवी इत्युच्यते । सा एव नासिकाग्रदृष्ट्या नादब्रह्ममनोलीना च उत्तरशाम्भवी इत्युच्यते । तथहि –

**अन्तश्चित्तं बहिश्चक्षुर्निमेषोन्मेषवर्जितम्**

**एषा सा शाम्भवीमुद्रा सर्वतन्त्रेषु गोपिता ।**

**शाम्भवी द्विविधा प्रोक्ता पूर्वोत्तरविभेदतः**

(शि.यो.प्र.,५.७, व्याख्यानोद्धृतः, पृ.१४६)

सा एव शाम्भवीमुद्रा मूलावलोकिनी पूर्वमुखी सन्धानरूपिणी च भूत्वा बोधमुद्रा ज्ञानमुद्रा चेत्युच्यते । तथा हि –

**मूलावलोकिनी पूर्वमुखी सन्धानरूपिणी**

**बोधमुद्रा ध्यानमुद्रा शाम्भवीत्येकवाचकम् ।**

(शि.यो.प्र., ५.८. व्याख्यानोद्धृतः, पृ-१४७)

## मुमुक्षुः

मोक्षं इच्छुः मुमुक्षुः । संसारबन्धात् मोक्तुम्, कर्मबन्धनं च्छेत्तुं इच्छावान् इत्यर्थः । रागद्वेषादिवर्जितः शिवासक्तमनाश्चेत् मुमुक्षुः ।

**मुमुक्षुश्चेच्छिवासक्तचित्तो रागादिवर्जितः ।**

(सू.आ.,क्रि.पा.,३.५३)

## मूर्तसादाख्यम्

सादाख्यभेदः । इच्छाशक्तिदशांशजन्यं विद्याकलायुक्तं शिवतत्त्वम् । सर्वावयवसम्पन्नमिदं मूर्तं प्रभामयं च ।

**इच्छाशक्तिश्च विद्या च तस्याः पर्यायवाचकौ ।**

**तच्छक्तेस्तु दशांशेन मूर्तसादाख्यमुद्भवम् ।।**

**मूर्तत्वाच्च कलायुक्तं रूपं चेति प्रकीर्तितम् ।।**

**ज्वालाग्निसदृशप्रख्या दिव्यलिङ्गाकृतिर्भवेत् ।**

**त्रिणेत्रं चारुवदनं सर्वावयवसंयुतम् ।।**

शि.त.र.,भा-१, १.६.२८-३१)

इच्छाशक्तेः गुणत्वाच्च तस्मान्मूर्तमुदाहृतम् ।
मूर्तत्वाच्च कलायुक्तं रूपं चेति प्रकीर्तितम् ।।
ज्वालाग्निसदृशप्रख्या दिव्यलिङ्गाकृतिर्भवेत् ।
तस्यार्धार्ध्यैकभागे तु चैकवक्त्रसमन्वितम् ।
त्रिणेत्रं चारुवदनं सर्वावयवसुन्दरम् ।।
कृष्णपरशुहस्तं च वराभयचतुर्भुजम् ।।
एवं लक्षणसंयुक्तं लिङ्गमूर्तमुदाहृतम् ।।

(वा.शु.आ.,१.५७–५९)

## मूर्तिब्रह्म

पञ्चब्रह्मसु प्रथमं मूर्तिब्रह्म । अन्यानि चत्वारि ब्रह्माणि तत्त्वब्रह्म, भूतब्रह्म, पिण्डब्रह्म, कलाब्रह्म चेति । तत्र ब्रह्मविष्णुरुद्राख्याः मूर्तयः प्रणवाधिपाः । तस्मात् यत् प्रणवरूपं तत् मूर्तिब्रह्मरूपम् । साकल्यादि यानि पञ्चप्रणवरूपाणि तानि मूर्तिब्रह्माणि ।

मूर्तिब्रह्म तथा पूर्वं तत्त्वब्रह्मद्वितीयकम् ।
भूतब्रह्म तृतीयं स्यात्पिण्डब्रह्म चतुर्थकम् ।।
पञ्चमं च कलाब्रह्म ब्रह्मपञ्चकमीरितम् ।
ब्रह्मा विष्णुश्च रुद्रश्च मूर्तयः प्रणवाधिपाः ।
तस्मात् प्रणवरूपं तु मूर्तिरूपमुदाहृतम् ।।
साकाल्यादिस्तु यत् पञ्च मूर्तिब्रह्म तदुच्चते ।

(वा.शु.आ., ७.५–८)

(पश्यत – प्रणवः)

## मूलबन्धः

केवलकुम्भकाभ्यासोपायत्वेनोक्तेषु मूलबन्धः (आधारबन्धः), उड्डीयनबन्धः जालबन्धश्चेति त्रिविधबन्धेष्वेकतमः । अपानवायुनिरोधेन

अपानवायुनाम्नः सूर्यस्य प्राणवायुनाम्ना चन्द्रेण सह मिश्रीकृत्य तदूर्ध्वगतं सुषुम्नास्थानं प्राप्य योगैकसिद्धिं सर्वदा यः कुरुते स एव बन्धः प्रज्ञावद्भिः मूलबन्ध इति कथ्यते । स एव आधारबन्ध इत्यपि कथ्यते ।

**मूलोड्डीयणजालबन्धनविधावभ्यासतो योगिनो**
**वायोरुद्गमनं निरङ्कुशविधेस्तद्व्योम्नि संरोधनात् ।**
**योऽपानसूर्यमथ वायुनिरोधनेन**
**प्राणेन्दुना सह तदूर्ध्वगतं प्रकृत्य ।**
**योगैकसिद्धिमनिशं कुरुते समस्त**
**प्रज्ञावतां भुवि स एव हि मूलबन्धः ।।**

(शि.यो.प्र.,२.४९-५०)

## मूलपञ्चाक्षरी

पञ्चपञ्चाक्षरीमन्त्रेष्वेकतमा । विश्वाराध्यसम्बद्धस्कन्दगोत्रोत्पन्नानां मन्त्रः ।

**मूलं षडक्षरो मन्त्रः षडक्षरसमन्वितः ।**
**(ओं) ह्रां नमः शिवाय ।**

(वी.स.सं.,५.४०)

(पश्यत – पञ्चाक्षरीमन्त्रः)

## मूलप्रासादः

पञ्चप्रासादमन्त्रेष्वेकतमः ।

**शुद्धप्रासाद इत्युक्तः मूलप्रासाद उच्यते ।**

(वा.शु.आ.,५.२३)

(पश्यत – प्रासादमन्त्रः)

## मूलमन्त्रः

मूलमन्त्रः ओङ्कारः, पञ्चाक्षरमन्त्रश्च ।

**त्रिपुण्ड्रं भस्मना धार्यं मूलमन्त्रेण साधकैः ।**

(सि.शि.,७.३३)

**मूलबीजमयं मन्त्रश्चिन्तारत्नमिवापरम् ।**

(सू.आ.,क्रि.पा., ४.५३)

**मूलं विद्या शिवं शैवं सूत्रं पञ्चाक्षरं तथा ।**
**षडक्षरं च तस्याहुर्नामानि मुनयो मनोः ।।**

(पार. आ., ११.४४)

**मूलं विद्या शिवं चैव सूत्रं पञ्चाक्षरस्तथा ।**
**सामान्यस्य विजानीयादोङ्कारो हृदयं मतम् ।।**

(चं.आ.,क्रि.पा., ८.१७)

**मूलं विद्या शिवश्शैवं सूत्रं पञ्चाक्षरस्तथा ।**
**एतानि नामधेयानि कीर्तितानि महामनोः ।।**

(सि.शि.,८.२३)

**मूलमन्त्रं जपन्तस्तु न येयुरवटं प्रति ।**

(पार.आ., १८.३४)

## मूलाधारचक्रम्

चक्रभेदः । प्रथमचक्रम् । गुदलिङ्गयोः मध्ये स्थितमेतत् चतुर्दलकमलाकारम् । एकैकस्मिन्नपि दले व, श, ष, स–इति प्रत्येकमक्षरमधिवसति । किञ्च एकैकस्यापि दलस्य प्रत्येकं परमानन्दः, सहजानन्दः, वीरानन्दः, योगानन्दः–इति फलम् । इदञ्च कुण्डलिनीशक्ते–राश्रयस्थलम् ।

**गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।**

**परमः सहजस्तद्वदानन्दो वीरपूर्वकः ।।**

**योगानन्दश्च तस्य स्यादैशान्यादिदले फलम् ।**

**अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपञ्चके ।**

(शि.त.र.,भा–३.९.१.१३१–१३३)

## मोक्षः

अमृतस्य देवधारणो भूयासमिति श्रुतिवाक्योक्तदिशा लिङ्गाङ्गसामरस्ये सति तत्फलत्वेन मोक्षः प्रोच्यते ।

**तत्रामृतस्य वाक्योक्तलिङ्गाधारणवैभवे ।**

**लिङ्गाङ्गसामरस्ये च फले मोक्षं प्रचक्षते ।**

(क्रि.सा.,भा–१.१.५)

(पश्यत – मुक्तिः)

## मोक्षमार्गः

ब्रह्मपदवाच्यः शिवः स्वीयया शक्त्या षड्विधः अभवत् । भक्तादिषड्विध-स्थलमेव मोक्षमार्गः । स एव वीरमाहेश्वरैः सोपानमार्गत्वेनादृतः ।

**तद्ब्रह्मस्थलशब्देन स्वशक्त्या षड्विधं भवेत् ।**

**मोक्षमार्गैकसोपानं वीरमाहेश्वरादृतम् ।।**

(वी.शै.प्र.,पृ.८)

# य

## यकारः

मनुदेवतयोरैक्यमिति व्यासनिरुक्त्या पञ्चाक्षरीमन्त्रलिङ्गयोरैक्यम् । वाचकस्य वर्णरूपत्वं लिङ्गस्य परशिवस्वरूपत्वम्, अतः लिङ्गवाचकः षड्वर्णः ॐकारपूर्वकः पञ्चाक्षरमन्त्रस्वरूपः । तेषु षड्वर्णेषु यकारः लिङ्गगतगोलकस्य सङ्केतः ।

**नमः पीठमिति प्रोक्तं शिकारं मध्यमीरितम् ।**
**वाकारं गोमुखं वृत्तं यकारं गोलकं स्मृतम् ।।**
**ॐकारं लिङ्गमाख्यातं षड्वर्णं लिङ्गमुच्यते ।।**

(सि.साराः., पश्यत – लिं.धा.चं., पृ.४६)

पञ्चाक्षरमन्त्रे शिकारः पञ्चमः वर्णः । अयं वर्णः व्योमरूपः । सदाशिवः दैवम् । शक्तिरुन्मनी । व्योम आधारः । जगती छन्दः । भारद्वाज ऋषिः । ऊर्ध्वमुखं स्थानम् । ईशानो ब्रह्म । शूलमायुधम् । कला शान्त्यतीता । शून्यं गुणः । चक्रम् चन्द्रिकामणेः प्रकाशः । प्रकृतिः करणम् । समानो वायुः । श्रोत्रं ज्ञानेन्द्रियम् – इति यकारस्य षोडशरूपता । अयं वर्णः प्रसादलिङ्गं भवति । पुनरयं वर्णः शैवीतनोः वकारेण सह भुजद्वयम् ।

**यकारं व्योमरूपं तु दैवं चैव सदाशिवः ।**
**उन्मनी शक्तिरेवोक्ता आधारं व्योम चोच्यते ।।**
**जगती छन्दसा युक्तं भारद्वाज ऋषिस्तथा ।**

**स्थानमूर्ध्वमुखं विद्याद् ब्रह्म चेशानमेव च ॥**
**आयुधं चैव शूलं स्याच्छान्त्यतीता कलापि च ।**
**गुणस्तु शून्य एव स्यात् प्रकाशश्चन्द्रिकामणेः ॥**
**करणं प्रकृतिः प्रोक्तं समानो वायुरेव च ।**
**श्रोत्रं ज्ञानेन्द्रियं प्रोक्तमित्येते षोडशक्रमात् ।**
**यकाराक्षरमित्युक्तं न भूतो न भविष्यति ॥**

(चं.आ.,क्रि.पा., ८.३८-४१)

**यकारः स्याद् प्रसादाख्यम् .............. ।**

(अ.सू.,६.५०)

**.................. वायकारभुजद्वयी ॥**

(चं.आ.,क्रि.पा.,११.३९)

## यजमानः

कर्मादिपञ्चयज्ञानां कर्ता यजमानः ।
**तस्यैवं विदुषो यज्ञस्यात्मा यजमानः ।**

(म.ना.उ.,५२, पृ.१२६)

## यज्ञः = यागः

अयं पञ्चप्रकारः इत्युक्तम् ।
**इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः ।**

(सि.शि.,९.२४)

**अन्तर्यागवतां देवि हृदयस्थः सदाशिवः ।**

(सू.आ.,क्रि.पा.,६.३१)

**अन्तर्यागो बहिर्यागः सततं ज्ञानशीलता ।**

(पार.आ.,१२.४)

(पश्यत - पञ्चयज्ञाः)

## यज्ञसूत्रम् = यज्ञोपवीतम्

चतुर्दशमुखरुद्राक्षाणामष्टोत्तरसंख्याकानां हारः यज्ञसूत्रमिति उच्यते।

**अष्टोत्तरशतैर्मालामुपवीतं प्रकल्पयेत् ।**

(रु.जा.उ.,१९)

**चतुर्दशमुखं यज्ञसूत्रं अष्टोत्तरशतम् ।**

(सि.शि., ७.५८)

**यज्ञसूत्रधृतिर्यद्वत्प्रत्यक्षश्रुतिचोदिता ।**

(पं.च.,७.६७)

## यमः

अष्टाङ्गयोगे विद्यमानमेकम् अङ्गम् । बहिरिन्द्रियनिग्रहः यमः । स च अहिंसादिपञ्चधा इत्येके, ब्रह्मचर्यादिदशधेति अन्ये । देहेन्द्रियादिवैराग्यं यमः।

**यमस्तु अहिंसा सत्यास्तेयब्रह्मचर्यापरिग्रहरूपेण पञ्चधा ।**

(वी.आ.चं.,पृ.५)

**सुब्रह्मचर्यं नियताशनं च धृतिर्दयासूनृतमार्जवं च ।**
**शुचित्वमस्तेयमदैन्यहिंसे यमा दशैते मुनिभिर्प्रणीताः ।।**

(शि.यो.प्र.,२.१०)

**देहेन्द्रियादि वैराग्यं यम इत्युच्यते बुधैः ।**

(वी.आ.चं.,पृ.५.,श्लो.५; श.त्र.,पृ.१५, श्लो.१२१)

**आहारनिद्रेन्द्रियदेहसर्वव्यापारशीतातपसंज्ञकानाम् ।**
**जयश्च शान्तिश्च भवेद्यमाङ्गं शनैश्शनैस्साधयितुं स योग्यः ।।**

(शि.यो.प्र.,४.४)

**यमभेदः**

पञ्चधा, दशधेति यमभेदः सप्रमाणमुक्तमेव ।

## यात्रा

गुर्वादिदर्शनार्थं क्रियमाणं प्रयाणम् यात्रा । गुरुयात्रा, देवयात्रा, तीर्थयात्रेति यात्रा त्रिविधा । एतासु तिसृसु गुरुयात्रायाः फलमधिकम् ।

**गुरुयात्रा देवयात्रा तीर्थयात्रेति च त्रिधा ।**

**आसां त्रिविधयात्राणां गुरुयात्रा फलाधिका ।।**

(चं.आ.,क्रि.पा.,२.२८)

**गुरुयात्रा सदा काशीयात्रा तस्य यदीक्षणम् ।**

(पार.आ.,१४.९७)

## योगः

१. योगश्चित्तवृत्तिनिरोधः ।

**योगः चित्तवृत्तिनिरोधः ।**

(यो.सू.,१.२)

२. समत्वम् ।

**सिध्यसिध्योस्समो भूत्वा समत्वं योग उच्यते ।।**

(भ.गी., २.४८)

वायवीयसंहितायाम् –

**मदुक्तेनैव मार्गेण मयि संस्थाप्य चेतसम् ।**

**वृत्त्यन्तरनिरोधो यः स योग इति कथ्यते ।।**

३. जीवात्मपरमात्मनोःसम्बन्धः ।

**योगो नाम हि सम्बन्धो जीवात्मपरमात्मनोः ।**

**ध्यानयोगेति वाक्येन ध्याननिष्ठा उदाहृताः ।।**

**लिङ्गं जीवः परं लिङ्गं सामरस्यं तयोः शुभम् ।**
**योग इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ।।**

(क्रि.सा.,भा-१, २, पृ.७१)

४. योगसिद्धान्तशास्त्रम् ।

**अगस्त्य खलु सिद्धान्ताः विख्याता रुचिभेदतः ।**
**सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।**

(सि.शि.,५.३-४)

**योगभेदः**

योगो विभज्यते बहुधा । तत्र प्राधान्येन चतुर्धा -

**मन्त्रो लयो हठो राजयोगश्चेति चतुर्विधम् ।**
**तमाहुः पूर्वमुनयस्सिद्धाश्शम्भुप्रबोधिताः ।।**

(शि.यो.प्र., १.४)

पञ्चधा -

तत्र मन्त्रादिभिस्सह शिवयोगयोजनेन योगाः मन्त्रयोगः, लययोगः, हठयोगः, राजयोगः, शिवयोग इति पञ्च ।

**न भेदश्शिवयोगस्य राजयोगस्य तत्त्वतः ।**
**शिवार्थिनां तथाप्येवमुक्तो बुद्धेः प्रवृद्धये ।।**

(शि.यो.प्र., १.१३)

## योगदीक्षा

दीक्षाभेदः । गुरुणा शिष्याय दीयमाना योगप्रदानात्मिका दीक्षा । अनया च मनोनिग्रहः साध्येत ।

**योगेन योगदीक्षा स्याच्छिवत्वे सा व्यवस्थिता ।**

(शि.त.र.,भा-३,९.७.३१)

## योगपादः

शैवागमपादः । पादेऽत्र मन्त्रलयहठराजात्मकचतुर्योगः प्रतिपाद्यते ।

**योगपादे मन्त्रलयहठराजाभिधानवान् ।**
**ईश्वरे चित्तसन्धानरूपश्च प्रतिपाद्यते ।।**

(शि.त.र.,भा-१, १.२.३९)

## योगशैवः

शैवभेदः । भक्तिः, वैराग्यम्, अभ्यासः, ध्यानम्, एकान्तसेवनम्, भिक्षाटनम्, लिङ्गपूजा, सततं शिवस्मरणम् – इत्यष्टाङ्गविशिष्टः लिङ्गी शैवो योगशैवः । स च – साकारयोगशैवः, निराकारयोगशैव इति द्विविधः ।

**भक्तिर्वैराग्यमभ्यासो ध्यानमेकान्तसेवनम् ।**
**भिक्षाटनं लिङ्गपूजा स्मरणं सततं मम ।।**
**एतानि योगाष्टाङ्गानि योगशैवस्य लिङ्गिनः ।**
**एतदङ्गसमोपेतो योगशैव उदाहृतः ।।**

(पार. आ.,१०.५५-५६)

**शैवभेदस्य यद्योगपूर्वत्वं योगपाठवत् ।**
**स चापि द्विविधो योगः साकारश्च निराकृतिः ।।**

(पार.आ.,१०.१३)

(पश्यत – साकारयोगशैवः, निराकारयोगशैवः)

## योगसमाधिः

यथा दीप अल्पोऽपि महत् निबिडं च तमः क्षणादेव विनाशयति तथा अल्पोऽपि योगसमाधिः शुभाशुभं कर्म विनाशयति ।

**अत्यल्पदीपस्सुमहत्तमस्तु विनाशयेद्यो निबिडं हठाद्यथा ।**
**अल्पोप्यहो योगसमाधिरेषा विनाशयेत्कर्मशुभाशुभं तथा ।।**

(शि.यो.प्र.,५.५४)

## योगाङ्गम्

अङ्गस्थलभेदः । त्रिविधाङ्गेष्वन्यतमम् । तत्र च प्रथमम्। शिवयोगसुखप्राप्तिकारणात् योगाङ्गमित्यन्वर्थं नाम। इदं योगाङ्गमेव कारणशरीरम् (तनुः) इत्युच्यते । तदेव प्राज्ञ आत्मा । सुषुप्त्यवस्था एव योगाङ्गम् ।

**..................योगाङ्गं प्रथमं प्रोक्तम् ।**
**शिवयोगसुखावाप्त्या योगाङ्गमिति गीयते ।**

(क्रि.सा.,भा-३, पृ.१०६)

**योगाङ्गं कारणं प्रोक्तं ................ ।**
**योगाङ्गं प्राज्ञ एव स्यात् ................. ।**
**सुषुप्त्यवस्था योगाङ्गं .................. ।**

(अ.सू.,४.८, १०, ९)

(पश्यत – अङ्गस्थलम्)

तच्च ऐक्यस्थलम्, शरणस्थलम् इत्युभयस्थलात्मकम् ।

**योगाङ्गमैक्यं शरणस्थलमित्युभयं भवेत् ।**

(क्रि.सा.,भा-३, पृ.१०६,२४.६)

## योगाष्टाङ्गानि

योगशैवस्य लिङ्गधारिणः अष्टौ योगाङ्गानि योगाष्टाङ्गानि । तानि- भक्तिः, वैराग्यम्, अभ्यासः, ध्यानम्, एकान्तसेवनम्, भिक्षाटनम्, लिङ्गपूजा, सततशिवस्मरणं चेति ।

**एतानि योगाष्टाङ्गानि योगशैवस्य लिङ्गिनः ।**

(पार.आ.,१०.५६)

(पश्यत – योगशैवः)

## योगाणवम्

सिद्धाणवादिपञ्चाणवेष्वेकम् । तेषु पञ्चमम् । प्राणादिदशवायुभिः यत् अविद्यादिमलं उद्बोध्यते तत् योगाणवमिति कीर्त्यते ।

**योगाणवमिति प्राहुः प्रमथाः तत्त्वपारगाः ।**

(वी.आ.,१.१६)

(पश्यत – आणवमलम्)

## योगिराट्

यः नेत्रे निमील्य किञ्चिदुन्मील्य च मनोनेत्रेण अन्तरात्मानं (ब्रह्म) पश्यति स योगिराट् ।

**नेत्रे निमीलिते नित्यं किञ्चिदुन्मीलिते तथा ।**

**यो मनश्चक्षुषा ब्रह्म पश्यतीति स योगिराट् ।।**

(शि.यो.प्र.,४.३४)

## योगी

शिवयोगी इत्येव । शिवतत्त्वे विलीनः जीवन्मुक्तः । लिङ्गाङ्गसामरस्यवान् ।

**लिङ्गं तत्पदमाख्यातमङ्गं त्वंपदमीरितम् ।**

**संयोगोऽसिपदप्रोक्तमनयोरङ्ग लिङ्गयोः ।।**

(अ.सू., ५.२७)

**तत्पदेनोच्यते लिङ्गं त्वं पदेनाङ्गमीरितम् ।**

**अनयोरैक्यभावोऽयं सम्बन्धोऽसि पदेन च ।।**

**एवं लिङ्गाङ्गसम्बन्धभावना यस्य विद्यते ।**

**स योगी स च सर्वज्ञो जीवन्मुक्तः स उच्यते ।।**

(वी.स.सं. उल्लेखः – लिं.धा.चं., पृ.१७८)

# र

## रक्षा

भस्मभेदः। विभूत्यादिपञ्चभस्मसु एकतमा । भूतपिशाचादीनां बाधानिवारकं पवित्रं ग्रहाणामप्युपद्रवानेतन्निवारयति । रक्षणाद् रक्षा । रक्षासु कर्मसु इदमुपयुज्यते । रक्षेयमीश्वरस्य ईशान्यमुखाज्जाता ।

**रक्षणात् सर्वभूतेभ्यो रक्षेति परिगीयते ।**

**रक्षा चेशानवक्त्राच्च नन्दादिद्वारतो भवेत् ।**

**रक्षा च मोक्षकार्येषु प्रयोक्तव्या सदा बुधैः ।**

(सि.शि.,७.६,९-११)

**भूतप्रेतपिशाचेभ्यः सग्रहेभ्योऽभिरक्षणात् ।**

**रक्षा स्यात् चोरसर्पेभ्यो व्याघ्रादिभ्यश्च सर्वदा ।।**

(क्रि.सा.,उल्लेखः = शै.र.,भा-१, पृ.१४२, श्लो.७५, ७८)

**रक्षा चेशानवक्त्राच्च सर्वलोकहिताय वै ।।**

(शि.त.र.,भा-३, ८.५.३३)

## रसप्रसादः = रुचिपदार्थः

गन्धादिपञ्चप्रसादेष्वेकतमः। माहेश्वरस्थले ज्ञानशक्तियुक्ताय गुरु-लिङ्गाय निष्ठाभक्त्या सुबुद्धिहस्तद्वारा मःकारमन्त्रपूर्वकं रसप्रसादं (रुचिपदार्थं) रसनाङ्गमुखेन समर्प्य स्वीक्रियमाणः प्रसादः रस - (रुचि) - प्रसादः ।

**रस्यद्रव्यं समर्प्य स्वयममलरसाख्यप्रसादं भजेत ।।**

(अ.सू.,७.४६)

(पश्यत – अर्पणम्)

## रसशुद्धिः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन उक्तासु षोडश शुद्धिष्वेकतमा ।

**गव्यं तु सर्वदा ग्राह्यं रसशुद्धिरियं मता ।**

(चं.आ.,क्रि.पा.,९.४२)

(पश्यत – षोडशशुद्धयः)

## रागः

षट्त्रिंशत्तत्त्वान्यतमम् । स्रक्चन्दनवनितादिविषयेष्वासक्तिः रागः ।

**पूर्णताशक्तिरेवापूर्णतां प्राप्य स्रक्चन्दनवनितादिविषयासक्ति–लक्षणरागतत्त्वम् ।**

(शि.मं.,पृ.५३)

**प्रकृतिजातवस्तूनामात्मने प्ररोचनं रागतत्त्वम् ।**

(शै.सि.दी.,पृ.२; शि.त.र.,भा–३, ९.३.३०)

## राजयोगः

योगभेदः । मन्त्रादिचतुर्षु पञ्चसु वान्यतमः प्रधानश्च । चक्षुर्मनः–प्राणानां बाह्यप्रवृत्तिं निरुद्ध्य, बाह्यमध्यान्तर्लक्ष्येषु तान् संयोज्य, ततः प्राप्यमाणः निजवस्तुसाक्षात्कारः राजयोगः । नित्यानित्यवस्तुविवेकः, इहपरफलभोगविरागः, शमादिषट्कम्, मुमुक्षुता, श्रवणम्, मननम्, निदिध्यासनम्, तत्पदार्थत्त्वंपदार्थयोश्शोधनमिति योगस्यास्य अष्टौ अङ्गानि ।

**उत्तरोत्तरवैशिष्ट्याद्योगश्चत्वार एव हि ।**

**तेष्वेक एव मुख्योऽसौ राजयोगोत्तमोत्तमः ।।**

(शि.यो.प्र., १.९-१०)

**राजयोगभेदः**

सांख्ययोगः, तारकयोगः, अमनस्कयोग इति राजयोगस्त्रिधा । तत्र पञ्चविंशतितत्त्वानां ज्ञानं यत् तत् सांख्ययोगः । बहिर्मुद्रापरिज्ञानात् तारकयोगः। अन्तर्मुद्रापरिज्ञानात् अमनस्कयोगः । बहिर्मुद्रा नाम मनो - दृष्टि - मारुतानां यथा बहिर्मुखत्वं न भवति तथा नियन्त्रणम् । मनसः विषये प्रचारः यथा न भवति तथा स्तम्भनं अन्तर्मुद्रा । तादृशमुद्रायाः ज्ञानम् अमनस्कयोगः । सांख्यात् तारकः श्रेष्ठः तारकाद् अमनस्कः श्रेष्ठः, सर्वयोगेभ्यः श्रेष्ठः राजयोगः ।

**सोऽपि त्रिधा भवेत् सांख्यस्तारकश्चामना इति ।**

**पञ्चविंशतितत्त्वानां ज्ञानं तत्सांख्य उच्यते ।।**

**बहिर्मुद्रापरिज्ञानाद्योगस्तारक उच्यते ।**

**अन्तर्मुद्रा परिज्ञानादमनस्क इतीरितः ।।**

**श्लाघ्यस्सांख्यात्तारकोऽयममनस्कोऽपि तारकात् ।**

**राजत्वात्सर्वयोगानां राजयोग इति स्मृतः ।।**

(शि.यो.प्र.,१.१०-१२)

(पश्यत - राजयोगी)

## राजयोगी

राजयोगसाधकस्सिद्धो वा । बाह्यमध्यान्तर्लक्ष्येषु ज्ञाने वा ब्रह्मसाक्षात्कारं संप्राप्य मनोवृत्तिराहित्येन स्थितः राजयोगी । सः सर्वत्रापि निराकारं परमात्मानमेवेक्षते ।

**त्रिषु लक्ष्येषु यो ब्रह्मसाक्षात्कारं गमिष्यति ।**

**ज्ञाने वाऽथ मनोवृत्तिरहितो राजयोगवित् ।।**

**यत्र यत्रार्थवान्योगी तत्र तत्र विलक्षयेत् ।**

**आकाशमेव यस्तस्य चित्तं भवति तादृशम् ।।**

(शि.यो.प्र., १.८; ४.४५)

(पश्यत – राजयोगः)

## राजसअहङ्कारः

अहङ्कारप्रभेदः । सत्त्विकः, राजसः, तामसश्चेति त्रिष्वहङ्कारेष्वेकतमः। बुद्धितत्त्वजन्यः कर्मेन्द्रियजनकश्च ।

**एतेषु बुद्धितत्त्वात्स्यादहङ्कारस्त्रिरूपवान् ।**

**राजसादपि वागादिकर्मेन्द्रियसमुद्भवः ।**

(शि.त.र.,भा–३, ९.३.१८, २०)

(पश्यत – अहङ्कारः)

## राजसदानम्

सात्विकम्, राजसम्, तामसं चेति त्रिविधदानेष्वेकम् । यत् प्रत्युपकाराकांक्षया फलं उद्दिश्य वा तत् दानं राजसम् ।

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**

**दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ।।**

(भ.गी., १७.२१)

**इदमेव सोपाधिकदानम् ।**

(पश्यत – त्रिविधदानम्, उपाधिदानम्)

## रुद्रः

१. परशिवः, परब्रह्म ।

**एको हि रुद्रो न द्वितीयाय तस्थुः ।**

(श्वे.उ.,३.२)

**या ते रुद्रशिवातनूरघोरऽपापकाशिनी ।**

(श्वे.उ.,३.५; वाज.सं., १६.२; तै.सं.,४.५.१.१)

**धारयेद्यस्त्रिपुण्ड्राङ्कं स रुद्रो नात्र संशयः ।।**

**कदाचित् भस्मना कुर्यात् स रुद्रो नात्र संशयः ।**

(सि.शि.,७.३८, ४०)

२. ब्रह्मविष्णुमहेश्वररूपत्रिमूर्तीनां जनकः ।

**यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।**

(श्वे.उ.,४.१२)

**तस्मान्महेश्वरो जातः तस्माद्रुद्रसमुद्भवः ।**

**तस्माज्जनार्दनो जातः तस्माज्जातः पितामहः ।।**

(शि.त.र.,भा-१,१.३.८)

## रुद्रगणः

१. एकादशरुद्राणां गणः । तेषां नामानि – १.अजः, २. एकपात्, ३. अहिर्बुध्न्यः, ४. पिनाकी, ५. पितृरूपः, ६. त्र्यम्बकः, ७. महेश्वरः, ८. वृषाकपिः, ९. शम्भुः, १०. हवनः, ११. ईश्वरश्च । (भागवतम्, ६.६)

**विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।**

(का.आ.,क्रि.पा.,८.४)

२. **पञ्चाशत् रुद्राः –**

चत्वारः, षट्, दश, द्वादश, षोडश, द्वौचेति क्रमशः आचारलिङ्ग-गुरुलिङ्ग-शिवलिङ्ग-चरलिङ्ग-प्रसादलिङ्ग-महालिङ्गसम्बद्धानां रुद्राणां गणः पञ्चाशत् संख्याकः । तेषां नामानि – खड्गेशः, बकेशः, श्वेतः, भृङ्गीश्वरः, छगलण्डेशः, द्विरण्डेशः, महाकालीश्वरः, भुजङ्गेशः, पिनाकीशः, दारुकेशः, अर्धनारीशः, उमाकान्तः, अषाढ़ीशः, दण्डीशः, अत्रीशः, मिषेशः, मेशेशः, लोहितेश्वरः, शिखीश्वरः, क्रोधेशः, चण्डः,

पञ्चान्तकेश्वरः, शिवोत्तमः, एकरुद्रेशः, कूर्मेशः, एकनेत्रः, चतुराननेश्वरः, अजेशः, शर्वः, सोमेश्वरः, लाङ्गलीशः, संवर्तकेशः, श्रीकण्ठः, अनन्तेशः, सूक्ष्मेशः, त्रिमूर्तीशः, अमरेशः, अर्घेशः, भारभूतेश्वरः, अतिथीशः स्थाण्वीशः, हरः, झिण्टीश्वरः, भौतिकेशः, सद्योजातेशः, अनुग्रहेश्वरः, अक्रूरेशः, महासेनः, लकुलीशः, शिवेश्वरश्च ।

(मकुट.,च.पा., ६.१३–२०; चं.आ.,च.पा.,४.२३)

(श्रीकण्ठादारभ्य संवर्तकपर्यन्तं पञ्चाशत् रुद्रनामानि प्रपञ्चसारे विद्यन्ते – ३.३९–४४)

३. ज्ञानवैराग्यसम्पन्नाः रुद्रतुल्यपराक्रमा अपि रुद्रा एव । तेषां गणः रुद्रगणः । ते च असंख्याताः ।

**ज्ञानवैराग्यसम्पन्नान् रुद्रतुल्यपराक्रमान् ।**
**असंख्यातान् रुद्रगणान् नमामि प्रीतिपूर्वकम् ।।**

(पं.च., १.८)

## रुद्रगायत्री

सवितृसम्बद्धगायत्रीमन्त्रः प्रसिद्धः । रुद्रपूजकाः रुद्रगायत्रीं अङ्गीकुर्वन्ति । गायत्री एकस्य वैदिकछन्दसः नाम। तस्मिन् विद्यमानः सतितृदेवताकः सन् सवितृगायत्रीमन्त्र अथवा सावित्रीमन्त्र इति कथ्यते । पञ्चब्रह्ममन्त्रेषु एकतमो भूत्वा गायत्रीछन्दसि विद्यमानः रुद्रदेवताकः मन्त्रः रुद्रगायत्री भवति । यथा – 'तत्पुरुषाय विद्महे महादेवाय धीमहि, तन्नो रुद्रः प्रचोदयात्' । एषा रुद्रगायत्री लिङ्गाभिषेकादिषु प्रयुज्यते ।

**सावित्र्या रुद्रगायत्र्या परिषिच्यैवमम्बुभिः ।**
**स्वाहान्तेभ्यस्तथाचारलिङ्गादिभ्योऽर्पयेत् ततः ।।**

(का.आ.,क्रि.पा.,७.५९)

## रुद्रबीजानि

योगे आधारादि षट्चक्रगतपद्मदलेषु यानि अक्षणाणि विन्यस्यन्ते तानि रुद्राक्षराणि ।

**इत्येकपञ्चाशद्वर्णाः रुद्रबीजानि मुख्यतः ।**

(वा.शु.आ.,९.२२)

(पश्यत – शिवचक्राणि)

## रुद्रसायुज्यम्

शिवसायुज्यम् ।

**रुद्राक्षधारणं वक्ष्ये रुद्रसायुज्यसिद्धये ।**

(सि.शि.,७.५३)

(पश्यत – शिवसायुज्यम्)

## रुद्राक्षः

शिवः दिव्यवर्षसहस्राणि चक्षुरुन्मीलितवान् । तदा तस्य अक्षिपुटाभ्यां जलबिन्दवः भूमौ अपतन् । ते अश्रुबिन्दवः महारुद्राक्षवृक्षरूपेण स्थावरत्वं प्राप्य भक्तान् अनुगृह्णन्ति । रुद्राक्षधारणात् भक्ताः सर्वपापैः विमुच्यन्ते ।

**दिव्यवर्षसहस्राणि चक्षुरुन्मीलितं मया ।**
**भूमावक्षिपुटाभ्यां तु पतिता जलबिन्दवः ।।**
**तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः ।**
**स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात् ।।**

(रु.जा.उ.,४–५; चं.आ.,क्रि.पा.,७.४–५;सि.शि., ७.४८–५०)

**शिवार्चनपरो नित्यं रुद्राक्षमपि धारयेत् ।।**
**रुद्राक्षधारणादेव मुच्यन्ते सर्वपातकैः ।।**

(सि.शि.,७.४५–४६)

**रुद्राक्षभेदः**–उत्पत्तिभेदेन वक्त्रभेदेन च रुद्राक्षाः विविधाः। तद्यथा–

१. अ) शम्भोः सूर्यनेत्रात् उदिताः कपिलवर्णाः द्वादश ।

आ) तस्यैव सोमनेत्रात् उदिताः श्वेतवर्णाः रुद्राक्षाः षोडश ।

इ) तस्यैव वह्निनेत्रात् उत्पन्नाः कृष्णवर्णाः रुद्राक्षाः दश – इत्येवं आहत्य अष्टत्रिंशद्विधाः ।

**अष्टत्रिंशत्प्रभेदेन भवन्त्युत्पत्तिभेदतः ।।**

**नेत्रात् सूर्यात्मनः शम्भोः कपिलाः द्वादशोदिताः ।**

**श्वेताः षोडश सञ्जाताः सोमरूपाद्विलोचनात् ।।**

**कृष्णा दशविधा जाताः वह्निरूपाद्विलोचनात् ।**

(सि.शि.,७.४९, ५१)

२. एकवक्त्ररुद्राक्षः, द्विवक्त्ररुद्राक्ष इत्येवं चतुर्दशवक्त्ररुद्राक्षपर्यन्तं वक्त्रभेदेन रुद्राक्षाः चतुर्दश ।

(रु.जा.उ., २७–४२; चं.आ.,क्रि.पा.,७.२५–३९; सि.शि.,७.५४–५५., शि.त.र.,भा–३, ८.६.२०–३३)

३. उत्तमं मध्यमं चेति रुद्राक्षः द्विविधः। तत्र सहजरन्ध्रयुक्तः रुद्राक्ष उत्तमः। पुरुषयत्नेन कृतरन्ध्रयुक्तः रुद्राक्षः मध्यमः ।

**स्वयमेवकृतद्वारं रुद्राक्षं स्यादिहोत्तमम् ।**

**यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ।।**

(रु.जा.उ.,१४–१५; चं.आ.,क्रि.पा.७.१५)

४. श्रेष्ठः (उत्तमः), मध्यमः, अधमश्चेति रुद्राक्षः पुनः त्रिविधः।

**धात्रीफलप्रमाणं यत्श्रेष्ठमेतदुदाहृतम् ।**

**बदरीफलमात्रं तु मध्यमं प्रोच्यते बुधैः ।।**

**अधमं चणमात्रं स्यात् प्रक्रियैष मयोच्यते ।**

(रु.जा.उ., ८–९; चं.आ.,क्रि.पा.,७.९–१०)

५. अन्यप्रकारेण रुद्राक्षाः ब्राह्मणादिरुद्राक्षवृक्षजातत्वात् ब्राह्मणाः, क्षत्रियाः, वैश्याः, शूद्राश्चेति चतुर्धा भवन्ति । तत्र श्वेताः ब्राह्मणाः, रक्ताः क्षत्रियाः, पीताः वैश्याः, कृष्णाः शूद्राश्च । श्वेतादिभेदक्रमेण ब्राह्मणादिभिः धार्याः ।

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति शिवाज्ञया ।**
**वृक्षा जाता पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ।।**
**श्वेतास्तु ब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः ।**
**पीता वैश्यास्तु विज्ञेयाः कृष्णाः शूद्रा उदाहृताः ।।**
**ब्राह्मणो बिभृयाच्छ्वेतान् रक्तान् राजा तु धारयेत् ।**
**पीतान् वैश्यस्तु बिभृयात् कृष्णान् शूद्रस्तु धारयेत् ।।**

(रु.जा.उ.,१०-१२; चं.आ.,क्रि.पा.,७.११-१३)

## रुद्राक्षधारणम्

रुद्राक्षयुक्तः देहः शिवमयः । कृम्यचुम्बितः, अभिन्नश्च रुद्राक्षः धार्यः। शिखायां, शिरसि, मूर्ध्नि, कर्णयोः, कण्ठे, वक्षसि, बाह्वोः, मणिबन्धयोः यज्ञसूत्रमिव देहे च रुद्राक्षान् धारयेत् ।

**लिङ्गं भूतिं च रुद्राक्षं ये देहे धारयन्ति च ।**
**सर्वाङ्गलिङ्गसंयुक्तं तद्देहं शिवमुच्यते ।**

(लिं.धा.चं., पृ.२६६)

**शिखायामेकमेकास्यं रुद्राक्षं धारयेद्बुधः ।।**
**द्वित्रिद्वादशवक्त्राणि शिरसि त्रीणि धारयेत् ।।**
**षट्त्रिंशद्धारयेन्मूर्ध्नि नित्यमेकादशाननान् ।।**
**दशसप्तपञ्चवक्त्रान् षट् षट् कर्णद्वये वहेत् ।।**
**षडष्टवदनान् कण्ठे द्वात्रिंशद्धारयेत् सदा ।।**
**पञ्चाशद्धारयेद्विद्वान् चतुर्वक्त्राणि वक्षसि ।।**

**त्रयोदशमुखान् बाह्वोः धरेत् षोडश षोडश ।।**

**प्रत्येकं द्वादश वहेत् नवास्यान् मणिबन्धयोः ।।**

**चतुर्दशमुखं यज्ञसूत्रमष्टोत्तरं शतम् ।।**

**धारयेत् सर्वकाले तु रुद्राक्षं शिवपूजकः ।।**

(रु.जा.उ.,१७-२२;चं.आ.,क्रि.पा.,७.१८-२२;सि.शि.,७.५४-५८)

## रुद्राक्षधारणफलम्

गवां कोटिप्रदानेन यत्फलं लभ्यते तत्फलं नित्यं रुद्राक्षधारणेन लभ्यते।

**गवां कोटिप्रदानस्य यत्फलं भुवि लभ्यते ।**

**तत्फलं लभते मर्त्यो नित्यं रुद्राक्षधारणात् ।।**

**रुद्राक्षधारणादेव मुच्यन्ते सर्वपातकैः ।।**

(सि.शि.,७.६३, ६२)

जाबालोपनिषदि - **य इदं रुद्राक्षं धत्ते सः सर्वपुण्यतीर्थस्नातो भवति, सः सर्ववेदधारी भवति, स सर्वक्रतुकृद्भवति, स सत्यं परमः शिवः सः परमः शिवः ।**

(कै.सा.,पृ.१९)

**रुद्राक्षधारणफलं वक्त्रभेदेन भिन्नं भवति ।**

(रु.जा.उ.,पृ.१६१, २७-४२; चं.आ,क्रि.पा., २.२५-३९)

## रुद्राक्षधारणस्थलम्

एकोत्तरशतस्थलेष्वेकम्। भक्तस्थलस्य पञ्चदशाङ्गस्थलप्रभेदेषु एकम्। भस्मस्नानानन्तरं ललाटे त्रिपुण्ड्रं धृतस्य शिवार्चनपरस्य भक्तस्य रुद्राक्षधारणस्थितिः रुद्राक्षधारणस्थलमित्युच्यते ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**

**रुद्राक्षधारणं पश्चात् ................ ।।**

**भस्मना विहितस्नानः त्रिपुण्ड्राङ्कितमस्तकः ।**
**शिवार्चनपरो नित्यं रुद्राक्षमपि धारयेत् ।।**

(सि.शि., ५.२७-२८,७.४५)

एवं महाज्ञानं भस्म सत्क्रियासुखेन धृतस्य लिङ्गक्रियासम्पन्नस्य शिवज्ञानचक्षुस्सम्भूतरुद्राक्षधारणे कृते सति अनन्तरं रुद्राक्षधारणस्थल-मित्युच्यते ।

## रुद्राराधनम्

अन्त्येष्टिसन्दर्भे एकादशेऽहनि ऊनमासिके, त्रैपक्षिके, ऊनषाण्मासिके, प्रतिमासं मृत्युदिने, ऊनाब्दे चेत्येवं षोडश-आराधनानि रुद्रगणाराधनानि इति कथ्यन्ते । आचारादि - षड्लिङ्गसमाश्रितानां पञ्चाशत् रुद्राणां प्रतिनिधिभूतान् माहेश्वरान् (जङ्गमान्) तोषयितुं करणीयमेतद् रुद्राराधनम् ।

**एकादशेऽह्नि माहेशान् रुद्ररूपतयार्चयेत् ।**
**यथासम्भवमेतद्धि रुद्राराधनमुच्यते ।।**

(चं.आ., च.पा.,४.३०)

## रूपप्रसादः

शब्दप्रसादादिपञ्चप्रसादेष्वेकः। प्रसादिस्थले इच्छाशक्तियुक्ताय शिवलिङ्गाय अवधानभक्त्या निरहङ्कारहस्तद्वारा शिकारमन्त्रजपपूर्वकं दृगङ्गके रूपपदार्थं समर्प्य स्वीक्रियमाणः प्रसादः रूपप्रसाद इत्युच्यते ।

**योऽसौ नित्यं प्रसादिस्थलपरमपदप्राप्तदिव्याङ्गभाजि**
**स्वेच्छाशक्तिप्रयुक्ते दृशि जगति मुखे पाणिनाऽहंङ्कृतेन ।**
**साक्षाल्लिङ्गे शिवाख्ये सविनयमवधानात्मिकाभक्तियुक्तो**
**द्रष्टव्यांशं समर्प्यार्पणविनिहितरूपप्रसादं भजेत ।**

(अ.सू.,७.४७)

(पश्यत – अर्पणम्, प्रसादः)

## रेचकः

रेचकः, पूरकः, कुम्भक इति त्रिविधप्राणायामेषु एकः । तत्र अन्तर्वृत्तिवायोः बहिः प्रेषणं रेचकः ।

**प्राणायामस्तु श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः । स च रेचकपूरककुम्भकभेदेन त्रिविधः । बाह्यवृत्तिश्वासो रेचकः ।**

(वी.आ.चं.,वा.कां,१, पृ.५)

# ल

## लघ्वर्चाविधिः

लघ्व्यां पूजायां आचमनं कृत्वा प्राणायामं विधाय देशकालौ संकीर्त्य च उपलभ्यमानैः द्रव्यैः इष्टलिङ्गपूजनं करिष्ये इति सङ्कल्पं कुर्यात् । कलशं सम्पूज्य साधकः अष्टोत्तरशतवारं षडक्षरमन्त्रं जपेत् । 'सर्वलिङ्ग स्थापयति' इति इष्टलिङ्गं हस्तमध्ये संस्थाप्य 'वेदाहम् भावग्राह्यम्' इति आवाहनं कृत्वा 'असौ योऽवसर्पति' इति दर्शनाख्यं नीराजनं कुर्यात् । 'यो वै रुद्रः' इति भस्मलेपनं इष्टलिङ्गस्य कुर्यात् । 'एतावानस्य महिमा' इति मन्त्रेण पाद्यम्, 'हंसः शुचिशत्' इति मन्त्रेण अर्घ्यम्, सावित्रीमन्त्रेण च आचमनीयं समर्प्य 'यो वै रुद्रस्स भगवान् आपः' इति अभिषिच्य 'कद्रुद्राय' इति लिङ्गतीर्थं स्वीकृत्य, 'ऋतं सत्यं' इति मन्त्रेण तत्पिबेत् । धूपदीपपुष्पाणि च समर्प्य 'यो वै रुद्रः स भगवान्' इति, 'यश्चाग्निः' इति च मन्त्राभ्यां अवसराख्यं नीराजनं कुर्यात् । फलादिकं दत्त्वा लिङ्गस्योपरि भस्म लेपयेत् । मूलमन्त्रेण पुष्पाणि निक्षिप्य धूपमाघ्रापयेत् । 'असौ योऽवसर्पति' इति मन्त्रेण मज्जनाख्यं

नीराजनं कुर्यात् । पुनः 'एतावानस्य महिमा' इत्यादि मन्त्रैः पाद्यार्ध्याचमनीयानि समर्प्य रुद्राध्यायेनाभिषेकं कृत्वा, 'अवहन्ति' इति मन्त्रं स्मरन् लिङ्गं वस्त्रेणोद्धृत्य 'कद्रुद्राय' इति लिङ्गतीर्थं स्वीकृत्य, 'ऋतं सत्यं' इति मन्त्रेण पिबेत् । 'यो वै रुद्रः' इति पठन् लिङ्गस्य अङ्गारतापनं कुर्यात् । तेनैव मन्त्रेण पुनः धूपमाघ्रापयेत्। 'उद्दीप्यस्व' इति मन्त्रं पठन् धूपमाघ्रापयेत् । 'यस्तन्तु' इति मन्त्रेण वस्त्रं लिङ्गाय समर्पयेत् । 'अग्निरिति भस्म' इति जलमिश्रितभस्म, 'नमो हरिकेशाय' इति यज्ञोपवीतम्, 'यो वै रुद्रो' इति गन्धम्, 'आकाशात्' इति अक्षतांश्च समर्पयेत् । 'सर्वव्यापिनम्' इति मन्त्रेण कर्पूरनीराजनं कुर्यात् । 'तदेवर्थं भुवन्तये' इति मालाः समर्पयेत् । 'यो वै रुद्र' इति, 'निधनपतये' इति च मन्त्राभ्यां अष्टोत्तरशतं पुष्पाणि समर्प्य, 'त्र्यम्बकं यजामहे' इति बिल्वपत्रं धारयेत् । 'नम ईद्रियाय' इति श्वेतच्छत्रं समर्प्य 'नमो वात्याय' इति चामरेण वीजयेत् । 'चन्द्रमा मनसो जातः' इति व्यजनम्, 'स यश्चायं पुरुषः' इति च दर्पणं समर्पयेत् । यो वेदादौ स्वरः प्राक्तो' इति घण्टानादं श्रावयित्वा 'अध्यवोचदधिवक्ता' इति शङ्खं वादयेत् । 'शिवेन वचसा त्वा' इति गीतम्, 'नमो दुन्दुभ्याय च'' इति वाद्यानि समर्प्य, 'नमो रुद्रायाततायिने' इति मन्त्रं पठन् साधकः नर्तनं प्रदर्शयेत् । 'उद्यन्तम्' इति प्रदक्षिणं कृत्वा 'यो रुद्रोग्नौ' इति इत्यनेन नमस्कारं समर्पयेत् । 'नमो रुद्राय च' इति स्तुतिपाठं कुर्यात् । 'अजातः' इति मन्त्रेण दैन्यं प्रदर्शयेत् । 'यो वै रुद्रः' इति धूपं समर्प्य 'न तत्र सूर्यो भाति' इति महानीराजनं प्रदर्शयेत् । 'अघोरेभ्यो' इति मन्त्रेण आचारादिलिङ्गेभ्यः चतुर्विधनैवेद्यं समर्पयेत् । ईशानमन्त्रेण महालिङ्गं भस्मना लेपयेत्, मूलमन्त्रेण च मन्त्रपुष्पं समर्पयेत् । 'यतो वाचो निवर्तन्ते' इति मन्त्रं पठन् आनन्दाख्यं नीराजनं कुर्यात् । 'स विश्वः' इति ताम्बूलम्, 'यो ब्रह्माणम्' इति च पुष्पाञ्जलिं च समर्पयेत् । 'असंख्याता' इति मन्त्रेण असंख्यातनीराजनं कुर्यात् । 'सोऽब्रवीत्' इति इष्टलिङ्गं वस्त्रेणावृत्य 'अणोरणीयान्' इति मन्त्रेण शरीरे धारयेत् ।

(का.आ.,क्रि.पा.,६.१३-४३)

## लघ्वीपूजा

सायंङ्काले मध्याह्ने च क्रियमाणासु महत्यादित्रिविधपूजास्वेकतमा। तत्र लघ्वीपूजा अशक्तैः करणीयम् इति विधिः ।

**पूजा हि त्रिविधा प्रोक्ता गुर्वी च महती लघुः ।।**

**महतीमुत्तमः कुर्याद् गुर्वीं मध्यम एव च ।**

**लघ्वीमशक्तः कुर्याच्च सायं मध्याह्नकालयोः ।।**

(मकुट., क्रि.पा.,३.२-३; चं.आ., क्रि.पा., ११.६२)

## लम्बकम्

ईश्वरोक्तपञ्चमहासूत्रेष्वन्यतमम् । अघोराख्यमुखोत्पन्नैरेकोरामाराध्य-सम्बन्धि सूत्रम् । अस्य द्वादशोपसूत्राणि जातानि ।

**अघोराख्यमुखोत्पन्नः शंखुकर्ण इतीरितः ।**

**एकोरामेति तन्नाम तस्य सूत्रं तु लम्बकम् ।।**

(वी.स.सं.,१.४४)

**शंखुकर्णविलासेन लम्बकात् द्वादशैव हि ।**

(वी.स.सं.२.६)

## लयः

संहारः । अन्तर्मुखीभावः । प्रलयः । यथा शिवात् विश्वस्य सृष्टिः भवति तथा तस्मादेव प्रतिलोमतः लयः जायते । पृथिव्यादिपञ्चभूतानि गन्धादितन्मात्रेषु तन्मात्राणि च इन्द्रियेषु, इन्द्रियाणि पुनः दशान्तःकरणेषु, तानि गुणेषु, गुणाश्च प्रकृतौ लयं प्राप्नुवन्ति । प्रकृतिः पुनः रागादिपञ्चके विलीना । रागादिपञ्चकं पुनः मायायां विलीनं भवति । ततः माया विशुद्धाध्वनि सोऽध्वा बिन्दौ लीयते ।

**शिवाद्विश्वं ततः सृष्टिः लयस्तत्प्रतिलोमतः ।**

**तन्मात्रेषु च भूतानि तन्मात्राणीन्द्रियेषु च ।।**

**इन्द्रियाणि लयं यान्ति दशान्तःकरणे तथा ।**

**गुणे तदन्तःकरणं स गुणः प्रकृतावपि ।।**

**रागादिपञ्चके सा च मायायां तच्च पञ्चकम् ।**

**विशुद्धाध्वनि सा माया बिन्दौ सोऽध्वा च लीयते ।।**

(शि.त.र.,भा-३, ९.३.१२४-१२६)

## लययोगः

मन्त्रयोगादिषु चतुर्षु पञ्चसु वा योगेषु एकः । आधारचक्रगतकुण्डलिनीं सहस्रदलचक्रस्थितशिवेन सह एकीकर्तुं ध्येयमूर्तौ नादे वा स्वचित्तलय-कारकः योगः लययोगः । तत्साधकः सिद्धो वा लययोगी ।

**मन्त्रो लयो हठो राजयोगश्चेति चतुर्विधम् ।**

(शि.यो.प्र.,१.४)

**यस्य चित्तं निजध्येये मनसा मरुता सह ।**

**लीनं भवति नादे वा लययोगी स एव हि ।।**

(शि.यो.प्र., १.६)

(पश्यत – योगः)

## लययोगी

लययोगस्य साधकस्सिद्धो वा लययोगी । तस्य च चित्तं मनसा मरुता च सह निजध्येये परमात्मनि नादे वा लीनं तिष्ठति ।

**...................... लययोगी स एव हि ।।**

(शि.यो.प्र., १.६)

(पश्यत – लययोगः)

## ललनाचक्रम्

घण्टिकायां विद्यमानं योगसम्बद्धं चक्रम् । तच्च द्वादशदलात्मकम् । मदः, मानः, स्नेहः, शोकः, भेदः, लोभः, अरतिः (क्रोधः), सम्भ्रमः, ऊर्मिः, श्रद्धा, सन्तोषः, अधिकः – इत्येवं ललनाचक्रस्य द्वादशदलानां फलानि ।

**ललनाख्यं घण्टिकायां चक्रं द्वादशपत्रकम् ।**

**मदो मानस्तथा स्नेहः शोको भेदश्च लुब्धता ॥**

**अरतिः सम्भ्रमश्चोर्मिः श्रद्धातोषोऽपरोऽधिकः ।**

**फलानि ललनाचक्रे पूर्वादिषु दलेष्विति ॥**

(शि.त.र.,भा-३, ९.१.१४३-१४४)

(पश्यत – चक्राणि)

## लाकुलम्

शैवभेदः ।

**शैवं पाशुपतं सोमं लाकुलं चेति भेदतः ।**

(सि.शि.,५.९)

(पश्यत – शैवम्)

## लिङ्गम्

गुरुलिङ्गजङ्गमादिषु अष्टावरणेष्वेकम् । गुरुलिङ्गजङ्गम इति त्रिषु पूज्यावरणेष्वन्यतमम् । यत्र स्थावरजङ्गमात्मकं जगत्सर्वं लीयते यस्माच्च पुनस्तदुत्पद्यते तत् लिङ्गं ब्रह्मवाचकम् । तल्लिङ्गम् अव्यक्तम्, अनन्तम्, अजरम्, अविकारि च । तदेव गुणत्रयात्मकं जगत् सृजति, रक्षति, संहरति च । लिङ्गं सच्चिदानन्दस्वरूपं ब्रह्म ।

**जठरे लीयते सर्वं जगत् स्थावरजङ्गमम् ।**

**पुनरुत्पद्यते यस्मात् तद्ब्रह्म लिङ्गसंज्ञकम् ॥**

**अव्यक्तं लिङ्गमाख्यातमनन्तमजरं ध्रुवम् ।**

**गुणत्रयं तदेवेशः सृजत्यवति हन्ति च ॥**

(चं.आ.,क्रि.पा.,३.८-९)

**लिकारो लयबुद्धिस्थो बिन्दुना स्थितिरुच्यते ।**

**गकारात् सृष्टिरित्युक्ता लिङ्गं सृष्ट्यादिकारणम् ॥**

**लीनं प्रपञ्चरूपं हि सर्वमेतच्चराचरम् ।**

**सर्गादौ गम्यते यस्मात् तस्माल्लिङ्गमुदीरितम् ।।**

(सू.आ.,क्रि.पा.,६.५–६)

**सच्चित्सुखनिजाकारं लिङ्गं यद् ब्रह्मसंज्ञितम् ।।**

(का.आ.,क्रि.पा.,१.१०८)

**लयं गच्छति यत्रैव जगेदतच्चराचरम् ।**

**पुनः पुनः समुत्पत्तिं तल्लिङ्गं ब्रह्म शाश्वतम् ।।**

**तस्माल्लिङ्गमिति ख्यातं सत्तानन्दचिदात्मकम् ।**

**बृहत्वाद् बृंहणत्वाच्च ब्रह्मशब्दाभिधेयकम् ।।**

(सि.शि.,६.३७–३८)

**लीयते गम्यते यत्र येन सर्वं चराचरम् ।**

**तदेतल्लिङ्गमित्युक्तं लिङ्गतत्त्वपरायणैः ।।**

(अ.सू.,३.३; क्रि.सा.,भा–३.१.२; लिं.धा.चं.,पृ.१७४, १८०)

लिङ्गस्य जगत्कारणत्वमुक्तम् । तत् कारणत्वं बिन्दुनादात्म–कत्वमवलम्बते । तत्र माता देवी बिन्दुरूपा, पिता शिवः नादरूपः । शक्तिरूपबिन्दोः शिवरूपनादस्य च मेलनात् लिङ्गे कला प्रतिष्ठिता । सा कला सूक्ष्मा, व्याप्ता च । एवं लिङ्गं नाद–बिन्दु–कलात्मकम् ।

**बिन्दुनादात्मकं लिङ्गं जगत्कारणमुच्यते ।**

**माता देवी बिन्दुरूपा नादरूपः शिवः पिता ।।**

(चं.आ.,क्रि.पा.,३.१६–१७)

**पीठिका परमा शक्तिः शक्तिर्लिङ्गं साक्षात् परःशिवः ।**

**शिवशक्तिसमायोगं विश्वं लिङ्गं तदुच्यते ।।**

(सि.शि.,११.३२)

**नादरूपः शिवः साक्षाल्लिङ्गमित्यभिधीयते ।**

**तत्पीठिका महाशक्तिः ............. ।।**

**तयोः सम्मेलनाद्देवि कला तत्र प्रतिष्ठिता ।।**

**सा कला परमा सूक्ष्मा व्याप्ता सर्वत्र सर्वदा ।।**

(सू.आ.,क्रि.पा.,६.३-४)

लिङ्गं ब्रह्म इत्युक्तम् । तदेव परशिवस्वरूपम् । लिङ्गाङ्गसामरस्य-प्रस्तावे 'तत्त्वमसि' (छां.उ.,६.८.७) इति महावाक्ये 'तत्' पदेन लिङ्गमुक्तम् । 'त्वं' पदेन च अङ्गम् (जीवः) 'असि' पदेन च तयोः संयोगः प्रोक्तः ।

**लिङ्गं तत्पदमाख्यातमङ्गं त्वं पदमीरितम् ।**

**संयोगोऽसिपदप्रोक्तमनयोरङ्गलिङ्गयोः ।।**

(अ.सू.,५.२७)

लिङ्गं पुनः पञ्चाक्षरषडक्षरमन्त्रयोः समाविष्टमस्ति । नमः शब्देन पीठम्, शिकारेण मध्यम्, वाकारेण गोमुखम् वृत्तं च, यकारेण गोलकम्, ॐकारेण लिङ्गं परामृष्टमिति लिङ्गस्य पञ्चवर्णत्वं षड्वर्णत्वं च । लिङ्गस्य ब्रह्माण्डस्वरूपमपि वर्णितम् ।

**नमः पीठमिति प्रोक्तं शिकारं मध्यमीरितम् ।**

**वाकारं गोमुखं वृत्तं यकारं गोलकं स्मृतम् ।।**

**ॐकारं लिङ्गमाख्यातं षड्वर्णं लिङ्गमुच्यते ।।**

(लिं.धा.चं.,पृ.७४)

**आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका ।**

**आलयः सर्वभूतानां लयनाल्लिङ्गमुच्यते ।।**

(चं.आ.,क्रि.पा.,३.५१)

**लिङ्गभेदः**

१. लिङ्गम् अखण्डम् एकं च । तदेव महालिङ्गम् । तदपरिच्छिन्नमव्यक्तं च ।

**अपरिच्छिन्नमव्यक्तं लिङ्गं ब्रह्म सनातनम् ।**

(सि.शि.,६.३६)

२. जङ्गमलिङ्गम्, अजङ्गमलिङ्गम् इति लिङ्गं द्विधा । जङ्गमलिङ्गं शिवयोगीति प्रसिद्धम् । अजङ्गमलिङ्गं च मृच्छिलादिनिर्मितं यत् स्थावरलिङ्गमित्युच्यते ।

**लिङ्गं तु द्विविधं प्रोक्तं जङ्गमाजङ्गमात्मना ।**

**तद्वरं जङ्गमं लिङ्गं शिवयोगीति विश्रुतम् ।।**

(सि.शि.,९.६०-६१)

३. इष्टलिङ्गम्, प्राणलिङ्गम्, भावलिङ्गं चेति त्रिविधम् । स्थूलम्, सूक्ष्मम्, परात्परमिति भेदेन लिङ्गं त्रिधा । तत्र स्थूलम् इष्टलिङ्गमित्युच्यते। सूक्ष्मं प्राणलिङ्गमित्युच्यते। परात्परं च तृप्तिलिङ्गमित्युच्यते। तृप्तिलिङ्गमेव भावलिङ्गम्। तत्र स्थूलम् इष्टलिङ्गं सकलम् (अवयवयुक्तम्)। सूक्ष्मं प्राणलिङ्गं सकलनिष्कलम्। परात्परं भावलिङ्गं च निष्कलमित्युक्तम् । इष्टलिङ्गं दृक्कलाग्राह्यम्, प्राणलिङ्गं मनोग्राह्यम्, भावलिङ्गं भावग्राह्यम् ।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया ।**

**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम् ।।**

**तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं मतम् ।**

**निष्कलं भावलिङ्गं स्याद्भावग्राह्यं परात्परम् ।**

**प्राणलिङ्गं मनोग्राह्यं भवेत् सकलनिष्कलम् ।**

**सकलं दृक्कलाग्राह्यमिष्टलिङ्गं प्रकीर्तितम् ।**

(चं.आ.,क्रि.पा.,३.२३-२४)

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलसूक्ष्मपरात्परम् ।**

**इष्टलिङ्गमिदं स्थूलं यद् बाह्ये धार्यते तनौ ।।**

**प्राणलिङ्गमिदं सूक्ष्मं यदन्तर्भावनामयम् ।**

**परात्परं तु यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते ।।**

(सि.शि.,६.४९-५०)

**अखण्डमेकं लिङ्गं स्यात् तदेव गुरुणा परम् ।**

**भावप्राणेष्टभेदेन त्रिधाभूतं नगात्मजे ।।**

(लिं.धा.चं., पृ.७३)

४. तदेव लिङ्गं उपर्यधोभागनिष्ठत्वेन चतुर्विधम् धत्ते । परबिन्दुः परोनादश्च उपरिभागनिष्ठौ । तत्र ऊर्ध्वभागेपि उपरिपरबिन्दु अधः परनादः । अपरबिन्दु अपरनादश्चेति द्वौ अधोभागनिष्ठौ उपर्यधोभागयोः वर्तेते। अस्य चतुर्भागयुक्तस्य लिङ्गस्य प्रणवो वेदिः, नादः लिङ्गाकृतिः । बिन्दुनादमयं लिङ्गं भवति । तस्मिन् शिवः नित्यं संनिहितः (जगत्सृष्टौ बिन्दुः उपादानकारणम् । परबिन्दुः शुद्धसृष्टेः अपरबिन्दुरशुद्धसृष्टेश्च कारणे इत्यवगन्तव्यम् । शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या चेति शुद्धसृष्टिः । त्रिगुणात्मकं जगत् अशुद्धसृष्टिः । नादः नाम ज्ञानशक्तिः । शुद्धसृष्टौ सा शुद्धविद्यारूपा । अशुद्धसृष्टौ सा अशुद्धरूपा । शुद्धरूपा सा परमात्मनः सर्वज्ञत्वस्वरूपिणी । अशुद्धरूपा सा जीवात्मनि परिमितज्ञानस्वरूपा ।

**तदेव शिवलिङ्गं हि तल्लिङ्गं तु चतुर्विधम् ।**

**परबिन्दुः परोनादश्चापरो बिन्दुनादकौ ।**

**उपर्यधोभागनिष्ठाश्चत्वारोऽपि सुरार्चित ।।**

**अधः स्यादपरो बिन्दुस्तदूर्ध्वमपरो ध्वनिः ।**

**तदूर्ध्वं परबिन्दुः स्यात् परनादस्तदूर्ध्वगः ।।**

**प्रणवो वेदिरस्यायं नादो लिङ्गाकृतिर्मुखे ।**

**बिन्दुनादमये लिङ्गे नित्यं संनिहितः शिवः ।।**

(चं.आ.,क्रि.पा.,३.१०-१२)

५. क्रियासारोक्तदिशा लिङ्गानि भूविकारस्वरूपाणि पञ्च – स्वयम्भुलिङ्गम्, बिन्दुलिङ्गम्, प्रतिष्ठितलिङ्गम्, चरलिङ्गम्, गुरुलिङ्गं चेति । तत्र स्वयंभूतं जातमिति स्वयम्भुलिङ्गमिति कथ्यते । बिन्दुनादमयं लिङ्गं बिन्दुलिङ्गम् । महद्भिः शास्त्रज्ञैश्च मन्त्रेण स्थापितं लिङ्गं प्रतिष्ठितलिङ्गम् । कट्यादिषु ध्रियमाणं लिङ्गं चरम् (चरलिङ्गं, रसलिङ्गं, शिलालिङ्गं, रत्नलिङ्गं, स्वर्णलिङ्गं, मृल्लिङ्गम्, स्फाटिकलिङ्गम्, बाणलिङ्गम् इत्यष्टविधम्) । विश्वस्तानां शिष्याणां कृते गुरुशरीरमेव गुरुलिङ्गम् ।

**भूविकाराणि लिङ्गानि ज्ञातानि प्रब्रवीमि वः ।**
**स्वयम्भुलिङ्गं प्रथमं बिन्दुलिङ्गं द्वितीयकम् ॥**
**प्रतिष्ठितं चरं चैव गुरुलिङ्गं च पञ्चकम् ॥**
**स्वयंभूतं जातमिति स्वयंभूरिति तं विदुः ।**
**बिन्दुनादमयं लिङ्गं स्थावरं जङ्गमं च यत् ॥**
**महद्भिश्चैव शास्त्रज्ञैः राजभिश्च महाधनैः ।**
**शिल्पेन कल्पितं लिङ्गं मन्त्रेण स्थापितं च यत् ॥**
**प्रतिष्ठितं प्राकृतं हि प्राकृतैश्वर्यभोगदम् ॥**
**कट्यादिषु त्रिकोणेषु लिङ्गमाध्यात्मिकं चरम् ।**
**प्रथमं चरलिङ्गेषु रसलिङ्गं प्रकथ्यते ।**
**शिलालिङ्गं ब्राह्मणानां सर्वकामफलप्रदम् ॥**
**रत्नलिङ्गं क्षत्रियाणां महाराज्यप्रदं शुभम् ।**
**स्वर्णलिङ्गं तु वैश्यानां महाधनवतां प्रदम् ॥**
**मृल्लिङ्गं च तु शूद्राणां महदैश्वर्यदं विदुः ।**
**स्फाटिकं बाणलिङ्गं च सर्वेषां सर्वकामदम् ॥**
**विश्वस्तानां तु शिष्याणां गुरुरित्यभिधीयते ।**
**तस्माद्गुरुशरीरं तु गुरुलिङ्गं भवेद् बुधाः ॥**

(क्रि.सा.,भा–१, ३.३४६, ३४९, ३५१, ३५७–३५९, ३६३–३६५, ४००–४०१)

६(१). इष्टादिलिङ्गत्रिविधं प्रत्येकं द्विविधम् । ततश्च आहत्य लिङ्गं षोढा । तद्यथा – इष्टलिङ्गं गुरुलिङ्गम्, आचारलिङ्गम् इति द्विविधम् । प्राणलिङ्गं चरलिङ्गम् (जङ्गमलिङ्गम्), शिवलिङ्गम् इति द्विविधम् । भावलिङ्गम् प्रसादलिङ्गम् महालिङ्गम् इति द्विविधम् ।

**भावादिलिङ्गत्रितयं द्विविधं द्विविधं भवेत् ।**

**भावलिङ्गं महालिङ्गप्रसादाभिख्यकं द्वयम् ।।**

**प्राणलिङ्गं तथा चरशिवलिङ्गद्वयं भवेत् ।**

**इष्टं तु गुरुलिङ्गाख्यमाचाराख्यं द्वयं भवेत् ।।**

(चं.आ.,क्रि.पा., ३.२६-२७)

इमानि च षट्स्थलानुगुणं विभक्तानि । तद्यथा-भक्तस्थलम् आचारलिङ्गेन संयुक्तम्, माहेश्वरस्थलं गुरुलिङ्गेन, प्रसादिस्थलं शिवलिङ्गेन, प्राणलिङ्गिस्थलं चरलिङ्गेन, शरणस्थलं प्रसादलिङ्गेन, ऐक्यस्थलं च महालिङ्गेन इति षड्विधलिङ्गानां षट्स्थलेन सम्बन्धः । एकैकस्य लिङ्गस्य भक्तादिस्थलसम्बन्धः वर्तते ।

आचारलिङ्गसंयुक्तमङ्गं भक्तस्थलं महत् ।

गुरुलिङ्गसमायुक्तमङ्गं माहेश्वरस्थलम् ।

शिवलिङ्गसमायुक्तं प्रसादिस्थलमागतम् ।

अङ्गं च चरलिङ्गेन संयुक्तं प्राणलिङ्गि यत् ।

प्रसादलिङ्गसंयुक्तमङ्गं हि शरणस्थलम् ।

महालिङ्गसमायुक्तमङ्गमैक्यस्थलं परम् ।

(अ.सू.,५.७२, ७४, ७६, ७८, ८०, ८२)

६(२). एतानि षड्विधलिङ्गानि पुनः त्रिधा त्रिधा विभक्तानि । तत्र आचारलिङ्गम् सदाचारलिङ्गम् नियताचारलिङ्गम्, गणाचारलिङ्गं चेति, गुरुलिङ्गम् दीक्षागुरुलिङ्गम्, शिक्षागुरुलिङ्गम् अनुभावगुरुलिङ्गं चेति; शिवलिङ्गम् इष्टलिङ्गम् प्राणलिङ्गम् भावलिङ्गं चेति ; चरलिङ्गम् स्वयलिङ्गम्

चरलिङ्गम् परलिङ्गं चेति ; प्रसादलिङ्गम् शुद्धप्रसादलिङ्गम् सिद्धप्रसादलिङ्गम् प्रसिद्धप्रसादलिङ्गं चेति ; महालिङ्गं च पिण्डजलिङ्गम्, अण्डजलिङ्गम्, बिन्ध्वाकाशलिङ्गं चेति षड्लिङ्गानि त्रिविधं त्रिविधं भवन्ति, आहत्याष्टादश ।

**स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।**
**सदाचारस्तु नियतो गणाचारस्तथापरः ।।**
**दीक्षा शिक्षानुभावश्च गुरुलिङ्गं त्रिधा भवेत् ।**
**शिवलिङ्गस्वरूपं ते वक्ष्यामि श्रुणु पार्वति ।**
**इष्टलिङ्गं प्राणलिङ्गं भावलिङ्गमिति त्रिधा ।।**
**चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते ।**
**स्वयं चरं परं चेति त्रैविध्यं समुपागतम् ।।**
**प्रसादलिङ्गत्रैविध्यमपि शृणु वरानने ।**
**शुद्धं सिद्धं प्रसिद्धं च भेदश्चैषामथोच्यते ।।**
**महालिङ्गस्थलं चापि त्रिधा भिन्नं शृणु क्रमात् ।**
**पिण्डजं प्रथमं प्रोक्तमण्डजं च ततः परम् ।**
**बिन्ध्वाकाश ततो ज्ञेयमेषां लक्षणमुच्यते ।।**

(सू.आ.,क्रि.पा.,८.६, १०, १४, १८, २६)

६(३). एतानि षड्विधलिङ्गानि पञ्चज्ञानेन्द्रियेषु पञ्चकर्मेन्द्रियेषु च संस्थाप्यन्ते । तथाहि – नासिकाङ्गे उपस्थे च आचारलिङ्गम्, जिह्वाङ्गे पायौ च गुरुलिङ्गम्, दृगङ्गे पादयोश्च शिवलिङ्गम्, त्वगङ्गे पाणयोश्च चरलिङ्गम्, श्रोत्राङ्गे वाचि च प्रसादलिङ्गम्, हृदयाङ्गे महालिङ्गम् ।

**हृदयाङ्गे महालिङ्गं श्रोत्राङ्गे तु प्रसादकम् ।**
**त्वगङ्गे चरलिङ्गं तु दृगङ्गे शिवलिङ्गकम् ।।**
**जिह्वाङ्गे गुरुलिङ्गं तु नासिकाङ्गे तथैव च ।**

**आचारलिङ्गमश्रान्तं सुप्रतिष्ठितमेव हि ।।**

**यथा ज्ञानेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।**

**तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।।**

(मकुट.च.पा.,२.२७–२९; सू.आ.,क्रि.पा., ८.७९–८०;
चं.आ.,च.पा.,२.१६–१८; अ.सू.,६.६–८)

६(४) पारमेश्वरागमोक्तरीत्या स्थिरम्, चरम्, स्थिरचरम्, चरस्थिरम्, स्थिरस्थिरम्, चरचरमिति षड्विधं लिङ्गम् । देवालयादिषु प्रतिष्ठितं लिङ्गं स्थिरम् । अन्यैः लिङ्गधारिभि अन्यदेवताभ्यः सह पूजनीयं लिङ्गं चरलिङ्गम्। तदपि शिलादिजं भवति । भक्तस्य देहे धार्यमाणं लिङ्गं स्थिरचरलिङ्गम् । सामान्यवीरशैवाणां शरीरमेव लिङ्गम् । तच्छरीरस्योपरि धृतं लिङ्गं चरस्थिरलिङ्गम् । वीरशैवमतवर्तिनां लिङ्गं चरचरलिङ्गम् । (स्थिरस्थिर-लिङ्गस्य लक्षणं नोपलभ्यते ) ।

**स्थिरं चरं स्थिरचरं चरस्थिरमथाम्बिके ।**

**स्थिरस्थिरं चरचरं षड्विधं लिङ्गलक्षणम् ।।**

**देवालये पाणिपीठे संविधायाष्टबन्धनम् ।**

**प्रतिष्ठितं शिलालिङ्गं स्थिरलिङ्गं तदुच्यते ।।**

**अथ यच्चरमन्येषामत्मनां धृतलिङ्गिनाम् ।**

**पञ्चभिः सह सम्पूज्यमर्काम्बागणपाच्युतैः ।।**

**लिङ्गं भवेत् स्थिरचरं यन्मद्भक्ततनौ धृतम् ।**

**लिङ्गं सामान्यवीराणां चरस्थिरमनुत्तमम् ।।**

**यद्वीरशैवाख्ये मते मम विवर्तिनाम् ।**

**लिङ्गं चरचरं प्रोक्तं यच्च विश्वात्मकं मम ।।**

(पार. आ., १६.९, ११, १३, १५, १७)

७. **नवधा–**

शैवरत्नाकरसंगृहीतरीत्या उत्तमादिभेदेन लिङ्गं त्रिविधम् – उत्तमम्, मध्यमम्, अधमं चेति । एकैकमपि त्रिधा । एवं लिङ्गं नवधा । नवाष्टसप्ताङ्गुलकं लिङ्गमुत्तमम् । षट्पञ्चकचतुर्मानं मध्यमम् । त्रिद्व्येकाङ्गुलमानीयं अधमम् । उत्तमं बुद्बुदाकारं कुक्कुटाण्डाकारं मध्यमम् । गोककुत्सदृशमधमम् ।

**उत्तमं मध्यमं नीचमिति लिङ्गं त्रिधोच्यते ।**
**एष्वेकेन त्रिधा तद्वदुक्तमङ्गुलमानतः ।।**
**नवाष्टसप्ताङ्गुलकं लिङ्गं श्रेष्ठं तथा स्मृतम् ।**
**षड्पञ्चकचतुर्मानं मध्यमं त्रिविधं स्मृतम् ।।**
**त्रिद्व्येकाङ्गुलमानीयं त्रिविधं तस्य संस्कृतम् ।**
**एवं नवविधं प्रोक्तं यथा क्रमात् ।।**
**उत्तमं बुद्बुदाकारं मध्यमं कुक्कुटाण्डवत् ।**
**अधमं गोककुत्प्रख्यमिति लिङ्गं त्रिधा स्मृतम् ।।**

(शै.र.,भा–२, ४.५२–५५)

८. **दशधा –**

१. अखण्डलिङ्गम्, २. भावलिङ्गम्, ३. प्राणलिङ्गम्, ४. इष्टलिङ्गम्, ५. पार्थिवरूपमाचारलिङ्गम्, ६. (आप्यरूपम्) – गुरुलिङ्गम्, ७.(तेजोमयम्) – शिवलिङ्गम्, ८. (वायुमयम्) – चरलिङ्गम्, ९. (व्योमप्रकृतिकम्) – प्रासादलिङ्गम्, १०. (आत्मतत्त्वरूपम्) – महालिङ्गम् – इति भेदात् लिङ्गं दशधा ।

**इष्टलिङ्गप्रकृतिकं आचारगुरुलिङ्गके ।**
**पार्थिवाप्ये इति प्रोक्ते शैवागमविशारदैः ।।**
**प्राणलिङ्गप्रकृतिके तेजोवायुमये तथा ।**
**शिवलिङ्गचराभिख्ये लिङ्गे द्वे वरवर्णिनि ।।**

व्योमप्रकृतिकं लिङ्गं प्रासादाख्यं महत्तरम् ।
आत्मतत्त्वमयं प्रोक्तं महालिङ्गं महत्तमम् ।।
इति सिद्धान्तशेखरवचनेनोक्तानां दशविधलिङ्गानाम् ..... ।
(लिं.धा.चं., पृ-७३)

९. धार्यं पूज्यं वा लिङ्गं स्फटिकमयम्, शिलामयम्, चन्द्रकान्तमयम्, सूर्यकान्तमयम्, बाणम्, कांस्यमयम् इत्यादिभेदेन भिद्यते बहुधा । तद्यथा –

स्फाटिकं शैलजं वाऽपि चन्द्रकान्तमयं तु वा ।
बाणं वा सूर्यकान्तं वा लिङ्गमेकं समाहरेत् ।
(सि.शि.,६.२२)

आदित्यपुराणे –
ब्रह्मा पूजयते नित्यं लिङ्गं शैलमयं शुभम् ।
यस्य सम्पूजनादेव प्राप्तं ब्रह्मत्वमुत्तमम् ।।
शक्रोऽपि देवराजेन्द्रो लिङ्गं मणिमयं शुभम् ।
भक्त्या पूजयते नित्यं तेन शक्रत्वमाप्तवान् ।।
इन्द्रनीलमयं लिङ्गं विष्णुः पूजयते सदा ।
विष्णुत्वं प्राप्तवांस्तेन वैकुण्ठं च सनातनम् ।।
सोमो मुक्तामयं लिङ्गं धनतो हैमलिङ्गकम् ।
वायुः पित्तलजं लिङ्गं वसवः कांस्यलिङ्गकम् ।।
अश्विनौ मरुतश्चैव स्फाटिकं लिङ्गमादरात् ।
दिवाकरस्ताम्रमयं पन्नगास्तु प्रवालकम् ।।
असुराः कार्षजं लिङ्गं पिशाचास्त्रपुजं तथा ।
एवं देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।।
पूजयन्ति सदा लिङ्गमीशानं सुरनायकम् ।।
(लिं.धा.चं.,पृ.२२७-२२८)

## लिङ्गकायः

१. कायार्पणवशात् कायस्य लिङ्गरूपत्वं येन प्राप्तः सः लिङ्गकायः ।

**तत्रापि लिङ्गकायस्य दहनं तु विवर्जयेत् ।**

(लिं.घा.चं.,पृ.२६४, स्कन्दपुराणात् उद्धृतम्)

**यदा योगी निजं देहं शिवाय विनिवेदयेत् ।**

**तदा भवति तद्रूपं शिवरूपं न संशयः ।।**

(सि.शि.,१७.३५)

२. यस्य काये लिङ्गं धृतं सोऽपि लिङ्गकायः । तादृशलिङ्गकायस्य दहनं निषिध्यते ।

**शाम्भवव्रतिनो देहं दहेद् यो मूढचेतनः ।**

**नरके दह्यते सोऽयं सर्वदा यमकिङ्करैः ।।**

(मकुट., च.पा.,१.४७)

## लिङ्गजङ्गमः

नादेन निश्चलीकृतं यत् तल्लिङ्गम्, बिन्दुना निश्चलीकृतं यत् तद् जङ्गमम् । नादबिन्दुसम्मिश्रितं श्रेष्ठं लिङ्गं लिङ्गजङ्गममित्युच्यते ।

**नादनिश्चलितं लिङ्गं बिन्दुनिश्चलितं जङ्गमम् ।**

**नादबिन्दुसमायुक्तं श्रेष्ठं तल्लिङ्गजङ्गमम् ।।**

(अ.वी.सा.सं., १६.३० - वीरागमादुद्धृतम्)

## लिङ्गतत्त्वम्

**अधिकभावापन्नस्वप्रकाशतायां प्रतिस्फुरणगत्या प्रविष्टमूल-प्रणवरूपशिवचैतन्यमेव लिङ्गतत्त्वं भवति ।**

(शि.मं.,पृ.३८)

एतदेव स्थलशब्देनोच्यते ।

**लीयते गम्यते यत्र येन सर्वं चराचरम् ।**

**तदेतल्लिङ्गमित्युक्तं लिङ्गतत्त्वपरायणैः ।।**

(अ.सू.,३.३)

## लिङ्गतीर्थम्

लिङ्गार्चनाङ्गत्वेन लिङ्गाभिषेकादनन्तरं संगृह्य स्वीक्रियमाणं जलं लिङ्गतीर्थमित्युच्यते ।

**हंसः शुचिषदित्यर्घ्यं सावित्र्याऽऽचमनीयकम् ।**

**यो वै रुद्रः स भगवानाप इत्यभिषिच्य च ।।**

**लिङ्गतीर्थं च संगृह्य .................... ।।**

(का.आ.,क्रि.पा.,६.१९-२०)

## लिङ्गत्रयम्

तिसृषु तनुषु मलत्रयं निश्शेषेण दग्ध्वा गुरुः लिङ्गत्रयं (इष्ट - प्राण - भावाख्यम्) स्थापयेदिति नियमः ।

**तनुत्रयगतानादि मलत्रयमिदं गुरुः ।**

**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत् ।।**

(चं.आ.,क्रि.पा., ३.४७)

जाग्रदवस्थायां विश्वोजीव इष्टलिङ्गम्, स्वप्नावस्थायां तैजसोजीवः प्राणलिङ्गम्, सुषुप्त्यवस्थायां च प्राज्ञो जीवः भावलिङ्गं च उपासते ।

**विश्वो जाग्रदवस्थायां स्वप्नाख्यायां तु तैजसः ।**

**प्राज्ञः सुषुप्त्यवस्थायां लिङ्गत्रयमुपासते ।।**

(अ.सू.,५.६२; श.त्र.,पृ.६९)

(पश्यत - त्रिविधलिङ्गम्)

## लिङ्गदेही

लिङ्गदेही लिङ्गकायः, लिङ्गधारी च । देहभावरहितः सन् सर्वदा लिङ्गभावेन संस्थितः शिवयोगी ।

**लिङ्गदेही शिवात्माऽयं लिङ्गाचारो न लौकिकः ।**

(अ.सू.,७.६५)

(पश्यत – लिङ्गकायः)

## लिङ्गधारकः

लिङ्गं (इष्टलिङ्गम्) यो धरति सः लिङ्गधारकः । भूतिरुद्राक्षधारी, पञ्चाक्षरीमन्त्रजापक एव लिङ्गधारकः भवितुम् अर्हति ।

**धृतश्रीभूतिरुद्राक्षः प्रयतो लिङ्गधारकः ।**

**जपेत् पञ्चाक्षरीविद्यां शिवतत्त्वप्रबोधिनीम् ।।**

(सि.शि.,८.१)

## लिङ्गधारणम्

गुरुणा अनुगृहीतस्य लिङ्गस्य धारणं लिङ्गधारणम् । तदिदं लिङ्गधारणं सर्वानपि पापान् विनाशयति । अत एव च लिङ्गं प्राणवत् धरणीयम् । लिङ्गधारणं च बाह्यलिङ्गधारणम्, आभ्यन्तरलिङ्गधारणमिति द्विधा ।

**एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत् ।।**

**प्राणवद् धारणीयं तत् प्राणलिङ्गमिदं तव ।**

**कदाचित् कुत्रचिद्वापि न वियोजय देहतः ।।**

**लिङ्गस्य धारणं पुण्यं सर्वपापप्रणाशनम् ।**

**आदृतं मुनिभिः सर्वैं आगमार्थविशारदैः ।।**

**लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकैः ।**

**बाह्याभ्यन्तरं चेति मुनिभिः मोक्षकाङ्क्षिभिः ।।**

(सि.शि.,६.२५-२६, २९-३०)

(पश्यत - बाह्यलिङ्गधारणम्, आभ्यन्तरलिङ्गधारणम्)

**लिङ्गधारणस्य स्थानम्** - शिरः, कण्ठप्रदेशः, कक्षः, वक्षःस्थलम्, हस्ततलम् - इत्यादिषु एकतमस्थाने लिङ्गं धर्तव्यम् । नाभेः अधस्तात्, जटाग्रे, पृष्ठभागे लिङ्गधारणं निषिद्धम् ।

**मूर्ध्नि वा कण्ठदेशे वा कक्षे वक्षःस्थलेऽपि वा ।**

**कुक्षौ हस्तस्थले वापि धारयेल्लिङ्गमैश्वरम् ।।**

**नाभेरधस्ताल्लिङ्गस्य धारणं पापकारणम् ।**

**जटाग्रे त्रिकभागे च मलस्थाने न धारयेत् ।।**

(सि.शि.,६.५२-५३; शि.त.र.,भा-३, ९.८.६९-७०)

अयमिष्टलिङ्गधारणस्य विषयः । गुरुः स्फाटिकं शैलजं चन्द्रकान्तमयं बाणं सूर्यकान्तमयं वा एकं लिङ्गं समाहृत्य अभिषेकप्राणप्रतिष्ठादिविधिभिः पञ्चकलशस्थापनपूर्वकं संस्कृत्य शिष्यस्य हस्ते स्थापयति । प्राण-प्रतिष्ठादिविधिसमये एव प्राणलिङ्ग-भावलिङ्गयोः इष्टलिङ्गेन सह अनुसन्दधाति । शिष्यस्य हस्तस्थिते लिङ्गे तस्य मस्तकात् चित्कलामाकृष्य तत्र विनिवेशयति । अयं स्थूलशरीरे इष्टलिङ्गधारणविधिः । सूक्ष्मशरीरे प्राणलिङ्गं कारणशरीरे च भावलिङ्गमपि आभ्यन्तरलिङ्गधारणविधिना गुरुः करोति ।

**स्फाटिकं शैलजं वापि चन्द्रकान्तमयं तु वा ।**

**बाणं वा सूर्यकान्तं वा लिङ्गमेकं समाहरेत् ।।**

**सर्वलक्षणसंपन्ने तस्मिल्लिङ्गे विशोधिते ।**

**पीठस्थितेऽभिषिक्ते च गन्धपुष्पादिपूजिते ।।**

**मन्त्रपूते कलां शैवीं योजयेद्विधिना गुरुः ।**

**शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत् ।**

**तल्लिङ्गं तस्य तु प्राणे स्थापयेदेकभावतः ।**

**एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत् ।।**

(सि.शि.,६.२२-२५)

**इष्टं स्थूलतनोः प्रोक्तं प्राणं सूक्ष्मतनोः स्मृतम् ।**

**भावाख्यं कारणस्यैवं तनुत्रयगतं त्रयम् ।।**

(चं.आ.,क्रि.पा.,३.४५)

(पश्यत – त्रिविधदीक्षा)

## लिङ्गधारणस्थलम्

अङ्गस्थलगत भक्तस्थलस्य पञ्चदशाङ्गस्थलेष्वेकम् । एकोत्तर-शतस्थलेषु च षष्ठं स्थलम् । गुरुकरुणान्वितस्य महात्मनः पञ्चभूतात्मकस्थूलदेहधर्मान् परिहृत्य सदाचारसाधनीभूतदेहस्योपरि लिङ्गधारणं कर्तव्यमिति निरूपकं स्थलं लिङ्गधारणस्थलमित्युच्यते ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**

**दीक्षा लिङ्गधृतिश्चैव .................. ।।**

(सि.शि.,५.२७)

**अत्र भक्तस्थले अवान्तरस्थलानि पञ्चदशेत्याहुः ।**

**तानि कानीत्यत्र – पिण्डतेत्यादि । पिण्डस्थलम् ...........**

**लिङ्गधारणस्थलम्, विभूतिधारणस्थलम्, ......... ।**

(सि.शि.तत्त्व.प्र.,५.३०)

(पश्यत – त्रिविधदीक्षा, लिङ्गधारणम्)

## लिङ्गधारिद्विजः = लिङ्गधारिब्राह्मणः

लिङ्गधारी द्विजः लिङ्गधारी ब्राह्मणः ।

**सद्वृत्तिमभिपन्नाय लिङ्गिने चेतराय च ।**

**देयमाहुर्महाराज उभावेतौ तपस्विनौ ।।**

**इति भीष्मवचनेन लिङ्गधारिद्विजानां दानपात्रता विधानात् अनन्तरं तिर्यग्योनौ च जायत इत्युक्तत्वेन अमरकोशपठितलिङ्ग-वृत्तिपदस्यापि तत्परत्वावश्यंभावान्न गुरुकृतदीक्षालब्धलिङ्गधारि-ब्राह्मणपरम् ।**

(लिं.धा.चं.,पृ.२२०-२२१)

(पश्यत – लिङ्गिब्राह्मणः)

## लिङ्गधारी

लिङ्गधारी लिङ्गधारकः । सदाशुचित्वं लिङ्गधरिणः वैशिष्ट्यम् ।

**लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोरमम् ।**

**भूतिरुद्राक्षसंयुक्तो लिङ्गधारी सदा शुचिः ।**

**यो लिङ्गधारी नियतान्तरात्मा नित्यं शिवाराधनबद्धचित्तः ।**

(सि.शि.,६.५४, ९.१, ६.६३)

## लिङ्गनिजस्थलम्

एकोत्तरशतस्थलेष्वेकम् । अङ्गस्थलगतप्राणलिङ्गिस्थलाश्रित पञ्चाङ्गस्थलेषु एकतमम् । हृदयकमले स्थितस्य शिवलिङ्गस्य या प्रत्यक्षानुभवस्थितिः सैव लिङ्गनिजस्थलमित्युच्यते । निजलिङ्गस्थलमिति अस्य नामान्तरम् ।

**प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम् ।**

**शिवयोगसमाधिश्च ततो लिङ्गनिजस्थलम् ।**

**स्वान्तस्थशिवलिङ्गस्य प्रत्यक्षानुभवस्थितिः ।**
**यस्यैव परलिङ्गस्य निजमित्युच्यते बुधैः ।।**

(सि.शि.,१२.५,३२)

## लिङ्गनिष्ठा

लिङ्गभक्तिः, लिङ्गपूजा, लिङ्गसेवा, लिङ्गध्यानम्, मनसि लिङ्गधारणं च लिङ्गनिष्ठा । करौ लिङ्गसेवापरौ, श्रोत्रे लिङ्गश्रवणपरे, रसादीनां लिङ्गार्पणम्, घ्राणेन लिङ्गनिर्माल्यसौरभग्रहणम्, नेत्रे लिङ्गालङ्कारदर्शनपरे, पादौ लिङ्गप्रदक्षिणपरौ, लिङ्गस्य पुरतोऽङ्गचेष्टनम्, लिङ्गार्थं सर्वस्वदानं इत्येतत् सर्वं लिङ्गनिष्ठेति कथ्यते ।

**लिङ्गभक्तिर्लिङ्गपूजा लिङ्गसेवा तथा शिवे ।**
**लिङ्गध्यानं लिङ्गमनो लिङ्गचर्या परौ करौ ।।**
**लिङ्गश्रुतिपरेश्रोत्रे लिङ्गार्पितरसादयः ।**
**लिङ्गनिर्माल्यसुरभिलाभो घ्राणस्य पार्वति ।।**
**लिङ्गालङ्कारसन्दर्शनासक्ते लोचनेऽपि च ।**
**लिङ्गप्रदक्षिणपरौ पादौ च गिरिसम्भवे ।।**
**लिङ्गस्य पुरतो नित्यं तदर्थं चाङ्गचेष्टनम् ।**
**लिङ्गार्थं दत्तसर्वस्वं लिङ्गनिष्ठेति गीयते ।।**

(सू.आ.,क्रि.पा.,७.४८-५१)

## लिङ्गनिष्ठादीक्षा

मन्त्रदीक्षान्तर्गतसप्तविधदीक्षास्वेकतमा । आदिमध्यान्तरहितं यद् ब्रह्मसंज्ञितं लिङ्गमस्ति तस्मिन् निष्ठां स्थिरीकुरु इत्येवंरूप उपदेशः लिङ्गनिष्ठादीक्षेति कथ्यते ।

**मा हिंसीरित्युपादिश्य लिङ्गनिष्ठामुपादिशेत् ।।**
**आदिमध्यान्तरहितं लिङ्गं यद्ब्रह्मसंज्ञितम् ।**
**तन्निष्ठो भव सद्बुद्धे इत्युपादिश्य सद्गुरुः ।।**

(का.आ.,क्रि.पा.,१.११५-११६)

## लिङ्गनिष्ठास्थलम्

माहेश्वरस्थलस्य नवविधाङ्गस्थलप्रभेदेष्वेकम् । एकोत्तरशतस्थलेषु च सप्तदशतमम् । शिवपूजातत्परं माहेश्वरमुद्दिश्य "प्राणसङ्कटे प्राप्ते सत्यपि लिङ्गपूजा न त्यजनीय" इति विधीयमानं स्थलं लिङ्गनिष्ठास्थलम् । वीरशैवदीक्षातः पूर्वमाश्रितान् ब्राह्मणादिस्वजातिसम्बद्धान् धर्मान् लिङ्गनिष्ठाविरोधित्वेन मत्वा यो त्यजति स माहेश्वरः पूर्वाश्रयनिरासक इत्युच्यते ।

**अस्य माहेश्वरस्योक्तं लिङ्गनिष्ठामहास्थलम् ।**
**प्राणात्ययेऽपि सम्पन्ने यदत्याज्यं विधीयते ।।**
**लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।**
**लिङ्गनिष्ठापरं शान्तं भूतिरुद्राक्षसंयुतम् ।**
**स्वजातिकुलजान् धर्मान् लिङ्गनिष्ठाविरोधिनः ।**
**त्यजन् माहेश्वरो ज्ञेयः पूर्वाश्रयनिरासकः ।।**

(सि.शि.,१०.२२,२९, ३१)

## लिङ्गपतिः

शरणस्थलान्तर्गतसतिपतिभावे लिङ्गं पतिः, भक्तः सती ।

**लिङ्गं पतिः सती चाहं भावोऽयं वीरशैविनाम् ।।**

(सू.आ.,क्रि.पा.,७.५२)

**अङ्गलिङ्गीज्ञानरूपः सती ज्ञेयः शिवः पतिः ।**

(सि.शि.,१३.२)

## लिङ्गपदोदकम्

पादोदकं लिङ्गरूपस्य महेशस्य लिङ्गपादोदकमुच्यते । गुरुजङ्गमयोरपि पादोदकं स्वीकरणीयम् ।

**पादोदकं यथा भक्त्या स्वीकरोति महेशितुः ।**

**तथा शिवात्मनोर्नित्यं गुरुजङ्गमयोरपि ।।**

(सि.शि.,९.६७)

लिङ्गपादोदकस्य दीक्षापादोदकमिति नामान्तरम् । गुरु-लिङ्ग-जङ्गमानां मध्ये एकस्य पादोदकमेव त्रयाणां पादोदकत्वेन भावयित्वा स्वीकरणीयमिति नियमः । एवं गुरोः जङ्गमस्य वा अलाभे लिङ्गपादोदकमेव तयोरपि पादोदकम् ।

**पादतीर्थं त्रिधा शम्भोर्गुरुजङ्गमयोरपि ।**

**दीक्षाशिक्षाज्ञानमिति त्रिसंज्ञं तद्भवत्यहो ।।**

**गुरोश्चरस्यालाभे इष्टलिङ्गपदोदकम् ।**

**लब्ध्वा गुर्वादिपादोदं भावयेन्मनसैव तत् ।।**

(चं.आ.,क्रि.पा.,५.५,७)

## लिङ्गपीठम् = लिङ्गपीठिका

लिङ्गस्य पीठम् (लिङ्गस्य पीठिका) । शक्तिः लिङ्गस्य पीठम् ।

**लिङ्गे पीठाधिके वापि ...... ।**

(सू.आ.,क्रि.पा.,७.५६)

**पीठिका परमा शक्तिर्लिङ्गं साक्षात् परः शिवः ।**

(सि.शि.,११.३२)

## लिङ्गपूजकः

लिङ्गमोहीत्यादि षड्विधभक्ता आचारादिलिङ्गाङ्गानां भवन्ति । आचारलिङ्गपूजकः, गुरुलिङ्गपूजकः, शिवलिङ्गपूजकः, चरलिङ्गपूजकः, प्रसादलिङ्गपूजकः, महालिङ्गपूजकश्चेति षड्विधः लिङ्गपूजकनामा भक्तः ।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**

**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

(सू.आ.,क्रि.पा.,८.३७)

## लिङ्गपूजा

गुरुणा संस्कृत्य दत्तस्य लिङ्गस्य पूजा (अर्चनम्) लिङ्गपूजा। लोकानामनुग्रहाय (लिङ्गार्चनम्) तल्लिङ्गं सर्वदेवमयं, तस्मिन् परशिवः स्वयं तिष्ठति । लिङ्गपूजा एव वीरशैवस्य महाव्रतम् । एककालम्, द्विकालम्, त्रिकालं वा यथाशक्ति लिङ्गपूजा विधेया । लिङ्गपूजा नाम केवलं इष्टलिङ्गपूजा इति न मन्तव्यम् । इष्टप्राणभावलिङ्गानां अनुसन्धानपूर्वकं क्रियमाणा पूजा लिङ्गपूजा । इष्टलिङ्गपूजने प्राणलिङ्गध्यानम्, भावलिङ्गभावनं च समाविष्टे ।

**यदेव गुरुणा दत्तमिष्टलिङ्गं विधारितम् ।**

**सज्जिका स्थापितं तन्नु भक्तियुक्तः प्रपूजयेत् ।।**

(शि.त.र.,भा-३.८.७.४)

**सर्वदेवमयं लिङ्गं तस्मिन्साक्षाच्छिवः स्वयम् ।**

**अनुग्रहाय वसति तस्माल्लिङ्गं प्रपूजयेत् ।।**

**पूजयन्निष्टलिङ्गं तु निध्यायन् प्राणलिङ्गकम् ।**

**भावयन् भावलिङ्गं वै मृत्युपाशांश्छिनत्ति सः ।।**

(चं.आ.,क्रि.पा.,३.४९, ४८)

**भावप्राणेष्टलिङ्गानि पूजयेदेकभावतः ।**

(सू.आ.,क्रि.पा.,६.४४)

**एककालं द्विकालं वा त्रिकालं वापि शाङ्करि ।**

**पूजयेन्नियतं लिङ्गं प्राणलिङ्गपरायणः ।।**

(सू.आ.,क्रि.पा.,६.५१)

## लिङ्गपूजा (अर्चन) विधिः

आदौ शिवं ध्यात्वा जप्त्वा च पञ्चाक्षरं मन्त्रं लिङ्गात्मकं देवं पूजयेत् । एषः वीरशैवक्रमः । सज्जिकातः लिङ्गं करस्थले आदाय त्रिवारं मन्त्रपूर्वकं स्पृष्ट्वा महादेवं ध्यात्वा अभिषेकादिकं कुर्यात् । अभिषेकानन्तरं इष्टलिङ्गं भस्मत्रिपुण्ड्रेण अलङ्कृत्य गन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलादिभिः पुष्पाञ्जलिसहितं तस्य पूजनं कुर्यात् । ततोऽपि श्रेष्ठा प्राणलिङ्गात्मकान्तर्लिङ्गपूजा । आदौ महादेवं ध्यात्वा आन्तरैः अहिंसादि भावपुष्पैः शिवमर्चयेत् ।

**पूजादौ शिवं ध्यात्वा जप्त्वा पञ्चाक्षरं मनुम् ।**

**ततः संपूजयेद्देवं वीरशैवक्रमो भवेत् ।।**

**सज्जिकान्तःस्थितं लिङ्गं स्पृष्ट्वा मन्त्रं त्रिरुच्चरेत् ।**

**पुष्पैः सम्पूज्य तल्लिङ्गं करपीठे निवेशयेत् ।।**

**स्नापनं प्रथमं कृत्वा ततो गन्धानुलेपनम् ।**

**अक्षतांश्च समर्प्याथ पुष्पैः सम्पूजयेत् ततः ।**

**निवेदयित्वा नैवेद्यं ततः ताम्बूलमर्पयेत् ।।**

**एवं समर्चनं कुर्यात् इष्टलिङ्गस्य पार्वति ।।**

**अथ वक्ष्ये महादेवि लिङ्गार्चनविधिं परम् ।**

**आदौ ध्यात्वा महादेवं त्रियम्बकमुमापतिम् ।।**

**अर्चयेदान्तरैः पुष्पैर्मानसैरुपचारकैः ।**

**अहिंसा चेन्द्रियजपः सर्वभूतदया परा ।।**

**क्षमा ध्यानं तपो ज्ञानं सत्यं चैव तथा परम् ।**

**एभिःपुष्पैरहिंसाद्यैर्मानसैः शिवमर्चयेत् ।।**

(सू.आ.,क्रि.पा.,६.३६–३७, ३९, ४५ – ४६, २३–२५)

**लिङ्गपूजा चतुर्विधा –**

महती, गुर्वी, लघ्वी, अवसरा चेति लिङ्गपूजा चतुर्विधा । तत्र महती उत्तमानाम्, गुर्वी मध्यमानाम्, लध्वी अशक्तानाम्, अवसरा तु प्रातरादिषु ।

**उत्तमो महतीं कुर्यात् गुर्वीं मध्यम एव च ।**

**लध्वीमशक्तः कुर्याच्च सायं मध्याह्नके तथा ।।**

**अवसराऽभोजने प्रोक्ता प्रातरादिषु सुव्रते ।**

(का.आ.,क्रि.पा.,४.५–६; मकुट., ३.३–४)

(पश्यत – महतीपूजा, महापूजाविधिक्रमः, गुर्वीपूजा, लघ्वीपूजा, अवसरा पूजा च)

## लिङ्गप्रतिष्ठा

१. सर्वत्रापि लिङ्गं प्रतिष्ठितं द्रष्टव्यम् ।

**यथा ज्ञानेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।**

**तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।।**

(अ.सू.,६.८; लिं.धा.चं.,पृ.२४२)

(पश्यत – लिङ्गयोगः)

२. शिल्पिना प्राप्ते शिलमये देवालये प्राणप्रतिष्ठापूर्वकं लिङ्गस्थापनमेव लिङ्गप्रतिष्ठा । तथा चोक्तम् –

**मया कृतमिदं गेहं दृढं सौम्य शिलामयम् ।**

**गृहाणाहं प्रदास्यामि प्रतिष्ठायै शिवस्य च ।।**

**इत्युक्त्वा कारुको भक्त्या दद्याद् गेहं प्रहर्षितः ।**

**गेहं लब्ध्वा ततो लिङ्गं तत्र संस्थापयेच्छुभम् ।।**

(शि.त.र., भा-१, ५.१०.१४०-१४१)

## लिङ्गप्रसादः

गुरुप्रसादः, लिङ्गप्रसादः, जङ्गमप्रसादश्चेति त्रिविधः प्रसादः । तत्र लिङ्गप्रसादस्य सिद्धप्रसाद इति नामान्तरम् । लिङ्गत्रयं तदैक्यं च ज्ञात्वा यः लिङ्गार्पितः प्रसादः स सिद्धप्रसादः ।

**गुरुलिङ्गजङ्गमानां भुक्तशेषप्रसादकः ।।**

**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्त्यैकसाधनः ।**

(चं.आ.,क्रि.पा.,५.२०-२१)

**ज्ञात्वा लिङ्गत्रयं सम्यक् तदैक्यं च वरानने ।**

**लिङ्गार्पिप्रसादोऽयं सिद्ध इत्यभिधीयते ।।**

(सू.आ.,क्रि.पा.,८.२४)

## लिङ्गप्रसादवान् = लिङ्गप्रसादी

आचारादिषड्लिङ्गानां षड्विधभक्तेष्वेकः । आचारलिङ्गप्रसादी-गुरुलिङ्गप्रसादी-शिवलिङ्गप्रसादी-चरलिङ्गप्रसादी-प्रसादलिङ्गप्रसादी-महालिङ्गप्रसादी चेति सोऽपि षड्विधः ।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**

**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

(सू.आ.,क्रि.पा.,८.३७)

(पश्यत - षड्विधभक्तः)

## लिङ्गप्राणी

आचारादिषड्लिङ्गानां षड्विधभक्तेष्वेकः । आचारलिङ्गप्राणी - गुरुलिङ्गप्राणी - शिवलिङ्गप्राणी - चरलिङ्गप्राणी - प्रसादलिङ्गप्राणी महालिङ्गप्राणी चेति सोऽपि षड्विधः ।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**

**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

(सू.आ.,क्रि.पा.,८.३७)

## लिङ्गभक्तः

गुरुभक्तः, लिङ्गभक्तः, चरभक्त इति त्रिविधभक्तेषु एकः । अयं च आचारलिङ्गभक्तः, गुरुलिङ्गभक्तः, शिवलिङ्गभक्तः, जङ्गमलिङ्गभक्तः, प्रसादलिङ्गभक्तः, महालिङ्गभक्तः-इति षोढा । एकैकस्य लिङ्गस्य षड्विधभक्त इति क्रमेण लिङ्गभक्तः षट्त्रिंशत्प्रकारः भवति ।

**गुरुभक्तो लिङ्गभक्तश्चरभक्तस्तथैव च ।**

**एवं भेदसमायुक्तोस्तु भक्त त्रिविधो भवेत् ।।**

(सू.आ.,क्रि.पा.,८.३६; शि.त.र.,भा-३,९.९.३९)

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**

**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

(सू.आ.,क्रि.पा.,८.३७)

(पश्यत - भक्तः, त्रिविधभक्तः, षड्विधभक्तः)

## लिङ्गभोगरूपनैवेद्यम्

द्विविधनैवेद्ययोरेकतरम् । देहपोषणार्थं यद्यत् खाद्यते तत् लिङ्गभोगाय प्रथमं समर्प्य अनन्तरं खाद्यते । तदेव लिङ्गभोगरूपनैवेद्यम् ।

**लिङ्गभोगस्वरूपं चानुज्ञारूपमिति द्विधा ।**

(का.आ.,क्रि.पा.,९.१३)

(पश्यत – अनुज्ञारूपनैवेद्यम्)

## लिङ्गमनोलयदीक्षा

मन्त्रदीक्षान्तर्गतसप्तविधदीक्षास्वेकतमा । लिङ्गस्य स्वरूपं अभिध्यायन् सङ्कल्पविकल्पराहित्येन अमनस्को भव इत्युपदेशरूपा दीक्षा लिङ्गमनोलय-दीक्षेति कथ्यते ।

**दीक्षामुपमदिशेद् भूयो लिङ्गरूपमनोलयाम् ।।**

**लिङ्गरूपभिध्यायन्नमनस्कश्चिरं भव ।**

(का.आ.,क्रि.पा.,१.११६–११७)

## लिङ्गमाहात्म्यस्थलम्

प्रसादिस्थलगतसप्तविधाङ्गस्थलेष्वेकम् । एकोत्तरशतस्थलेषु सप्तविंशं स्थलम् । सर्वाङ्गेषु गुरुमाहात्म्यस्थिरीकृतप्रसादिनः मनसि लिङ्गमाहात्म्य-स्थिरीकरणनिरूपकं स्थलं लिङ्गमाहात्म्यस्थलम् ।

**गुरुमाहात्म्ययोगेन निजज्ञानातिरेकतः ।**

**लिङ्गस्यापि च माहात्म्यं सार्वोत्कृष्टं विभाव्यते ।।**

(सि.शि.,११.२५)

## लिङ्गमुखार्पितम्

लिङ्गार्चनसमये षड्विधलिङ्गेभ्य अर्पितं तत्तद्द्रव्यं लिङ्गमुखार्पितं इत्युच्यते । तादृशं लिङ्गमुखार्पितः प्रसादः पुनः पूजारम्भपर्यन्तं प्रसादरूपेणैव तिष्ठति ।

**यद्रूपं वस्तु नामार्चाकाले लिङ्गमुखार्पितम् ।**
**तद्रूपं पुनरर्चाकालपर्यन्तं प्रसादकम् ।।**

(अ.सू.,७.१९)

(पश्यत – अर्पणम्)

## लिङ्गयोगः

१. लिङ्गेन (शिवेन) अङ्गस्य (जीवस्य) सायुज्यमेव लिङ्गयोगः । एतदेव लिङ्गतत्त्वम् ।

**लिङ्गाङ्गतत्त्वं विज्ञाय लिङ्गसायुज्यवान् भव ।**

(का.आ.,क्रि.पा.,१.१०४)

२. इष्टादित्रिविधलिङ्गानां बाह्याद्यङ्गैः सम्बन्धः तथैव आचारादिषड्विध-लिङ्गानां ज्ञानेन्द्रियकर्मेन्द्रियाभ्यां च सम्बन्धः लिङ्गयोगः इति कथ्यते । बाह्याङ्गे इष्टलिङ्गम्, अन्तरङ्गे प्राणलिङ्गम्, आत्मनि भावलिङ्गम् । एवमेव नासिकाङ्गे आचारलिङ्गम्, जिह्वाङ्गे गुरुलिङ्गम्, नेत्राङ्गे शिवलिङ्गम्, त्वगङ्गे चरलिङ्गम्, श्रोत्रङ्गे प्रसादलिङ्गम्, हृदि महालिङ्गं चेति सम्बन्धः कल्पितः । एवमेव कर्मेन्द्रियाङ्गेष्वपि आचारादिलिङ्गानि सम्बद्धानि भवन्ति । तथाहि – उपस्थे आचारलिङ्गम्, गुह्ये गुरुलिङ्गम्, पादयोः शिवलिङ्गम्, पाण्योः चरलिङ्गम्, वाण्यां प्रसादलिङ्गम् (कर्मेन्द्रियेण महालिङ्गस्य सम्बन्धः नोक्तः) इति ।

**तस्मादेकं परं लिङ्गं नामरूपक्रियात्मना ।**
**संस्थितं ज्ञानकर्मभ्यामङ्गेऽस्मिन् षट्स्थलात्मके ।।**
**इष्टलिङ्गं तु बाह्याङ्गे प्राणलिङ्गं तथान्तरे ।**
**आत्मनिष्ठं भावलिङ्गमेव ज्ञेयं नगात्मजे ।।**
**आचारो नासिकाङ्गे जिह्वाङ्गे गुरुलिङ्गकम् ।**
**दृगङ्गे शिवलिङ्गं स्यात् त्वगङ्गे चरलिङ्गकम् ।।**

**प्रसादलिङ्गं श्रोत्राङ्गे महालिङ्गं हृदि स्थितम् ।**
**एवं कर्मेन्द्रियाङ्गेषु लिङ्गयोगो विधीयते ।।**

(सू.आ.,क्रि.पा.,८.७७–८०; अ.सू.,६.४–८, चं.आ.,च.पा., २.१४–१८; क्रि.सा.,भा–३, पृ.१२५–१२६)

## लिङ्गरूपम्

लिङ्गरूपं लिङ्गस्वरूपम् । कलायुक्तत्वमेव लिङ्गरूपम् । तत् मूर्तसादाख्यमेव ।

**मूर्तत्वाच्च कलायुक्तं रूपं चेति प्रकीर्तितम् ।**

(वा.शु.आ.,१.५७–५८)

**विद्याकलासमायुक्तमिच्छाशक्तिसमुद्भवम् ।**
**मूर्तं मूर्तिधरं दिव्यं ज्वलदग्निसमप्रभम् ।।**
**लिङ्गरूपं चैकवक्त्रं नेत्रत्रयविराजितम् ।**
**सर्वावयवसम्पूर्णमेवं ध्येयं शुभावहम् ।।**

(सू.आ.,क्रि.पा.,१.३६–३७)

## लिङ्गलाञ्छनम्

लिङ्गचिह्नं एव लिङ्गलाञ्छनम् । लिङ्गलाञ्छनसंयुक्तत्वं स्वयलिङ्गस्य लक्षणम् ।

**लिङ्गलाञ्छनसंयुक्तं बाह्यकर्मविवर्जितम् ।**
**केवलाङ्गरूपं यत्तत् स्वयलिङ्गमितीरितम् ।।**

(सू.आ.,क्रि.पा.,८.१९)

## लिङ्गवीरः

लिङ्गमोहीत्यादिषड्विधलिङ्गभक्ताः प्रत्येकस्य आचारादिलिङ्गस्य भवन्ति । आचारलिङ्गवीरः, गुरुलिङ्गवीरः, शिवलिङ्गवीरः, चरलिङ्गवीरः, प्रसादलिङ्गवीरः, महालिङ्गवीरश्चेति लिङ्गवीरभक्तः षड्विधः ।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**
**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

(सू.आ.,क्रि.पा.,८.३७)

## लिङ्गसंस्कारः

लिङ्गसंस्काराङ्गत्वेन क्रियादीक्षोक्तरीत्या पञ्चब्रह्मसङ्केत भूतपञ्च-कलशस्थापनं कृत्वा पञ्चसूत्रोपलक्षितं शिवलिङ्गं मण्डपोत्तरदिग्भागस्थिते मण्डले ताम्रपात्रे संस्थाप्य, देशकालौ सङ्कीर्त्य, घर्षणादि क्रियाजातदोषस्य निवारणार्थं "हिरण्यशृङ्ग" इत्यादि अनुवाकैः तत् स्नापयेत् । पञ्चगव्येन पञ्चामृतेन च पञ्चब्रह्ममन्त्रपठनपूर्वकं शिवलिङ्गम् अभिषिञ्चेत् । तदनन्तरं शुद्धोदकेन तल्लिङ्गं संस्नाप्य पात्रान्तरे पुनः संस्थाप्य गुरुः गन्धपुष्पादिभिरर्चयेत् । तल्लिङ्गं वस्त्रेण वेष्टयित्वा ताम्रपात्रे जलाधिवासनं कुर्यात्। 'अब्लिङ्ग' इत्यादिमन्त्रान् उच्चरन् अनन्तरं जलादुत्तार्य तल्लिङ्गं पुनः स्नानपात्रे संस्थाप्य वायुकोणस्थिते मण्डले तत्पात्रं विनिक्षिप्य पञ्चगव्येन भस्मना गन्धवारिभिश्च तत्तत्सम्बद्धमन्त्रैः संस्नाप्य वस्त्रेण लिङ्गं सम्मार्जयेत् । तल्लिङ्गं पात्रान्तरे निवेश्य तत्पात्रं सोममण्डले निधाय गन्धपुष्पादिभिरर्चयेत्। ततः धान्याधिवासनं कुर्यात्। तद् विधानं यथा - दक्षिणे मण्डले प्रस्थप्रमितैः शालिभिः तदर्धैः तण्डुलै तदर्धैश्च तिलैः उपर्युपरि विन्यस्य तल्लिङ्गं दर्भैराच्छाद्य उपरि शिर अधस्तान् मुखं यथा भवति तथा स्थापयित्वा गन्धादिभिः पूजयेत् । पुनः तल्लिङ्गं तत उत्तार्य ईशकोणस्थे मण्डले पात्रान्तरे निक्षिप्य पञ्चब्रह्ममन्त्रैः स्नापयेत्। अनन्तरं शिवकलाऽऽवाहनार्थं विधिवत् अध्वन्यासान् सङ्कल्पपूर्वकं कुर्यात् । अनन्तरं शिष्यसंस्कारं कृत्वा तस्य हस्ते तल्लिङ्गं संस्थाप्य मन्त्रोपदेशं कृत्वा शिष्यशिरसि निहितां शैवीं कलां मनसा विभाव्य शिष्यवामकरस्थिते लिङ्गे मूलमन्त्रस्मरणपूर्वकं विनिवेशयेत् ।

श्रीपञ्चकलशार्थं तु ऋत्विजो वृणुयाद्गुरुः ।
चतुर्णां चतुराचार्या मध्यस्य च स्वयं भवेत् ।।
आवाहयेच्च कलशे मध्ये त्वीशानमग्रतः ।
सद्योजातं च पूर्वस्मिन् वामदेवं तु दक्षिणे ।।
उत्तरे तत्पुरुषं च अघोरं चाथ पश्चिमे ।
तत्तन्मन्त्रैः समावाह्य पूजयेत्तदनन्तरम् ।।
मण्डपोत्तरदिग्भागे मण्डलं परिकल्प्य तु ।
शिवलिङ्गं समुद्धृत्य पञ्चसूत्रोपलक्षितम् ।।
ताम्रपात्रे विनिक्षिप्य देशकालौ प्रकीर्त्य च ।
घर्षणादिक्रियाजातजातदोषोपशान्तये ।।
हिरण्यशृङ्गप्रमुखैरनुवाकैरनुक्रमात् ।
शिवलिङ्गं स्नापयामीत्यभिषिञ्चेदनन्तरम् ।।
पञ्चगव्येन सिद्धेन शुद्धैः पञ्चामृतैरपि ।
अभिषिञ्चेदिष्टलिङ्गं पञ्चब्रह्ममनूत्तमैः ।।
ताम्रपात्रे तु निक्षिप्य तल्लिङ्गं वस्त्रवेष्टितम् ।
जलाधिवासनं कुर्यात् अब्लिङ्गैर्मनुभिस्ततः ।।
जलादुत्तार्य तल्लिङ्गं स्नानपात्रे विधाय वै ।
तत्पात्रं तु विनिक्षिप्य मण्डले वायुकोणगे ।।
पञ्चगव्येन च तथा भस्मना गन्धवारिभिः ।
तदुक्तमन्त्रैः संस्नाप्य लिङ्गमुद्वर्त्य वाससा ।।
पात्रान्तरे विनिक्षिप्य तत्पात्रं सोममण्डले ।
निधाय गन्धपुष्पाद्यैरर्चयेद्देशिकस्ततः ।।

दक्षिणे मण्डले प्रस्थप्रमितैः शालिभिः क्रमात् ।
तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैस्तथा ।।
उपर्युपरि विन्यस्य स्थण्डिलानि प्रयत्नतः ।
दर्भैराच्छाद्य तल्लिङ्गं प्राक्छिरस्कमधोमुखम् ।।
तत्र निक्षिप्य गन्धादीन् दर्भांस्तत्पुरुषेण तु ।
लिङ्गे निक्षिप्य तस्याष्टदिक्षु कुम्भान् विनिक्षिपेत् ।।
पुनस्तल्लिङ्गमादाय मण्डले त्वीशकोणगे ।
पात्रान्तरे विनिक्षिप्य पञ्चरुद्रैस्तु स्नापयेत् ।
धन्यादिवासकलितमण्डलीकलशोदकैः ।।
ततः शिवकलावाहनार्थं कुर्याद् यथाविधि ।
अध्वन्यासान् षडप्यत्र लिङ्गे सङ्कल्पपूर्वकम् ।।
शिष्यस्य दक्षिणे कर्णे षडक्षरमनुं शनैः ।
शैवीं कलां स्वमनसा विभाव्य च ततः परम् ।।
दृष्टावानीय च तया शिष्यवामकरस्थिते ।
लिङ्गे निवेशयेत् क्षिप्रं मूलमन्त्रमनुस्मरन् ।।
(का.आ.,क्रि.पा., १.४६-५२, ५५-५८, ६५-६६, ११९-१२०)

## लिङ्गसङ्गः

अङ्गस्य दीक्षाद्वारा लिङ्गेन सम्बन्धः लिङ्गसङ्गः । स च लिङ्गसङ्गः त्रिविधः - बाह्यम्, आन्तरम्, आदिमम् चेति । तत्र वेधादीक्षाद्वारा कारणशरीरात्मके योगाङ्गे भावलिङ्गस्य सङ्गः आदिमलिङ्गसङ्गः । मन्त्रदीक्षाद्वारा सूक्ष्मशरीरात्मके भोगाङ्गे प्राणलिङ्गेन सम्बन्धः सूक्ष्मलिङ्ग-सम्बन्धः । क्रियादीक्षाबलेन स्थूलशरीरात्मके त्यागाङ्गे इष्टलिङ्गसम्बन्धः बाह्यलिङ्गसङ्गः ।

**लिङ्गसङ्गस्त्रिधा प्रोक्तो बाह्यमन्तरमादिमम् ।**

**बाह्यं क्रियामयं सूक्ष्ममन्तश्चिन्मात्रमादिमम् ।।**

**योगाङ्गे भावलिङ्गं तु वेधादीक्षाबलेन वै ।**

**मन्त्रदीक्षाबलेनैव भोगाङ्गे प्राणलिङ्गकम् ।।**

**क्रियादीक्षाबलेनायं देशिकस्य सत्यचिद्धनम् ।**

**इष्टलिङ्गं तथा चैव त्यागाङ्गे समयोजयेत् ।।**

(श.त्र., १८५-१८६, पृ.२२-२३)

## लिङ्गसङ्गी

रुद्ररूपवान् शिवज्ञानयुक्तः सर्वाङ्गेषु लिङ्गसङ्गवांश्च लिङ्गसङ्गी ।

**रुद्ररूपः शिवज्ञानी सर्वाङ्गे लिङ्गसङ्गिनः ।**

(लिं.धा.चं.,पृ.२६६)

## लिङ्गसायुज्यम्

लिङ्गतत्त्वविज्ञानेन लिङ्गसायुज्यं प्राप्यते । लिङ्गसायुज्यं नाम लिङ्गेन सह योगः ।

**लिङ्गाङ्गतत्त्वं विज्ञाय लिङ्गसायुज्यवान् भव ।**

(का.आ.,क्रि.पा.,१.१०४)

## लिङ्गस्थलाश्रया शक्तिः

शक्तिः द्विविधा । लिङ्गस्थलाश्रया अङ्गस्थलाश्रया चेति । लिङ्गस्थलाश्रयाशक्तिः कलारूपा ।

**लिङ्गस्थलाश्रया काचित् काचिदङ्गस्थलाश्रया ।**

**लिङ्गस्थलाश्रया शक्तिः कला रूपा प्रकीर्तिता ।।**

(अ.सू.,२.२२; वे.सा.,वी.चिं.,२.६३)

(पश्यत – अङ्गस्थलाश्रया शक्तिः)

## लिङ्गस्थलम्

स्वशक्तिक्षोभकारणात् स्थलशब्दवाच्यः परशिवः द्विविधः भवति । एकं लिङ्गस्थलम्, द्वितीयम् अङ्गस्थलम् । लिङ्गं शिवः, अङ्गं जीवः । लिङ्गस्थलमुपास्यमङ्गस्थलमुपासकः ।

**स्थलं नाम परं तत्त्वं शिवरुद्रादिसंज्ञितम् ।**
**स्वशक्तिक्षोभमात्रेण स्थलं तद् द्विविधं भवेत् ।**
**एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम् ।।**
**लिङ्गत्वेनाङ्गरूपेण स्थलमात्रं तथोच्यते ।**
**स्थलं चिन्मात्रमेव स्याल्लिङ्गं स्याच्छिव एव हि ।।**
**तथाङ्गं जीव एव स्यादिति शैवी परा स्थितिः ।**
**लिङ्गस्थलमुपास्यं स्यादङ्गस्थलमुपासकम् ।।**

(अ.सू.,२.१२, १०, १८-१९, १३)

**लिङ्गस्थलभेदः = महालिङ्गस्थलभेदः**

**त्रिधा**–भावलिङ्गम्, प्राणलिङ्गम्, इष्टलिङ्गम्–इति भेदेन त्रिधा ।

**महालिङ्गं त्रिधा जातं सुजनानुजिघृक्षया ।**
**प्रथमं भावलिङ्गं तु द्वितीयं प्राणलिङ्गकम् ।।**
**तृतीयमिष्टलिङ्गं स्यदित्येवं त्रिविधं मतम् ।।**

(चं.आ.,क्रि.पा.,३.२३)

**लिङ्गस्थलं त्रिधा ज्ञेयं तद्भेदो वर्ण्यते क्रमात् ।।**
**प्रथमं भावलिङ्गं स्याद् द्वितीयं प्राणलिङ्गकम् ।**
**तृतीयमिष्टलिङ्गं स्यादित्येतत् त्रिविधं स्मृतम् ।।**

(अ.सू.,३.५-६)

भावलिङ्गादिलिङ्गत्रयं पुनः द्विविधं द्विविधं भवति । तत्र भावलिङ्गं महालिङ्गम्, प्रसादलिङ्गं चेति; प्राणलिङ्गं चरलिङ्गम्, शिवलिङ्गं चेति, इष्टलिङ्गं आचारलिङ्गम्, गुरुलिङ्गं चेति, एवं आहत्य षड्विधलिङ्गस्थलानि ।

**भावादिलिङ्गत्रितयं द्विविधं द्विविधं भवेत् ।**

**भावलिङ्गं महालिङ्गप्रसादाभिख्यकंद्वयम् ।।**

**प्राणलिङ्गं तथा चरशिवलिङ्गद्वयं भवेत् ।**

**इष्टं तु गुरुलिङ्गाख्यमाचाराख्यं द्वयं भवेत् ।।**

(चं.आ.,क्रि.पा.,३.२६-२७)

**एकमेकं स्थलं भूयो द्विविधं द्विविधं भवेत् ।।**

**भावलिङ्गस्थलं द्वेधा प्राणलिङ्गस्थलं द्विधा ।**

**इष्टलिङ्गस्थलं चैव द्विधा प्रोक्तं महात्मभिः ।।**

**महालिङ्गं प्रसादाख्यं लिङ्गमित्युभयस्थलम् ।**

**भावलिङ्गं भवत्येव स्वानुभूतिप्रमाणतः ।।**

**तथा च चरलिङ्गं च शिवलिङ्गमिति द्वयम् ।**

**प्राणलिङ्गं भवत्येव तात्पर्यार्थो न संशयः ।।**

**गुरुलिङ्गं तथाऽऽचारलिङ्गमित्युभयस्थलम् ।**

**इष्टलिङ्गं भवत्येव सत्यमुक्तमिदं मया ।।**

**महालिङ्गं प्रसादाख्यलिङ्गं च चरलिङ्गकम् ।**

(अ.सू., ३.१६-२१)

एतेषां लिङ्गस्थलानामाहत्य सप्तपञ्चाशत् अवान्तरस्थलानि भवन्ति। भक्तस्थलान्तर्गतानि नव, माहेश्वरस्थलान्तर्गतानि नव, प्रसादिस्थलान्तर्गतानि नव, प्राणलिङ्गिस्थलान्तर्गतानि नव, शरणस्थलान्तर्गतानि द्वादश, ऐक्यस्थलान्तर्गतानि च नव ।

## लिङ्गाकारः

नादबिन्दुयुतं रूपं लिङ्गाकारं इत्युच्यते ।

**नादो लिङ्गमिति ज्ञेयं बिन्दुः पीठमुदाहृतम् ।**

**बिन्दुनादयुतं रूपं लिङ्गाकारमिहोच्यते ।।**

(वा.शु.आ.,१.७०)

**बिन्दुनादात्मकं सर्वं जगत् स्थावरजङ्गमम् ।**

**बिन्दुः शक्तिः शिवो नादः शिवशक्त्यात्मकं जगत् ।।**

(चं.आ.,क्रि.पा.,३.१३)

## लिङ्गाङ्गतत्त्वम्

लिङ्गं शिवः, अङ्गं जीवः, लिङ्गाङ्गयोरैक्यमेव लिङ्गाङ्गतत्त्वम् । तज्ज्ञानस्य शिवसायुज्यं फलम् ।

**लिङ्गाङ्गतत्त्वं विज्ञाय लिङ्गसायुज्यवान् भव ।**

(का.आ,.क्रि.पा.,१.१०४)

## लिङ्गाङ्गयोगी

लिङ्गाङ्गसामरस्यप्राप्तिरेव यस्य एकमात्रमुद्देशः, सः लिङ्गाङ्गयोगी भवति ।

**तदेकमेव मोक्षः स्यान्ममलिङ्गाङ्गयोगिनः ।**

(सू.आ.,क्रि.पा.,७.८६)

## लिङ्गाङ्गसंयोगः

सायुज्यमुक्तिरेव शिवजीवयोः संयोगः । तस्मात् परा मुक्तिः नास्ति। अयमात्मा स्वयं शिवस्यांशः । व्यवहारदशायां संसारीव दृश्येत । संसारश्च अविद्याकारणात् सत्यवत् परिकल्प्यते । देहेन्द्रियादिसमूहे 'अहं मम'

भावरूपा भ्रान्तिरेव संसारः । तद्भ्रान्तिविनाशाय लिङ्गाङ्गसंयोग-ज्ञानमावश्यकम् ।

**संयोग एव सायुज्यरूपमुक्तिर्न चापरा ।**

**तस्माल्लिङ्गाङ्गसंयोगात् परा मुक्तिर्न विद्यते ।।**

**सोऽयमात्मा स्वयं साक्षाच्छिवस्यांशोऽपि तत्त्वतः ।**

**व्यवहारदशायां तु संसारीव प्रकाशते ।।**

**संसारोऽविद्यया चास्य सत्यवत्परिकल्पितः ।**

**देहेन्द्रियादि संघातेऽहं मम भ्रान्तिरूपतः ।।**

**तस्मात् तत्कृतकभ्रान्तिविनाशार्थमहो तव ।**

**नित्यं लिङ्गाङ्गसंयोगज्ञाननिष्ठत्वमावह ।।**

(अ.सू.,५.१५-१६, २१-२२, २६)

## लिङ्गाङ्गसंयोगविधिः

**ततो लिङ्गाङ्गसंयोग विधिरत्र प्रदर्श्यते ।**

(अ.सू.,५.१७)

(पश्यत – लिङ्गाङ्गसंयोगः)

## लिङ्गाङ्गसङ्गी

लिङ्गाङ्गयोः सङ्गवान् शरणः। लिङ्गध्यानपरायण एषः सर्वपापविनिर्मुक्तः।

**लिङ्गाङ्गसङ्गिनः पुंसो ये दृग्विषयवर्तिनः ।**

**सर्वपापविनिर्मुक्ता यास्यन्ति परमां गतिम् ।।**

**लिङ्गाङ्गसङ्गिनो लोके लिङ्गध्यानपरायणान् ।**

**अनुव्रजन्ति यो मर्त्यः सोऽपि मुक्तो न संशयः ।।**

(अ.वी.सा.सं.,भा-१, १-१९४)

**अङ्गलिङ्गी ज्ञानरूपः सती ज्ञेयः शिवः पतिः ।**

(सि.शि.,१३.२)

## लिङ्गाङ्गसम्बन्धः

लिङ्गाङ्गयोर्मध्ये विद्यमानः सम्बन्धः लिङ्गाङ्गसम्बन्धः । स च उभयोः अभेदात्मकः । सति–पतिभाव एव लिङ्गाङ्गसम्बन्धः ।

**लिङ्गं पतिः सती चाहं भावोऽयं वीरशैविनाम् ।**

(सू.आ.,क्रि.पा.,७.५२)

**आचारलिङ्गमुख्यानां सम्बन्धं चोत्तरोत्तरम् ।**
**ज्ञात्वा लिङ्गाङ्गयोरर्थं तत्सम्बन्धं च पार्वति ।।**

(सू.आ.,क्रि.पा.,८.८४)

**लिङ्गं तत्पदमाख्यातमङ्गं त्वं पदमीरितम् ।**
**संयोगोऽसिपदप्रोक्तमनयोरङ्गलिङ्गयोः ।।**

(अ.सू.,५.२७)

**तत्पदेनोच्यते लिङ्गं त्वं पदेनाङ्गमीरितम् ।**
**अनयोरेकभावोऽयं सम्बन्धोऽसिपदेन च ।।**

(लिं.धा.चं., पृ.१७८)

**''लिङ्गाङ्गसम्बन्धस्वरूपमहावाक्यार्थबोधक – ''तत्त्वमसि'' (छां.उ.,६–८–७) ''अहं ब्रह्मास्मि'' (बृ.उ.,१–४–१०) इति वाक्यद्वयेनापि लिङ्गधारणसिद्धिर्निष्प्रत्यूहैव ।''**

(लिं.धा.चं.,पृ.१६८)

## लिङ्गाङ्गसम्बन्धज्ञानम्

लिङ्गाङ्गसम्बन्धस्य ज्ञानम् । गुरूपदेशद्वारा सूक्ष्मभावेन दुर्लभं गोप्यं च लिङ्गाङ्गसम्बन्धज्ञानं प्राप्तव्यम् ।

**गुरूक्तेनैव मार्गेण जानीयात् सूक्ष्मभावतः ।।**

**एवं लिङ्गाङ्गसम्बन्धज्ञानं गोप्यं सुदुर्लभं ।**

**उपदिष्टं तव प्रीत्या मोक्षमार्गैकसाधनम् ।।**

(सू.आ.,क्रि.पा.,८.८४-८५)

## लिङ्गाङ्गसम्बन्धी

लिङ्गाङ्गयोः सम्बन्धवान् । गुरूपदेशबलात् लिङ्गाङ्गसामरस्यं प्राप्तवान् शिवध्यानपरायणः लिङ्गाङ्गसम्बन्धी इत्युच्यते ।

गुरुणा दीक्षायां लिङ्गं यदा दत्तं तदा प्रभृति साधकः लिङ्गाङ्गसम्बन्धी भवति ।

**दीक्षायां गुरुणा लिङ्गं धारितं गिरिजे यदा ।**

**तदा प्रभृति लिङ्गाङ्गसम्बन्धी स्यान्निरन्तरम् ।।**

(सू.आ.,क्रि.पा.,७.५३)

(पश्यत - लिङ्गाङ्गसम्बन्धः, लिङ्गाङ्गसम्बन्धज्ञानम्)

## लिङ्गाङ्गसामरस्यम्

लिङ्गम् अङ्गं च तत्त्वशः न भिन्नमित्याकारकं लिङ्गाङ्गयोः समरसज्ञानं लिङ्गाङ्गसामरस्यम् । जीवब्रह्मणोः भेदाभेदात्मकमिदं ज्ञानं गुरूपसदनजन्यं सारूप्यरूपमुक्तिदायकं च । अनेन च विष्ण्वादयः कृतकृत्याः शक्तिमन्तश्च भवन्ति । साधकाश्च ब्रह्मभावमुपाश्रिताः जीवन्मुक्ताः सञ्जायन्ते ।

**दीक्षासंस्कृतिसंशुद्धे चित्ते जन्तोः समर्पितम् ।**

**लिङ्गाङ्गसामरस्याख्यं मन्निष्ठागोपितं परम् ।।**

(का.आ.,क्रि.पा.,२.९)

**गुरूपसदनादेव ब्रह्मविष्ण्वादयः सुराः ।**

**लिङ्गाङ्गसामरस्यं च प्राप्नुयुर्विगतज्वराः ।।**

(क्रि.सा.,भा-१, १.१०)

**लिङ्गाङ्गसामरस्यैकलभ्यं पाशविमोचनम् ।**

(क्रि.सा.,भा-१, १.३४)

**लिङ्गाङ्गसामरस्येन जीवब्रह्मैक्यलक्षणम् ।**
**कैवल्यमेव सर्वेषां जायते न पुनर्भवः ।।**

(क्रि.सा.,भा-१, १.१०९)

**लिङ्गाङ्गसामरस्येन कृतकृत्याश्च ते बभुः ।**
**तदा प्रभृति विष्णवाद्याः शिवस्य परमात्मनः ।।**
**आज्ञया शक्तिमन्तश्च लोकेषु ख्यातिमाप्नुयुः ।।**

(क्रि.सा.,भा-१, १.१३४)

**लिङ्गाङ्गसामरस्येन ब्रह्मभावमुपाश्रिताः ।**
**सारूप्यरूपिणी मुक्तिं सम्प्राप्य परदुर्लभाम् ।**
**कृतकृत्याः भवन्त्येव शिवानन्दभुजोऽनिशम् ।**

(क्रि.सा.,भा-१, १.१८२-८३)

**न भेदोऽपि न चाभेदः सामरस्यात्तयोर्ध्रुवम् ।**
**भेदाभेदाभ्युपगमाद्विस्फुलिङ्गाग्निवत्तदा ।।**
**जीवो ह्युपासकः साक्षादुपास्यं ब्रह्मकेवलम् ।**
**लिङ्गाङ्गसामरस्येन भेदाभेदौ व्यवस्थितौ ।।**

(क्रि.सा.,भा-१, १.४४६)

**लिङ्गाङ्गसामरस्यभेद :**

लिङ्गाङ्गसामरस्यस्य प्रभेदाः बहवः। प्राधान्येन ते साधनसहिताः, साधनरहिताः – इति द्विधा विभज्यन्ते । तत्र वेधादिदीक्षादीनां साधनैः साधितं साधनसहितं लिङ्गाङ्गसामरस्यम् । गुरुवाक्यपालनात् आसाधितं साधनरहितं लिङ्गाङ्गसामरस्यम् ।

**प्रबन्धादौ मया प्रोक्ता उपदेशचतुष्टये ।**

**लिङ्गाङ्गसामरस्यस्य प्रकाराः बहवो मया ।।**

**दहरोपासनाध्याये संवर्गोपासनादयः ।**

**सहिताः साधनेनैते रहिताः साधनैस्ततः ।।**

(क्रि.सा.,भा-३, १९.९-१०, पृ.३४)

**लिङ्गाङ्गयोः सामरस्यं जीवब्रह्मैक्यलक्षणम् ।।**

**तदपि द्विविधं प्रोक्तं साधनेन समन्वितम् ।**

**द्वितीयं तद्विनिर्मुक्तमाद्यं गुरुकृतं पुरा ।।**

**द्वितीयमपि शिष्यस्य गुरुवाक्यस्य पालनात् ।**

**आद्यं वेधादिदीक्षाभ्यस्त्रिपुण्ड्रस्यापि धारणात् ।।**

(क्रि.सा.,भा-३, १९.२-४, पृ.३३)

## लिङ्गाङ्गस्थले

लिङ्गस्थलं च अङ्गस्थलं च लिङ्गाङ्गस्थले। तत्र लिङ्गस्थलं शिवः, अङ्गस्थलं जीवात्मस्थलम् । तयोः स्थलयोरैक्यं शिवजीवैक्यमेव ।

**लिङ्गस्थलं शिवः साक्षाज्जीवात्माङ्गस्थलं भवेत् ।**

**लिङ्गाङ्गस्थलयोरैक्यं शिवजीवैक्यमेव हि ।**

(अ.सू.,२.३३)

## लिङ्गाङ्गी

लिङ्गम् अङ्गे यस्य सः लिङ्गाङ्गी वीरशैवः । स्वयम् ईश्वरेण संस्तुतः अयम् अत्याश्रमी द्विज इत्युच्यते । मृतस्य लिङ्गाङ्गिनः देहस्य दहनं नैव कर्तव्यम् । मोक्षाधिकारी अयं लिङ्गाङ्गी सामान्यवीरशैवः, विशेषवीरशैवः, निरभारिवीरशैवः – इति त्रिधा ।

**लिङ्गाङ्गी च मम प्राणो लिङ्गाङ्गी च ममात्मभूः ।**

**लिङ्गाङ्गी मम जीवश्च लिङ्गाङ्गी मम रक्षकः ।।**

**लिङ्गाङ्गी मम कर्ता च लिङ्गाङ्गी च मम प्रभुः ।**

**लिङ्गाङ्गी च मम स्वामी लिङ्गाङ्गी चापि मद्गुरुः ।।**

(अ.वी.सा.सं.,१.१८७-१८८)

**पद्मपुराणे –**

**सर्वाश्रमातिरेकेण भवेदत्याश्रमी द्विजः ।**

**लिङ्गाङ्गी यदि वा मुक्तो दग्धुं नार्हति कर्मणा ।।**

**स्कान्दे –**

**मृतलिङ्गाङ्गिनो देहमज्ञानाद् दहते यदि ।**

**शिवालयसहस्राणां दाहदोषमवाप्नुयात् ।।**

(लिं.धा.चं.,पृ.२६४)

**लिङ्गाङ्गिनिन्दकानामनधिकारित्वप्रदर्शनेन लिङ्गधारणवतां तदाशक्तचित्तानां च मोक्षादिकारित्वात् सिद्धमित्यवगन्तव्यम् । (तदासक्तचित्तानां)**

(लिं.धा.चं.,पृ.२२४)

(पश्यत – अङ्गलिङ्गी)

## लिङ्गार्चकः

लिङ्गम् अर्चयतीति लिङ्गार्चकः । लिङ्गार्चकाय दीयमानं दानम् अधिकफलदायकम् ।शैवपुराणे –

**सकृल्लिङ्गार्चके दत्वा वस्त्रमात्रं यदृच्छया ।**

**एकच्छत्रं भवेद्राज्यं शिवसायुज्यमाप्नुयात् ।।**

(अ.वी.सा.सं.,भा-२, २२.२१७)

## लिङ्गार्चनम्

लिङ्गस्य अर्चनं लिङ्गार्चनम् – लिङ्गपूजा । अग्निहोत्रमिव इदं स्वर्गमोक्षयोः हेतुः । लिङ्गार्चने नास्ति सूतकादिकम् आशौचम् । लिङ्गार्चनपरश्च साक्षात् रुद्रः, शुद्धः, अद्वैते अनासक्तश्च ।

**साक्षान्मोक्षप्रदश्शम्भोः धर्मो लिङ्गार्चनात्मकः ।।**

(सि.शि., १०.२४)

**अप्यग्निहोत्रमुभयं वयमामनामः**
**स्वर्गाय यद्भवति यद्दुरितं क्षिणोति ।**
**इति वाक्यादग्निहोमेकं स्वर्गापवर्गयोः**
**यथैव कारणमभूत्तथैकं लिङ्गपूजनम् ।।**

(पं.च.,७.६)

**(पराशरस्मृतौ)**
**शैवं लिङ्गार्चनं यस्य यस्य चाग्निपरिग्रहः ।**
**वानप्रस्थयतीनां च शरीरे नास्ति सूतकम् ।।**

(लिं.धा.चं.,पृ.१९४)

**लिङ्गे यस्य मनो लीनं लिङ्गस्तुतिपरा च वाक् ।**
**लिङ्गार्चनपरौ हस्तौ स रुद्रो नात्र संशयः ।।**
**लिङ्गार्चनपरः शुद्धः सर्वाद्वैतनिरासकः ।**
**स्वेष्टलिङ्गे शिवाकारे न तमावाहयेच्छिवम् ।।**

(सि.शि., १०.२७)

**लिङ्गार्चनभेदः** – नित्यलिङ्गार्चनम्, काम्यलिङ्गार्चनम् इति लिङ्गार्चनं द्विविधम् । तत्र इष्टार्थपूरकं काम्यम्, पापनाशकं नित्यम् ।

**लिङ्गार्चनं तु द्विविधं नित्यकाम्यविभेदतः ।**
**तथैव हरदत्तार्यैरुक्तं तात्पर्यसंग्रहे ।।**

**द्वेधा तवार्चनविधिस्तरुणेन्दुमौले**

**कामायकश्चिदपरो दुरितक्षयाय ।**

(पं.च., १, ५-६)

(पश्यत – लिङ्गपूजा)

## लिङ्गाचारः

पञ्चाचारेष्वेकः । गुरुणा यदिष्टलिङ्गं दत्तम्, तस्मात् न किमप्यन्यद्दैवमिति भावेन सम्बन्धः लिङ्गाचार इति कथ्यते ।

**लिङ्गाचारः सदाचारः शिवचारः तथैव च ।**

**भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः ।।**

**गुरुणा दत्तलिङ्गाद्वै नास्ति दैवं महीतले ।**

**इति भावानुसन्धानं लिङ्गाचारः स उच्यते ।।**

(चं.आ.,क्रि.पा.,९.४-५)

क्रियादीक्षा, मन्त्रदीक्षा, वेधादीक्षेति त्रिविधदीक्षासु सप्तसप्तसंख्याका अवान्तरदीक्षाः भवन्ति ।एता एकविंशतिदीक्षाः लिङ्गाचारे अन्तर्भवन्ति ।

**क्रिया वेधा मन्वभिख्यदीक्षान्तर्गतमूर्तयः ।**

**एकविंशतिदीक्षाश्च लिङ्गाचार इति स्मृताः ।।**

(चं.आ.,क्रि.पा., ९.११)

(पश्यत – एकविंशतिदीक्षाः)

## लिङ्गार्पणम्

लिङ्गाय अर्पणं लिङ्गार्पणम्, लिङ्गनैवेद्यमित्यर्थः । स च क्रियार्पणम् ज्ञानार्पणं चेति द्विधा । कालोचितं द्रव्यं स्वयं स्वोपभोगाय त्रिषु लिङ्गेषु यदर्प्यते तत् क्रियार्पणं भवति । षट्सु लिङ्गेषु सार्वकालिकरूपेण स्वयमागतवस्तूनि तत्तदिन्द्रियमुखेषु निष्कामविधिना यदर्प्यते तत् ज्ञानार्पणं भवति ।

**द्वेधा लिङ्गार्पणविधिः प्रोच्यते देशिकोत्तमैः ।**

**क्रियामतार्पणं किञ्चिज्ज्ञानमतार्पणम् ॥**

**यथा कालोचितैर्द्रव्यै र्यदृच्छासम्भवैः स्वयम् ।**

**स्वोपभोगाय यत्कार्यं त्रिषु लिङ्गेषु सादरम् ॥**

**तत् क्रियार्पणमित्याहुरर्पणैकविशारदैः ।**

**स्वयमागतवस्तूनि ज्ञात्वा तत्तन्मुखेषु च ॥**

**अनिच्छाविधिना कार्यमेतज्ज्ञानार्पणं विदुः ॥**

(अ.सू.,७.२-५)

(पश्यत – अर्पणम्)

## लिङ्गार्पणविधिः

क्रियार्पणं ज्ञानार्पणं चेति लिङ्गार्पणविधिः द्विधा ।

**द्वेधालिङ्गार्पणविधिः प्रोच्यते देशिकोत्तमैः ।**

**क्रियामतार्पणं किञ्चित् किञ्चिज्ज्ञानमतार्पणम् ॥**

(अ.सू.,७.२)

(पश्यत – लिङ्गार्पणम्)

## लिङ्गार्पितप्रसादः

इष्टप्राणभावाख्यं लिङ्गत्रयं सम्यग् विज्ञाय तेषामैक्यमपि विभाव्य यल्लिङ्गार्पितमन्नाद्यं लिङ्गार्पितप्रसाद इति स कथ्यते । स एव सिद्धप्रसादः ।

**ज्ञात्वा लिङ्गत्रयं सम्यक् तदैक्यं च वरानने ।**

**लिङ्गार्पितप्रसादोऽयं सिद्ध इत्यभिधीयते ॥**

(सू.आ.,क्रि.पा.,८.२४)

(पश्यत – लिङ्गप्रसादः, सिद्धप्रसादः)

## लिङ्गार्पितोपभोगः

जाग्रदाद्यवस्थासु जीवात्मनः लिङ्गार्पितप्रसादसेवनं तद् द्वारा निर्लेपत्वप्राप्तिः लिङ्गार्पितोपभोगः ।

**जाग्रत्स्वप्नसुषुप्त्यादि सर्वावस्थासु सर्वदा ।**

**लिङ्गार्पितोपभोगेन निर्लेपोऽयं न संशयः ।।**

(अ.सू.,७.२४)

## लिङ्गिब्राह्मणः

लिङ्गधारी ब्राह्मणः लिङ्गिब्राह्मणः ।

**किमाहुर्भरतश्रेष्ठ पात्रं विप्राःसनातनाः ।**

**ब्राह्मणा लिङ्गिनश्चैव ब्राह्मणा वाप्यलिङ्गनः ।।**

**स्ववृत्तिमभिपन्नाय लिङ्गिने चेतराय च ।**

**देयमाहुर्महाराज उभावेतौ तपस्विनौ ।।**

(म.भा.,अनुशासनपर्व, २२.१-२ कल्कत्तावृत्तिः, पि.सि. राय्महोदयेन सम्पादितम्)

## लिङ्गैक्यः

परशिवरूपिणि लिङ्गे विलीनवान् भौतिकदेहविमुक्तः शिवभक्तः ।

(शातातपस्मृतौ)

**वानप्रस्थं योगिनं च लिङ्गैक्यं भिक्षुकं यतिम् ।**

**तुर्याश्रमाणां मध्ये च रसायां निक्षिपेन्मृतम् ।।**

(लिं.धा.चं., पृ.१९०)

## लिङ्गैक्यम्

अङ्गस्य परशिवरूपिणा लिङ्गेन सह एकीभावप्राप्तिरेव लिङ्गैक्यम् ।

**लिङ्गैक्ये तु समापन्ने चरणाचरणे गते ।**

**निर्देही स भवेद्योगी चराचरविनाशकः ।।**

(सि.शि.,२०.२१)

## लोकधर्मिणी दीक्षा

दीक्षाप्रभेदः । सबीजदीक्षायाः शिवधर्मिणीलोकधर्मिणीति द्विविध-दीक्षयोरन्यतरा । तत्र इयम् अधर्मसञ्चितस्य आगामिकर्मणः शोधिका दीक्षा ।

**अधर्मसञ्चितं सर्वं कर्मागामि विशोध्यते ।**

**धर्मावशेषतो यत्र सा दीक्षा लोकधर्मिणी ।।**

(शि.त.र.,भा-३, ९.७.२३)

(पश्यत – दीक्षा)

## लोकाग्निजभस्म

द्रव्यशुध्यर्थमुपयुज्यमानम् एकं भस्म ।

**लोकाग्नेयमथो भस्म द्रव्यशुध्यर्थमावहेत् ।।**

(क्रि.सा.,भा-१, ३.३७३)

# व

## वंश्यशिष्यः

वंश्यः, आगन्तुकः इति द्विविधशिष्ययोः एकः । एकसन्ततिसम्बद्धः शिष्यः । स च मुख्यः, सामान्य इति द्विधा ।

**वंश्य आगन्तुकश्चेति द्विविधः शिष्य उच्यते ।**
**मुख्यः सामान्य इत्येवं पुनर्वंश्यो द्विधा मतः ।।**

(वी.स.सं.,१४.२)

(पश्यत – शिष्यः)

## वन्दनभक्तिः

नवविधभक्तिषु एका ।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**
**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना ।**

(सि.शि.,९.२-३)

(पश्यत – भक्तिः)

## वह्नितत्त्वपञ्चकम्

बुद्धिरेव नभस्तत्त्वम्, उदान एव वायुतत्त्वम्, गौखे (नेत्रेन्द्रियमेव) वह्नितत्त्वम्, रूपमेव अप्तत्त्वम्, पाद एव पृथिवीतत्त्वम् इत्येवं अग्निसम्बन्धि तत्त्वपञ्चकम् ।

**नभो बुद्धिरुदानश्च मरुद्गौर्वह्निरेव च ।**

**पाथोरूपं धरा पादो वह्नेर्यत्तत्वपञ्चकम् ।**

(शि.यो.प्र.,४.२२)

(पश्यत – तैजसतत्त्वपञ्चकम् ।)

## वर्णन्यासः

विद्यामयो देहः सम्पादनीय इति नियमानुसारं करन्यासः, देहन्यासः, अङ्गन्यासश्चेति त्रिविधन्यासपद्धतिर्विहिता । एतैः सह वर्णन्यासोऽपि करणीयः । स च हस्तपादादीनां सन्धिषु क्रियते । अकार–आकारौ शिरसि तथा ललाटे च । इकार–ईकारौ दक्षिणवामनेत्रयोः । उकार–ऊकारौ दक्षिणवामश्रोत्रयोः । ऋ– ॠकारौ दक्षिणवामकपोलयोः । लृकार–लॄकारयोः दक्षिणवामना-सिकरन्ध्रयोः। एकार–ऐकारौ ऊर्ध्वाधरोष्ठयोः । ओकार–औकारौ ऊर्ध्वाधोदन्तपङ्क्त्योः । अं–अः इति द्वयं तालुनोः । कवर्गाक्षराणि दक्षिणहस्तस्याङ्गुलिपञ्चके चवर्गाक्षराणि वामकरस्याङ्गुलिपञ्चके। टवर्गा-क्षराणि दक्षिणहस्तस्याङ्गुलिपञ्चके । चवर्गाक्षराणि वामपादस्याङ्गुलिपञ्चके। पकारः कुक्षौ । फकारबकारौ दक्षिणवामपार्श्वयोः। भकारस्स्कन्धे । मकारो हृदये । यकार–रकार–लकार–वकार–शकार–षकार–सकार इति सप्ताक्षराणि चर्मादिसप्तधातुषु (अत्र त्वगादिसप्तधातवः के इति न ज्ञायते, किन्तु रसादिसप्तधातव इति मन्यते चेत् साधु । तथा हि–रसः, रुधिरः, मांसः, मेदः, अस्थि, मज्जा, शुक्लश्चेति सप्तधातवः) । हकारः आत्मनि, क्षकारः जन्मादिरिपुविषयकक्रोधे । एवं लिङ्गमध्ये एतानि मातृकाक्षराणि स्मरणीयानि । एष वर्णन्यास एव मातृकान्यास इत्यपि कथ्यते ।

**वर्णन्यासं ततः कुर्याद्धस्तपादादिसन्धिषु ।**

(चं.आ.,क्रि.पा.,११.३३)

**“अकाराकारौ मूर्ध्नि ललाटे । इकारेकारौ दक्षिणवामनेत्रयोः । उकारोकारौ दक्षिणवामश्रोत्रयोः । ऋकार–ॠकारौ दक्षिणवाम–**

**कपोलयोः । लृकार–लॄकारौ दक्षिणवामनासपुटयोः । एकारैकारौ उर्ध्वाधरोष्ठयोः । ओकारौकारौ उर्ध्वाधोदन्तपङ्क्त्योः । अं–अः तालुनोः । कादिपञ्चाक्षराणि दक्षिणहस्तपञ्चाङ्गुलिषु । चादिपञ्चाक्षराणि वामकराङ्गुलिषु । टादिपञ्चाक्षराणि दक्षिणपादाङ्गुलिषु । तादि पञ्चाक्षराणि वामपादाङ्गुलिषु । पकार उदरे । फकारबकारौ दक्षिणवामपार्श्वयोः । भकारः स्कन्धे । मकारो हृदि । यकार सकारान्तान्यक्षराणि त्वगादिसप्तधातुषु । हकार आत्मनि । क्षकारः पूजकानां जन्मादिरिपुविषयकक्रोधे । अनेन प्रकारेण लिङ्गमध्ये इमानि मातृकाक्षराणि स्मरेत ।''**

(वी.आ.प्र.,पृ.५६–५७)

**तत्राद्यो मातृकान्यासो ब्रह्मन्यासस्ततः परम् ।**

(चं.आ.,क्रि.पा.,११.३६)

## वर्णाध्वा

मन्त्राध्वा, वर्णाध्वा, पदाध्वा – इति त्रिविधेषु शब्दाध्वसु एकः, षडध्वसु च अन्यतमः । अकारादिक्षकारान्ताः पञ्चाशद्वर्णाः वर्णाध्वा इत्युच्यन्ते।

**वर्णाध्वानं शब्दरूपं विन्यस्येत् पादयोर्बुधः ।**

(का.आ.,क्रि.पा.,१.७९)

**अकारादिक्षकारान्तवर्णा वर्णाध्वनामकाः ।**

(शि.त.र.,भा–३, ९.३. ८३)

## वस्तुत्रयम्

भोक्ता, भोज्यम्, प्रेरयिता – इत्येतत् त्रिविधं वस्तुत्रयमुच्यते । तत्र महेश्वरः प्रेरयिता । सर्वे पशवः भोक्तारः । अव्यक्तं जगत् भोज्यम् । वस्तुत्रयस्यास्य गुणत्रयात्मिकशक्तेः गुणवैषम्यात्समुत्पत्तिः ।

**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।**

(श्वे.उ.,१.१२)

**भोक्ता भोग्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम् ।**

**अत्र प्रेरयिता शम्भुः शुद्धोपाधिर्महेश्वरः ।**

**सम्मिश्रोपाधयः सर्वे भोक्तारः पशवः स्मृताः ।।**

**भोज्यमव्यक्तमित्युक्तं शुद्धतामसरूपकम् ।**

**तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा ।।**

**अखण्डे ब्रह्मचैतन्ये कल्पितं गुणभेदतः ।।**

(सि.शि.,५.४१,४३,३१)

वस्तुत्रयं तत्त्वत्रयमिति (पशुः – पाशः – पतिः च) कथ्यते ।

(पश्यत – तत्त्वत्रयम्)

## वाकारः

पञ्चाक्षरमन्त्रे चतुर्थमक्षरम् । मन्त्रदेवतयोरभेदेति पञ्चाक्षरीमन्त्रलिङ्ग-योरभेदः । वाचकस्य मन्त्रस्य वर्णरूपत्वम्, लिङ्गस्य परशिवस्वरूपत्वम्, अतः लिङ्गवाचकः पञ्चाक्षरमन्त्रः । तत्र वाकारः लिङ्गगोमुखयुक्तस्य वृत्तस्य सङ्केतः ।

**वाकारं गोमुखं वृत्तं यकारं गोलकं स्थितम् ।**

(सि.सारा. पश्यत – लिं.घा.चं., पृ.४६)

अस्य अक्षरस्य षोडशरूपता उक्ता, वायुरूपम् (हरिद्वर्णः), ईश्वर अधिदेवता, अम्बिका शक्तिः, वायु आधारः, बृहती छन्दः, काश्यप ऋषिः पूर्वमुखं स्थानम्, तत्पुरुषः ब्रह्म, बिन्दुस्वरूपं आयुधम्, शन्तिः कला, स्पर्शो गुणः, षडश्ररूपः चक्रः, इन्द्रनीलः प्रकाशः, चित्तं कर्णम्, उदानो वायुः, चर्म ज्ञानेन्द्रियं चेति । वाकारः चरलिङ्गं भवति ।

**वाकारं वायुरूपं स्यादधिदैवतमीश्वरम् ।**

**अम्बिका स्यान्महाशक्तिर्वायुश्चाधारमेव च ।।**

**बृहतीछन्दसा युक्तं ऋषिः काश्यप एव च ।**
**स्थानं पूर्वाननं प्रोक्तं ब्रह्म तत्पुरुषं भवेत् ।।**
**आयुधं बिन्दुरूपं तु कला शन्तिस्तथैव च ।**
**गुणः स्पर्श इति प्रोक्तं षडश्रं चक्रमेव च ।।**
**प्रकाश इन्द्रनीलस्य चित्तं तु करणं भवेत् ।**
**उदानवायुसंयुक्तं चर्म ज्ञानेन्द्रियं भवेत् ।**
**इत्येवं षोडशानां तु वाकाराक्षरमुच्यते ।।**

(चं.आ.,क्रि.पा.,८.३४-३७; सू.आ.,क्रि.पा.,३.२९-३०)

**................ वाकारश्चरलिङ्गकम् ।।**

(अ.सू.,६.४९)

शैव्याः तनोः ओंकारयुक्तपञ्चाक्षरीमन्त्राक्षराणि अङ्गानि । तत्र वाकारः यकारश्च तस्याः भुजद्वयं ।

**ततः शैवीतनुं कृत्वा जपेत् साङ्गां षडक्षरीम् ।**
**ओंकारवदना देवि वायकारभुजद्वयी ।।**

(चं.आ.,क्रि.पा.,११.३९)

## वाक्शुद्धिः

शिवाचारसम्बद्धेषु षोडशशुद्धिष्वेकतमा । अनृतादिवर्जनं सा ।

**अनृतं परुषं कुत्सं बीभत्सं दाम्भिकं च यत् ।**
**विसर्जनं तद्वचसो वाक्शुद्धिरिति कथ्यते ।।**

(चं.आ.,क्रि.पा.,९.४८)

(पश्यत – षोडशशुद्धयः)

## वागद्वैतनिरसनस्थलम्

एकेत्तरशतस्यलेस्वेकम् ।

**महेश्वरः ............... वागद्वैतनिरसनस्थलमित्युच्यते ।**

(कै.सा.,पृ.३४)

(पश्यत – अद्वैतनिरसनस्थलम्)

## वाग्दीक्षा

चाक्षुष्यादिदीक्षासु एका । चित्तं तत्त्वे समाधाय विकसितचेतसा गुरुणा शिष्याय संहितामन्त्रोपदेशात्मकदीक्षा ।

**तत्त्वे चित्तं समाधाय बृंहितान्तरचेतसा ।**
**उच्चरेत्संहितामन्त्रान्वाग्दीक्षेयं समीरिता ।।**

(शि.त.र.,भा–३, ९.७.२९)

(पश्यत – दीक्षा)

## वाचकगुरुः

हितादिषड्विधगुरुष्वेकतमः, चतुर्थः । संसारविषये य अत्यन्तं वैराग्यमुक्त्वा आध्यत्मिकां भक्तिं वक्ति सः वाचको गुरुः ।

**हितः काम्यो निषिद्धश्च वाचकस्सूचकस्तथा ।**
**कारकश्चेति भेदेन षोढ़ा विद्वद्भिरीरिताः ।।**
**संसारविषयेऽत्यन्तं विरक्तिं वक्ति सर्वदा ।**
**भक्तिमध्यात्मविषयां स गुरुर्वाचकः स्मृतः ।।**

(कि.आ.,वि.ध.शि.,पृ.१३७ मध्ये उल्लिखितः)

## वाचकजपः = वाचिकजपः

वाचिकः, उपांशुः, मानसः चेति त्रिविधजपेषु एकः । उदात्तानुदात्त–स्वरितस्वरविशिष्टैः स्पष्टपदाक्षरैः शब्दैः वाचा क्रियमाणं मन्त्रोच्चारणं

वाचिकजप इत्युच्यते । स च पार्श्वस्थैः स्पष्टं श्रोतुं शक्यः, सर्वपापविनाशकश्च । वाचकः त्रिविधजपेषु कनिष्ठः ।

**विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।**

**उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ।**

(म.स्मृ., २.८५)

**यमुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ।**

**मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः ।।**

(चं.आ.,क्रि.पा., ८,५७; पार.,आ.,११.८५-८६)

**सम्यक् श्रोत्रगतश्चैव स जपो वाचिकः स्मृतः ।।**

(सू.आ.,क्रि.पा, ३.४१)

**श्रूयते यस्तु पार्श्वस्थैः यथा वर्णसमन्वयः ।।**

**वाचिकः स तु विज्ञेयः सर्वपापप्रभञ्जनः ।**

(सि.शि., ७.२७)

## वाचिकी भक्तिः

वाचिकी सेवा ।

**शिवमन्त्रजपस्तुतिरेव वाचिकी भक्तिः ।**

(वी.शै.प्र.,पृ.१३)

(पश्यत – वाचिकी सेवा)

## वाचिकी सेवा

कायकी सेवा, वाचिकी सेवा, मानसी सेवा इति त्रिविधसेवासु एका । तत्र शिवनामपञ्चाक्षर्यादिशिवमन्त्रजपादिकं वाचिकी सेवा । इयं वाचिकी भक्ति इत्यपि कथ्यते ।

**जपादि वाचिकी सेवा .........।**

(सि.शि.,९.१६)

**शिवमन्त्रजपस्तुतिरूपा वाचिकी ।**

(सि.शि., तत्त्व.प्र.,पृ.२२३)

(पश्यत – सेवा)

## वाद्यम्

सङ्गीतवाद्यनृत्यादिषु अष्टोपचारेषु एकः ।

**सङ्गीतवाद्यनृत्तैस्तैरुपचाराष्टकं मुने ।**

**सुखश्रवणतां गच्छेद्वाद्येन शिवसन्निधौ ।**

**हृत्पङ्कजे शिवं स्थाप्य शिवत्वं प्राप्नुयाद्ध्रुवम् ।।**

(शि.त.र.,भा–३, ८.७.४५, ६८)

(पश्यत – उपचारः)

## वामदेवम्

परमेश्वरस्य सद्योजातादिषु पञ्चसु मुखेषु एकम् । तत्र च इदं द्वितीयम् । महेश्वरस्य उत्तरमुखमिदम् इष्टदायकम् । एतस्मात् मुखात् सञ्जाता गौः भद्रा । तस्याः गोमयेन सिद्धं भस्म "भसितम्" इत्युच्यते ।

**मम पञ्चमुखानीति सञ्जानीहि वरानने ।।**

**सद्योजातं च प्रथमं वामदेवं द्वितीयकम् ।**

(वी.स.सं., १.,२५–२६, पृ.८)

**महेश्वरोत्तरमुखं वामदेवमभीष्टदम् ।**

(वा.शु.आ., ७.५०, पृ.२३३)

**नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा ।।**

**पञ्च गावो विभोर्जाताः सद्योजातादिवक्त्रतः ।**

**सद्योजाताद्विभूतिश्च वामात् भसितमेव च ।।**

(सि.शि.,७.६–८)

**वामदेवमुखोत्पन्नभद्रया भसितम् ।**

(सि.शि.,तत्त्व.प्र.,७.८, पृ.१६२)

## वामदेवः

महेश्वरस्य सद्योजातादिपञ्चमूर्तिषु एका । जपापुष्पनिभः जटामकुटमण्डितश्च अयं चतुर्वक्त्रसमायुक्तः । चतुर्भुजसहित एषः द्वादशनेत्रयुक्तः । रक्तवस्त्रधरोऽयं रक्तोत्तरीयधारी शूलटङ्कादिधरश्च ।

**जपापुष्पनिभं वामं जपामकुटमण्डितम् ।।**
**चतुर्वक्त्रसमायुक्तं चतुर्भुजसमन्वितम् ।**
**नेत्रैर्द्वादशभिर्युक्तं सर्वावयवसंयुतम् ।।**
**रक्तवस्त्रधरं देवं रक्तवस्त्रोत्तरीयकम् ।**
**दक्षहस्तद्वयेनैवाभयं टङ्कं दधानकम् ।।**
**दधानं वरदं शूलं वामहस्तद्वयेन च ।**
**रक्तगन्धानुलिप्ताङ्गं रक्तमाल्यैरलङ्कृतम् ।।**
**सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ।**

(वा.शु.आ.,७.४५-४९)

## वामदेवमन्त्रः

महेश्वरस्य वामदेवमुखप्रतिपादकः मन्त्रः वामदेवमन्त्रः । अयं च कल्पभस्मोत्पादनभस्मस्नानादिषु विधिषु उपयुज्यते ।

मन्त्रः -

**"वामदेवाय नमो ज्येष्ठाय नमःश्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलाय नमो बलविकरणाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।"**

(म.ना.उ., ४)

मन्त्रप्रयोगः –

**यथा शास्त्रोक्तविधिना गृहीत्वा गोमयं नवम् ।**

**सद्येन वामदेवेन कुर्यात् पिण्डमनुत्तमम् ।।**

**कल्पं तद्भस्म विज्ञेयम् ................. ।।**

(सि.शि.,७.१४)

**हृत्प्रदेशमघोरेण वामदेवेन गुह्यकम् ।**

**पादौ सद्येन सर्वाङ्गं प्रणवेनैव सेचयेत् ।।**

**भस्मना विहितं स्नानम् ............ ।**

(सि.शि., ७.२२-२३)

## वामशैवम् = वामतन्त्रम्

शैवभेदः । चतुर्विधशैवेषु (चतुर्विधशैवतन्त्रेषु एकतमम्) । शक्तिरेव सर्वोत्तमा इति परिभावयितृ ।

**पुनरेव हि शैवं तु चतुर्विधमनन्तरम् ।**

**वामदक्षिणमिश्राणि सिद्धान्तं तत्त्ववेदिभिः ।।**

**शक्तिः सर्वोत्तमा यत्र तद्वाममिति कथ्यते ।**

(वी.स.सं., ८.११-१२)

**तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।**

**वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ।।**

**शक्तिप्रदानं वामाख्यं दक्षिणं भैरवात्मकम् ।**

**सप्तमातृपरं मित्रं सिद्धान्तं वेदसंमतम् ।।**

(सि.शि.,५.१०-११)

(पश्यत – तन्त्रम्)

## वायव्यस्नानम्

स्नानभेदः । गवां रजसा क्रियमाणं स्नानं वायव्यं स्नानम् ।

**गङ्गोदकदिव्यवायव्यादिस्नानेषु ............. ।**

(सि.शि.तत्त्व.प्र., ७.२३)

**वायव्यं रजसा गवाम् ।।**

(शि.त.र.,भा–३, ८.५.६३)

(पश्यत – स्नानम्)

## वायुः

पृथिव्यादिपञ्चभूतेषु एकम् । षट्त्रिंशत्तत्त्वेष्वेकम् । कम्पभ्रमणशोषणवेगवान् स्पर्शगुणश्च अयं वायुः । आकाशजन्यः अग्निजनकश्च । अयं च वायुः – प्राणः, अपानः, व्यानः, उदानः, समान इति प्राधान्येन पञ्चधा । रम्भः इत्येषः षष्ठः वायुः । इमे च आचारलिङ्गादिरूपाः । नागः, कूर्मः, कृकरः, देवदत्तः, धनञ्जयः, स्तम्भः– इत्येते षट् उपवायवः भक्तादिषट्स्थलरूपाः ।

**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः। ओषदिभ्योऽन्नम् अन्नात् पुरुषः ।।**

(तै.उ., २.१)

**कम्पभ्रमणशोषणवेगवान् स्पर्शैकगुणो वायुः ।**

(शि.मं., पृ.५४)

वायवः – प्राणः अपानः व्यानः उदानः समानः रम्भः इति नाम्ना वर्तमानाः आचारलिङ्गगुरुलिङ्गशिवलिङ्गजङ्गमलिङ्गप्रसादलिङ्गमहालिङ्ग–रूपाः । ... उपवायवः – नागः, कूर्मः, कृकरः, देवदत्तः, धनञ्जयः, स्तम्भः इति नाम्ना वर्तमानाः भक्तमाहेश्वरप्रसादिप्राणलिङ्गिशरणैक्यरूपाः ...... ।

(श्रुति.सा.,१३, पृ.८)

**ओं हां वायुतत्त्वमावाहयामीत्यादिना ।**

(लिं.धा.चं.,पृ.२७५)

## वायुतत्त्वपञ्चकम्

पञ्चविंशतितत्त्वान्यतमपञ्चतत्त्वानि । वायवितरतत्त्वमेलनजातानीतरतत्त्वेषु च वायुतत्त्वमेलनजातानीति द्विधा ।

१. वायावितरतत्त्वमेलनजातानि – समानः, व्यानः, उदानः, अपानः, प्राणश्च ।

**वायौ वाय्वंशतो व्यानो वायौ व्योम्नः समानकः ।**

**वायावुदानस्तेजोंऽशादपानो वाय्ववंशतः ।।**

**वायौ भूम्यंशतः प्राण इति वायुजपञ्चकम् ।**

(शि.त.र.,भा-१, १.७.५०-५१)

२. इतरतत्त्वेषु वायुतत्त्वमेलनजातानि-मनः, व्यानः, चर्म, स्पर्शः, पाणी च ।

**मन एव वियद्व्यानो वायुश्चर्मधनञ्जयः ।**

**स्पर्शोऽम्भश्च क्षमा पाणिर्मरुतस्तत्त्वपञ्चकम् ।।**

(शि.यो.प्र., ४.२१)

(पश्यत – पञ्चीकरणम्)

## वारुणस्नानम्

स्नानभेदः । वारिणा क्रियमाणं स्नानं वारुणस्नानम् ।

**स्नानेषु वारुणाद्येषु मुख्यमेतन्मलापहम् ।।**

**वारुणाद्यैरलं स्नानैर्बाह्यदोषापहारिभिः ।।**

(सि.शि.,७.२३-२४)

**वारुणं वारिणा स्नानम् ।**

(शि.त.र.भा–३, ८.५.६३)

(पश्यत – स्नानम्)

## विज्ञानदीक्षा

चिरकालाभ्यस्तज्ञानवशात् शिष्ये शिवैक्यस्फूर्तौ जातायां गुरुणा दीयमाना ज्ञानप्रधाना दीक्षा विज्ञानदीक्षा । मनोव्यापारविशिष्टा इयं ज्ञानदीक्षा इत्यपि व्यवह्रियते ।

पारमेश्वरतन्त्रे –

**अतः परं प्रवक्ष्यामि दीक्षां विज्ञानसंज्ञिकाम् ।**
**विशेषज्ञानपूर्वत्वाद्विविक्तत्वाद्विजृम्भणात् ।।**
**विज्ञानदीक्षा सा प्रोक्ता दीक्षानामुत्तमोत्तमा ।**
**मनोव्यापारमात्रेण या दीक्षा विद्यते क्रमात् ।**
**सा दीक्षा ज्ञानदीक्षा तु विज्ञानाख्या च सा भवेत् ।।**

(वी.ध.शि.,४.१७, पृ.२६३)

## विचारः

महेश्वरस्योपाङ्गषट्के विचारश्चतुर्थः ।

**उपाङ्गषट्कमपरं भक्त्यादि परमं पदम् ।।**
**भक्तिः कर्मक्षयो बुद्धिर्विचारो दर्पसंक्षयः ।**

(पार.आ.,६.४०–४१)

(पश्यत–उपाङ्गषट्कम्)

## विदेहः

विगतः देहः यस्य सः विदेहः मुक्तात्मा । धर्माधर्मवशात् देहोत्पत्तिः। तत्क्षये च देहाभावः, ततः शान्तिप्राप्तिरिति क्रमः ।

**धर्माधर्मवशात् पुंसां शरीरमुपजायते ।**

**शरीरे सति सङ्क्लेशैः सर्वैः संयुज्यते नरः ।।**

**धर्मरज्वा व्रजेदूर्ध्वं पापरज्वा व्रजेद्रधः ।**

**द्वयं ज्ञानासिना च्छित्वा विदेहः शान्तिमृच्छति ।।**

(वी.मा.सं.,२.१६-१७)

## विद्या

१. षट्त्रिंशत्तत्त्वेष्वेकं तत्त्वम् । धर्माधर्मयोः आत्मनश्च स्वरूपप्रतिपादिका विद्या । कामिकादय अष्टाविंशति आगमा अत्रैव व्यवस्थिताः । अविद्यातत्त्वं विषयासक्तिः, बिन्दुः इत्यपि अस्याः व्यवहारः। बुद्धिग्रहणकारणमिदं तत्त्वं कला, विद्या (अविद्या), कालः, रागः, नियतिः – इति पञ्चसु कञ्चुकेषु एकम् ।

**ततः परं तु द्वात्रिंशं विद्यातत्त्वमितीरितम् ।**

(शि.त.र.,भा-३, ९.३.४१)

**अतः परं तु बिन्द्वाख्यं तत्त्वमीरितमुत्तमम् ।**

**विषयेषूपरक्तो यो बुद्धिग्रहणकारणम् ।।**

(शि.त.र.,भा-३, ९.३.३३)

**अष्टाविंशतिसंख्याकाः कामिकाद्याश्च संहिताः ।**

**वैखरीरूपमापन्नाः विद्यातत्त्वे व्यवस्थिताः ।।**

(शि.त.र., भा-३, ९.३.७२)

**विद्यां चाविद्यां च यस्तद् वेदोभयं सह ।**

**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।।**

(ई.उ.,११)

**कलाविद्याकालरागाः नियतिः पञ्चकञ्चुकम् ।।**

(शि.त.र.,भा-३, ९.३.३६)

२. निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता इति पञ्चकलासु एका। इच्छाशक्तिरिति अस्याः व्यवहारः ।इयं च रूपग्रहणसाधनम्।

**निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।**

**शान्त्यतीतकलेत्येताः स्थिताः ब्रह्मादिमूर्तिषु ।।**

(शि.यो.प्र., १.२६)

**इच्छाशक्तिश्च विद्या स्यात् ।**

(अ.सू., ३.२५)

**सूक्ष्मक्रियालक्षणेच्छाशक्त्यपरपर्यायशिकाररूपं विद्याकलेति ।**

(शि.मं.,पृ.३९)

**कलासमोपेतं रूपग्रहणसाधनं विद्याकला ।**

(शि.मं.,पृ.२९)

३. **शास्त्रं विद्या**

परा अपरा चेति विद्या द्विविधा । तत्र वेदवेदाङ्गादिधर्माधर्मस्वरूप-प्रतिपादकं शास्त्रम् अपरा विद्या । आत्मतत्त्वादिकं शास्त्रं परा विद्या इत्युच्यते। द्वे विद्ये वेदितव्ये इति हंस यद्ब्रह्मविदो वदन्ति परा चैवापरा च ।

**तत्रापरा ऋग्वेदो यजुर्वेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ।अथ परा यया तदक्षरमधिगम्यते ।।**

(मुं.उ., १.४, ५)

## विद्याकला

**विद्याकलासमायुक्तमिच्छाशक्तिसमुद्भवम् ।**

(सू.आ.,क्रि.पा.,१.३६)

(पश्यत – विद्या)

## विद्याङ्गम्

चराचरात्मकं जगत् परशिवस्याङ्गम् । अङ्गेश्वरस्यास्याङ्गभेदः षडात्मकः । शिवाङ्गादारभ्य सामान्याङ्गपर्यन्तम् । तत्र विद्याङ्गं चतुर्थम् ।

**........ विद्याङ्गं च चतुर्थकम् ।**

(वा.शु.आ.,८.६)

## विद्याङ्गमन्त्रः

परमेश्वरस्य चराचरात्मकजगद्भूतमङ्गं षड्विधं शिवाङ्गादारभ्य सामान्याङ्गपर्यन्तम् । तत्सम्बद्धमन्त्राः षडङ्गमन्त्रा इत्युच्यन्ते । तेषु विद्याङ्गमन्त्रः चतुर्थः । प्रकारः, तकारः, दकारः, दकारोपेतः रकारः, यकारः, नमःकारश्च विद्याङ्गमन्त्रः । (प्र–त–र्दा–य–नमः)

**............... विद्याङ्गानि ततः शृणु ।।**

**प्रकारं तु समुद्धृत्य तकारं तु समुद्धरेत् ।**

**दकारोपेतराकारं यकारं च नमोऽन्तकम् ।।**

(वा.शु.आ.,८.२९–३०)

## विद्यातत्त्वम्

आत्मतत्त्वम्, विद्यातत्त्वम्, शिवतत्त्वमिति त्रिविधतत्त्वेषु एकम् । तत्र तत्त्वमसीति वाक्योत्पन्ना विद्या विद्यातत्त्वमित्युच्यते । ''तत्–त्वम्–असि'' (छां.उ.,६.८.७) इति महावाक्ये 'तत्' पदं शिवतत्त्वम्, 'त्वं' पदं आत्मतत्त्वं च परामृशति । 'असि' पदं तयोरैक्यज्ञान च प्रददाति ।

वीरागमे –

**आत्मविद्याशिवाख्यानि तत्त्वानि च यथाक्रमम् ।**

**त्वं पदं चात्मतत्त्वं स्याद् विद्यातत्त्वमसीति च ।।**

**तत्पदं शिवतत्त्वं स्यादात्मतत्त्वात्मकं पुनः ।**

**पञ्चविंशतिसङ्ख्याकं दशतत्त्वात्मकं तथा ।।**

**विद्यातत्त्वं शिवाख्यं स्यात् तत्त्वमेकमिति स्मृतम् ।।**

(लिं.धा.चं.,पृ.२८०)

**इच्छाज्ञानक्रियारूपबहुशक्तिविलासया ।**

**विद्यातत्त्वप्रकाशिन्या विनाभावविहीनया ।।**

(सि.शि.३.२५)

(पश्यत – विद्या)

## विद्येश्वराः

क्रियादीक्षाङ्गत्वेन विद्येश्वराणामष्टानां अष्टदिक्षुस्थापितेषु अष्टकुम्भेष्वावाह्य परिपूजनं वस्त्रैराच्छाद्य शिवाग्निमुखं संस्थापनं च विहिते । अनन्तः, सूक्ष्मः, शिवोत्तमः, एकनेत्रः, एकरुद्रः, त्रिमूर्तिः, श्रीकण्ठः, शिखण्डी चेति अष्टविद्येश्वराणां नामानि ।एतेषां स्वरूपं बैन्दवम् ।

**केचिदनन्तसूक्ष्मशिवोत्तमैकनेत्रैकरुद्रत्रिमूर्तिश्रीकण्ठशिखण्डि संज्ञका अष्टविद्येश्वराः ...............**

(सि.शि.,तत्त्व.प्र.३.४४)

**अष्टविद्येश्वरांस्तेषु चावाह्य परिपूज्य च ।**

**वस्त्रैराच्छाद्य कुर्वीत शिवाग्निमुखमप्यथ ।।**

(का.आ.,क्रि.पा.,१.६३)

**विद्येश्वराणामेतेषां स्वरूपं स्यात्तु बैन्दवम् ।।**

(शि.त.र.,भा–३, ९.३.६३)

(पश्यत – अष्टविद्येश्वराः)

## विभूतिः

१. सामान्यतः विभूतिरष्टावरणेष्वेकतमस्य भस्मनो नाम । महिमा सम्पदाद्यर्थे च विभूतिशब्दः प्रयुज्यते ।

**गुरुर्लिङ्गं जङ्गमश्च तीर्थं चैव प्रसादकः ।**

**भस्मरुद्राक्षमन्त्राश्चेत्यष्टावरण संज्ञिताः ।।**

(चं.आ.,क्रि.पा.,२.२)

**विभूतिर्भूतिहेतुत्वात् ......... ।**

(सि.शि.,७.५)

२. विभूतिः, भसितम्, भस्म, क्षारम्, रक्षा चेति पञ्चभस्मनामसु एकं नाम। एतानि नामानि पञ्चमहिमाभिरागतानि । अत्र विभूतिरिति नाम भूतिहेतुत्वात्। अणिमाद्यष्टसिद्धयः भूतिरित्युच्यन्ते । सद्योजातमुखोद्भूतायाः कपिलवर्णायाः नन्दानाम्न्याः गोर्गोमयादुत्पन्नेयं विभूतिः । सद्योजातात् पृथिवी, तस्याः निवृत्तिकला, तस्याः कपिलवर्णा नन्दा, तस्याः गोमयेन विभूतिरुत्पद्यते। नित्यकार्येषु विभूतिं धारयेदिति नियमः ।

**विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः ।**

**एतानि पञ्चनामानि हेतुभिः पञ्चभिः भृशम् ।।**

(सि.शि.,७.४)

**सद्योजातात् पृथिवी । तस्याः स्यान्निवृत्तिः । तस्याः कपिलवर्णा नन्दा ।तद्गोमयेन विभूतिर्जाता ।**

(बृ.जा.उ.,१.१०)

**नन्दा भद्रा .......................... ।**

**......... विभोर्जाताः सद्योजातादि वक्त्रतः ।।**

**कपिला कृष्णा ...................... ।**

**नन्दादीनां गवां वर्णाः क्रमेण परिकीर्तिताः ।।**

**सद्योजाताद्विभूतिश्च .................. ।**

(सि.शि.,७.६-८)

## विभूतिधारणम्

भस्मधारणम् । त्रिपुण्ड्रेण भस्मधारणमित्यर्थः ।

**दीक्षालिङ्गधृतिश्चैव विभूतेरपि धारणम् ।**

(सि.शि.,५.२८)

(पश्यत – भस्मधारणम्)

## विभूतिधारणस्थलम्

भक्तस्थलस्य पञ्चदशाङ्गस्थलेष्वेकम् । एकोत्तरशतस्थलेषु चान्यतमम् । ''भूत्यै न प्रमदितव्यम्'' इति श्रुत्युक्तदिशा (तै.उ.,१.११.१) विभूतिधारणस्थलमुक्तम् । महादेवं परशिवं महाभस्मेति विचार्य शैवचिह्नत्वेन भस्म धारयेत् । तादृशभस्मधारिणः मुख्याः । महाभाग्यवन्तश्चः ।

**भस्मधारणसंयुक्तः पवित्रो नियताशयः ।**

**शिवाभिधानं यत्प्रोक्तं भासनात् भसितं तथा ।।**

**महाभस्मेति सञ्चिन्त्य महादेवं प्रभामयम् ।**

**वर्तन्ते ये महाभागा मुख्यास्ते भस्मधारिणः ।।**

(सि.शि.,७.१-२)

## विमलम्

विमलदानम् । नित्यं नैमित्तिकं काम्यं विमलं चेति चतुर्विध-दानेष्वेकम् । शिवप्रीत्यर्थं भक्त्या दीयमानं दानं विमलदानम् इत्युच्यते । इयं च मोक्षसाधनम् ।

**नित्यं नैमित्तिकं काम्यं विमलं च चतुर्विधम् ।।**

**हरस्य प्रीणनार्थं यच्छिवभक्त्या विधीयते ।**

**दानं तद्विमलं प्रोक्तं केवलं मोक्षसाधनम् ।।**

(शि.त.र., भा-३, ८.८.५१-५२)

## विरक्तः

१. विषयोपभोगलालसरहितः, इन्द्रियनिग्रहवान् क्षमाशीलः । संसार-रहितः । अनेकजन्मसंशुद्धः एषः माहेश्वरानुग्रहभाक् ।

**प्रसादपूर्विका चेयं भक्तिर्मुक्तिविधायिनी ।**
**नैव सा शक्यते प्राप्तुं नरेणेकेन जन्मना ।।**
**अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम् ।**
**विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ।।**

(सि.शि.,९.१२-१३)

**किन्तु तेषां बहुविधा नियमा युक्तचेतसाम् ।**
**नन्वस्तु युक्तमनसां विरक्तानां क्षमावताम् ।।**

(क्रि.सा.,भा-२, ५.३४, पृ.३)

२. निराभारवीरशैवः

निस्पृहत्वादिलक्षण युक्तः सः ।

**न स्पृहो निजलिङ्गैक्यो भिक्षाशी भयवर्जितः ।**
**मौनी भूतदयायुक्तो निराभार इति स्मृतः ।।**

(चं.आ., क्रि.पा.,१०.४५)

## विरक्तविधिः

क्षमागुणः, शान्तिः, सन्तोषः, सत्यवचनम्, अस्तेयम्, ब्रह्मचर्यम्, शिवज्ञानसम्पन्नत्वम्, वैराग्यम्, भस्मधारणम्, सर्वसङ्गपरित्यागश्चेति विरक्तेभ्यः विहिताः नियमाः ।

**क्षमा शान्तिश्च सन्तोषः सत्यमस्तेयमेव च ।।**
**ब्रह्मचर्यं शिवज्ञानं वैराग्यं भस्मसेवनम् ।**

**सर्वसङ्गनिवृत्तिश्च दशैतानि विशेषतः ।।**

**विरक्तानां च सर्वेषां विधिरेष उदाहृतः ।**

(पार.आ.,१७.३३-३५)

## विरजानलजम्

भस्मभेदः । विरजाग्निसमुत्पन्नं भस्म इत्यर्थः । तच्च भस्म महामुनिभिः धार्यम् । प्रायः दर्भाग्निना दूर्वाग्निना वा समुत्पन्नं भस्म विरजानलजं भस्म । बृहज्जाबालोपनिषदुक्तरीत्या एतद् भस्म गृहस्थैः महर्षिभिश्च धार्यम् । परन्तु चन्द्रज्ञानागमोक्तदिशा तद्धार्यं महार्षिभिः केवलम् ।

**विरजानलजं चैव धार्यं भस्म महामुनेः ।**

(चं.आ.,क्रि.पा.,६.३४)

**.................. गृहस्थानां विरजानलजं भवेत् ।।**

**विरजानलजं चैव धार्यं प्रोक्तं महर्षिभिः ।**

(बृ.जा.उ.,५.३-४)

## विशुद्धमानुषाः

मनुष्याणां द्वैविध्ये विशुद्धानाम् एकविधः । शिवसंस्कारिणः मानुषाः विशुद्धाः ।

**विशुद्धाः प्राकृताश्चेति द्विविधाः मानुषाः स्मृताः ।**

**शिवसंस्कारिणः शुद्धाः प्राकृता इतरे मताः ।।**

(सि.शि.,१०.३४)

(पश्यत – प्राकृतमानुषाः)

## विशुद्धिः

विशुद्धिचक्रम् । चक्रभेदः । तत्र च पञ्चमम् । कण्ठे स्थितमेतत् विद्यास्थानम् । चक्रमिदं षोडशदलात्मकम् । तत्र ओङ्कारः, हुम्, फट्, वौषट्, वषट्, स्वधा इत्यादयः प्रत्येकमेकैकं दलमाश्रिताः ।

**कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम् ।**
**तत्र प्रणव उद्गीथो हुं फड् वौषड् वषड् स्वधा ।।**
**स्वाहा नमोऽमृतं सप्त स्वराष्षड्जादयो विषम् ।**
**इति पूर्वादिपत्रेषु फलान्यात्मनि षोडश ।।**

(शि.त.र.,भा-३, ९.१.१४१-१४२)

## विशेषवीरशैवः

१. शैवभेदभूतवीरशैवस्य प्रभेदः । सामान्यवीरशैव एव विशेषधर्मानुष्ठानात् विशेषवीरशैव इत्युच्यते । प्रतिवासरं माहेश्वरभोजनम्, तद्भुक्तशेषस्य सेवनम्, नियतैः पदार्थैः षट्काललिङ्गपूजा, द्रोणपुष्पम्, करवीरपुष्पम्, मल्लिकापुष्पम्, पुन्नागपुष्पम्, जातिपुष्पं वा बिल्वपत्रं वा लिङ्गपूजाया-मुपयोक्तव्यम् । एवं यदि नियमान् आजीवनं पालयितुं शक्नोमि, तदा जीविष्यामि, नो चेत् प्राणान् मुञ्चामि - इत्येवं रूपं व्रतं तेन स्वीक्रियते ।

**विशेषधर्मानुष्ठानाद् विशेषश्च स एव हि ।।**
**एकं माहेश्वरं वापि द्वौ वा त्रीन् प्रतिवासरम् ।**
**भोजयित्वा हि तच्छेषं भुञ्जीयादप्रमादतः ।।**
**षट्कालं लिङ्गपूजा च नियतैस्तु पदार्थकैः ।।**
**द्रोणपुष्पं बिल्वपत्रं करवीरमथापि वा ।**
**मल्लिकोत्पलपुन्नागजात्यादिकुसुमानि वा ।।**
**एष्वेकं त्रीणि द्वौ वापि ह्यर्पयेन्नियमान्वितः ।**
**एवं चरिष्ये नियमानहमाप्राणसञ्चरात् ।।**
**नान्यथा बिभृयां प्राणानिति यो नियमः स्मृतः ।**
**इत्यादिनियमैर्युक्ता विशेष इति कथ्यते ।।**

(चं.आ.,क्रि.पा.,१०.३७-४१; सू.आ.,क्रि.पा.,७.३९-४७)

२. शैवभेदभूतवीरशैवप्रभेदस्य सिद्धान्तशैवस्य प्रभेदः । परशिवमुखोद्भूत-पञ्चाचार्यैः दीक्षितः सन् पञ्चमुद्रायुक्तः, वैराग्यशाली, समदर्शी, त्यक्तलौकिकाचारश्च विशेषवीरशैवः ।

**परस्य ब्रह्मणः पञ्चमुखेषूद्भूतपञ्चभिः ।**
**आचार्यैर्दीक्षितो भूत्वा पञ्चमुद्राङ्कितश्च यः ।।**
**महावैराग्यशाली च सम्प्राप्तमनुभूय च ।**
**अप्राप्ते निरपेक्षः सन् सोऽहं ब्रह्मेति निश्चितः ।**
**त्यक्त्वा च लौकिकाचारान्विशेषो वीरशैवकः ।।**

(वी.स.सं.,८.२५-२७)

## विशेषार्घ्यम्

अर्घ्यप्रभेदः । शिवाय दत्तमर्घ्यं विशेषार्घ्यम् ।

**विशेषार्घ्यमिति प्रोक्तं शिवाय विनिवेदितम् ।**

(क्रि.सा.,भा-३, १५, पृ.४)

## विशेषाद्वैतम्

वीरशैवसिद्धान्तस्य विशेषाद्वैतमिति नामान्तरम् । 'वि' इति शिवः, 'शेषो' जीवः । शिव-जीवयोरद्वैतं विशेषाद्वैतम् । 'हंसहंसे' ति मन्त्रेण विशब्दः शिवबोधकः । 'यथाग्ने' रिति मन्त्रेण शेषशब्दः शारीर - (जीव)-वाचकः । 'यथा नद्य' इति श्रुत्यनुसारं तयोरद्वैतम् ।

**द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।**
**वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ।।**
**विशब्देनोच्यते शम्भुः हंसहंसेति मन्त्रतः ।**
**शेषशब्देन शारीरो यथाग्नेरिति मन्त्रतः ।।**
**अद्वैतेन भवेद्योगो यथा नद्य इति श्रुतेः ।।**

(श्री.भा.,भूमिका, १५-१६)

(पश्यत - वीरशैवसिद्धान्तः)

## विश्वम्

शिवशक्तिसमायोगजन्यं जगत् । इदं च विद्याविद्यात्मकं (जडाजडात्मकम्) षट्त्रिंशत्तत्त्वात्मकं च ।

**यथोर्णनाभिः सृजते गृह्णते च ।**

**यथा पृथिव्याम् ओषधयः सम्भवन्ति ।**

**यथा सतः पुरुषात् केशलोमानि ।**

**तथाऽक्षरात् सम्भवतीह विश्वम् ।।**

(मुं.उ., १.१.७)

**पीठिका परमा शक्तिर्लिङ्गं साक्षात्परः शिवः ।**

**शिवशक्तिसमायोगाद्विश्वं लिङ्गं तदुच्यते ।।**

**यद्भासा भासते विश्वं यत्सुखेनानुमोदते ।**

**नमस्तस्मै गुणातीतविभवाय परात्मने ।।**

(सि.शि., ११.३२; १.४)

**एवंविधषट्त्रिंशत्तत्त्वात्मकं विश्वम् ।**

(शि.मं., पृ.५६)

**विद्याविद्यात्मकं चैतद्विश्वं विश्वगुरोर्विभोः ।**

(क्रि.सा.,भा-१, २.४८)

## विश्वः

विश्वः, तैजसः, प्राज्ञ इति त्रिविधजीवेष्वेकः । तत्र जाग्रदवस्था-विशिष्टः । स च स्थूलशरीरस्येष्टलिङ्गोपासकः । एष एव त्यागाङ्गमित्युच्यते ।

**विश्वो जाग्रदवस्थायां स्वप्नाख्यायां तु तैजसः ।**

**प्राज्ञः सुषुप्त्यवस्थायां लिङ्गत्रयमुपासते ।**

**जीवात्मा विश्व एव स्यादन्तरात्मा तु तैजसम् ।**

**परमात्मा भवेत् प्राज्ञ इति तत्त्वविदो विदुः ।।**

**त्यागाङ्गं विश्व एव स्यात् ................. ।**

(अ.सू.,५.६२, ६१; ४.१०)

## विश्वभोजकः

सिद्धान्तशिखामणौ सहभोजनस्थलसन्धर्भे उक्तरीत्या शिवः, गुरुः, स्थावरजङ्गमात्मकं जगत्, अहं चेति यस्य भेदबुद्धिर्नास्ति, तादृशः शिवलिङ्गैक्यः विश्वभोजक इति कथ्यते ।

**अयं शिवो गुरुश्चैष जगदेतच्चराचरम् ।**

**अहं चेति मतिर्यस्य नास्त्यसौ विश्वभोजकः ।।**

(सि.शि.,१४.३६)

## विश्वलिङ्गम्

शिवशक्तिसमायोगजन्यं विश्वम् ।

**पीठिका परमा शक्तिर्लिङ्गं साक्षात्परः शिवः ।**

**शिवशक्तिसमायोगाद्विश्वं लिङ्गं तदुच्यते ।।**

(सि.शि.,११.३२)

(पश्यत – विश्वम् )

## विश्वहव्यभुक्

सिद्धान्तशिखामणौ सहभोजनस्थले उक्तरीत्या यः ज्ञानयज्ञदीक्षितस्सन् आधारवह्नौ अर्थात् आधारचक्रगतपावके मायाकल्पितजगद्रूपं हविः जुहोति सः विश्वहव्यभुगिति कथ्यते ।

**आधारवह्नौ चिद्रूपे भेदजातं जगद्धविः ।**

**जुहोति ज्ञानजुह्वा यः स ज्ञेयो विश्वहव्यभुक् ।।**

(सि.शि.,१४.४०)

## विश्वहोमी

यथा सिद्धान्तशिखामणौ सहभोजनस्थले उक्तं तथा सहभोजनसम्पन्न एव विश्वहोमीति कथ्यते । विश्वप्रकाशके उत्कृष्टमूलाहङ्कारमये स्वात्मरूपाग्नौ इदन्ताभूतं विश्वरूपं हवनद्रव्यं यः जुहोति सः विश्वहोमीति वर्ण्यते ।

**पराहन्तामये स्वात्मपावके विश्वभास्वति ।**

**इदन्ता हव्यहोमेन विश्वहोमीति कथ्यते ।।**

(सि.शि.,१४.३८)

## विषयाः

१. शब्दः, स्पर्शः, रूपम्, रसः, गन्ध इति पञ्चविषयाः ।

**गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः ।**

(शि.त.र.,भा-३, ९.१.१०७)

२. मायायाः कर्मणां च गुणभूतानि चतुर्विंशतितत्त्वानि । इमानि च जीवबन्धकाः पाशा इति कथ्यन्ते ।

**चतुर्विंशतितत्त्वानि मायाकर्मगुणा अमी ।**

**विषया इति कथ्यन्ते पाशाः जीवनिबन्धनाः ।।**

(चं.आ.,क्रि.पा.,१.१२)

(पश्यत – पाशाः)

## वीटिकाशुद्धिः

शिवाचारान्तर्गतषोडशशुद्धिष्वेकतमा ।

**नागवल्लीदलैः पूगैश्चूर्णेन च समन्वितम् ।**

**ग्राह्यं भक्तैर्हि ताम्बूलं वीटिकाशुद्धिरीरिता ।।**

(चं.आ.,क्रि.पा.,९.४०)

(पश्यत – षोडशशुद्धयः)

## वीरः

१. शिवजीवैक्यबोधिकायां विद्यायां रममाणः ।

**वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।**

**विद्यायां रमते तस्यां वीर इत्यभिधीयते ।।**

(सि.शि.,५.१६)

(पश्यत – वीरशैवाः)

२. समग्रे जगति 'विशिष्टः' इति प्रतिपाद्यमानः ।

**एक एवायमेतस्मिन् सर्वस्मिन् जगतीति यः ।**

**विशिष्ट ईर्यते यस्मात् वीर इत्यभिधीयते ।।**

(वा.शु.आ.,१०.३०)

३. वीरः, नन्दी, भृङ्गी, वृषः, स्कन्द इत्येवं पञ्चगोत्राधिकारिषु एकः ।

**वीरो नन्दी वृषश्चैव भृङ्गी स्कन्दस्तथैव च ।**

**मत्स्वरूपा समुत्पन्नाः पञ्चगोत्राधिकारिणः ।।**

(वी.स.सं.,१.२८)

४. यथा भटः रणे वीरः तथा शैवमते शिवभक्त्या दृढवैराग्यतश्च वीरो भक्तः । तत्र ये पुत्रेषणा, वित्तेषणा, लोकेषणा चेति ईषणत्रयविमुक्ताः ज्ञान-विज्ञानमग्नाः, दृढवैराग्यशालिनश्च वीराः शिवयोगिनः ।

**वीरत्वं नाम देवेशि यथा वीरो रणे भटः ।**

**तथा मते च मद्भक्त्या वीरो वैराग्यतो दृढात् ।।**

**ईषणत्रयनिर्मुक्ता ज्ञानविज्ञानतत्पराः ।**

**दृढवैराग्यसम्पन्ना वीरास्ते शिवयोगिनः ।।**

(पार.आ.,८.७-८)

तत्रैव नवमश्लोकात् विंशतितमश्लोकपर्यन्तं प्रतिश्लोकं 'वीरास्ते-शिवयोगिनः' इति शिवयोगिनां वीरत्वं बहुधा प्रपञ्चितम् ।

## वीरदासः

दासः, वीरदासः, भृत्यः, वीरभृत्यः, समयाचारः, कलावस्थः – इति षड्विधसज्जनेषु एकः । स्वामिभृत्यभावयुक्तः, अन्यदैवविवर्जितः शिवभक्तैरपेक्ष्यमाणमेव धनमिति भाव्यमानः वीरदासः ।

**स्वामिभृत्यसमोपेतं परदैवविवर्जितम् ।**

**मद्भक्तकांक्षितं वित्तं वीरदासं तु सज्जनम् ।।**

(शै.र.,भा.-२, १७.१९८)

## वीरभृत्यः

१. भृत्यत्वम्, वीरभृत्यत्वम् इति द्विविधभृत्याचारयोरेकं वीरभृत्यत्वम् । तद्विशिष्टः वीरभृत्यः । गुरवे तनुम्, शिवाय चित्तम्, जङ्गमाय च धनं समर्प्य, महता उत्साहेन विशिष्टः मुक्तिमेव काङ्क्ष्यमाणः यः वर्तते सः वीरभृत्यः।

**भृत्यत्वं वीरभृत्यत्वं भृत्याचारो द्विधा मतः ।**

**देशिकाय तनुं चित्तं शम्भवे च धनं तथा ।**

**जङ्गमाय समर्प्यैवं महोत्साहसमन्वितः ।।**

**मुक्तिमेव परां काङ्क्षमाणो यदवतिष्ठते ।**

**तन्मतं वीरभृत्यत्वं शिवानुग्रहसाधनम् ।।**

(चं.आ.,क्रि.पा.,९.१२४-१२६)

२. दासः, वीरदासः, भृत्यः, वीरभृत्यः, समयाचारः, कलावस्थः इति षड्विधसज्जनेषु एकः । इष्टसिद्धियुक्तः, पुत्रादीषणत्रयसंयुक्तः, कर्मयोगनिरतश्च वीरभृत्यः ।

**इष्टसिद्धियुतं प्रोक्तमीषणत्रयसंयुतम् ।**

**आसुरकर्मयोगेन वीरभृत्यं तु सज्जनम् ।।**

(शै.र.,भा-२, १७.२००)

## वीरमाहेश्वरः

१. हेयां मायां शुनकवत् त्यजेत् इति मत्वा यः विद्यायां रमते सः वीरमाहेश्वरः ।

**विद्यायां रमते यस्मात् मायां हेयां श्ववद्रहेत् ।**

**अनेनैव निरुक्तेन वीरमाहेश्वरः स्मृतः ।।**

(सि.शि.,५.१७)

**यस्मात् लिङ्गाङ्गसम्बन्धकारणार्थं शिवजीवैक्यप्रकाशिकायां विद्यायां रमते, मायां जगद्रूपां हेयां त्यजनीयां श्ववत् शुनकवत् रहेत् निवारयेत्, अनेनैव निरुक्तेन एकद्वित्र्यादिपदगताद्याक्षरप्रवचनेनैव वीरमाहेश्वर इति अन्वर्थनाम्ना स्मृत इत्यर्थः ।**

(सि.शि.,तत्त्व.प्र.,५.१७)

२. शिवदीक्षितः, अष्टावरणसंयुक्तः, शिवानन्दानुभावी, त्रिलोकजनवन्द्यः, आगमज्ञः, संसारसागरोत्तीर्णसेतुः ।

**अष्टावरणसंयुक्ताः वीरमाहेश्वराः नराः ।**

**मम रूपधराः देवि विचरन्ति महीतले ।।**

(पार. आ.,७.५५)

**शिवानन्दे समुत्कण्ठे वीरमाहेश्वरो भवेत् ।**

(सि.शि., १०.१४)

**वीरमाहेश्वराः सर्वे ह्यागमज्ञानहेतवः ।**

**संसारसागरोत्तीर्णसेतवः पुण्यमूर्तयः ।।**

(वी.शै.उ., १.७१)

## वीरमाहेश्वरम्

व्रतविशेषः । लिङ्गमन्त्रयोरैक्यस्थितिः ।

**लिङ्गमन्त्रोभयोरैक्यं वीरमाहेश्वरं स्मृतम् ।।**

(श.त्र.,पृ.६८, श्लो.१३०)

## वीरमाहेश्वरदीक्षा

वीरशैवदीक्षा, वीरमाहेश्वरदीक्षा इति द्विविधदीक्षयोरेकः । वीरमाहेश्वरेषु प्रचलिता दीक्षा वीरमाहेश्वरदीक्षा । एतद्दीक्षया दीक्षिता जङ्गमा इति कथ्यन्ते । तत्स्वरूपं च –

**वीरशैवाभिधा दीक्षा वीरमाहेश्वराभिधा ।**
**एवं हि भिद्यते दीक्षा भक्तमाहेश्वरेषु च ।।**
**कलशान्पञ्च संस्थाप्य सद्योजातादिनामतः ।**
**शङ्खमुद्रान्वितः पूज्यो घनलिङ्गी च दक्षिणे ।।**
**अग्रतः पट्टबद्धं च चतुरो ऋत्विजानपि ।**
**सम्पूज्य दक्षिणां दत्वा सभाभ्यः शिवयोगिनाम् ।।**
**गुरुर्गृहीत्वा तं बालं दीक्षितं सव्यपाणिना ।**
**सभां प्रदक्षिणीकृत्य साष्टाङ्गं प्रणिपत्य च ।।**
**गुरुर्विज्ञाप्य सर्वेषामनुमत्याऽसने विशेत् ।**
**स्वपादसम्भवं शिष्यं स्वशाखोक्तविधानतः ।।**
**वीरमाहेश्वरीं दीक्षां कारयेदृत्विजैः सह ।**

(वी.स.सं.,११.४८–५३)

## वीरव्रतम्

यो भक्तः मुक्तेरिच्छया समन्वितः सर्वाचारेष्वासक्तः तल्लीनश्च स एव सर्वोपरि स्थितः, तस्य व्रतं वीरव्रतम् । दासोऽहंभावेन लिङ्गनिष्ठासमन्वितः लिङ्गजङ्गमपूजादिसर्वाचारसम्पन्नश्च वीरव्रतसमाश्रयः भवति ।

**तस्माद्वीरव्रते निष्ठो मोक्षापेक्षायुतः प्रभुः ।**
**सर्वाचारेषु निरतो भक्त एवाधिको मतः ।।**
**दासोही लिङ्गनिष्ठश्च वीरव्रतसमाश्रयः ।**
**सुसर्वाचारसम्पन्नो लिङ्गजङ्गमरूपकः ।।**

(अ.वी.सा.सं.,१.१८३-१८४)

इष्टलिङ्गस्य वियोगे व्रतानां व्यतिक्रमे च तृणवत् प्राणत्यागः वीरव्रतं हि तत् । भक्तेरुत्साहेन विशिष्टत्वं भक्तस्य यद्वीरत्वं तद् व्रतस्य योगात् तस्य मतं वीरशैवमित्युच्यते ।

**इष्टलिङ्गवियोगे वा व्रतानां वा परिच्युतौ ।**
**तृणवत् प्राणसंत्याग इति वीरव्रतं मतम् ।।**
**भक्त्युत्साहविशेषोऽपि वीरत्वमिति कथ्यते ।**
**वीरव्रतसमायोगात् वीरशैवं प्रकीर्तितम् ।।**

(चं.आ.,क्रि.पा.,१०.३३-३४)

## वीरशैवम्

शैवभेदः । अष्टविधेषु सप्तविधेषु वा शैवेष्वेकतमम् । शक्तिविशिष्टं शिवं य आराधयति सः वीरः । शिवसम्बद्धं शिवतत्त्वप्रतिपादकं मतम् । शक्तिविशिष्टपरमात्मसम्बद्धं मतं वीरशैवम् ।

एकोत्तरशतस्थलात्मकं तन्त्रं वीरशैवमिति कथ्यते । तच्च लोकानामनुग्रहाय कथितम् । आगमोत्तरकाण्डेषु उक्तानां दीक्षाणां स्वीकार

आदिशैवे वीरशैवे च यद्यपि समानः तथापि इष्टलिङ्गवियोगे व्रतस्य भङ्गे वा प्राणपरित्यागरूपं वीरव्रतं वीरशैवे विशिष्टम् । भक्त्युत्साहोऽत्र वीरत्वम् । वीरव्रतयोगात् वीरशैवं कथितम् । रागादिसर्वदोषरहितत्वात् आत्मतत्त्व-विमर्शनात् विकल्पादिशून्यत्वादिदं मतं वीरशैवमिति प्रोच्यते। वीरशैवं सर्वस्मादुत्तमोत्तमम् । नान्यत् किमपि मतं तत्समानयोग्यतां भजते । सद्यो भोगमोक्षैकसाधनत्वात् वीरशैवमतं सर्वोत्तमम् । अत एवोच्यते त्रिषु जगत्सु वीरशैवसदृशं मतं नास्तीति । सर्वभोगप्रदत्वे सति शिवसायुज्यदायकत्व-मस्य वैशिष्ट्यम् ।

**वीरशैवमहातन्त्रम् एकोत्तरशतस्थलम् ।**
**अनुग्रहाय लोकानामभ्यधात् सुधियां वरः ।।**

(सि.शि., १.३०)

**आगमोत्तरकाण्डोक्तदीक्षाणां यः परिग्रहः ।**
**समान आदिशैवेन विशेषमिह संशृणु ।।**
**इष्टलिङ्गवियोगे वा व्रतानां वा परिच्युतौ ।**
**तृणवत् प्राणसंत्याग इति वीरव्रतं मतम् ।।**
**भक्त्युत्साहविशेषोऽपि वीरत्वमिति कथ्यते ।**
**वीरव्रतसमायोगात् वीरशैवमिति प्रकीर्तितम् ।।**

(चं.आ., क्रि.पा., १०.३२-३४)

**वीतरागादिदोषत्वादात्मतत्त्वविचारणात् ।**
**विकल्पाकल्पशून्यत्वाद् वीरशैवमिति स्मृतम् ।।**

(सू.आ., क्रि.पा., ७.२९)

**वीरशैवमतं सद्यो भोगमोक्षैकसाधनम् ।**
**सर्वोत्तमं मम मतं यतः सर्वोत्तमोऽस्म्यहम् ।।**

**न वीरशैवसदृशं मतमस्ति जगत्त्रये ।**

**सर्वभोगप्रदं पुण्यं शिवसायुज्यदायकम् ।।**

(पार.आ.,१.४१-४२)

**विशब्दो वा विकल्पार्थो रशब्दो रहितार्थकः ।**

**विकल्परहितं शैवं वीरशैवं प्रचक्षते ।।**

**विरोधार्थो विशब्दः स्याद्रशब्दो रहितार्थकः ।**

**विकल्परहितं शैवं वीरशैवं प्रचक्षते ।**

(क्रि.सा.,भा.१, १.३-४)

**वीरशैवभेदः** - सामान्यम्, विशेषम्, निराभारी चेति वीरशैवं त्रिविधम् (तेषां वीरशैवमतावलम्बिनां विषये सामान्यः, विशेषः, निराभारी चेति नामानि)।

**पुनः त्रिविधमेतद्धि समान्यादिभेदतः ।**

**सामान्यश्च विशेषश्च निराभारीति च त्रिधा ।।**

(चं.आ.,क्रि.पा.,१०.३५ ; सू.आ.,क्रि.पा.,७.३०)

(पश्यत - सामान्यवीरशैवम्(वः); विशेषवीरशैवम्(वः); निराभारि वीरशैवम्)

चन्द्रज्ञानागमोक्तरीत्या वेदागमसिद्धं वीरशैवं श्रौतम्, स्वतन्त्रम् इति च द्विविधम् । तत्र श्रौतं वर्णाश्रमीयधर्मयुक्तम् । स्वतन्त्रं च तदीयधर्मरहितम् ।

**वीरशैवं प्रवक्ष्यामि विदितं श्रुतितन्त्रयोः ।**

**श्रौतं स्वतन्त्रमिति च द्विविधं परिकीर्तितम् ।।**

**वर्णाश्रमीयधर्माढ्यं श्रौतमित्यभिधीयते ।**

**तदीयधर्मरहितं स्वतन्त्रमिति कथ्यते ।।**

(चं.आ.,क्रि.पा.,१०.३०-३१)

## वीरशैवदीक्षा

वीरशैवदीक्षा, वीरमाहेश्वरदीक्षा इति द्विविधदीक्षयोः एका । तत्र भक्तवर्गे प्रचलिता दीक्षा वीरशैवदीक्षा ।

तद्यथा –

**वीरशैवाभिधादीक्षा वीरमाहेश्वराभिधा ।**

**एवं हि भिद्यते दीक्षा भक्तमाहेश्वरेषु च ।।**

(वी.स.सं., ११.४८)

## वीरशैवमतम् = वीरमतम्

शिवमुखादागते कामिकाद्यागमे उत्तरभागे प्रतिपादितं मतं वीरशैवमतम् । इदं च सुलभसुखसाधनम् ।

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।**

**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ।।**

(सि.शि., ५.१४)

**वीरशैवमतं प्राप्य योऽन्यथा सुखमिच्छति ।**

**स सन्त्यज्य गुडं मूढो लेलिहेत्पर्णमीश्वरि ।।**

(पार.आ., ९.७०)

(पश्यत – वीरशैवम्)

## वीरशैवमहातन्त्रम्

एकोत्तरशतस्थलात्मकं तन्त्रमेव वीरशैवमहातन्त्रम् ।

**वीरशैवमहातन्त्रम् एकोत्तरशतस्थलम् ।**

(सि.शि., १.३०)

(पश्यत – वीरशैवम्)

## वीरशैवलक्षणम्

त्रिसन्ध्यासु भस्मस्नानम्, यथाशक्ति लिङ्गपूजनम्, शिवभक्तेषु भिक्षाचरणम्, प्रतिदिनं शङ्करस्य स्मरणम्, तत्पूजनम्, तद्ध्यानम्, तत्कथाश्रवणम्, तत् स्तोत्रकरणं चेति वीरशैवस्य लक्षणम् ।

**त्रिकालं भस्मना स्नानं शक्तितो लिङ्गपूजनम् ।**

**भैक्ष्यं च शिवभक्तेषु वीरशैवस्य लक्षणम् ।।**

**स्मरणं पूजनं ध्यानं तत्कथा स्तोत्रमन्वहम् ।**

**शङ्करस्य ममेशस्य वीरशैवस्य लक्षणम् ।।**

(पार.आ.,९.५८–६३)

## वीरशैवव्रतम्

तच्च भवाब्धितारणसाधनम् । अस्य लोपे प्रायश्चित्तं नाम प्राणत्याग एव ।

**वीरशैवव्रतस्वच्छवज्रनावमधिष्ठितः ।**

**सुखं तरेद्भवाम्भोधिं भक्तिनाविकचोदितः ।।**

(पार.आ.,९.७५)

**वीरशैवव्रते लुप्ते येन केनापि हेतुना ।**

**प्रायश्चित्तं तदा वत्स प्राणत्यागो विधीयते ।।**

(सू.आ.,क्रि.पा., ५.५०)

## वीरशैवषडङ्गम्

वीरशैवयोगिनः शमादीनि षट्साधनानि वीरशैवषडङ्गानि इत्युच्यन्ते।

**शमो दमस्तितिक्षोपरतिश्रद्धासमाधयः ।**

**षडङ्गानि महादेवि वीरशैवस्य लिङ्गिनः ।।**

(पार.आ.,१०.७२)

## वीरशैवसमयाः

वीरशैवानां विहिताः नियमाः । ते च भस्मधारणम्, लिङ्गधारणम्, लिङ्गपूजा इत्यादयः । इमे च अत्याश्रमिणां नियमाः ।

**न स्युरत्याश्रमस्थानां कर्माणि नियमाः पुनः ।**
**प्रमाणैरेव विहिताश्चैवं तत्त्वविदां स्थितिः ।।**
**वीरशैवीयसमया अत्याश्रमपुरस्सराः ।**

(क्रि.सा.,भा-२, ५.३१-३२)

## वीरशैवसिद्धान्तः

अद्वैतादिसिद्धान्तेषु वीरशैवसिद्धान्त एकः । अद्वैते द्वैते च जीवब्रह्मणो अभेदत्वम्, तयोः सर्वदा भिन्नत्वं च प्रतिपाद्येते । वीरशैवसिद्धान्ते भेदाभेदात्मके द्वैताद्वैतश्रुत्योः समन्वयः दृश्यते । अस्य सिद्धान्तस्य शिवाद्वैतम्, शक्तिविशिष्टाद्वैतम्, विशेषाद्वैतं चेति नामान्तराणि ।

**द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।**
**वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ।।**

(श्री.भा., भूमिका-श्लो.१५)

(पश्यत- शिवाद्वैतम्, विशेषाद्वैतम्, शक्तिविशिष्टाद्वैतम्)

## वीरशैवाः

शिवरूपविद्यायां शिवजीवैक्यविद्यायां वा रताः शैवाः । शिवरूपा विद्या, तस्यां ये महाभागाः विशेषाद्रमन्ते ते वीरशैवाः । 'वी' शब्देन विद्या उच्यते । शिवजीवैक्यज्ञानमेव सा विद्या। तस्यां ये शैवाः रमन्ते ते वीरशैवाः। 'वी' इति विद्या, 'र' इति रमणम्, विद्यायां रमन्ते इति वीराः । वीराश्च ते शैवाश्च वीरशैवाः ।

**विद्यायां शिवरूपायां विशेषाद्रमणं यतः ।**

**तस्मादेते महाभागाः वीरशैवा इति स्मृताः ।।**

**वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।**

**तस्यां रमन्ते ये शैवाः वीरशैवास्तु ते मताः ।।**

(सि.शि.,५.१५–१६)

## वीरशैवार्चनक्रमः

षट्स्थलात्मकरूपेणेष्टलिङ्गपूजा या विधीयते सा वीरशैवार्चनक्रम इत्युच्यते । भक्तस्थले साधकः सुखासीनो भूत्वा भूतिरुद्राक्षभूषितः सन् श्रद्धाभक्त्या पवित्रात्मा प्रवर्तेत । माहेश्वरस्थले षडक्षरात्मकं श्रेष्ठं मन्त्रं निष्ठाभक्त्या अनुसन्दधेत् । प्रसादिस्थले अवधानभक्त्या लिङ्गं हस्ते गृह्णीयात् । प्राणलिङ्गिस्थले स्वानुभूत्यात्मकभक्त्या पूजां कुर्यात् । शरणस्थले तावत् आनन्दभक्त्या अर्पणक्रियां कुर्यात् । ऐक्यस्थले समरसभक्त्या प्रसादोपभोगतृप्तिमाप्नुयात् । एष एव वीरशैवार्चनक्रमः ।

**इतः परं विशेषेण वीरशैवार्चनक्रमम् ।**

**षट्स्थलात्मकरूपेण प्रवक्ष्यामि समासतः ।।**

**भक्तस्थले सुखासीनो भूतिरुद्राक्षधारणम् ।**

**कृत्वा भक्त्या सुपूतात्मा ततो माहेश्वरस्थले ।।**

**षडक्षरं परं मन्त्रमनुष्ठायात्मनिष्ठया ।**

**प्रसादिस्थलमादाय लिङ्गं हस्तेऽवधानतः ।।**

**प्राणलिङ्गिस्थले पूजां विधाय स्वानुभूतितः ।**

**ततः शिवार्पणं कृत्वा स्वानन्दाच्छरणस्थले ।।**

**ऐक्यस्थले प्रसादोपभोगतृप्तिमवाप्य च ।**

**एवं समरसीभावात् षडङ्गस्थलयोगतः ।।**

**क्रियते सर्वदा सोऽयं वीरशैवार्चनक्रमः ।**

(विशे.प्र.,२.२५-३०; सू.आ.,क्रि.पा.,६.५४-५७)

(पश्यत – महापूजाविधिक्रमः)

## वीरशैवावधूतः

ज्ञानयोगशैवः । अखण्डज्ञानयुक्तः शैवः ।

**यदखण्डं परं ज्ञानं यदेकं स्वच्छमव्ययम् ।**

**यदव्यक्तं मनोतीतं तदेकं ब्रह्मकेवलम् ।।**

**तद्भावनाधिकारी यो ज्ञानयोगान्वितः शिवे ।**

**वीरशैवावधूतोऽपि स एव कथितः शिवे ।।**

(पार.आ.,१०.१६-१७)

## वीरसिद्धान्तः

वीरसिद्धान्तो नाम वीरशैवसिद्धान्त एव ।

**वीरसिद्धान्तनिर्वाहकृतपट्टनिबन्धनम् ।**

(सि.शि.,४.८)

(पश्यत – वीरशैवसिद्धान्तः)

## वीराचारः

वीरशैवैरनुष्ठेयः धर्मनियमः । वीरव्रतम्, वीराचारव्रतम्, वीरशैवाचार इत्यादिभिरपि पदै अयमेव उच्यते ।

**नमः सोमविभूषाय वीराचारव्रताय ते ।**

**प्राणलिङ्गाय रुद्राय प्राणभूताय ते नमः ।।**

**देवतानां समाजेषु धर्मगुप्तस्य भूपतेः ।**
**चरितं चित्रचैतन्यं वीराचारैकसम्भवम् ।।**

(वी.शै.उ., २.९१, पृ.७२; २.१०२, पृ.७४)

**स धीरः सात्त्विकः श्रीमान् वीराचारव्रतान्वितः ।**
**आगमज्ञो गुणनिधिः गुरूणां हे गुरुप्रिये ।।**

(वी.शै.उ., ४.३४७, पृ.२५७)

## वृषोत्सर्गाराधनम्

वीरशैवानां शिवमेधाङ्गत्वेनोक्तेषु षोडशाराधनेषु वृषोत्सर्गाराधन-मेकतमम्। वृषोत्सर्गस्य फलप्राप्त्यै माहेश्वरमेकं समभ्यर्च्य वृषभदानं कुर्यात्। एतदेव वृषोत्सर्गाख्यमाराधनम् ।

**वृषोत्सर्गफलावाप्त्यै विप्रमेकं समर्चयेत् ।**
**वृषोत्सर्गाख्यमाराधनमितीदं संप्रचोदितम् ।।**

(चं.आ.,च.पा.,४.३१)

**तथैव भोजयेदेकं वृषोत्सर्गफलाप्तये ।**
**वृषोत्सर्गाराधनं तु विधातव्यं मम प्रिये ।।**

(मकुट., च.पा.,६.११)

## वृषोत्सर्जनम्

वीरशैवानाम् अन्त्येष्टिविध्यङ्गत्वेन एकादशतमे दिने वृषोत्सर्जनं नाम कर्म कुर्यादिति नियमः । अत्र रुद्रहोमं विधाय वृषोत्सर्जनं कुर्यादित्यस्ति नियमः। नन्दिकेशस्य तृप्तिद्वारा शिवसान्निध्यप्राप्त्यर्थं श्वेतम्, रोहितम्, नीलं वा वृषभम् उत्सृजेत् । इदं वृषोत्सर्जनं शिवमेधाङ्गत्वेन अन्यधार्मिककार्याङ्गत्वेन वा कस्मै अपि ग्रामदेवाय समर्पयितुं शक्यते । अथवा कस्मैचित् माहेश्वराय वा दानरूपेण दातव्यम् । परन्तु दानरूपेण स्वीकृतः माहेश्वरः तं वृषभं स्वतन्त्रत्वेनोत्सृजेत् । मकुटागमस्य चर्यापादे

"निराभार्याश्रमयुते सिद्धे न वृषमुत्सृजेत्" (६.३) इति यदुक्तं ततः आक्षेपत्वेनेदं सिद्ध्यति ।

**एकादशेऽहनि स्नात्वा विप्रान् विज्ञान्निमन्त्र्य च ।**

**रुद्रहोमं विधायाथ वृषोत्सर्जनमाचरेत् ।।**

**उत्सृजेद् वृषभं श्वेतं रोहितं नीलमेव वा ।**

**तृप्त्या वै नन्दिकेशस्य शिवसान्निध्यसिद्धये ।।**

(चं.आ.,च.पा.,४.२०-२१; मकुट., च.पा.,६.२-३)

## वृष्टिः

वीरशैवपञ्चमहासूत्रेष्वन्यतमम् । दारुकनामकद्वितीयाचार्यविलासेन एतस्मात् सूत्रात् - कार्बोन्नः, स्वर्णकन्था, सिङ्गी, मसणिः, कुठारः, भैत्री, कठारः, चामरी, कवाटः, कुक्षकन्था, ज्वलत्कन्था, शृङ्गिः - इति द्वादश उपसूत्राणि जातानि ।

**दारुकस्य विलासेन वृष्टिसूत्राच्च द्वादश ।**

**कार्बोन्नः स्वर्णकन्था च सिङ्गीमसणिरेव च ।।**

**कुठारश्च तथा भैत्री कठारश्चामरी तथा ।**

**कवाटः कुक्षकन्था च ज्वलत्कन्था तथैव च ।।**

**शृङ्गीश्चैते द्वादशैव वृष्टिसूत्रात्समुद्भवाः ।**

(वी.स.सं.,२.४-५)

(पश्यत - सूत्रम्)

## वेदाग्निजम्

भस्मभेदः । कर्मानुष्ठानान्ते ध्रियमाणं भस्म ।

**वेदग्निजं तथा भस्म तत्कर्मान्तेषु धारयेत् ।**

(क्रि.सा.,भा-३, ३.३७६, पृ-१६१)

## वेदारिः

परमेश्वरोर्ध्वमुखसञ्जातस्य पञ्चवक्त्रगणेशस्य पञ्चमुखेभ्यः सञ्जातेषु वीरशैवमूलपञ्चमेषु अन्तिमः । तस्य च वेदारेः स्कन्दगोत्रम्, सूत्रं पञ्चवर्णाख्यम्, विश्वकर्णशाखा, प्रवरः पञ्चाक्षरः, मन्त्रस्य बीजाक्षरं यकारः, कलशश्च सुवर्णमयः, विश्वाराध्यः गुरुः, मन्त्रः षडक्षरयुक्तः मूलपञ्चाक्षरीमन्त्रः । स च अत्याश्रमी गृहस्थो भूत्वा इष्टलिङ्गपूजायां निरतः ।

**ममोर्ध्वमुखसञ्जातः पञ्चवक्त्रगणेश्वरः ।**
**अतिवर्णाश्रमोपेतो वीरशैवमताश्रितः ।।**
**तस्य वक्त्रेषु सम्भूताः पञ्चमाः पञ्चसंख्यकाः ।**
**वेदारिः पञ्चमस्याथ स्कन्दगोत्रमितीर्यते ।**
**तच्छाखा विश्वकर्णाख्या प्रवरः पञ्चमाक्षरः ।।**
**तत्सूत्रं पञ्चवर्णाख्यं मूलवर्णो यकारकः ।**
**कलशस्तस्य सौवर्णो विश्वाराध्यो गुरुः स्मृतः ।।**
**मूलं षडक्षरोमन्त्रः षडक्षरसमन्वितः ।**
**ओं नमःशिवायेति मन्त्रमाता षडक्षरी ।**
**एतादृशमहामन्त्रस्योपदेशः प्रशस्यते ।।**
**अत्याश्रमी गृहस्थः स्यादिष्टलिङ्गार्चने रतः ।**
**एतैश्च लक्षणैर्युक्तो वेदारिः पञ्चमस्तथा ।।**

(वी.स.सं.,५.४-५, ३८-४१)

(पश्यत – उपपञ्चमाः)

## वेधादीक्षा

दीक्षाभेदः । वेधादीक्षा, मन्त्रदीक्षा, क्रियादीक्षा – इति त्रिविधदीक्षास्वन्यतमा । गुरोरालोकतः हस्तमस्तकसंयोगतः शिष्ये शिवतत्त्वसमावेशः भवतीति वेधादीक्षा ।

**सा दीक्षा परमा शैवी त्रिधा भवति निर्मला ।**

**एका वेधात्मिका साक्षादन्या मन्त्रात्मिका मता ।**

**क्रियात्मिका परा काचिदेवमेव त्रिधा भवेत् ।।**

**हस्तमस्तकसंयोगाद् दृष्टेर्वेधेति कीर्तिता ।**

(का.आ.,क्रि.पा.,१.१३-१४)

**सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः ।।**

**वेधारूपा क्रियारूपा मन्त्ररूपा च तापस ।**

**गुरोरालोकमात्रेण हस्तमस्तकयोगतः ।।**

**यः शिवत्वसमावेशः वेधादीक्षेति सा मता ।।**

(सि.शि., ६१२-१४; वी.स.सं., ११.९-१०)

(पश्यत – दीक्षा)

**वेधादीक्षायाः भेदः** – समयः, निस्सांसारा, निर्वाणा, तत्त्वदीक्षा, अध्यात्म, तत्त्वविशोधिनी, तत्त्वबोधा च – इत्येवं सप्त वेधादीक्षायाः भेदाः।

**आद्या समयसंज्ञा स्यान्निःसंसारा द्वितीयका ।**

**निर्वाणाख्या तृतीया स्यात् तत्त्वसंज्ञा चतुर्थिका ।।**

**पञ्चमाध्यात्मसंज्ञा स्यात् षष्ठी तत्त्वविशोधिनी ।**

**सप्तमी तत्त्वबोधा स्याद् वेधादीक्षान्तरा इमाः ।।**

(का.आ.,क्रि.पा.,१.९६-९७)

## वैकारिकाहङ्कारः

राजसाहङ्कार एव वैकृताहङ्कारः ।

**वैकृतो रजसोत्कृष्टः .................. ।**

**वैकारिकाहङ्कारात् .................... ।**

(शि.त.र., भा-१, १.७.४१-४२)

(पश्यत – अहङ्कारः)

## वैकृतप्राणायामः

शिवागमेषु उक्तप्रकारेण रेचकपूरककुम्भकैः क्रियमाणः प्राणनिरोधः वैकृतप्राणायाम इत्युच्यते । अयं च मन्त्रयोगः, लययोगः, हठयोगः, राजयोगः – इति चतुर्विधयोगेषु अन्यतमभूतः लययोग इत्युच्यते ।

**आगमोक्तविधानेन रेचकपूरककुम्भकैः ।**
**यदि प्राणनिरोधश्चेद्वैकृतस्स उदीरितः ।।**
**प्राकृतो मन्त्रयोगः स्याद्वैकृतो लय एव हि ।**

(शि.यो.प्र., २.२४, २६)

## वैदिकनिराभारी वीरशैवः

शैवभेदभूतवीरशैवप्रभेदस्य निराभारीवीरशैवस्य द्विविधभेदयोरन्यतरः । शिखायज्ञोपवीतसहितः दण्डकाषाययुक्तः, इष्टलिङ्गवान् वैदिकनिराभारी वीरशैवः ।

**शिखायज्ञोपवीताढ्यो दण्डकाषायचेलवान् ।**
**वैदिके वीरशैवे तु निराभारीति स स्मृतः ।।**
**स्वेष्टलिङ्गवियोगस्तु समानः उभयोः स्मृतः ।।**

(चं.आ.,क्रि.पा.,१०.४४)

## वैदिकलिङ्गम्

वेदसिद्धानां वेदप्रतिपाद्यानां देवतानां प्रादुर्भावविशेषाणाञ्च लिङ्गम्।

**प्रादुर्भावविशेषाणामपि तासां तदेव हि ।**
**देवता वेदसिद्धा यास्तासां लिङ्गं तु वैदिकम् ।।**

(क्रि.सा.,भा–१, ४.२६७–२६८, पृ.१९२)

## व्योमाङ्गम्

आत्माङ्गम्, व्योमाङ्गम्, अनिलाङ्गम्, अनलाङ्गम्, जलाङ्गम्, भूम्यङ्गं चेति षडङ्गानि । व्योमाङ्गं नाम शरणस्थलम् । यस्मिन् ज्ञानहस्तेन प्रसादलिङ्गार्चनं क्रियते ।

**व्योमाङ्गं ज्ञानहस्तं स्यात् प्रसादार्चनतत्परम् ।।**

**शरणस्थलमित्याहुः शिवयोगपरायणाः ।**

(अ.सू.,६.३६-३७)

## व्योमास्त्रम्

विद्याङ्गे विद्यमानेषु षडस्त्रेष्वेकतमम् ।

**व्योमास्त्रमित्यघोरास्त्रं ............... ।।**

(वा.शु.आ.,८.४५)

(पश्यत-व्योमास्त्रमन्त्रः)

## व्योमास्त्रमन्त्रः

विद्याङ्गे विद्यमानेषु षडस्त्रमन्त्रेष्वेकतमः । ॐकारः, मांकारः, मींकारः, मूंकारः, व्योकारः, मकारः, व्याकारः, पिकारः, नेकारः ओंकारश्चेति व्योमास्त्रमन्त्रः । (ॐ-मां-मीं-मूं-व्योमव्यापिने ओम्)

**ओंकारः प्रथमं बीजं मां कारश्च द्वितीयकम् ।**

**तृतीयबीजं मीं कारः सर्वकारणकारणम् ।।**

**चतुर्थबीजं मूंकारः व्योकारः पञ्चमं भवेत् ।**

**षष्ठवर्णं मकारश्च व्याकारः सप्तमं भवेत् ।।**

**पिकारमष्टमं बीजं नेकारो नवमं स्मृतम् ।**

**ओं कारो दशमं बीजं व्योमास्त्रं तु दशार्णकम् ।।**

(वा.शु.आ.,८.५७-५९)

# श

## शक्तिः

परशिवाविनाभूता महाशक्तिः । सा एव विमर्शाशक्तिरुच्यते । शिवेन सह संयोगात् चतुस्त्रिंशत् तत्त्वानां जननी । सृष्टि – स्थिति – लय – तिरोधान – अनुग्रहात्मकेषु शिवस्य पञ्चकृत्येषु सहकारिणी। मायाप्रकृतिपराशक्ति-शिवेत्यादीन्यस्या एव नामान्तराणि । प्रकृतिरूपेण सा माया, शिवश्च मायी । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'। (श्वे.उ.,४.१०)

यदा पशु–पाशविमोचकः शम्भुः निजलीलारूपेण योगिनां उपकारं मनसि निधाय जगदुत्पत्तिकारणभूतानां सर्वतत्त्वानां सृष्ट्यर्थं अचिन्तयत् ततः पराशक्तिरजायत । तस्याः अंशभेदेन आदिशक्तिः, पुनस्तस्याः अंशभेदेन इच्छाशक्तिः, ततोऽपि इच्छाशक्तेरंशभेदेन ज्ञानशक्तिः, पुनः ज्ञानशक्तेरंशभेदेन क्रियाशक्तिश्च अजायन्त । एकैव सा शक्तिः पञ्चधा भिन्ना जाता । नादः शिवः, बिन्दुः शक्तिः, तयोः संयोगात् कला, ततः सृष्टिः। एषा शक्तिः गुणत्रयात्मिका शिवनिष्ठा सती स्वयमेव गुणवैषम्यं धृत्वा वस्तुत्रयरूपेण आविर्भूता । शक्तिरेव जीवात्मनि भक्तिर्भूत्वा निवृत्तिमार्गेण तं मोक्षं प्रति नयति ।

**वागर्थाविव संपृक्तौ वागर्थः प्रतिपत्तये ।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।**

(र.वं.,१.१)

यामाहुः सर्वलोकानां प्रकृतिं शास्त्रपारगाः ।
तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम् ।।
इच्छाज्ञानादिरूपेण या शम्भोर्विश्वभाविनी ।
वन्दे तां परमानन्दप्रबोधलहरीं शिवाम् ।।
तदीया परमा शक्तिः सच्चिदानन्दलक्षणा ।
समस्तलोकनिर्माणसमवायस्वरूपिणी ।।
वन्दे महेश्वरीं शक्तिं महामायादिरूपिणीम् ।।

(सि.शि.,१.८, ११;२.१२)

एवंरूपः परात्मा हि पशुपाशविमोचकः ।
शम्भुः कदाचिन्निजया प्रकृत्या लीलया स्वयम् ।।
सृष्ट्यर्थं सर्वतत्त्वानां जगदुत्पत्तिकारणम् ।
योगिनामुपकाराय स्वेच्छयाऽचिन्तयच्छिवः ।।
ध्यायमानात्ततो देवि पराशक्तिरजायत ।
आदिशक्तिस्ततो जाता पराशक्त्यंशभेदतः ।।
आदिशक्त्यंशतः साक्षादिच्छाशक्तिरजायत ।
इच्छाशक्त्यंशभेदेन ज्ञानशक्तिरजायत ।
ज्ञानशक्त्यंशभेदेन क्रियाशक्तिरजायत ।
एकैव पञ्चधा भिन्ना निर्मला शिवचिन्तया ।

(सू.आ.,क्रि.पा.,१.१८–२२)

बिन्दुश्शक्तिश्शिवो नादः कला संयोग एव च ।।

(वी.प्र.,श्लो.१, पृ.६०)

शिवशक्तिसमायोगो जगत्सृष्ट्यर्थकारणम् ।।

(शि.त.र.,भा–१, १.४.४९)

**गुणत्रयात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी ।**
**तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा ।।**
**भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम् ।**

(सि.शि.,५.३९, ४१)

**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।।**

(श्वे.उ.,१.१२)

**अमृतार्थं प्रपन्नानां या सुविद्याप्रदायिनी ।**
**अहर्निशमहंवन्दे तामीशानमनोरमाम् ।।**

(सि.शि.,१.१२)

**लिङ्गस्थलाश्रया शक्तिः कलारूपा प्रकीर्तिता ।**
**अङ्गस्थलाश्रया शक्तिः भक्तिरूपा भवापहा ।।**

(अ.सू.,२.२२-२३;)

(शि.यो.प्र.,१.२१; क्रि.सा.,२.११७; शि.त.र.,भा-१, १.४.४९; वे.सा.वी.चिं., २.६१ इत्यादि स्थलेषु शक्तिविषयः प्रपञ्चितः)

**शक्तिभेदाः**

शक्तिरेकाप्युपाधिभेदाद्भिद्यते ।

**द्विधा** – लिङ्गस्थलाश्रय अङ्गस्थलाश्रया इति शक्तिः द्विधा ।

**सा शक्तिर्द्विविधा भूता स्वस्वातन्त्र्यबलेन तु ।।**
**समानधर्मिणीत्वेन विभक्ता भक्तवत्सला ।**
**लिङ्गस्थलाश्रया काचित्काचिदङ्गस्थलाश्रया ।।**

(अ.सू.,२.२१-२३)

**त्रिधा** – इच्छाशक्तिः, ज्ञानशक्तिः, क्रियाशक्तिः चेति ।

**इच्छाज्ञानक्रियारूपा त्रिधा स्यात् सृष्टिकारणम् ।**
**तच्छक्तित्रयरूपोऽसौ परमात्मेत्युदाहृतः ।।**

(श.त्र.,पृ.५२, श्लो.१२)

**पञ्चधा** – पराशक्तिः, आदिशक्तिः, इच्छाशक्तिः, ज्ञानशक्तिः, क्रियाशक्तिः चेति भेदेन शक्तिः पञ्चधा ।

**एकैव पञ्चधा भिन्ना निर्मला शिवचिन्तया ।।**

(सू.आ.,क्रि.पा.,१.२२)

(पश्यत – इतःपूर्वं दत्ताः श्लोकाः – सू.आ.,क्रि.पा.,१.१९-२२)

**पराशक्तिस्तथादिश्च इच्छाज्ञानं क्रिया तथा ।**

**शक्तितत्त्वं पञ्चविधमिति गोप्यं मम प्रिये ।।**

(शि.त.र.,भा-१, १.७.२४)

**षोढा** – परादिपञ्चशक्तिभिः सह चिच्छक्तियोजनेन शक्तिः षोढा ।

**चिच्छक्तिश्च पराशक्तिरादिशक्तिस्तथैव च ।**

**इच्छाज्ञानक्रियारूपाः शक्तयः षड्विधाः मताः ।।**

(अ.सू.,३.२६-२७)

**षोडशधा**

पारमेश्वरागमोक्तदिशा अष्टदलकमले भवाद्यष्टदेवताः संपूज्यानन्तरं षोडशदलकमले वृषध्वजादि षोडशदेवताः षोडशशक्तीश्च भावयेत् । तासां नामानि – ईशानी, शाङ्करी, रौद्री, कालकण्ठी, कपालिनी, गान्धारी, हस्तिजिह्वा, पिङ्गला, सुषुम्निका, राका, कुहूः, सिनीवाली, भूतधात्री, गिरीन्द्रजा, हैमवती, ईडा च ।

**भावयेत् केसरेष्वेतान् षोडशेष्वपि षोडश ।**

**अथ षोडश पत्रेषु शक्तीः षोडश भावयेत् ।।**

(पार.आ.,१०.४५)

**ईशानी शाङ्करी रौद्री कालकण्ठी कपालिनी ।**

**गान्धारी हस्तिजिह्वा च पिङ्गलेडा सुषुम्निका ।।**

**राका कुहूः सिनीवाली भूतधात्री गिरीन्द्रजा ।**
**या सा हैमवतीशानी वाहनायुधसंयुता ।।**

(पार.आ.,१०.४६-४७)

## शक्तिचक्राणि

आधारादि षट्चक्राण्येव शक्तिबीजाक्षराणां न्यासात् शक्तिचक्राणीति कथ्यन्ते, अक्षराणां शिवशक्त्युभयरूपत्वात्, शिवमन्त्रोद्धारकाले तेषामेव शक्तिबीजत्वाच्च । षट्चक्रस्थषट्पद्मानां दलेषु शिवचक्रन्यासवत् शक्तिचक्रन्यासः क्रियते । तत्र आधारादिविशुद्धिपर्यन्तं पञ्चचक्रेषु शकारादीनि शक्तिबीजत्वेन न्यस्यन्ते । केवलमाज्ञाचक्रे दलद्वये ळकारक्षकारयोः स्थाने हकारळकारौ विन्यस्येते ।

**.................. शक्तिचक्राण्यथो न्यसेत् ।**
**आधारादिगलान्तं च वर्णानि पूर्ववन्न्यसेत् ।।**
**(पूर्ववन्न्यसेत् = शिवचक्रन्यासवत् )**
**आज्ञायान्तु विशेषोऽस्ति शक्तिपक्षे हळे न्यसेत् ।**
(ळक्षयोः स्थाने हळे इत्यर्थः)

(वा.शु.आ.,९.२२-२३)

(पश्यत - षट्चक्राणि, शिवचक्राणि)

## शक्तिपातः

ईश्वरानुग्रहरूपेण भक्तेः उदयः शक्तिपातशब्देन कथ्यते । सः शक्तिपातः प्रबोधानन्दरूपिणी ।

**प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः ।**
**यथैवाङ्कुरतोबीजं बीजतो वा यथाङ्कुरः ।।**

(सि.शि.,९.११)

**लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः ।**

**सा यस्मात् परमा शक्तिः प्रबोधानन्दरूपिणी ।।**

(क्रि.सा.,भा-२, पृ.१९५)

## शक्तिपातचिह्नानि

कम्पः, रोमाञ्चः, स्वरविक्रियः, नेत्रविक्रियः, अङ्गविक्रियः इत्यादयः शक्तिपातचिह्नानि । एवमेव मुक्तौ औत्सुक्यम्, भवस्थितौ द्वेषः, शिवभक्तेषु भक्तिः, शिवे श्रध्दा इत्यादयोऽपि तल्लक्षणानि ।

**आनन्दबोधयोर्लिङ्गं अन्तःकरणविक्रियात् ।**

**यथा स्यात् कम्परोमाञ्चस्वरनेत्राङ्गविक्रियाः ।।**

(क्रि.सा.,भा-२, पृ.१९५)

**एषां शरीरिणां शक्तिः पतत्येव निवृत्तये ।**

**तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ ।।**

**भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके शिवे ।**

**एभिर्लक्ष्यैरविच्छिन्नैः शक्तिपातो महात्मभिः ।।**

**अनुमेयः सदीक्षैश्च शक्तिपातानुसारतः ।**

(वे.सा.वी.चिं., ६.७-८; मृ.आ.,वि.पा.,५.४-५)

(पश्यत – भक्तिचिह्नानि)

## शक्तिपातदीक्षा

दीक्षाभेदः । होत्रीदीक्षायाः शक्तिपातपाशनामक द्विविधप्रभेदयोरन्यतरः । अधर्मधर्मयोस्साम्ये शक्तेः पातः । सोऽयं शक्तिपातदीक्षेत्युच्यते । इयं च आज्ञा – उपमा – स्वस्तिकारोहण – अभिषेक – विभूतिपट्ट – आयत्ता – स्वायत्ता – रूपेण सप्तधा ।

**अधर्मधर्मयोस्साम्ये जाते शक्तिः पतत्यसौ ।**

**आज्ञोपमादिभेदेन सा पुनः सप्तधा भवेत् ।।**

**गुर्वाज्ञापालने दीक्षा सा चाज्ञा प्रकीर्तिता ।**
**पूर्वेषां समयाचारसदृशी चोपमा स्मृता ।।**
**आरोप्य स्वस्तिकां शिष्यं गुरोरीक्षणकर्मणा ।**
**स्वस्तिकां कलशस्नानादभिषेकाह्वया च सा ।।**
**भूतिपट्टमयीदीक्षा भस्मना या प्रकीर्तिता ।**
**शिष्यस्य फाले गुरुणा समयाचारमार्गतः ।।**
**आचार्यो लिङ्गमादाय समभ्यर्च्य यथाविधि ।**
**शिष्यस्यालोकनं सम्यगायत्ता परिकीर्तिता ।।**
**प्रह्वीभूय ततः शिष्यो लिङ्गं स्वीकृत्य भक्तितः ।**
**गुरोः स्वायत्तमित्युक्तं स्वोत्तमाङ्गादिधारणम् ।।**

(शि.त.र.,भा-३, ९.७.३३-३८)

अत्र दत्ताः भेदाः क्रियादीक्षायाः प्रकाराः इति अन्यत्र दृश्यन्ते ।

(का.आ.,क्रि.पा.,१.४३)

(पश्यत - दीक्षाभेदः)

## शक्तिपीठम्

लिङ्गस्य शिवशक्तिसमायोगात् लिङ्गम् (लिङ्गस्योर्ध्वभागः) साक्षात् शिवस्वरूपम् । पीठं च शक्तिरूपम् । एवं लिङ्गस्य पीठमेव शक्तिपीठम् ।

**दैवाद्विनिर्गतं शक्तिपीठाल्लिङ्गमखण्डितम् ।**

(सू.आ.,क्रि.पा.,७.५७)

**पीठिका परमाशक्तिर्लिङ्गं साक्षात् परःशिवः ।**
**शिवशक्तिसमायोगं विश्वं लिङ्गं तदुच्यते ।।**

(सि.शि.,११.३२)

## शक्तिविकासः

शिवस्य शक्तिविकास एव सृष्टिः । स्वशक्तिविकासेन शिवः विश्वरूपेण तिष्ठति, यथा पटः कृटीभावात् स्वस्यप्रसारणवशात् भाति तथा।

**आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः ।**

**कुटीभावात् यथा भाति पटः स्वस्य प्रसारणात् ।।**

(सि.शि.,१०.६६)

## शक्तिविशिष्टाद्वैतम्

वीरशैवसिद्धान्तस्य शक्तिविशिष्टाद्वैतमित्यपरं नाम । शक्तिश्च शक्तिश्च शक्ती ; ताभ्यां विशिष्टौ जीवेशौ, तयोरद्वैतं शक्तिविशिष्टाद्वैतम् । तत्र प्रथमशक्तिपदेन स्थूलचिदचिदात्मकशक्तिः, दितीयशक्तिपदेन सूक्ष्म-चिदचिदात्मकशक्तिश्च परामृश्येते । स्थूलचिदचिदात्मकशक्तिः जीव-सम्बन्धिनी, सूक्ष्मचिदचिदात्मकशक्तिश्चेशसम्बन्धिनी । स्थूलचिन्नाम किञ्चिज्ज्ञत्वम्, स्थूलाचिन्नाम क्रिञ्चित् कर्तृत्वं च । सूक्ष्मचिन्नाम सर्वज्ञत्वम्, सूक्ष्माचिन्नाम सर्वकर्तृत्वं च । एवंभूतयोः जीवेशयोः स्थूलसूक्ष्मचिद-चिच्छक्तिविशिष्टरूपयोरद्वैतम् अर्थात् सामरस्यं यत् तत् शक्तिविशिष्टाद्वैतम्।

**वीरशैवसिद्धान्तस्य लिङ्गाङ्गसामरस्यात्मकपरिणाम्युपादानरूप-शक्तिविशिष्टशिवाद्वैतस्य सकलद्वैतविलक्षणत्वेन साधनीयतया ...**

(शि.मं.,२३)

## शक्त्यङ्गम्

शिवाङ्गादिषडङ्गेषु पञ्चममङ्गम् । अत्र ग्रन्थस्य त्रुटितत्वात् अस्याङ्गस्य स्वरूपं न ज्ञायते ।

**शक्त्यङ्गं पञ्चमं विद्यात् सामान्याङ्गं च षष्ठकम् ।**

(वा.शु.आ.,८.७)

## शक्त्यङ्गमन्त्रः

सां-सीं-सूं-सैं-सौं-सः (तान्त्रिकशक्त्यङ्गमन्त्रः), स्रां-स्रीं-स्रूं-स्रैं-स्रौं-स्रः (वैदिकशक्त्यङ्गमन्त्रः) वातुलशुद्धागमे त्रुटितोऽयं भागः ।

(पश्यत - शिवा.सौ., पृ.२२४)

## शब्दप्रसादः

भक्तादिषट्स्थलमध्ये शरणस्थले श्रवणाङ्गद्वारा प्रसादलिङ्गाय समर्प्यमाणः प्रसादः शब्दप्रसादः ।

**शरणस्थले तु परया शक्त्या युक्ते श्रवोऽङ्गके ।**

**प्रसादलिङ्गे ईशानमुखे शब्दप्रसादकम् ।।**

**आनन्दभक्त्या सुज्ञानहस्तेनैव समर्पयेत् ।**

(का.आ.,क्रि.पा., ७.६४; अ.सू.,७.४१)

(पश्यत - समर्पणम्)

## शब्दाध्वानः

अध्वभेदः । ते च मन्त्राध्वा, वर्णाध्वा, पदाध्वा इति त्रयः ।

**................. अथाध्वानः ततः परे ।**

**मन्त्रवर्णपदात्मानः त्रयः शब्दस्वरूपकाः ।।**

(शि.त.र.,भा-३, ९.३.८६)

(पश्यत - अध्वा)

## शम्

मङ्गलम् । अत एव मङ्गलार्थकत्वमपि सिध्यति ।

**समेधयति शं नित्यं सर्वार्थानामुपक्रमे ।**

**शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः स्मृतः ।।**

(लिं.धा.चं., पृ.१०१, १-३; म.भा.,७.१७३.९०)

## शमः

मनसः विषयविमुखतास्थितिः । पारमेश्वरागमे वीरशैवस्य षडङ्गत्वेनोक्तेषु एकतमम् ।

**शमो दमस्तितिक्षोपरतिश्रद्धासमाधयः ।**
**षडङ्गानि महादेवि वीरशैवस्य लिङ्गिनः ।।**

(पार. आ., १०.७२)

## शम्भुः

शं भवति (शं भावयति) इति शम्भुः । शिवः । भ्रूमध्यस्थित आज्ञाचक्रादूर्ध्वं सहस्रदलपङ्कजे स्थितस्य विमलस्य चन्द्रबिम्बस्य मध्ये सूक्ष्मरन्ध्रं भावयेत् । तत् कैलासस्थानम् इत्युच्यते । तत्र शम्भुं ध्यायेदिति नियमः ।

(१) **निष्कलङ्कस्वभावाय नमः शान्ताय शम्भवे ।।**
**स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने ।**
**स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे ।।**
**तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम् ।।**
**यया महेश्वरः शम्भुः नामरूपादिसंयुतः ।**
**इच्छाज्ञानादिरूपेण या शम्भोः विश्वभाविनी ।**

(सि.शि., १.५-६, ८-९,११)

**जङ्गमं स्थावरं चेति शम्भो रूपद्वयं शुभम् ।।**

(क्रि.सा.,भा-३, १७.१, पृ.२३)

(२) **भ्रूमध्यादूर्ध्वभागे तु सहस्रदलमम्बुजम् ।**
**भावयेत् तत्र विमलं चन्द्रबिम्बं तदन्तरे ।।**
**सूक्ष्मरन्ध्रं विजानीयात् तत् कैलासपदं विदुः ।**
**तत्रस्थं भावयेच्छम्भुं सर्वकारणकारणम् ।।**

(सि.शि.,१२.२६-२७)

## शरणः

वीरशैवषट्स्थलमार्गे शरणस्थलं नाम पञ्चमं स्थलम् । तस्मिन् स्थले वर्तमानः साधकः शरणनामवान् भवति । शिवं प्रति सर्वार्पणभावयुक्तः भक्तिज्ञानवैराग्यसम्पन्नः निरन्तरशिवानन्दमग्नश्च शरणः। लिङ्गपति–शरणसतीभावः शरणस्थलस्य वैशिष्ट्यम् । शिवेन सह नित्यसौख्यं अनुभवति ।

**अङ्गलिङ्गी ज्ञानरूपः सती ज्ञेयः शिवः पतिः ।**
**यत् सौख्यं तत्समावेशे तद्वान् शरणनामवान् ।।**
**सतीव रमणे यस्तु शिवे शक्तिं विभावयन् ।**
**तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान् ।।**

(सि.शि., १३.२,५)

**शिवं निश्चित्य निश्चिन्तः सानन्दः शरणो भवेत् ।**

(क्रि.सा.,भा–३, २४, पृ.१२२)

**अङ्गत्वमेव गलितं शिवतैव सिद्धा**
**तस्मादतः प्रभृति मे सुखमेव भूयात् ।**
**इत्थं निरन्तरसुखामृतवार्धिपूर –**
**मग्नस्स एव शरणाख्य इह प्रसिद्धः ।।**

(वी.ध.शि., ४.९१, पृ.२५६)

## शरणमहत्त्वस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । प्रसादिस्थलाश्रित सप्तविधाङ्गस्थलेष्वेकतमम् । गुरुलिङ्गादि माहात्म्यज्ञानमन्वेषयन् नाना प्रकारेण शिव एव रक्षक इति शरणागतस्य शरणस्य माहात्म्यबोधकस्थलम्। ब्रह्मादिवैभवं प्राकृतत्वेन मन्यमानः शरणः शिवमेवाश्रयते, इत्यादि बोधपरमिदं स्थलम् ।

**शिव एक एव रक्षक इति प्रपद्यमानस्य शरणस्य महत्वं प्रतिपादयति ।**

(सि.शि.,तत्त्व.प्र., ११.५७ भूमिका)

**गुरुलिङ्गादि माहात्म्यबोधान्वेषणसङ्गतः ।**
**सर्वात्मना शिवापत्तिः शरणस्थानमुच्यते ।।**
**ब्रह्मादिविबुधान् सर्वान् मत्वा प्राकृतवैभवान् ।**
**प्रपद्यते शिवं यत्तु शरणं तदुदाहृतम् ।।**

(सि.शि.,११.५७-५८)

## शरणस्थलम्

वीरशैवसाधनमार्गसम्बद्धेषु षट्स्थलेषु पञ्चमं स्थलम् । लिङ्गं पतिः शरणश्च सती इत्येवंरूपसतीपतिभावः शरणस्य वैशिष्ट्यम् ।

स्कान्दे शङ्करसंहितायाम् -

**पतिर्लिङ्गं सती चाहं हृदि युक्तः स्वयं प्रभुः ।**
**प्रापञ्चिकसुखं नास्ति शरणस्थलमुत्तमम् ।।**

(शि.मं., पृ.४३)

वातुलतन्त्रे -

**स्वयं चरं परं नाति स्वदेहं निर्मलप्रभम् ।**
**अद्वयं चाचलानन्दं शरणस्थलमुत्तमम् ।।**

**शरणस्थलभेदः** - चत्वारि अङ्गस्थलानि

१. शरणस्थलम्, २. तामसनिरसनस्थलम्, ३. निर्देशस्थलम्, ४. शीलसम्पादनस्थलम् ।

(सि.शि.,१३.३-४)

द्वादशलिङ्गस्थलानि -

१. दीक्षापादोदकस्थलम्, २. शिक्षापादोदकस्थलम्, ३. ज्ञानपादोदकस्थलम्, ४. क्रियानिष्पत्तिस्थलम्, ५. भावनिष्पत्तिस्थलम्, ६.

ज्ञाननिष्पत्तिस्थलम्, ७. पिण्डाकाशस्थलम्, ८. बिन्द्वाकाशस्थलम्, ९. महाकाशस्थलम्, १०. क्रियाप्रकाशस्थलम्, ११. भावप्रकाशस्थलम्, १२. ज्ञानप्रकाशस्थलम् ।

(सि.शि.,१९.२–५)

## शरणस्थलम्

स्थलभेदः । एकोत्तरशतस्थलेष्वेकम् । शरणस्तलान्तर्गत चतुर्तिधाङ्गस्थलेष्वेकतमम्, तत्र प्रथमम् । यथा पतिव्रता स्त्री स्वकीयरमणे तथा यः शिवे स्वात्मानं शक्तिरूपां स्त्रियं मन्यमानः देवतान्तरे निरासक्तः सन् शरणागतः स एव शरणनामवान्, इत्यादि सतीपतिभावं प्रतिपाद्यमानमिदं स्थलम् ।

**स्थलमेतत् समाख्यातं चतुर्धा धर्मभेदतः ।**
**आदौ शरणमाख्यातं ततस्तामसवर्जनम् ।।**
**सतीव रमणे यस्तु शिवे शक्तिं विभावयन् ।**
**तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान् ।।**

(सि.शि.,१३.३, ५)

## शरणागतः

सर्वात्मना सर्वप्रकारेण परमेश्वरं प्रपन्नः भक्तः शरणागत इत्युच्यते ।

**शरण्यः सर्वभूतानां शङ्करः शशिशेखरः ।**
**सर्वात्मना प्रपन्नस्तं शरणागत उच्यते ।।**

(सि.शि.,११.५९)

## शरीरत्रयम्

स्थूल–सूक्ष्म–कारणत्वेन शरीरं त्रिविधम् ।

तत्र स्थूलशरीरं कार्मिकमलाश्रयम् । सूक्ष्मशरीरं मायीयमलाश्रयम्। कारणशरीरं च आणवमलाश्रयम् । क्रियादीक्षाद्वारा स्थूलशरीरगतं कार्मिकमलं विनाश्य इष्टलिङ्गस्य धारणम्, मन्त्रदीक्षाद्वारा सूक्ष्मशरीरगतं

मायामलं विनाश्य प्राणलिङ्गस्य धारणम्, वेधादीक्षाद्वारा कारण-शरीरगतमाणवमलं विनाश्य भावलिङ्गस्य धारणं च विहितम्।

**शरीरं त्रिविधं ज्ञेयं स्थूलं सूक्ष्मं च कारणम् ।**

(क्रि.सा.,भा-१,३.३१९)

**इष्टं स्थूलतनोः प्रोक्तं प्राणं सूक्ष्मतनोः स्मृतम् ।**
**भावाख्यं कारणस्यैवं तनुत्रयगतं त्रयम् ।।**
**आणवं मायिकं चैव कार्मिकं च यथाक्रमम् ।**
**मलत्रयमनादीदं तनुत्रयगतं भवेत् ।।**
**तनुत्रयगतानादिमलत्रयमिदं गुरुः ।**
**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत् ।।**

(चं.आ.,क्रि.पा.,३.४५-४७; का.आ.,क्रि.पा.,१.१०; मकुट., क्रि.पा., १.११)

(पश्यत - तनुत्रयम्)

## शर्वलिङ्गम्

दशविधलिङ्गान्यतमभूताऽऽचारलिङ्गवाचकम् ।

**शर्वलिङ्गाय नम इत्याचारलिङ्गस्य "वामात्मपृथिवीतत्त्वभूत-वामात्मिका यया । सृष्टिः प्रवर्तते वामा सा शर्वक्षितिमूर्तिप ।।" इति सिद्धान्तसारावलीवाक्येन पृथिवीतत्त्वाभिमानिन आचारलिङ्गस्य शर्वलिङ्गाभेदप्रतिपादनात् ।**

(लिं.धा.चं., पृ.७५-७६)

(पश्यत - दशविधलिङ्गानि)

## शाक्तभेदः

नित्या, अनित्या, शाबरा, शक्तिः इति चतुर्धा शाक्तभेदः ।

**नित्याऽनित्या शाबराख्या शक्तिश्चेति चतुर्विधा ।।**
**शाक्तभेदमिति ज्ञेयं सङ्करं न समाचरेत् ।।**

(पार.आ.,१.२८-२९)

## शाक्ती दीक्षा

दीक्षाभेदः । शाम्भवी दीक्षा, शाक्ती दीक्षा, मान्त्री दीक्षा इति त्रिविधदीक्षास्वन्यतमा । शिष्यदेहं प्रविश्य ज्ञानदायिनी दीक्षा ।

**शाम्भवी चैव शाक्ती च मान्त्री चैव शिवागमे ।**

**शाक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु ।**

**गुरुणा योगमार्गेण दीयते ज्ञानचक्षुषा ।।**

(वी.ध.शि.,पृ.१९१; क्रि.सा.,भा-३, १६-१८, पृ.१२)

(पश्यत – दीक्षा)

## शान्तिकभस्म

भस्मभेदः । गोयोनिसम्बद्धं गोमयं हस्तेनैव गृहीत्वा पञ्चब्रह्म-मन्त्रैरभिमन्त्र्य दग्ध्वा संस्कृतं भस्म शान्तिकम् ।

**गोमयं योनिसम्बद्धं यद्धस्तेनैव गृह्यते ।**

**ब्रह्ममन्त्रैश्च सन्दग्धं तच्छान्तिकमिहोच्यते ।।**

(चं.आ.,क्रि.पा., ६.३१; क्रि.सा.,भा-२, ६.६)

**शान्तिकं पौष्टिकं भस्म कामदं च त्रिधा भवेत् ।**

(चं.आ.,क्रि.पा., ६.३१)

## शान्तिकला

कलाभेदः । आदिशक्तिः । अमूर्तसादाख्यं, शान्तिकलायुक्तम् आदिशक्तिसमुद्भूतम् ।

**शान्तिरेवादिसंज्ञिता ।**

**औन्मुख्यलक्षणादिशक्त्यपरपर्यायवाकाररूपशान्तिकलेति ।**

(शि.मं., पृ.३९)

**शान्त्याख्यकलया युक्तमादिशक्तिसमुद्भवम् ।**
**अमूर्तं केवलं लिङ्गं .........................**

(सू.आ.,क्रि.पा.,१.३४)

(पश्यत – कला)

## शन्त्यतीता = शान्त्यतीतकला

कलाभेदः । पराशक्तिः । शिवसादाख्यं नाम पराशक्तिसमुद्भवं शान्त्यतीतकलायुक्तम् ।

**शान्त्यतीता पराशक्तिः ।**

(अ.सू.,३.२५)

**शान्त्यतीतकलायुक्तं पराशक्तिसमुद्भवम् ।**
**शुद्धं च शिवसादाख्यं सर्वतत्त्वालयं परम् ।।**

(सू.आ.,क्रि.पा.,१.३३)

**आनन्दरूपपराशक्त्यपरपर्यायकारमयशान्त्यतीतकला ।**

(शि.मं., पृ.३९)

(पश्यत – कला)

## शान्त्यतीतोत्तरा = शान्त्यतीतोत्तरकला

षड्विधकलास्वेका । चिच्छक्तिः ।

**शान्त्यतीतोत्तरा नाम चिच्छक्तिरिति कीर्तिता ।**

(अ.सू.,३.२४)

**सा स्वतन्त्रस्वप्रकाशताशक्तिरेव क्रमादेषु लिङ्गेषु सूक्ष्मकार्य-करणप्रपञ्चोपादानकारणीभूतचिच्छक्त्यपरपर्यायप्रणवरूपशान्त्य-तीतोत्तराख्यकला ।**

(शि.मं., पृ.३९)

(पश्यत – कला)

## शान्त्यतीतोत्तराशक्तिः

चिच्छक्तिः ।

**शान्त्यतीतोत्तरा नाम चिच्छक्तिरिति कीर्तिता ।।**

(अ.सू.,३.२४)

## शाम्भवप्रणवः

साकल्यम्, शाम्भवम्, सौख्यम्, सावश्यम्, सायुज्यं चेति पञ्चप्रणवेष्वेकतमम् । अकारः, उकारः, मकारश्चेति त्रिभिः सह हकारः ईकारश्चेत्युभयं समायोज्यते चेत् शाम्भवं भवति (अ-उ-म-ह-इ) । तच्च दक्षिणमुखोद्भवम् (वामदेवमुखोद्भवम्) । तस्य अञ्जनवर्णः, त्रिष्टुप् छन्दः, भारद्वाजऋषिः, सलिलं भूतम्, कर्तृतत्त्वम्, ईश्वरः अधिदेवता, पञ्चमात्रासमन्वितं बीजम्, सर्वसिद्धिः फलम् ।

**साकल्यं प्रथमं प्रोक्तं शाम्बवं तु द्वितीयकम् ।**
**सद्यादिपञ्चवक्त्रेषु जातं प्रणवपञ्चकम् ।**
**स्वरादिपञ्चमयुतं षष्ठान्तं नादसंयुतम् ।।**
**तृतीयसहितं देवि शाम्भवं दक्षिणोद्भवम् ।**
**अञ्जनाभं शाम्भवं च त्रिष्टुप्छन्द उदीरितम् ।।**
**भारद्वाज ऋषिर्भूतं सलिलं कर्तृतत्त्वकम् ।**
**ईश्वरस्त्वधिदैवं च पञ्चमात्रासमन्वितम् ।।**
**सर्वसिद्धिप्रदं देवि साधकानामिदं परम् ।।**

(सू.आ.,क्रि.पा.,४.५,७,२०,२६-२७; वा.शु.आ.,६.११-१२, १७-१९)

## शाम्भवव्रतम्

१. इष्टलिङ्गधारिणां वीरशैवानां व्रतमेव शाम्भवव्रतम् । नानादुःखग्रहाकुलं जन्मसागरं तर्तुमिच्छुना क्रियमाणं वेदान्तगम्यं आगमान्तगम्यं च व्रतं शाम्भवव्रतम् ।

**शाम्भवव्रतनिष्ठानामिष्टलिङ्गैकसेविनाम् ।**

(चं.आ.,च.पा., १.६)

**तीतीर्षुर्जन्मवाराशिं नानादुःखग्रहाकुलम् ।**
**वेदागमान्तविदितं शाम्भवव्रतमाचरेत् ।।**

(मकुट., क्रि.पा.,१.१०)

२. भस्मधारणप्रकारः । मन्त्राभिमन्त्रणपूर्वकं शिरोललाटादिस्थानेषु भस्मं धारयेत् । त्रियायुष – त्रियम्बक – प्रणवपञ्चाक्षरमन्त्रैः धारयेत् ।

**शिरोललाटकण्ठस्कन्धवक्षस्थलेषु त्रियायुषत्रियम्बकैः तिस्रोः रेखाः कुर्वीत व्रतमेतत् शाम्भवम् ।। इति श्रुतेः ।**

(सि.शि.,तत्त्व.प्र., ७.३३)

## शाम्भवी कला

शैवीकला एव शाम्भवीकला इत्युच्यते । सा च देहप्राणात्मसुव्याप्ता । एषा एव चित्कला ।

**देहप्राणात्मसु व्याप्ता संस्थिता शाम्भवी कला ।**

(का.आ.,क्रि.पा.,१.१२२)

(पश्यत – चित्कला, शैवीकला)

## शाम्भवी दीक्षा

दीक्षाभेदः । शाम्भवी दीक्षा, शाक्ती दीक्षा, मान्त्री दीक्षा – चेति त्रिविधदीक्षास्वन्यतमा । गुरोः कटाक्षेण, सम्भाषणात् पाशच्छेदिनी दीक्षा । सा च तीव्रा, तीव्रतरा इति द्विधा ।

**अनन्तजन्ममरणकारणात् पाशसञ्चयात् ।**
**मुमुक्षुराचरेद्दीक्षां शाम्भवीं पाशकृन्तिनीम् ।।**

(चं.आ., क्रि.पा.,१.४५)

**शाम्भवी चैव शाक्ती च मान्त्री चैव शिवागमे ।**
**दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना ।।**

**गुरोः कटाक्षमात्रेण या स्यात्सम्भाषणादपि ।**

**सद्यस्सञ्जायते व्यक्तपाशौघक्षयकारिणी ।।**

**सा दीक्षा शाम्भवी ज्ञेया सा पुनर्भिद्यते द्विधा ।**

**तीव्रतीव्रतरा चेति गुरुमार्गोक्तभेदतः ।।**

(वी.ध.शि.,पृ.१९१; क्रि.सा.,भा-३, १६.१२-१७, पृ.१२)

(पश्यत – दीक्षा)

## शाम्भवीभक्तिः

'ज्ञानादेव तु कैवल्यम्' इत्युक्तरीत्या ज्ञानात् मोक्षः । तस्मादुपरि शाम्भवीभक्तिः परतरा भाति ।

वातुलादिषु –

**ज्ञानादेव तु मोक्षः स्यात् मोक्षादुपरि शाम्भवी ।**

**भक्तिः परतरा भाति स्वतन्त्रा निजलीलया ।।**

(कै.उ., १.१, पृ.६)

## शाम्भवीमुद्रा

दिव्यलिङ्गानुसन्धानसाधनभूता खेचरीमुद्रा एव नासिकाग्रस्थानभेदेन शाम्भवीमुद्रेति कथ्यते । अस्यां मुद्रायां निमिषोन्मेषरहिते नेत्रे नासिकाग्रे तिष्ठतः ।

**शाम्भवीमुद्रायाः भेद**

एषा मुद्रा पूर्वोत्तरभेदेन द्विधा । तत्र नासिकाग्रदृष्ट्या नादानु-सन्धानकर्त्रा मनसा योजिते सति पूर्वशाम्भवी मुद्रेति ज्ञायते । नासिकाग्रदृष्टिः मनश्च नादब्रह्मणि निमग्ने सति उत्तरशाम्भवीमुद्रेति सा स्मृता ।

**नासाग्रदत्तनिमिषोन्मिषबाह्यदृष्ट्या**

**लक्ष्ये सदाशिवविमर्शकगूढदृष्ट्या ।**

**ज्योतिस्स्वरूपमचलं हृदि बाह्यहीनम्**

**पश्यन्ति ये त इह संयमिनः कृतार्थाः ।।**

(शि.यो.प्र., ५.७, पृ-१४६)

**अन्तश्चित्तं बहिश्चक्षुर्निमिषोन्मेषवर्जितम् ।**

**एषा सा शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता ।**

**शाम्भवी द्विविधा प्रोक्ता पूर्वोत्तरविभेदतः ।।**

(शि.यो.प्र., पृ.१४६)

## शास्त्रदीक्षा

दीक्षाभेदः । शिष्याय गुरुणा शास्त्रप्रदानात्मकदीक्षा ।

**शास्त्रस्य सम्प्रदानेन शास्त्रदीक्षा प्रकीर्तिता ।**

(शि.त.र.,भा-३, ९.७.३०)

## शिकारः

पञ्चाक्षरमन्त्रे तृतीयः वर्णः । अयं वर्णः वह्निरूपः (रक्तवर्णः) । रुद्रः तस्याधिदैवतम् । गौरी शक्तिः । अग्निः आधारः । उष्णिक् छन्दः । जमदग्निः ऋषिः । दक्षिणवक्त्रम् । अघोरब्रह्म । स्वस्तिकायुधम् । विद्या कला । गुणः दीप्तिः । त्र्यश्रकचक्रम् । प्रकाशः विद्युत् । करणम् अहङ्कारः। वायुर्व्यानः । नेत्रं ज्ञानेन्द्रियः । एवं शिकारः षोडशरूपः । शिकारः इच्छाशक्तिः । शिकारः शिवलिङ्गम् । षडक्षरीमन्त्रे शिकारः देहमध्यस्थः । शिकारः लिङ्गस्य मध्यम् ।

**शिकारं वह्निरूपं तु रुद्रस्तत्राधिदैवतम् ।**

**गौरीशक्तिसमायुक्तमाधारं चाग्निरेव च ।।**

**उष्णिक् छन्दस्समायुक्तं जमदग्निर्ऋषिस्तथा ।**

**स्थानं दक्षिणतो वक्त्रमघोरं ब्रह्म चैव हि ।।**

**स्वस्तिकायुधमेवोक्तं विद्या नाम कलापि च ।**

**गुणो दीप्त्यनुसंयुक्तश्चक्रं त्र्यश्रकमेव च ।।**
**तटितां तु प्रकासश्च करणं त्वहमाकृतिः ।**
**व्यानवायुसमायुक्तं नेत्रं ज्ञानेन्द्रियं भवेत् ।**
**इत्येवं षोडशानां तु शिकाराक्षरमुच्यते ।।**

(चं.आ.,क्रि.पा.,८.३०-३३)

**इच्छाशक्तिः शिकारः .................. ।**

(सू.आ.,क्रि.पा.,४.४१)

**शिकारः शिवलिङ्गं स्यात् ................... ।**

(अ.सू.,६.४९)

**शिकारदेहमध्या च ....................... ।**

(चं.आ.,क्रि.पा., ११.३९)

**.................. शिकारं मध्यमीरितम् ।**

(सि.सारा., पश्यत - लिं.धा.चं.,पृ.४६)

## शिक्षागुरुः

शिष्याय शिवसिद्धान्तबोधकः परतत्त्वप्रकाशको गुरुः शिक्षागुरुः ।

**बोध्यबोधकभावेन ज्ञानद्वारेण शास्यते ।**
**शिष्यो हि येन गुरुणा शिक्षागुरुरुच्यते ।।**

(वातुलागमे - उल्लेखः - सि.शि.,तत्त्व.प्र.,१५.१२, पृ.३२८)

**दीक्षागुरुरसौ शिक्षाहेतुः शिष्यस्य बोधकः ।**
**प्रश्नोत्तरप्रवक्ता च शिक्षागुरुरितीर्यते ।।**

(सि.शि.,१५.१२)

## शिक्षागुरुस्थलम्

भक्तस्थलाश्रितनवविधलिङ्गस्थलेष्वेकम् । एकोत्तरशतस्थलेषु च षट्चत्वारिंशत्तमम् ।

दीक्षागुरुरेव शिष्यस्य शिक्षाकारणत्वात् शिक्षागुरुरिति कथ्यते । तादृश शिक्षागुरुत्वेन शिष्यबोधकस्य शिवयोगिनः स्थलं शिक्षागुरुस्थलम् ।

**दीक्षागुरुस्थलं पूर्वं ततः शिक्षागुरुस्थलम् ।**

**सन्देहवनसन्दोहसमुच्छेदकुठारिका ।**

**यत्सूक्तिधारा विमला स गुरूणां शिखामणिः ।।**

(सि.शि., १५.५)

**वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः ।**

(तै.उ.,२२)

## शिक्षापादोदकम्

पादोदकप्रभेदः । लिङ्गपादोदकमेव शिक्षापादोदकम् ।

**पादतीर्थं त्रिधा शम्भोः गुरुजङ्गमयोरपि ।**

**दीक्षाशिक्षाज्ञानमिति त्रिसंज्ञं तद् भवत्यहो ।।**

(चं.आ.,क्रि.पा.,५.५)

## शिक्षापादोदकस्थलम्

शरणस्थलाश्रितद्वादशविधलिङ्गस्थलेष्वेकतमम् । एकोत्तरशतस्थले-ष्वेकम् । गुरुशिष्यमयं ज्ञानं शिक्षा तयोः समरसत्वमेव शिक्षापादोदकम् । तत्सम्बन्धिस्थलं शिक्षापादोदकस्थलम् ।

**शरणस्थलमाश्रित्य स्थलद्वादशकं मया ।**

**उच्यते नाम सर्वेषां स्थलानां शृणु तापस ।।**

**दीक्षापादोदकं पूर्वं शिक्षापादोदकं ततः ।**

(सि.शि., १९.२-३)

**गुरुशिष्यमयं ज्ञानं शिक्षा योगिनमीर्यते ।**

**तयोः समरसत्वं हि शिक्षापादोदकं स्मृतम् ।।**

(सि.शि.,१९.१२)

## शिखिकर्पूरयोगः

अग्निकर्पूरयोर्योगः। तयोः योगे सति कर्पूरः निरवशेषं दग्धः सन् स्वकीयं स्वतन्त्रास्तित्वं जहाति । एवमेव शिवजीवयोः सामरस्ये सति जीव भावः निरवशेषं शिवे विलीनः निर्भावत्वं प्राप्नोति । अयमेव ज्ञानशून्यस्थलस्य स्वरूपम् ।

**षडूर्मयश्च षड्वर्गा नास्ति चाष्टविधार्चनम् ।**

**निर्भावो निजलिङ्गैक्यः शिखिकर्पूरयोगवत् ।।**

(शै.र.,भा-२,१९.७४)

## शिरोमन्त्राः

षड्विधन्यासाक्षारमन्त्राः । (ब्रह्मचारिणां) सृष्टिन्यासक्रमे देहन्यासे ॐ-यं-ॐ-ईशानायनमः शिरसि, अङ्गन्यासे ॐ-वां-ॐ-नित्यतृप्तिशक्तिधाम्ने शिरसे स्वाहा, गृहस्थानां स्थितिन्यासक्रमे ॐ-नं-ॐ-ईशानाय नमः शिरसि, अङ्गन्यासे ॐ-मं-ॐ-स्वतन्त्रशक्तिधाम्ने शिरसे स्वाहा। वानप्रस्थसन्यासिनां संहारन्यासक्रमे देहन्यासे ॐ-यं-ॐ-ईशानाय नमः शिरसि, अङ्गन्यासे च ॐ-यं-ॐ-सर्वज्ञशक्तिधाम्ने शिरसे स्वाहा । एते शिरोमन्त्राः ।

**एवं जप्त्वा जपान्ते च षडङ्गं न्यासमाचरेत् ।**

(सू.आ.,क्रि.पा.,३.४४)

पारमेश्वरागमे अन्यादृशः न्यासक्रमः वर्णितः । यथा -

**मन्त्रवर्णादिकान् न्यस्येत् पञ्चमूर्तीर्यथाक्रमम् ।**

**तर्जनीमध्ययोरन्त्यानामिकाङ्गुष्ठके पुनः ।।**

**ताः स्युस्तत्पुरुषाघोरसद्योवामेशसंज्ञकाः ।**

**वक्त्रहृत्पादगुह्येषु निजमूर्धनि ताः पुनः ।।**

**प्राग्राम्यवरुणोदीच्यमध्यचक्रेषु पञ्चसु ।**

**मन्त्राग्राणि न्यसेत् पश्चाज्जातियुक्तानि षट्क्रमात् ।।**

(पार.आ.,११.४७-४९)

## शिरोव्रतम्

वीरशैवव्रतम् । शाम्भवव्रतम्, अत्याश्रमव्रतम्, पाशुपतव्रतम्, इत्यादिनामभिः शैवागमोत्तरभागेषु ज्ञायते । एतद्व्रतं वेदान्तसम्मतम् । पुनर्भवनाशाय मुमुक्षुभिः आदरणीयम् । सद्योमुक्तिकांक्षिभिः सर्ववर्णाश्रमस्थैः परिग्राह्यम् । सम्यक् परीक्ष्यैव गुरुः शिष्याय शिरोव्रतम् अनुगृह्णीयात् । दीक्षात्रयेण लिङ्गत्रयप्राप्त्यनन्तरम् अस्य व्रतस्य आरम्भः भवति ।

**आत्यश्रमं पाशुपतं शाम्भवं तच्छिरोव्रतम् ।**

**इत्येवं नामभिः पुण्यैः निगमान्तेषु गीयते ।।**

**यदेतत् शाम्भवं नाम व्रतं श्रुत्यन्तसम्मतम् ।**

**पुनर्भवप्रहाणाय मुमुक्षुस्तत्समाचरेत् ।।**

**तितीर्षुर्जन्मवाराशिं गुरुपोतं समाश्रयेत् ।**

**सम्यक् परीक्ष्य वै शिष्यं गृह्णीयाद्देशिकोत्तमः ।।**

**निवेदयिष्यन् मज्ज्ञानं दद्यादादौ शिरोव्रतम् ।**

**अन्यथा गुरुशिष्यौ तौ पततो नरकाम्बुधौ ।।**

**तनुत्रयगतानादि मलत्रयमसौ गुरुः ।**

**दीक्षात्रयेण सन्दह्य लिङ्गत्रयमुपादिशेत् ।।**

(का.आ.,क्रि.पा.,१.९, ४, ७-८, १०; वी.स.सं.,६.२७)

## शिवः

शम्भुः, महेशः, महेश्वरः, ईश्वरः, परशिवः, सदाशिवः, रुद्रः त्रयावयवः, परमात्मा, लिङ्गम्, स्वयम्भूः, परंब्रह्म, परात्परः, परंज्योतिः,

परवस्तुः, विश्वरूपी, व्यापी, सर्वगतः, अगोचरः इत्यादि सहस्रनामभाक् । स च अणोः अणीयान् महतो महीयान्, पुरातनश्च । शिव एव सर्वकारणकारणम् । शिवः पञ्चकृत्यपरायणः शक्तिविशिष्टश्च । सर्वेषु कृत्येषु अविनाभावसम्बन्धयुक्ता शक्तिः शिवस्य सहकारिणी ।

**अणोरणीयान् महतो महीयान् ।**

(कठ.उ.,२.२०; श्वे.उ.,३.२०)

**अणोरणीयानहमेव तद्वत् महानहं विश्वमहं विचित्रम् ।**
**पुरातनोऽहं हिरण्मयोऽहं शिवरूपमस्मि ।।**

(कै.उ.,२.३.,पृ.३)

**अशेषजगदाधारं सर्वकारणकारणम् ।**
**आदिमध्यान्तरहितमप्रमेयमनाकुलम् ।।**
**असंख्याताद्भुताचिन्त्यस्वशक्तिपरिशोभितम् ।**
**आदिदेवकृपासिन्धो पञ्चकृत्यपरायण ।**
**यतस्त्वं सर्वकर्तासि सर्वज्ञः सर्वमप्यसि ।।**

(मकुट.,क्रि.पा.,१.२-४)

**जगज्जन्मस्थितिध्वंस तिरोभावविमुक्तयः ।**
**कृत्यं सकारकफलं ज्ञेयमस्यै तदेव हि ।।**

(मृ.आ.,२.३)

**आनीदवातं स्वधया तदेकम् ।**

(ऋ.वे.,१०.१२९.२)

**परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।**
**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**

(श्वे.उ.,६.८)

यामाहुः सर्वलोकानां प्रकृतिं शास्त्रपारगाः ।
तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम् ।।

(सि.शि.,१.८)

स्थीयते लीयते यस्मिन् मुक्तः संसारपद्धतेः ।
तदेवस्थलमित्युक्तं स्थलतत्त्वविशारदैः ।।
एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ।
शिवतत्त्वं शिवाचार्याः स्थलमित्याहुरादरात् ।।
स्वशक्तिक्षोभमात्रेण स्थलं तद्द्विविधं भवेत् ।
एकं लिङ्गस्थलं प्रोक्तं अन्यदङ्गस्थलं स्मृतम् ।।

(अ.सू.,२.२,१०)

आस्पदत्वादशेषाणां मङ्गलानां विशेषतः ।
शिवशब्दाभिधेयो हि देवदेवः त्रियम्बकः ।।

(सि.शि.,८.९)

शिव एव परंज्योतिः शिव एव परात्परः ।
व्यासोक्तं यत्परं ब्रह्म स्वसूत्रेषु शिवः स्वयम् ।।
शिव एव हि लिङ्गं च लिङ्गरूपी शिवः स्वयम् ।
सर्ववेदान्तवाक्यानां प्रतिपाद्यः शिवः स्वयम् ।।

(क्रि.सा.,भा-२, १.३५-३६)

शिव इत्यक्षरद्वन्द्वं परब्रह्मप्रकाशकम् ।
मुख्यवृत्त्या तदन्येषां शब्दानां गुणवृत्तयः ।।

(सि.शि.,८.१०)

विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।
तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ।।

(का.आ.,क्रि.पा.,८.४)

## शिवकला= शैवीकला = शाम्भवीकला

त्रिविधदीक्षासु एकतमस्या मन्त्रदीक्षाया अनन्तरं शिष्यस्य करकमलस्थापितेष्टलिङ्गे विनिवेशनीयत्वेन विहिता शिष्यमूर्धस्था चित्कला एव शिवकलेति व्यवह्रियते । जलकुम्भाग्रव्याप्ततैलबिन्दुवत् देहप्राणात्मसु व्याप्ता शाम्भवी कला । सा एव शिष्यमूर्ध्निस्थिता चिद्रूपा परमकला । सा कालाग्निज्वालावत् प्रज्वला । तटित्कोटिसमप्रभायुक्ता । तां कलां गुरुः दृष्टौ धृत्वा शिष्यमस्तकस्थापितहस्तद्वारा आकृष्य चेष्टलिङ्गे समावेशनं करणीयमिति नियमः ।

**शिष्यस्य दक्षिणे कर्णे षडक्षरमनुं शनैः ।**
**त्रिवारं उपदिश्यैवं भावितां मनुदीक्षया ।।**
**शैवीं कलां स्वमनसा विभाव्य च ततः परम् ।**
**दृष्टावानीय च तया शिष्यवामकरस्थिते ।।**
**लिङ्गे निवेशयेत् क्षिप्रं मूलमन्त्रमनुस्मरन् ।**
**जलकुम्भाग्रसद्व्याप्ततैलबिन्दुर्यथा तथा ।।**
**देहप्राणात्मसु व्याप्ता संस्थिता शाम्भवी कला ।**
**ज्वलत्कालानलाभासा तटित्कोटिसमप्रभा ।।**
**तस्योर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा फला ।**
**तामाकृष्य यथा न्यायं लिङ्गे समुपवेशयेत् ।**

(का.आ.,क्रि.पा.,१.११९-१२०, १२२-१२४)

## शिवकुम्भः

१. पूजोपयुक्तैकादशपात्रेषु एकतमः । शिवकुम्भः जलसंग्रहार्थमुपयुज्यमानं बृहत्पात्रम् । शिवकुम्भनामकं पात्रं विंशतिभिः पलैः कारणीयम् । (पलम् = चत्वारि कर्षाणि, कर्षं = षोडशमाशाः) पूजोपयुक्तपात्रेषु इदं पात्रं बृहत्तमं भवति ।

**पूजोपयुक्तपात्राणां लक्षणं शृणु पार्वति ।**

**शिवकुम्भसमाख्यं च पात्राण्येकादश प्रिये ।।**

**शिवकुम्भाभिधं पात्रं कुर्यात् विंशतिभिः पलैः ।**

(का.आ.,क्रि.पा., ५.३०-३१, ३४)

२. वीरशैवदीक्षायामुपयुज्यमानं पात्रं शिवकलश इति तस्य अपरं नाम । वीरशैवदीक्षाकर्ता आचार्यः स्थण्डिलादिशुद्धप्रदेशेषु स्थापिते शिवकुम्भे शिवं संपूज्य दीक्षोत्सवार्थमागतान् चरलिङ्गभक्तान् अन्नसन्तर्पणेन तोषयेत् । शिष्यं प्रति कृपादृष्टिं प्रसार्य तेन तं शिवतत्त्वयुक्तदेहिनं कृत्वा शिवकुम्भस्थं पवित्रोदकं पञ्चाक्षरीमन्त्रोच्चारपूर्वकं दूर्वाङ्कुरेण तस्य उत्तमाङ्गे संप्रोक्षणं कुर्यात् ।

**शिवकुम्भं समासाद्य स्थण्डिलादिषु पूर्ववत् ।।**

**शिवकुम्भे शिवं पूज्य भक्तानन्नेन तोषयेत् ।**

**शेषं दीक्षोक्तवत् कृत्वा मलपाशादिमोचनम् ।।**

**गुरुः शिष्यं समालोक्य तत्त्वदेहं विचिन्तयेत् ।**

**शिवकुम्भस्थतोयेन अभिषिञ्चेच्छिवाणुना ।।**

(वा.शु.आ.,१०.३८-४०)

## शिवचक्राणि

योगे यान्याधारादिषट्चक्राणीत्युक्तानि तान्येव शिवबीजाक्षरविन्यासात् शिवचक्राणीति कथ्यन्ते । आधारचक्रे चत्वारः कोष्ठा एव चत्वारि दलानि । तत्र क्रमेण व-श-ष-स इति चत्वारि अक्षराणि न्यस्यन्ते । स्वाधिष्टानचक्रे षट् कोष्ठा एव षड्दलानि । तत्र ब-भ-म-य-र-ल इति षडक्षराणि न्यस्तानि । मणिपूरकस्य दशदलेषु ड-ढ-ण-त-थ-द-ध-न-प-फ इति दशाक्षराणां न्यासः क्रियते । अनाहतस्य द्वादशदलेषु क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठ इति द्वादशाक्षराणि न्यस्यन्ते । विशुद्धेः षोडशदलेषु अ-आ-इ-ई-उ-ऊ-ऋ-ॠ-लृ-ॡ-ए-ऐ-ओ-औ-अं-अः इति षोडशाक्षराणां

न्यासः। आज्ञाचक्रस्थद्विदले ळ-क्ष इति वर्णद्वयं न्यसेत्। एवं षट्चक्रस्थपद्मदलेषु न्यस्तानि एकपञ्चाशदक्षराणि रुद्रबीजानि इति कथ्यन्ते।

**.................... वक्ष्याम्याधारषट् क्रमात् ।**
**कञ्जस्य चाध आधारं वादिसान्तं चतुर्दले ।।**
**स्वाधिष्ठाने च षट् पत्रे बादिलान्तं क्रमान्न्यसेत् ।**
**ततो मणौ दशदले डादिफान्तं न्यसेत्ततः ।।**
**पट्यां कण्ठे षोडशक आदिवर्गं न्यसेत्ततः ।।**
**आज्ञायां द्विदले चोर्ध्वं ळक्षयुग्मं न्यसेत्ततः ।**
**इत्येकपञ्चाशद्वर्णाः रुद्रबीजानि मुख्यतः ।।**
**एतानि शिवचक्राणि .................. ।**

(वा.शु.आ.,९.१८-२२)

(पश्यत – षट्चक्राणि)

## शिवचिह्नानि

लिङ्गरुद्राक्षभस्मानि शिवचिह्नानीत्युच्यन्ते । पञ्चाक्षरीजपोऽपि शिवचिह्नम् । वातुलशुद्धागमे अजिनादिकमपि शिवचिह्नत्वेन गृह्यते ।

**धृतश्रीभूतिरुद्राक्षः प्रयतो लिङ्गधारकः ।**
**जपेत् पञ्चाक्षरीविद्यां शिवतत्त्वप्रबोधिनीम् ।।**

(सि.शि.,८.१)

**दण्डकौपीनकाषायजटावल्कलधारकः ।**
**मुण्डी वा शिवचिह्नानि धारयेदजिनादिकम् ।।**

(वा.शु.आ.,१०.४७)

(पश्यत – शिवमुद्राः)

## शिवजगन्मयस्थलम्

अङ्गस्थलगतमाहेश्वरस्थलस्य नवविधाङ्गस्थलेषु अष्टमं स्थलम्। एकोत्तरशतस्थलेषु च त्रयोविंशतितमम् । जगदिदं शिवमयः शिवरूपेणैव विराजते ।

**सर्वगत्वनिरासस्थलम्, अनन्तरं शिवजगन्मयस्थलम् । अथ भक्तदेहिकलिङ्गस्थलम् ।**

(सि.शि.तत्त्व.प्र.,१०.६)

**यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः ।**
**तथा शिवात् समुत्पन्नं शिव एव चराचरम् ।।**
**पत्रशाखादिरूपेण यथा तिष्ठति पादपः ।**
**तथा भूम्यादिरूपेण शिव एको विराजते ।।**

(सि.शि.१०.६५,७०)

## शिवज्ञानम्

परशिवस्य ज्ञानम्, शिवजीवैक्यज्ञानमिति यावत् । तस्मिन् समुत्पन्ने परानन्दः जायते । योगी अन्यत्र न रमते । तदिदं रागादीनाम् अज्ञानस्य च नाशकं मुक्तिसाधनं च ।

**शिवज्ञाने समुत्पन्ने परानन्दः प्रकाशते ।**
**तदासक्तमनाः योगी नान्यत्र रमते सुधीः ।।**
**कामक्रोधमहामोहमदमात्सर्यवारणाः ।**
**शिवज्ञानमृगेन्द्रस्य कथं तिष्ठन्ति सन्निधौ ।।**
**तमोमूला हि सञ्जाता रागद्वेषादिपादपाः ।**
**शिवज्ञानकुठारेण छेद्यन्ते हि निरन्तरम् ।।**
**शिवज्ञाने समुत्पन्ने सहस्रादित्यसन्निभे ।**
**कुतः तमोविकाराः स्युः महतां शिवयोगिनाम् ।।**

(सि.शि., १३.११,१७,२०-२१)

**तेषामेव शिवज्ञानं संसारच्छेदकारणम् ।**

**शिवज्ञानं महाघोरसंसारार्णवतारकम् ।।**

(वे.सा.वी.चिं.,१.७०, पृ.१४; वी.प्र., पृ.५३, श्लो.५)

**सकलोपनिषत्प्रतिपाद्यशिवजीवैक्यबोधकशिवज्ञानविद्या-रतानामेव वीरशैवाभिधानत्वमिति उत्तरकामिकादिषु ।**

(कै.सा., पृ.५)

## शिवतत्त्वम्

षट्त्रिंशत्तत्त्वेष्वेकम् ।

१. एकधा – निर्गुणः शिवः । तत्त्वपञ्चकयुक्तमपि एकमेव ।

**एक एव शिवस्साक्षाच्चिदानन्दमयो विभुः ।**

**निर्विकल्पो निराकारः निर्गुणो निष्प्रपञ्चकः ।।**

(सि.शि.,५.३३)

**लिङ्गाकृतिर्ज्योतिरेव शिव सत्यादिलक्षणः ।।**

(क्रि.सा.,भा-१, ४.२६)

**शिवमेकं विजानीयात् .................. ।।**

**शिवं परात्परं सूक्ष्मं नित्यं सर्वगताव्ययम् ।**

**अनिन्दितमनौपम्यमप्रमाणमगोचरम् ।।**

(शि.त.र.,भा-१.६.१३; १.४.२८)

एकमेव परब्रह्म सच्चिदानन्दलक्षणम् ।

शिवतत्त्वं शिवाचार्याः स्थलमित्याहुरादरात् ।।

(अ.सू.,२.२)

२. त्रिधा – शिवः, सदाशिवः, महेशश्चेति त्रिधा ।

**शिवतत्त्वं महासेन निष्कलं चेति कीर्तितम् ।।**

**सकलं निष्कलं चैव सदाशिवमिहोच्यते ।**

**महेशं सकलं विद्यात् त्रिविधास्ते भवन्ति वै ।।**

(शि.त.र.,भा–१,१.६.१०–११)

३. पञ्चधा – सदाद्युपाधिभेदेन तच्छिवतत्त्वं पञ्चधा ।

**सच्च चिच्च तथानन्दो नित्यं पूर्णमिति क्रमात् ।**

**शिवतत्त्वं पञ्चविधम् ................. ।।**

(शि.त.र.,भा–१, १.७.२५)

## शिवदीक्षा = शैवदीक्षा

वीरशैवदीक्षा । गुरुणा दीयमाना शिवत्वसम्पादिका दीक्षा । शिवदीक्षिता एव लिङ्गिनः भवन्ति न त्वन्ये । सा च वेधादीक्षा, मन्त्रदीक्षा, क्रियादीक्षा – इति त्रिधा ।

**शिवदीक्षान्वितैः पक्वमभक्तानवलोकितम् ।**

(चं.आ.,क्रि.पा.,९.४१)

(पश्यत – त्रिविधदीक्षाः)

## शिवद्विजाः

१. आदिशैवा एव शिवद्विजा इति उच्यन्ते । तत्र कौशिकः, कश्यपः, भरद्वाजः, अत्रिः, गौतमः–एते पञ्चर्षयः आदिशैवाः, शिवस्य पञ्चवक्त्रेष्वादौ दीक्षितत्वात् । तद्वंशानां यद्यपि पुनर्दीक्षा नास्ति, उपनयनात्पूर्वं मण्डले शङ्करं संपूज्य पित्रादिभिः मन्त्रोपदेशः कार्यः । एते लोकपूज्याः शिवद्विजाः स्वपरार्थकं यजनं कुर्वन्ति ।

**आदिशैवास्तु विज्ञेयाः कौशिकाद्या नगात्मजे ।।**

**कौशिकः कश्यपश्चैव भरद्वाजात्रिगौतमाः ।**

आदावेते महादेवि पञ्चवक्त्रेषु दीक्षिताः ।।
तद्वंश्यानां पुनर्दीक्षा नास्ति सा चेत्तु तत्फलम् ।
किन्तूपनयनादूर्ध्वं मण्डले पूज्य शङ्करम् ।।
पित्रादिभिः चोपदेश्य मम मन्त्रादिकाः क्रियाः ।।
दत्वा तु भस्मताम्बूलं मद्भक्तानां च भोजनम् ।
दक्षिणां च ततो दद्यात् वित्तशाठ्यं न कारयेत् ।।
ये ते शिवद्विजाः प्रोक्ताः लोकपूज्या भवन्ति हि ।
एभिरेव प्रकर्तव्यं यजनं स्वपरार्थकम् ।।

(सू.आ.,क्रि.पा.,७.७-११)

(पश्यत - वा.शु.आ., १०.१८, २०-२४)

२. सूक्ष्मागमे यथा तथा चन्द्रज्ञानागमेऽपि कौशिकाद्याः महर्षयः एव आदिशैवा इति उच्यन्ते । परन्तु तेषां शिवद्विजत्वेन परिगणनं नास्ति। त्रिविधदीक्षाद्वारा ते लिङ्गत्रयविशिष्टाङ्गत्रयसुशोभिनः भवन्ति । तेषां दीक्षा आगमान्तविधिना गुरुणा एव क्रियते । तेषामपि शाम्भवव्रतम् ।

आदिशैवास्तु विज्ञेयाः कौशिकाद्या महर्षयः ।
कौशिकः कश्यपश्चैव भरद्वाजात्रिगौतमाः ।।
आदावेते महेशस्य पञ्चवक्त्रेषु दीक्षिताः ।
गुरोर्मुखात् दीक्षिता हि तद् गोत्राश्चान्यगोत्रिणः ।।
आगमान्तोक्तविधिना शाम्भवव्रतसेविनः ।
वेधामनुक्रियाभिख्यदीक्षात्रयविधानतः ।।
लिङ्गत्रयपरिस्फूर्जदङ्गत्रितयशोभिनः ।
आदिशैवा इति भुवि निगद्यन्ते बृहस्पते ।।
महेशस्य प्रतिष्ठायामुत्सवे स्नपनादिषु ।
आचार्यत्वे ह्यदिकृता आदिशैवा जगन्नुताः ।।

(चं.आ.,क्रि.पा.,१०.६-१०)

चन्द्रज्ञानागमोक्तरीत्या पूर्वशैवा हि शिवद्विजाः । पञ्चगोत्रयुक्ताः अनूढासु कन्यासु जाताः । शैवागमपूर्वभागोक्तदीक्षां एतेषु केचन स्वीकुर्वन्ति, अन्ये च न स्वीकुर्वन्ति । एवं शिवद्विजाः द्विधा । पूर्वभागोक्तविधिना संस्कृतास्ते अलिङ्गिनः । स्वार्थे परार्थे यजनं कर्तुं कारयितुं च तेषामधिकार अस्ति । देवस्य अर्चने, कैङ्कर्ये शिवालयपरिष्कारेऽपि तेषामधिकारः विद्यते । परन्तु प्रतिष्ठादिषु कर्मसु तेषाम् आचार्यत्वं नास्ति । यद्यपि ते दीक्षिताः तेषां कानीनत्वात् तदधिकारः नास्ति । ये तत्र अदीक्षिताः तेषां केवलं स्वार्थयजने अधिकारः न तु परार्थयजने । ते तु देवलकाः कथ्यन्ते सर्वकर्मविदूराः । शिवार्चकत्वात् शैवत्वं तेषामस्ति । परन्तु शिवालयादन्यदेशे तेषां स्पर्शोऽपि दोषाय ।

**पूर्वशैवा हि विज्ञेया कानीनास्तु शिवद्विजाः ।**
**अनूढासु हि कन्यासु प्रभूताः पञ्चगोत्रिणः ॥**
**दीक्षाणामिह शैवीनां पूर्वभागोदितात्मनाम् ।**
**ग्रहणाग्रहणाभ्यां च द्विविधास्ते शिवद्विजाः ॥**
**पूर्वकाण्डोक्तदीक्षाभिः संस्कृतास्ते ह्यलिङ्गिनः ।**
**स्वार्थे परार्थे यजनेऽधिकृतास्ते भवन्ति हि ॥**
**अर्चकत्वे हि देवस्य कैङ्कर्यकरणेऽपि च ।**
**शिवागारपरिष्कारेऽधिकृतास्ते सुरार्चिता ॥**
**नाचार्यत्वे ह्येषां कानीनत्वादसंशयम् ॥**
**अत येऽदीक्षिता एव परार्थयजने रताः ।**
**ते हि देवलकाः प्रोक्ताः सर्वकर्मविगर्हिताः ॥**
**शिवागारादन्यदेशे तेषां स्पर्शोऽपि दोषदः ।**

(चं.आ.,क्रि.पा.,१०.११-१७)

(पश्यत – आदिशैवाः)

## शिवधर्मः

शिवेनोक्तः तारतम्यरहितः वर्णाश्रमधर्मः । स च वीरशैवानाम् । वर्णाश्रमधर्मव्यवस्था द्विधा दृश्यते । एका शिवेन कृता, अन्या ब्रह्मणा कृता। शिवोक्तव्यवस्था तु वीरशैवानाम् । ब्रह्मोक्तव्यवस्था तु शिवसंकारहीनानाम् । स च पैतामहधर्म इत्युच्यते । ब्रह्मणा निर्दिष्टा वर्णाश्रमधर्मव्यवस्था तु तरतमभावघटिता । परन्तु शिवेन निर्दिष्टा व्यवस्था तारतम्यरहिता । तत्र शिवभक्तिपूताः सर्वेषां ब्राह्मणादिवर्णानां जनानां समानता व्यवस्थिता । तत्र शिवभक्तिः शिवदीक्षा च सर्वेषां समानताधायिकी शक्तिः ।

**वर्णाश्रमादिधर्माणां व्यवस्था हि द्विधा मता ।**
**एका शिवेन निर्दिष्टा ब्रह्मणा कथिताऽपरा ।।**
**शिवोक्तधर्मनिष्ठा तु शिवाश्रमनिषेविणाम् ।**

(वी.प्र., पृ.२४, श्लो.७२-७३)

**शिवसंस्कारहीनानां धर्मः पैतामहः स्मृतः ।**

(सि.शि.,१०-३६)

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चान्यजातयः ।**
**लिङ्गधारणमात्रेण शिवा एव न संशयः ।।**

(पार. आ.,१.५८)

**शिवभक्तिसमावेशे क्व जातिपरिकल्पना ।**
**इन्धनेष्वग्निदग्धेषु को वा भेदः प्रकीर्त्यते ।।**

(सि.शि.,११.५५)

## शिवधर्मिणी दीक्षा

दीक्षाभेदः । सबीजदीक्षायाः शिवधर्मिणी लोकधर्मिणीति द्विविधदीक्ष-योरन्यतरा । संस्करणद्वारा धर्माधर्मात्मकप्रारब्धकर्मशोधिका दीक्षा ।

**सबीजा च द्विधा भिन्ना प्रथमा शिवधर्मिणी ।**

**धर्माधर्मात्मकं कर्म प्रागागामि विचित्रकम् ।।**

**संस्कृत्य शोध्यते यत्र सैवोक्ता शिवधर्मिणी ।**

(शि.त.र., भा-३, ९.७.२१-२२)

**इयं च भौतिकीदीक्षा, नैष्ठिकीदीक्षा इति द्विधा ।**

**भौतिकी नैष्ठिकी चेति द्विधा सा शिवधर्मिणी ।**

(शि.त.र.,भा-३, ९.७.२४)

(पश्यत – दीक्षाभेदः)

## शिवपञ्चाक्षरी

रुद्राध्यायस्याष्टमे नमकानुवाके पञ्चाक्षरीमन्त्रः ''नमः शिवाय'' इति विद्यते । एष एव शिवपञ्चाक्षरी । ॐकारपूर्वकत्वे चायं षडक्षरीमन्त्रस्वरूपं प्राप्नोति । पञ्चाक्षरीविद्येति षडक्षरीविद्येति च तयोः नामान्तरे । अस्य मन्त्रस्य ऋषिः वामदेवः । छन्दःपङ्क्तिः । शिवः देवता । बीजं प्रणवः । शक्तिः उमा । न्यासे ऋष्यादीनामुक्तिरावश्यकी ।

**त्रिकालमर्चयेन्नित्यं शिवपञ्चाक्षरीं जपन् ।**

(पार.आ.,७.१००)

(पश्यत – पञ्चाक्षरः)

**वामदेवः ऋषिश्चास्य पाङ्क्तिश्छन्द उदाहृतः ।**

**देवता स शिवः साक्षात् प्रणवो बीज उच्यते ।।**

**उमा शक्तिरिति प्रोक्ता न्यासश्चैवं षडक्षरैः ।**

(चं.आ.,क्रि.पा.,८.११; सू.आ.,क्रि.पा., ३.२३-२४)

## शिवपूजा

प्राणलिङ्गभावलिङ्गानुसन्धानपूर्वकं क्रियमाणा पूजा लिङ्गपूजा । तत्र वामहस्ते शिवलिङ्गं संस्थाप्य दक्षिणहस्तेन पूजा कर्तव्या । इष्टलिङ्गे दृष्टियोगं

संस्थाप्य अन्तर्लिङ्गानुसन्धानपूर्वकं पूजा कर्तव्या इति यावत् । इयमेव कर्म इत्युच्यते न तु यागादिकम् । शिवलिङ्गपूजाविषये शिवपूजकानां जन्मसूतकम्, मरणसूतकम्, रजस्सूतकम्, उच्छिष्टसूतकम्, जातिसूतकम् इत्येवं न किमपि सूतकं विद्यते, नित्यकर्मत्वात् । तस्मात् । अशुचिकालेऽपि शिवपूजादिकं कर्तव्यमेव । परामुक्तिः शिवपूजायाः फलम् ।

**शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते ॥**
**शिवपूजापरो भूत्वा सर्वकर्मविसर्जयेत् ।**
**न तस्य सूतकं किञ्चित् प्राणलिङ्गाङ्गसङ्गिनः ।**
**जन्मनोत्थं मृतोत्थं च विद्यते परमार्थतः ॥**
**लिङ्गार्चनरतायाश्च ऋतौ नार्याः न सूतकम् ।**
**तथा प्रसूतिकायाश्च सूतकं नैव विद्यते ॥**
**गृहे यस्मिन् प्रसूता स्त्री सूतकं नात्र विद्यते ।**

(सि.शि.,९.२२–२३,३९, ४३–४५)

**विद्यारूपं धनं सौख्यं सत्कुलं हीनरोगता ।**
**स्वर्गवैराग्यमोक्षाश्च शिवपूजाविधेः फलम् ॥**

(शि.त.र.,भा–३, ८.७.२५)

## शिवप्रसादः

शिवार्पितप्रसादः शिवप्रसादः । शिवार्पितप्रसादो नाम गुरुलिङ्ग-जङ्गमार्पितप्रसादः । तत्र शिवप्रसादो नाम लिङ्गप्रसादः । लिङ्गप्रसादो सिद्धप्रसादेति कथ्यते । शिवप्रसादस्वीकारेण जीवः शुद्धमानसः भवति । शिव प्रसादप्राप्यसाधकः प्रसादीति कथ्यते । सर्वेषां भक्तिः प्रसादमूला । शिवप्रसादे प्राप्ते साधकः कर्ममुक्तः सन् शिवभावितात्मा भवति । स एव प्राणलिङ्गीति कथ्यते । शिवप्रसादसम्पत्या शिवभावप्राप्तिः । तदा शिवादन्यत् जगज्जालं यद्यपि दृश्यते, परमार्थतया न दृश्यते ।

शिवप्रसादयोगेन संसारकारणीभूता मोहग्रन्थिः भिद्यते तदा मुक्तिः प्राप्यते । यथा सूर्योदयं विना तमसः लयं न भवति तथा शिवप्रसादं विना संसारच्छेदः न भवति । गुरुलिङ्गजङ्गमानां मध्ये एकस्य प्रसादः त्रयाणामपि प्रसाद इति संभाव्य स्वीकुर्यात् । त्रयाणां लिङ्गानां तेषां ऐक्यं च संभाव्य स्वीकरणीयः प्रसादः सिद्धप्रसादः ।

**अथ वक्ष्ये प्रसादस्य रूपं तद्वैभवं शृणु ।**
**गुरुलिङ्गजङ्गमानां भुक्तशेषः प्रसादकः ॥**
**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्त्यैकसाधनः ।**

(चं.आ.,क्रि.पा.,५.२०-२१)

**स्वकर्मपरिपाकेन प्रक्षीणमलवासनः ।**
**शिवप्रसादाज्जीवोऽयं जायते शुद्धमानसः ॥**
**शिवप्रसादं यद्द्रव्यं शिवाय विनिवेदितम् ।**
**निर्माल्यं तत्तु शैवानां मनोनैर्मल्यकारणम् ॥**
**शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ।**
**प्रसादमूला सर्वेषां भक्तिरव्यभिचारिणी ।**
**शिवप्रसादहीनस्य भक्तिश्चापि न सिध्यति ॥**
**शिवप्रसादे सति योगभाजि सर्वं शिवैकात्मतया विभाति ।**
**स्वकर्ममुक्तः शिवभावितात्मा स प्राणलिङ्गीति निगद्यतेऽसौ ॥**
**शिवप्रसादसंपत्त्या शिवभावमुपेयुषि ।**
**शिवादन्यज्जगज्जालं दृश्यते न च दृश्यते ॥**
**शम्भोः शिवप्रसादेन संसारच्छेदकारिणा ।**
**मोहग्रन्थिं विनिर्भिद्य मुक्तिं यान्ति विवेकिनः ॥**
**विना प्रसादमीशस्य संसारो न निवर्तते ।**

(सि.शि.,५.५२; ११.७-८, ७१, ७७; १८.५८-६०)

**द्वयोस्त्रयाणां वाऽलाभे ग्राह्योऽयं पादतीर्थवत् ।।**

(चं.आ.,क्रि.पा.,५.२१)

(पादतीर्थवत् इत्यस्मिन् विषये पश्यत – चं.आ.,क्रि.पा.,५.६–९)

**ज्ञात्वा लिङ्गत्रयं सम्यक् तदैक्यं च वरानने ।**
**लिङ्गार्पितप्रसादोऽयं सिद्ध इत्यभिधीयते ।।**

(सू.आ.,क्रि.पा.,८.२४)

## शिवप्रसादमाहात्म्यम्

प्रसादिस्थलान्तर्गतसप्ताङ्गस्थलेष्वेकम् ।

**शिवप्रसादमाहात्म्यमिति सप्तप्रकारकम् ।।**

(सि.शि.,११.५)

(पश्यत – प्रसादमाहात्म्यस्थलम्)

## शिवप्रसादी

शिवदीक्षायुक्तः सन् शिवपूजालब्धं शिवप्रसादं यः भुङ्क्ते सः शिवप्रसादी ।

**शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ।।**

(सि.शि.,११.८)

**शिवप्रसादिन इति वचो वक्तुं न पार्यते ।**
**शिवदीक्षामन्तरेण न ते लिङ्गप्रसादिनः ।।**

(पं.च.,१०.१०९, पृ.८७)

## शिवभक्तः

शिवं भजतीति शिवभक्तः । विभूतिरुद्राक्षादि संयुक्तः लिङ्गधारी पञ्चाक्षरजपे निरतः शिवभक्तः । श्रेष्ठः, शिवः इव मान्यः । कर्मबन्धरहितः एषः न निन्द्यः । शिवभक्तेषु नास्ति जातिकल्पना । शिवभक्ताय दीयमानं दानं श्रेष्ठम् । शिवभक्तस्य शरीरं न दहेत् ।

**भूतिरुद्राक्षसंयुक्तो लिङ्गधारी सदाशिवः ।**
**पञ्चाक्षरजपोद्योगी शिवभक्त इति स्मृतः ।।**
**ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा शूद्र एव वा ।**
**अन्त्यजो वा शिवे भक्तः शिववन्मान्य एव सः ।।**

(सि.शि.,९.१, ११.५४)

## शिवभक्तकर्तव्यानि

दीक्षा, लिङ्गधारणम्, विभूतिधारणम्, रुद्राक्षधारणम्, गुरुलिङ्गजङ्गमार्चनम्, पञ्चाक्षरजपः, भक्तिमार्गक्रिया, प्रसादस्वीकारः - इत्येतानि शिवभक्तस्य कर्तव्यानि ।

**दीक्षालिङ्गधृतिश्चैव विभूतेरपि धारणम् ।**
**रुद्राक्षधारणं चैव पञ्चाक्षरजपस्तथा ।।**
**भक्तिमार्गक्रिया चैव गुरोर्लिङ्गस्य चार्चनम् ।**
**जङ्गमस्य तथा ह्येषां प्रसादस्वीकृतिस्तथा ।।**
**अत्र दानत्रयं प्रोक्तं उपाधिनिरुपाधिनी ।**
**सहजं चेति निर्दिष्टं समस्तागमपारगैः ।।**
**एतानि शिवभक्तस्य कर्तव्यानि प्रयत्नतः ।**

(सि.शि.,५.२८-३१)

## शिवभक्तपूजा

शिवभक्तानुद्दिश्य क्रियमाणः सत्कारः पूजनं च । अतिथिरूपेण आगताय शिवभक्ताय कृताञ्जलिः सन् अभ्युत्थानादिना स्वागतं व्याहरेत् । आसनाभ्यञ्जनस्नानवस्त्रादिना च पूजयेत् ।

**तस्मादतिथिमायान्तमभिगच्छेत्कृताञ्जलिः ।**
**अभ्युत्थानाभिगमनं स्वागतं चासनं प्रियम् ।।**

**पादोदकमनुव्रज्या स्वर्गसोपानसप्तकम् ।**

**आसनाभ्यञ्जनस्नानवस्त्रधान्याङ्गनादिभिः ।।**

**पूजयेच्छिवभक्तं यः स याति परमां गतिम् ।**

(शि.त.र.,भा-३, ८.८.३६-३८)

## शिवभक्तिः

शिवे भक्तिः । शुद्धकर्मपरिणामेन शुद्धान्तःकरणे जीवात्मनि शिवकारुण्यादेव ऐश्वरी भक्तिः स्फुटतया जायते । सा संसारभयतारिणी । शिवभक्तस्य सुकृतं दुष्कृतं चापि नास्ति । तत्र न वर्तते जातिपरिकल्पना ।

**शुद्धान्तःकरणे जीवे शुद्धकर्मविपाकतः ।**

**जायते शिवकारुण्यात् प्रस्फुटा भक्तिरैश्वरी ।।**

**दुर्लभा हि शिवे भक्तिः संसारभयतारिणी ।**

**किं वेदैः किं ततः शास्त्रैः किं यज्ञैः किं तपोव्रतैः ।**

**नास्ति चेत् शाङ्करी भक्तिः देहिनां जन्मरोगिणाम् ।।**

**शिवभक्तिविहीनस्य सुकृतं चापि निष्फलम् ।**

**शिवभक्तिसमावेशे क्व जातिपरिकल्पना ।।**

(सि.शि.,५.५३, ११.४७-४९,५५)

## शिवमन्त्रः

नमः शिवाय इति पञ्चाक्षरीमन्त्रः । ॐकारपूर्वकत्वे षडक्षरीमन्त्रः । नमः शब्दं आदौ प्रयुज्य शिवायेति ततः परं प्रयुज्यते चेत् पञ्चाक्षरमन्त्रः ।

**नमः शब्दं वदेत्पूर्वं यान्तं शिवपदं ततः ।**

**प्रणवेन समायुक्तं षडक्षरमिति स्मृतम् ।।**

(सू.आ.,क्रि.पा.,३.१३; चं.आ.,क्रि.पा.,८.५; सि.शि.,८.७)

**जिह्वाग्रे शिवमन्त्रजाप्यपठनं फाले त्रिपुण्ड्राङ्कनम्**

**रुद्राक्षवलयं गले ह्युरसि लिङ्गायत्तसज्जां पराम् ।**

**चित्ते त्वत्पदचिन्तनं शिव सदा धत्ते मुदा**
**योगिराट् तं स्तोतुं मन उत्सहत्युत मम श्रीवीरमाहेश्वरम् ।।**

(वी.शै.उ., १.१.७९, पृ.४७)

**शिवमन्त्रेण वा धार्यं मन्त्रेणाष्टाक्षरेण वा ।**

(वी.प्र., पृ.८६, श्लो.४)

## शिवमुद्राः

निराभारीवीरशैवस्य षट्सु धर्मेष्वेकतमः । शिवभक्तिः, शिवज्ञानम्, शिवमुद्रा, शिवव्रतम्, शिवलिङ्गार्चनश्रद्धा, वृत्त्यन्तरनिरोधनम् इति षड्धर्माः । तत्र शिवमुद्राः षट्संख्याकाः – कन्था, कमण्डलुः, विभूतिः, रुद्राक्षः, दण्डः, कौपीनं चेति ।

**शिवभक्तिः शिवज्ञानं शिवमुद्रा शिवव्रतम् ।**
**शिवलिङ्गार्चनं श्रद्धा वृत्त्यत्यन्तरनिरोधनम् ।**
**एते धर्मा यत्र सन्ति स भाराभारवर्जितः ।।**

(सू.आ., ७.७९)

**दण्डकौपीनकाषायजटावल्कलधारकः ।**
**मुण्डी वा शिवचिह्नानि धारयेदजिनादिकम् ।।**
**पूर्वोक्तशिवमुद्रासु तद्धारिषु च सर्वतः ।**

(वा.शु.आ.,१०.४७, ४९)

(पश्यत – शिवचिह्नानि)

## शिवमेधः

शाम्भवव्रतनिष्ठानाम् इष्टलिङ्गैकसेविनां देहावसने क्रियमाणम् आराधनम् । अयं च अवसानविधिः अन्त्येष्टिविधिः, समाधिविधिः, पितृमेधश्चेति व्यवह्रियते । वीरशैवानां देहस्य दहनक्रिया नास्ति । सर्वेषां समाधिविधिरेव विधीयते ।

**शाम्भवव्रतनिष्ठानामिष्टलिङ्गैकसेविनाम् ।**

**देहावसाने कर्तव्यः शिवमेधविधिर्महान् ।।**

**शिवे परे प्रविष्टानां मेध आराधनात्मकः ।**

**शिवमेध इति ख्यातः करणीयो मुमुक्षुभिः ।**

**विशिष्टः पितृमेधोऽयं शिवमेध इतीर्यते ।**

**ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ।**

**चीर्णव्रतो यदि मृतस्तस्य देहं न दाहयेत् ।।**

(चं.आ., च.पा.,१.६-७, मकुट., च.पा.,१.९-१०,१९)

(पश्यत - चं.आ., च.पा., पटलाः१-८; मकुट., च.पा., पटलाः १-१०, तत्र शिवमेधसम्बद्धाः विधयः प्रपञ्चिताः)

## शिवयज्ञाः

कर्म, तपः, जपः, ध्यानम्, ज्ञानं चेति वीरशैवानां पञ्चयज्ञा एव शिवयज्ञाः ।

**पञ्चधा कथ्यते सद्भिः तदेव भजनं पुनः ।**

**तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम्**

**इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः ।।**

(सि.शि.,९.२१, २४)

(पश्यत - पञ्चयज्ञाः)

## शिवयोगः

योगभेदः । शिवेन लिङ्गेन सह जीवस्य अङ्गस्य समायोगः । लिङ्गाङ्गसामरस्यम् इति यावत् । शिवयोगी जगज्जालं चिद्रूपत्वेन पश्यति । शिवयोगेन जीवः शिवो भवति । शिवयोगः पञ्चधा उक्तः ।

**ये पश्यन्ति जगज्जालं चिद्रूपं शिवयोगतः ।**

(सि.शि., ११.३७)

**कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् ।**
**मानवः शिवयोगेन शिवो भवति निश्चयः ।।**

(कै.उ.,२.१२; लिं.पु–लिं.धा.चं .,पृ.१४४, श्लो.११)

**भ्रमद्भ्रमरचिन्तायां कीटोऽपि भ्रमरायते ।**
**शिवचिन्तासमाक्रान्तः शिवरूपी भवेद् ध्रुवम् ।।**

(वीरागमे – सि.शि. तत्त्व.प्र.व्याख्यायां उद्धृतः. १६.२२)

**नैरन्तर्येण सम्पन्ने भावे ध्यातुं शिवं प्रति ।**
**तद्भावो जायते यद्वत् क्रिमेः कीटस्य चिन्तनात् ।।**

(सि.शि.,१६.२२)

**ज्ञानं शिवमयं भक्तिश्शैवी ध्यानं शिवात्मकम् ।**
**शैवव्रतं शिवार्चेति शिवयोगो हि पञ्चधा ।।**

(शि.यो.प्र.,१.१५)

(पश्यत – योगः)

## शिवयोगसमाधिस्थलम्

प्राणलिङ्गिस्थलस्य पञ्चविधाङ्गस्थलेषु तृतीयम् । एकोत्तरशतस्थलेषु च चतुस्त्रिंशं स्थलम् ।

महालिङ्गं परब्रह्म । जीवः प्राणः । तयोः एकभावचिन्तनात् शिवयोगी समाधिस्थः इति कथ्यते । अस्य समाधेः स्वरूपं एवमस्ति –

अन्तः पट्चक्रोत्पन्नानि षट्कमलानि मूलतः आधारचक्रादारभ्य भ्रूमध्यस्थिताज्ञाचक्रपर्यन्तं भावयेत् । भ्रूमध्यादूर्ध्वं ब्रह्मादिस्थानभूते भागे, ब्रह्मरन्ध्रे इति यावत्, सहस्रदलमम्बुजं भावयेत् । तस्य मध्ये (विमलं) निर्मलं चन्द्रबिम्बं भावयेत् । चन्द्रबिम्बमध्ये वालाग्रसमानं सूक्ष्मरन्ध्रं विजानीयात् । तत् सूक्ष्मरन्ध्रमेव कैलासस्थानमिति कथ्यते । तत्र स्थितं सर्वकारणकारणं शम्भुं ध्यायेत् । अयमेव शिवयोगसमाधिः । तत्सम्बन्धिस्थलं शिवयोगसमाधिस्थलम् ।

**प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम् ।**

**शिवयोगसमाधिश्च ततो लिङ्गनिजस्थलम् ।।**

**परब्रह्ममहालिङ्गं प्राणो जीवः प्रकीर्तितः ।**

**तदेकभावमननात् समाधिस्थः प्रकीर्तितः ।।**

**अन्तः षट्चक्ररूढानि पङ्कजानि विभावयेत् ।**

**ब्रह्मादिस्थानभूतानि भ्रूमध्यान्तानि मूलतः ।।**

**भ्रूमध्यादूर्ध्वभागे तु सहस्रदलमम्बुजम् ।**

**भावयेत् तत्र विमलं चन्द्रबिम्बं तदन्तरे ।।**

**सूक्ष्मरन्ध्रं विजानीयात् तत्कैलासपदं विदुः ।**

**तत्रस्थं भावयेच्छम्भुं सर्वकारणकारणम् ।।**

(सि.शि., १२.४–५, २४–२७)

## शिवयोगी

शिवयोगसाधकस्सिद्धो वा यस्य ज्ञानं शिवमयम्, भक्तिः शैवी, ध्यानं शिवात्मकम्, व्रतं च शिवार्चनं भवति । सः सर्वत्र समदर्शनः साक्षाच्छिव एव भवति । चिदानन्दरूपपराकाशशिवानुभवयोगेन शिवयोगी भवति ।

**जितकामा जितक्रोधा मोहग्रन्थिविभेदिनः ।**

**समलोष्ठाश्मकनकास्साधवश्शिवयोगिनः ।।**

(श.त्र., पृ.३८–३९ ; वी.प्र., पृ.७२, श्लो.२३, २८)

**निःस्पृहा निरहङ्कारा वर्तन्ते शिवयोगिनः ।।**

**निर्धूतमलसंस्पर्शास्ते स्मृताः शिवयोगिनः ।**

(सि.शि., ११.३९–४०, ३७)

**शिवयोगिशरीरे तु नित्यं सन्निहितः शिवः ।**

**योगीन्द्रपूजनात् तस्मात् साक्षात् सम्पूजितः शिवः ।।**

(लिं.धा.चं., पृ.२१३)

**चिदानन्दपराकाशशिवानुभवयोगतः ।**

**शिवयोगीति नामोक्तिः यस्य याथार्थ्ययोगिनी ।।**

(सि.शि.,१.२१)

## शिवरूपम्

शिवस्य स्वरूपम् । अणोरणीयान् महतो महीयान् इति शिवस्य रूपम्। स एव महान्, पुरातनः, विश्वम्, पुरुषः, ईशः, हिरण्मयः इत्यादि शिवस्वरूपम् । अपाणिपादः, अचिन्त्यशक्तिः, अचक्षुस्सन् पश्यति, अकर्णः सन् शृणोति, बुद्ध्यादि व्यतिरिक्तः-इत्यादिस्वरूपविशिष्टस्य शिवस्य वेत्ता नास्ति। सर्वदा चिद्रूपः, स एव वेदैर्वेद्यः । तस्य नाशः नास्ति । जन्मादिर्नास्ति । देहेन्द्रियबुद्धिर्नास्ति । एवमेव सः पञ्चभूतात्मकोऽपि न भवति ।

**अणोरणीयानहमेव तद्वत् महानहं विश्वमहं विचित्रम् ।**

**पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ।।**

(कै.उ.,२.२०)

**अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः।**

**अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाऽहम् ।।**

**वेदैर्वं नेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।।**

**न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति ।**

**न भूमिरापो मम वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च ।।**

(कै.उ., २.२०-२३)

## शिवलाञ्छनानि

विभूतिरुद्राक्षादयः शिवलाञ्छनानि ।

**लाञ्छनानां हि शैवानां भस्मादीनामनारतम् ।**

(चं.आ., क्रि.पा.,९.२५)

**शान्तं भद्रगुणोपेतं अक्षमालाधरं शिवम् ।**

**भस्मोद्धूलितसर्वाङ्गं शिवलाञ्छनलक्षितम् ।**

(वी.आ.उ., भा–१, १.१६४)

**अथवा शिवभक्तानां शिवलाञ्छनधारिणाम् ।।**

**शिवस्तिष्ठति सर्वात्मा शिवलाञ्छनधारिषु ।।**

(सि.शि.,९.३४, १०.७५)

(पश्यत – शिवचिह्नानि)

## शिवलिङ्गम्

१. आचारादिषड्विधलिङ्गेषु एकतमम् । इदं च उभयलिङ्गात्मकस्य प्राणलिङ्गस्यैकं स्वरूपम्, अङ्गस्थलेषु प्रसादिस्थलसम्बद्धम् । इदं लिङ्गं अघोरमुखात्मकं भवति । पञ्चाक्षरमन्त्रे शिकारः शिवलिङ्गमित्युक्तम् । तदेव दृगङ्गे प्रतिष्ठितम्। प्रसादिस्थले इच्छाशक्तिविशिष्टाघोरमुखस्वरूपाय शिवलिङ्गाय अवधानभक्त्या निरहङ्कारहस्तेन शिकारमन्त्रोच्चारपूर्वकं नेत्रेन्द्रियद्वारा रूपपदार्थं समर्पयेदिति नियमः । विद्याकलायुक्तरूपेण शोभमानं दिव्यप्रभया प्रकाशमानम्, एकमुखम्, प्रशान्तम्, अहङ्कारस्थितया इच्छाशक्त्या व्याप्यमानं च मूर्ततत्त्वमेव शिवलिङ्गमिति कथ्यते ।

**तथा च चरलिङ्गं च शिवलिङ्गमिति द्वयम् ।**

(अ.सू.,३.१९)

**शिवलिङ्गं तथाऽघोरमुखरूपं भवेत्पुनः ।**

**त्वगङ्गे चरलिङ्गं तु दृगङ्गे शिवलिङ्गकम् ।।**

(चं.आ.,क्रि.पा., ३.२९)

**शिकारः शिवलिङ्गं स्याद् ।**

(अ.सू.,६.४९)

**स्थले प्रसादिसंज्ञेऽस्मिन्निच्छाशक्तिसमन्विते ।**

**दृगङ्गकेऽघोरमुखे शिवलिङ्गाभिधे पुनः ।**

**भक्त्याऽवधानया रूपमहङ्कारेण चार्पयेत् ।।**

(का.आ.,क्रि.पा., ७.६२)

**विद्याकलाकलितरूपसुशोभमानं**

**दिव्यप्रभावपटलमेकमुखं प्रशान्तम् ।**

**इच्छास्वशक्तिपरिजृम्भितमूर्ततत्त्वम् ।**

**व्यक्ते ह्यहंकृतिपदे शिवलिङ्गमाहुः ।।**

(अ.सू., ३.३१)

२. परब्रह्मलिङ्गमेव शिवलिङ्गम् । इदं च परबिन्दुः, परनादः, अपरबिन्दुः, अपरनादः – इति चतुर्धा । एते च उपरि अधोभागे च वर्तमानाः । सर्वेषामधः अपरबिन्दुः वर्तते । तदूर्ध्वम् अपरनादः, तदूर्ध्वम् परबिन्दुः, तदूर्ध्वञ्च परनाद इति स्थितिः ।

**तदेव शिवलिङ्गं हि तल्लिङ्गं तु चतुर्विधम् ।**

**परबिन्दुः परो नादश्चापरौ बिन्दुनादकौ ।।**

**उपर्यधोभागनिष्ठाश्चत्वारोऽपि सुरार्चित ।।**

**अधः स्यादपरो बिन्दुस्तदूर्ध्वमपरो ध्वनिः ।**

**तदूर्ध्वं परबिन्दुः स्यात् परनादस्तदूर्ध्वगः ।।**

(चं.आ., क्रि.पा., ३.१०-११)

## शिवलिङ्गपूजकः

शिवलिङ्गमोही, शिवलिङ्गभक्तः, शिवलिङ्गपूजकः, शिवलिङ्गवीरः, शिवलिङ्गप्रसादी, शिवलिङ्गप्राणी – इति षड्विधशिवलिङ्गभक्तेष्वन्यतमः । अन्यदेवपूजां विना केवलं शिवलिङ्गैकपूजकः शिवलिङ्गपूजकः ।

**अनन्यदेवपूजः स्याच्छिवलिङ्गैकपूजकः ।**

(सू.आ.,क्रि.पा.,८.५३; शि.त.र., भा-३, ९.९.८१)

## शिवलिङ्गपूजा = शिवलिङ्गार्चनम्

शिवलिङ्गस्य पूजा, अर्चनं नामेष्टलिङ्गपूजा, अर्चनम् । तद्यथा -

**पूजाद्वादशधा प्रोक्ता शिवसिद्धान्ततत्परैः ।**

**विभूत्याभ्युक्षणं लिङ्गं करणं स्नपनं तथा ।**

**अङ्गारतापनं चैव धूपनं वीजनं तथा ।।**

**धूपप्रसरणं चैव ततो गन्धावतंसनम् ।**

**अक्षतारोपणं चैव पुष्पोपहरणं तथा ।।**

**दीपप्रसारणं चैव नैवेद्यस्य समर्पणम् ।**

**ताम्बूलस्य प्रदानं च वस्त्रप्रावरणं ततः ।।**

**एवं द्वादशधा प्रोक्ता शिवलिङ्गार्चनक्रिया ।।**

(शि.त.र.,भा-३,९.८.९३-९७)

## शिवलिङ्गप्रसादी

षड्विधशिवलिङ्गभक्तेष्वन्यतमः । सुखदुःखेषु समानमनस्कः ।

**शिवलिङ्गप्रसादी स्यात् सुखदुःखविवर्जितः ।**

(सू.आ.,क्रि.पा.,८.५४; शि.त.र.,भा-३,९.९.७२)

## शिवलिङ्गप्राणी

षड्विधशिवलिङ्गभक्तेष्वन्यतमः । स्त्रीभोगवर्जितः ।

**यस्सदा शिवलिङ्गैकप्राणी स्त्रीभोगविवर्जितः ।**

(सू.आ.,क्रि.पा., ८.५४; शि.त.र.,भा-३,९.९.७२)

## शिवलिङ्गमोही

शिवलिङ्गषड्भक्तेष्वन्यतमः । शिवलिङ्गादन्यविषयेषु निर्मोही सन् केवलं शिवलिङ्गमोहवान् शिवलिङ्गमोही ।

**शिवलिङ्गैकमोही स्यादन्यमोहविवर्जितः ।**

(सू.आ.,क्रि.पा., ८.५२; शि.त.र.,भा.–३,९.९.७०)

## शिवलिङ्गवीरः

शिवलिङ्गषड्विधभक्तेष्वन्यतमः । तीर्थक्षेत्रयात्रादिषु निस्स्पृहः सन् शिवलिङ्गैकस्पृहावान् ।

**शिवलिङ्गैकवीरः स्यात्पुण्यक्षेत्रादिनिस्पृहः ।।**

(सू.आ.,क्रि.पा., ८.५३; शि.त.र.,भा–३, ९.९.७१)

## शिवलिङ्गस्थलम्

अङ्गस्थलभूतं प्रसादिस्थलसम्बद्धं लिङ्गस्थलं शिवलिङ्गस्थलमित्युच्यते । तदिच्छाशक्तियुक्तम् । प्रसादी शिवलिङ्गोपासको भवति ।

**शिवलिङ्गस्थलं साक्षादिच्छाशक्तिप्रभावतः ।**
**तदुपासकरूपत्वात् प्रसादस्थलमुद्बभौ ।।**

(अ.सू.,३.४०)

## शिवलिङ्गार्चनक्रमः

इष्टलिङ्गस्यार्चनविधिरेव शिवलिङ्गार्चनक्रमः । महापूजाविधिक्रमः, वीरशैवार्चनक्रमः इति नामान्तराणि ।

**एवं समासतः प्रोक्तः शिवलिङ्गार्चनक्रमः ।**

(विशे.प्र.,२.३३)

(पश्यत – महापूजाविधिक्रमः, वीरशैवार्चनक्रमः, षट्स्थलपूजाविधानम्)

## शिवलिङ्गैक्यः

ऐक्यस्थलस्थः साधकः । यथा जले जलम्, अग्नौ अग्निश्च सामरस्यं प्राप्नुतः तथा जीवः शिवेन सह ऐक्यं प्राप्नोति, भिन्नत्वेन न दृश्यते । (शिवलिङ्गैक्यः नाम ऐक्यस्थलस्थः साधकः)

**शरणः शिवलिङ्गैक्यः षट्स्थलानि हि पार्वति ।**

(सू.आ.,क्रि.पा., ८.३२)

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम् ।**
**परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते ।।**

(सि.शि., २०.६१)

## शिवविद्या

वीरशैवसिद्धान्तप्रतिपादिका विद्या शिवविद्या ।

**शिवाचारार्थमथवा शिवविद्यार्थमेव वा ।**
**न तेन सदृशः कश्चिन्मुक्तिमार्गाश्रितो नरः ।।**

(शै.र.,भा–२, १७.८०, पृ.२०४)

**शिवविद्यापुण्ययात्रापवित्रनिजवर्तनः ।**

(पं.च.,१.१३३)

## शिवसंस्कारः

लिङ्गधारणादिवीरशैवसंस्काराः । शिवसंस्कारयुक्तत्वं पुरुषाणां विशुद्धिकारणम् । तेषां पूर्वाश्रयधर्मैः न कोऽप्यस्ति सम्बन्धः । ते धर्माः केवलं प्राकृतानां भवन्ति । शिवसंस्कारं प्राप्य शिवधर्मे प्रवृत्तानां वीरशैवानां प्राकृतानां धर्मेषु प्रवृत्तिर्न भवेत् । विशुद्धा प्राकृताश्च द्विविधमानुषेषु शिवसंस्कारयुक्ता एव विशुद्धाः । इतरे प्राकृताश्च । शिवसंस्कारयुक्तानां मध्ये जातिभेदः नास्ति, यथा अग्निदग्धानां काष्ठभेदानां मध्ये रूपभेदः न विद्यते । एवं शिवसंस्कारो नाम सर्वजातिभेदनिरासकः संस्कारः ।

शिवसंस्कारयोगेन विशुद्धानां महात्मनाम् ।
किं पूर्वकालिकैर्धर्मैः प्राकृतानां हि ते मताः ।।
शिवसंस्कारयोगेन शिवधर्मानुषङ्गिणाम् ।
प्राकृतानां न धर्मेषु प्रवृत्तिरुपपद्यते ।।
विशुद्धा प्राकृताश्चेति द्विविधा मानुषा स्मृताः ।
शिवसंस्कारिणः शुद्धाः प्राकृता इतरे मताः ।।
शिवसंस्कारयुक्तेषु जातिभेदो न विद्यते ।
काष्ठेषु वह्निदग्धेषु यथा रूपं न विद्यते ।।

(सि.शि., १०.३२-३४, ३७)

## शिवसादाख्यम्

षट्सादाख्येष्वेकतमम् । पराशक्तिजन्यं शान्त्यतीतकलायुक्तं प्रसन्नसूक्ष्मरूपं सर्वतत्त्वालयं शिवसादाख्यम् ।

शान्त्यतीतकलायुक्तं पराशक्तिसमुद्भवम् ।
प्रसन्नं सूक्ष्मरूपं च विद्युत्प्रभमनूपमम् ।
शुद्धं च शिवसादाख्यं सर्वतत्त्वालयं परम् ।।

(सू.आ.,क्रि.पा., १.३३)

पराशक्तिदशांशेन शिवसादाख्यसम्भवः ।।
पराशक्त्युद्भवत्वाच्च शुद्धत्वाच्छिव उच्यते ।
प्रसादं सूक्ष्मरूपं च ज्योतिरूपमिति स्मृतम् ।।
शिवतत्त्वमिदं प्रोक्तं तत्त्वानामखिलालयम् ।।

(शि.त.र.,भा-१, १.६.२०-२२)

## शिवसायुज्यम्

१. चतुर्विधमुक्तिषु शिवसायुज्यमेकतमम् । शिवैकीभावेन शिवानन्दानुभवः शिवसायुज्यरूपमुक्तिः ।

**शिवेनैकीभावेन शिवानन्दानुभव एव मोक्षः ।**

(शै.प.,पृ.१५९)

२. वीरशैवानां समरसमुक्तिः (लिङ्गाङ्गसामरस्यम्) । परन्तु यदा-कदापि शिवालयादि रक्षणार्थं यः भक्तः प्राणपरित्यागं करोति सः शिवसायुज्यं प्राप्नोति ।

**यत्र स्थावरलिङ्गानामपायः परिवर्तते ।**
**अथवा शिवभक्तानां शिवलाञ्छनधारिणाम् ।।**
**तत्र प्राणान् विहायापि परिहारं समाचरेत् ।**
**शिवार्थं मुक्तजीवश्चेच्छिवसायुज्यमाप्नुयात् ।।**

(सि.शि.,९.३४-३५)

३. लिङ्गार्चकाय सकृत् दत्तं वस्त्रादिदानं शिवसायुज्यकारणं भवति ।

**सकृल्लिङ्गार्चके दत्त्वा वस्त्रमात्रं यदृच्छया ।**
**एकच्छत्रं लभेद्राज्यं शिवसायुज्यमाप्नुयात् ।।**

(शै.र.,भा-२, २०.७८)

## शिवसिद्धान्तः

वीरशैवसिद्धान्तः । वीरशैवमहातन्त्रम्, वीरसिद्धान्तः, शिवसिद्धान्त-तन्त्रम्, शिवाद्वैतम्, शक्तिविशिष्टाद्वैतम्, विशेषाद्वैतम् इत्यादि नामान्तराणि ।

**शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः ।।**
**स्वच्छन्दचारी लोकेऽस्मिन् शिवसिद्धान्तपालकः ।**

(सि.शि.,१.१७; ४.१२)

## शिवसिद्धान्ततन्त्रम्

वीरशैवसिद्धान्तः ।

**शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ।।**

(अ.सू.,६.५६)

**(पश्यत – शिवसिद्धान्तः)**

## शिवसूत्रम्

१. शरीरे लिङ्गधारणाय या सज्जिका प्रयुज्यते तस्याः गुणः शिवसूत्रशब्देन गीयते । सज्जिकायां लिङ्गस्थापनात्पूर्वं तां विविधोपचारैः पूजयेत् । एवमेव शिवसूत्रमपि ।

**शिवसूत्रं यज्ञसूत्रं मूर्ध्नि विन्यस्य वाससा ।**

(चं.आ.,क्रि.पा., ११.४)

**सज्जिकां च गुणं वस्त्रमुद्वास्य प्रणवेन तत् ।।**
**स्मृत्वा मां मूलमन्त्रेण गुरुरावाह्य सज्जिकाम् ।**
**अभिमन्त्र्यानुवाकैस्तैः स्वीकुर्याच्च गुणं ततः ।।**

(पार.आ., ५.२-३)

२. शिवसिद्धान्तः । शिवजीवैक्यप्रतिपादकं तत्त्वम् ।

**तत्त्वमस्यादिनिरतं शिवसूत्रसमन्वितम् ।**
**शिवाद्वैतं तत्त्ववेद्यं शृणु कारुण्यभावतः ।।**
**शिवसूत्रमयं ज्ञानं धारयन्ति धृतव्रताः ।**
**वीरमाहेश्वराः सर्वे शृणु गौरि सुभक्तितः ।।**

(वी.शै.उ., १.३९, पृ.११)

## शिवसृष्टिः

१. लोकस्योत्पत्तिकारणभूतानां षट्त्रिंशत्तत्त्वानां सृष्टिः शिवसृष्टिः । योगिनां मुक्तिप्राप्तिरूपोपकाराय लोकसृष्टिमुद्दिश्य स्वेच्छया शिवः ध्यानं कृतवान् । तद्ध्यानप्रभावेण तदीया पराशक्तिः तस्य सहस्रांशेन उत्पन्ना । पराशक्तेः सहस्रांशेन आदिशक्तिः समुद्भूता । पुनः आदिशक्तेः सहस्रांशेन इच्छाशक्तिरजायत । इच्छाशक्तेस्सहस्रांशेन ज्ञानशक्तिः समुद्भूता । ज्ञानशक्तेस्सहस्रांशेन क्रियाशक्तिरजायत । एवं पञ्चशक्तीनां उत्पत्तिर्जाता । शक्तीनामियं सृष्टिः शिवसृष्टिरिति प्रोक्ता ।

**सृष्ट्यर्थं सर्वलोकानां लोकस्योत्पत्तिकारणम् ।**
**योगिनामुपकाराय स्वेच्छया चिन्तितश्शिवः ।।**
**तच्छिवात्तु पराशक्तिः सहस्रांशेन जायते ।**
**तच्छक्तेस्तु सहस्रांशात् अदिशक्तिसमुद्भवः ।।**
**आदिशक्तिसहस्रांशात् इच्छाशक्तिसमुद्भवः ।**
**इच्छाशक्तिसहस्रांशात् ज्ञानशक्तिसमुद्भवः ।।**
**ज्ञानशक्तिसहस्रांशात् क्रियाशक्तिसमुद्भवः ।**
**एता वै शक्तयः पञ्च निष्कलाश्चेति कीर्तिताः ।।**
**शिवसृष्टिरियं प्रोक्ता ........................ ।**

(वा.शु.आ.,१.२६–३०; सू.आ.,क्रि.पा.,१.१९–२२)

२. जगतः सृष्टिं चीकीर्षन् शिवः प्रथमं सर्वलोककर्तृत्वेन भावयन् ब्रह्माणं सृष्टवान्। तस्मै सर्वा विद्याः सानुग्रहमुपदिष्टवांश्च । अखिललोकानां निर्माणाय तमादिष्टवान् । स च सृष्टिप्रक्रियामजानन् शिवमेव मार्गदर्शनाय प्रार्थयाञ्चक्रे । सृष्ट्युपाये उपदिष्टे सति ब्रह्मा प्रयत्नं कृत्वा विफलो जातः । सः शिवं प्रार्थितवान् – ''भगवन्, भवानेव सृष्टिं विधाय प्रदर्शयतु'' इति । एवं ब्रह्मणा प्रार्थितश्शम्भु आत्मसमप्रख्यान्, सर्वगान्, सर्वशक्तिकान्, एवं बहुविधशक्तियुक्तान् शिवगणान् असृजत् । एवं शिवगणानां सृष्टिरेव शिवसृष्टिः ।

**जगत् चिकीर्षुः प्रथमं ब्रह्माणं सर्वदेहिनाम् ।**
**कर्तारं सर्वलोकानां विदधे विश्वनायकः ।।**
**तस्मै प्रथमपुत्राय शङ्करः शक्तिमान् विभुः ।**
**सर्वज्ञः सकला विद्याः सानुग्रहमुपादिशत् ।।**
**समस्तलोकान्निर्मातुं समुद्यमपरोऽभवत् ।**
**कृतोद्योगोऽपि निर्माणे जगतां शङ्कराज्ञया ।।**

**अज्ञातोपायसम्पत्तेरभवन् माययावृतः ।**
**पुनस्तं प्रार्थयामास देव देव त्रियम्बक ।**
**उपायं वद मे शम्भो जगत्स्रष्टः जगत्पते ।।**
**इति सम्प्रार्थितः शम्भुर्ब्रह्मणा विश्वनायकः ।**
**उपायमवदत्तस्मै लोकसृष्टिप्रवर्तनम् ।।**
**उपायमीश्वरेणोक्तं लब्ध्वापि चतुराननः ।**
**न समर्थोऽभवत् कर्तुं नानारूपमिदं जगत् ।।**
**पुनस्तं प्रार्थयामास ब्रह्मा विह्वलमानसः ।**
**भवदुक्तो ह्युपायो मे न किञ्चिज्ज्ञायतेऽधुना ।।**
**सृष्टिं विधेहि भगवन् प्रथमं परमेश्वर ।**
**ज्ञातोपायस्ततः कुर्यां जगत्सृष्टिमुमापते ।।**
**इत्येवं प्रार्थितश्शम्भुर्ब्रह्मणा विश्वयोनिना ।**
**ससज्जात्मसमप्रख्यान् सर्वगान् सर्वशक्तिकान् ।।**
**प्रबोधपरमानन्दपरिवाहितमानसान् ।**
**प्रमथान् विश्वनिर्माणप्रलयापादनक्षमान् ।।**

(सि.शि.,२.१४–१७, १९–२२, २४–२६)

## शिवागमः

शिवेनोक्त आगमः । सिद्धान्ताख्यः । वेदसम्मतत्वात् वैदिकः । स च कामिकादिवातुलान्तमष्टाविंशतिधा । संहितेत्यपि व्यवहारः ।

**वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः ।**
**वेदबाह्यविरोधित्वात् वेदसम्मत उच्यते ।।**

(सि.शि., ५.१२)

(पश्यत – शैवागमः)

## शिवागमाः

कामिकादिभेदेन शिवागमाः अष्टाविंशतिधा । तद्यथा –

१. कामिकागमः, २. योगजागमः, ३. चिन्त्यागमः, ४. कारणागमः, ५. अजितागमः, ६. दीप्तागमः, ७. सूक्ष्मागमः, ८. सहस्रागमः, ९. अंशुमानागमः, १०. सुप्रभेदागमः, ११. विजयागमः, १२. निश्वासागमः, १३. स्वायंभुवागमः, १४. अनिलागमः, १५. वीरागमः, १६. रौरवागमः, १७. मकुटागमः, १८. विमलागमः, १९. चन्द्रज्ञानागमः, २०. बिम्बागमः, २१. प्रोद्गीतागमः, २२. ललितागमः, २३. सिद्धागमः, २४. सन्तानागमः, २५. शर्वोक्तागमः, २६. पारमेश्वरागमः, २७. किरणागमः, २८. वातुलागमः ।

**कामिकं योगजं चिन्त्यं कारणं त्वजितं तथा ।।**

**दीप्तं सूक्ष्मं सहस्रं च अंशुमत्सुप्रभेदकम् ।**

**विजयं चैव निश्वासं स्वायंभुवमथानिलम् ।।**

**वीरं च रौरवं चैव माकुटं विमलं तथा ।**

**चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा ।।**

**सिद्धं सन्तानं शर्वोक्तं पारमेश्वरमेव च ।**

**किरणं वातुलन्त्वेता अष्टाविंशतिसंहिताः ।।**

(शि.त.र.,भा-१, १.१.५९-६२)

## शिवाग्निः

अग्निभेदः । अघोरमन्त्रपुरस्सरं बिल्वकाष्ठप्रदाहकः अग्निः शिवाग्निः ।

**अघोरेणात्ममन्त्रेण बिल्वकाष्ठं प्रदाहयेत् ।**

**शिवाग्निरिति विख्यातः ..................... ।।**

(क्रि.सा.,भा-१, ३.३७७)

## शिवाग्निजम्

कपिलागोमयं गोमयं वा शुद्धान् शम्याश्वत्थपलाशान् वटा रग्वधबिल्वकान् वा शिवाग्निना दग्ध्वा संस्कृत्य कृतं भस्म ।

**कपिलागोमयं पूर्वं केवलं गव्यमेव वा ।**
**शम्यश्वत्थपलाशान्वा वटारग्वधबिल्वकान् ।**
**शिवाग्निना दहेच्छुद्धान् तद्वै भस्म शिवाग्निजम् ।।**

(क्रि.सा.,भा–१, ३.३७८–३७९)

शिवाग्निजं भस्म शिवयोगिनां प्रशस्तं भवति ।

**शिवाग्निजनितं भस्म शस्तं स्याच्छिवयोगिनाम् ।**

(चं.आ.,क्रि.पा.,६.३४)

शिवाग्न्यादि समुत्पन्नं भस्म, उपाधिकभस्मेत्याहुः ।

**शिवाग्न्यादिसमुत्पन्नं मन्त्रन्यासादियोगतः ।**
**तदुपाधिकमित्याहुर्भस्मतन्त्रविशारदाः ।।**

(सि.शि.,७.३)

## शिवाङ्गम्

चराचरात्मकं समस्तं जगत् परशिवस्याङ्गम् । तच्च षड्विधम् । शिवाङ्गम्, भूताङ्गम्, कूटाङ्गम्, विद्याङ्गम्, शक्त्यङ्गम्, सामान्याङ्गं चेति षडङ्गेष्वेकम् । तत्र अङ्गन्यासे हृदयम्, शिरः, शिखा, नेत्रत्रयम्, अस्त्रम् इति षट् शिवाङ्गानि ।

**शिवाङ्गं चैव भूताङ्गं कूटाङ्गं च तथैव च ।।**
**विद्याङ्गं चैव शक्त्यङ्गं सामान्याङ्गं तथैव च ।**
**एतानि चाङ्गनामानि शिवाङ्गानि षडा सह ।।**
**प्रथमं हृदयं विद्यात् द्वितीयं तु शिरोभवेत् ।**
**तृतीयं तु शिखां विद्यात् चतुर्थं कवचं भवेत् ।।**
**पञ्चमं नेत्रत्रयं स्यात् षष्ठमस्त्रमुदाहृतम् ।**
**एतच्छिवाङ्गनामानि कीर्तितानि क्रमाद्विदुः ।।**

(वा.शु.आ.,८.४–५, १०–११)

(पश्यत – शिवाङ्गमन्त्राः)

## शिवाङ्गमन्त्राः

शिवाङ्गबीजमन्त्राः । अङ्गन्यासे प्रयुज्यन्ते । नवविकृतिस्वरेषु ऋ, ॠ, अम् इति त्रीन् वर्णान् विहाय षड्वर्णान् परसंज्ञकेन हकारेण सह योजयेत् । तथाकृते हा, ही, हू, है,हः इति मन्त्राः भवन्ति । अः इति वर्णं विहाय सर्वेभ्यः अनुस्वारं योजयेत् । एवं हां, हीं, हूं, हैं, हौं, हः इति रेफरहिताः शिवाङ्गबीजमन्त्राः भवन्ति । ते तान्त्रिकशिवाङ्गमन्त्राः । एवमेव ह्रां, ह्रीं, ह्रूं, ह्रैं, ह्रौं, ह्रः इति यदा रेफसहिताः तदा ते वैदिकशिवाङ्गबीजमन्त्राः इति कथ्यन्ते । तत्र हां–ह्रां, इति हृदयबीजमन्त्रौ । हीं – ह्रीं इति शिरोबीजमन्त्रौ । हूं–ह्रूं इति शिखाबीजमन्त्रौ । हैं–ह्रैं कवचबीजमन्त्रौ । हौं – ह्रौं इति नेत्रत्रयबीजमन्त्रौ । हः–ह्रः इति अस्त्रबीजमन्त्रौ । एवं एते शिवाङ्गबीजमन्त्राः । अङ्गन्यासः एभिर्मन्त्रैः क्रियते । ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट् । ॐ ह्रैं कवचाय हुम् । ॐ ह्रौं नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् । अयं वैदिकशिवाङ्गबीजमन्त्रयुक्तः न्यासः । एवमेव तान्त्रिकशिवाङ्गबीजमन्त्रयुक्तः अपि न्यासः भवति ।

**नवार्णविकृतिष्वासु तुर्यं पञ्चममष्टमम् ।**
**त्रीणि वर्णानि सन्त्यज्य शेषाः षट् परसंयुताः ।।**
**कार्यकारणसंयुक्ताः सर्वेषां च षडानन ।**
**तेषां च नामधेयानि वक्ष्यामि शृणु षण्मुख ।।**
**प्रथमं हृदयं विद्यात् द्वितीयं तु शिरो भवेत् ।**
**तृतीयं तु शिखां विद्यात् चतुर्थं कवचं भवेत् ।।**
**पञ्चमं नेत्रत्रयं स्यात् षष्ठमस्त्रमुदाहृतम् ।**
**एतच्छिवाङ्गनामानि कीर्तितानि क्रमाद्विदुः ।।**
**आदौ प्रणवमुच्चार्य शिवार्णवं तदनन्तरम् ।**
**अभिधानं चतुर्थ्यन्तं नमस्कारादिभिर्युतम् ।।**

(वा.शु.आ., ८.८–१२)

## शिवाचारः

लिङ्गाचारः, सदाचारः, शिवाचारः, गणाचारः, भृत्याचारः - इति पञ्चाचारेष्वेकः । शिव एव परं ब्रह्म, न ततः अन्या गतिरस्ति इति धिया अनुष्ठीयमानः शिवपरः आचारः शिवाचारः । शिवशास्त्रोक्तमार्गेण द्रव्यादीनां षोडशविधं संशुद्धीकरणमपि शिवाचारः ।

**शिव एव परं ब्रह्म पञ्चतत्त्वपरायणम् ।**
**न ततोऽन्या गतिरिति शिवाचारो हि कीर्तितः ।।**
**द्रव्यक्षेत्रगृहादीनां षोडशानां विशोधनम् ।**
**शिवशास्त्रोक्तमार्गेण शिवाचार इति स्मृतः ।।**

(चं.आ.,क्रि.पा.,९.७.,३२)

(पश्यत - पञ्चाचाराः, षोडशशुद्धयः)

## शिवाचार्यः

वीरशैवाचार्यः । वीरशैवानां गुरुः । वीरशैवसिद्धान्तबोधनपरः, दीक्षा - शिक्षा-ज्ञानप्रदानेन वीरशैवानाम् उद्धारकः । गुरुणा विना मुक्तिसाधनानि सिद्धिप्रदायकानि न भवन्ति । वीरशैवशास्त्रार्थान् प्रकटीकृत्य कथयति । वीरशैवाचारे शिष्यान् नियमयति ; स्वयमपि शिवाचारान् आचरते इति आचार्यः ।

**शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः ।**

(सि.शि.,१.१७)

**मोक्षस्य दीक्षा संप्राप्त्यै गुरुः स्यान्मूलकारणम् ।**
**न विना गुरुणा सिद्ध्यै साधनानि भवन्त्यलम् ।।**

(चं.आ.,क्रि.पा., २.५)

**आचिनोति च शास्त्रार्थान् आचारे स्थापयत्यलम् ।**
**स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ।।**

(सि.शि.,१५.९)

## शिवाद्वैतम्

शिवजीवयोरैक्यप्रतिपादकवीरशैवसिद्धान्तः । विशेषाद्वैतम्, द्वैताद्वैतम्, शक्तिविशिष्टाद्वैतम्–इत्यस्य नामान्तराणि । अयं सिद्धान्तः वेद–वेदान्तसम्मतः। सर्वेषां हितकारकः । अस्मिन् सिद्धान्ते द्वैताद्वैतश्रुतीनां समन्वयः दृश्यते । शिवयोः (शिवः परमात्मा, शिवांशभूतः शिवो जीवात्मा, तयोरद्वैतम् ।

**शिवाद्वैतपरं ज्ञानं ज्ञानमित्युच्यते बुधैः ।**

(सि.शि.,१६.७७; श.त्र., पृ.२६, श्लो.२१२)

**तत्त्वमस्यादिनिरतं शिवसूत्रसमन्वितम् ।**
**शिवाद्वैतं तत्त्ववेद्यं शृणु कारुण्यभावतः ।।**

(वी.शै.उ., १.२५)

**मदद्वैतपरं शास्त्रं वेदवेदान्तसम्मतम् ।**

(सि.शि., ३.८६)

**द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।**
**वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ।।**

(श्री.भा., भा–१, भूमिका, श्लो.१५)

## शिवानुभवः

शिवस्य आत्मत्वेन ज्ञानं शिवानुभवः । शिवजीवैक्यज्ञानं शिवानुभवः इति यावत् ।

**चिदानन्दपराकाशशिवानुभवयोगतः ।**
**शिवयोगीति नामोक्तिः यस्य याथार्थ्ययोगिनी ।।**

(सि.शि.,१.२१)

## शिवार्चनम् = शिवार्चा

शिवपूजा । वीरशैवानां पञ्चयज्ञेषु शिवार्चनमेव कर्मरूपः यज्ञः । यागदि तु कर्म न भवति । शिवार्चनं तु निरन्तरं नियतरीत्या करणीयमिति विधिः ।

**शिवार्चा कर्मविज्ञेयं बाह्यं यागादि नोच्यते ।**

(पार.आ., १७.८१;सि.शि; ९.२२)

**शिवार्चनं च सततं ............**

(पार.आ., १९.१०२)

## शिवार्पणम्

१. शिवार्पणभावः, शिवार्पणबुद्धिः (शिवार्पणधीः) । नित्यादिकर्मणां शिवार्पितबुद्ध्या करणम् । यः भक्तिपूर्वकं विविधोपचारैः लिङ्गार्चनं कुरुते सः शिवार्पणवित् भवति ।

**नित्यानि कर्मवृन्दानि तथा नैमित्तिकानि च ।**

**शिवार्पणं धिया कुर्यात् सम्यज्ज्ञानाभिवृद्धये ।**

(लिं.धा.चं.,पृ.८६)

**एवं लिङ्गार्चनं यस्तु कुरुते भक्तिपूर्वकम् ।**

**सोपचारविधानेन स शिवार्पणविद् भवेत् ।।**

(विशे.प्र., २.१५)

**शिवार्पणधिया कुर्याद्यथारुचि जपाधिकम् ।।**

(सू.आ., क्रि.पा., ३.५३)

२. न मम इदं जगत् । सर्वं शिवस्य – इति भावेन यदर्पणं तत् शिवार्पणम् । गन्धः, रसः, रूपम्, स्पर्शः, शब्दः, परिणामश्चेति सार्वकालिकपदार्थाः, तेषां शिवाय समर्पणं शिवार्पणम् ।

**न ममेदं जगत्सर्वं शिवायेति शिवार्पणम् ।**

**अथ गन्धो रसो रूपं स्पर्शः शब्दस्ततः परम् ।**

**परिणामः पदार्था हि षडेते सार्वकालिकाः ।**

(अ.सू.,७.३०–३२)

**आत्मभोगाय नियतं यद्यद् द्रव्यं समाहितम् ।**

**तत्तत् समर्प्य देवाय भुञ्जीतात्मविशुद्धये ।।**

(सि.शि.,११.११)

## शिवावरणम्

स्वार्थपूजा परार्थपूजा चेति द्विधा पूजा यस्य स शिवद्विजः। आत्मार्थपूजायां परार्थपूजायां वा शिवावरणाद्बहिः स्थापितानां विष्णु-ब्रह्मादिदेवानां पूजा नैव करणीया इत्यस्मिन् प्रस्तावे शिवावरणशब्दः प्रयुक्तः । शिवावरणं नाम शिवमण्डलम् ।

**शिवद्विजेन कर्तव्या द्विधा पूजेति चोदिता ।**

**शिवावरणदेवांश्च सर्वान् संपूजयेद्गुह ।**

**पृथक्स्थानस्थिताः सर्वा नार्चयेदन्यदेवताः ।।**

(वा.शु.आ.,१०.२४, २६)

**शिवस्य पूजावेलायां ये चान्ये देवसत्तमाः ।**

**तेषामावरणत्वेन पूजां कुर्यान्नचान्यथा ।।**

(सू.आ.,क्रि.पा.,७.२४)

## शिवास्त्रम्

विद्याङ्गभूतमस्त्रं षड्विधं – शिवास्त्रम्, पाशुपतास्त्रम्, ब्रह्मास्त्रम्, क्षुरिकास्त्रम्, व्योमास्त्रम्, अघोरास्त्रं चेति ।

**शिवास्त्रं पशुपत्यस्त्रं ब्रह्मास्त्रं क्षुरिकास्त्रकम् ।**

**व्योमास्त्रमित्यघोरास्त्रम् एतद्विद्याङ्गमीरितम् ।।**

(वा.शु.आ., ८.४५)

## शिवास्त्रमन्त्रः

शिवास्त्रमन्त्रः षड्बीजयुक्तः - ॐ शिवास्त्राय फट् इति शिवास्त्रमन्त्रम् । तत्र ॐकारः प्रथमबीजम् , शिकारः द्वितीयबीजम्, वाकारः तृतीयबीजम्, स्त्राकारः चतुर्थबीजम्, यकारः पञ्चमबीजम्, फट्कारश्च षष्ठबीजम् । शिवास्त्रमन्त्रः सर्वसिद्धिप्रदायकः ।

**शिवास्त्रमन्त्रोद्धारं च प्रवक्ष्ये शृणु षण्मुख ।**
**ॐकारः प्रथमं बीजं शिकारश्च द्वितीयकम् ।।**
**तृतीयबीजं वाकारः स्त्राकारश्च चतुर्थकम् ।**
**पञ्चमं तु यकारः स्यात् षष्ठं फट्कार एव च ।।**
**शिवास्त्रमन्त्रः षड्वर्णः सर्वसिद्धिप्रदायकः ।**

(वा.शु.आ., ८.४६-४८)

## शिवैक्यम्

परशिवे विलीनता । शिवजीवयोरैक्यस्थितिरूपः मोक्षः । स च गुरुदीक्षाजन्यलिङ्गाङ्गसंयोगयुक्तेन शिवयोगिना संप्राप्यः । भ्रमरकीटन्यायेन निरन्तरशिवध्यानेन जीवः शिव एव भवति । एतदेव शिवैक्यम् ।

**गुरुदीक्षापरिप्राप्तशिवलिङ्गाङ्गयोगतः ।**
**द्विरेफकीटन्यायेन शिवैक्यं प्राप्तवान् द्विजः ।।**

(मकुट., च.पा., ७.३)

## शिष्टम्

या सर्वेषां मायारूपेण दृश्यते सा एव शक्तिः ओदनस्वरूपं प्राप्य चिद्रूपलिङ्गे लीना भवति । तदा तां शिष्टम् इति नाम्ना व्यवहरन्ति ।

**प्रकाशते या सर्वेषां माया सैवोदनाकृतिः ।**
**लीयते तत्र चिल्लिङ्गे शिष्टं तत् परिकीर्तितम् ।।**

(सि.शि., २०.१४)

## शिष्टाः

पेयादिकं शिवार्पणं कृत्वा ततस्तच्छेषभूतं प्रसादरूपेण गृह्यमाणाः शिवभक्ताः प्रसादिनः शिष्टाः। स्कान्दे –

**शिष्टाः शान्ताश्च रुद्रेण भुक्तमेव हि भुञ्जते ।**
**घ्रातमेव हि जिघ्रन्ति पीतमेव पिबन्ति च ।।**

(कै.सा., १.३, वि.सं.-२२०, पृ.४४)

**शिवेन भुक्तं भुञ्जीयात् तत्पीतं हि जलं पिबेत् ।**
**शिवाघ्रातं सदा जिघ्रेदेष धर्मः सनातनः ।।**

(चं.आ., क्रि.पा., ५.२२)

**भुञ्जीयाद् रुद्रभुक्तान्नं रुद्रपीतं जलं पिबेत् ।**
**रुद्राघ्रातं सदा जिघ्रेदिति जाबालिकी श्रुतिः ।।**

(सि.शि.,९.७०)

## शिष्टोदनस्थलम्

ऐक्यस्थलाश्रिते – नवविधलिङ्गस्थलेषु द्वितीयम् । एकोत्तर-शतस्थलेषु चतुर्नवतितमम् स्थलम् । प्रकाश्यमानायाः मायायाः चिल्लिङ्गे विलीनतास्थितिः शिष्टम्, तदेव ओदनं यस्मिन् तत् स्थलं शिष्टोदनस्थलम् ।

**स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते ।**
**शिष्टोदनस्थलं चाथ चराचरलयस्थलम् ।**
**प्रकाशते या सर्वेषां माया सैवोदनाकृतिः ।**
**लीयते तत्र चिल्लिङ्गे शिष्टं तत् परिकीर्तितम् ।।**

(सि.शि., २०.२-३, १४)

## शिष्यः

गुरुणा दीक्षितः शास्त्राणां शासनाय योग्यः । शुचिः, सुशीलः, धर्मनिष्ठः, सत्यवाक्, संयतेन्द्रियः, अहङ्काररहितः, रागद्वेषादिवर्जितः,

गुरुभक्तः, क्रोधरहितः, गुर्वाज्ञापरिपालकः, विषयासक्तिरहितः, कुलशीलाद्यष्टमदनिर्मुक्तः, सर्वदा गुरुध्यानतत्परः–एवंगुणविशिष्टः भक्तः शिष्यशब्देन गीयते । परकायस्वरूपिणा शिवयोगिना सर्वदा शासनयोग्यः, तत्प्रसादात् मोक्षं प्राप्तुमिच्छावान् स्वकीये गुरौ मनोवाक्कायकर्मभिः स्थिरभक्तिमान् शान्तः, दान्तः, तपश्शीलः, सत्यवचनः, सर्वत्र समदर्शनः, गुरौ शिवे च समानभक्तियुक्तः, शिष्यानामुत्तमः भवति ।

**अथ शिष्यस्वरुपं च वक्ष्ये संक्षेपतः शृणु ।**
**शुचिः सुशीलो धर्मिष्ठः सत्यवाग्विजितेन्द्रियः ।**
**अहङ्कारविनिर्मुक्तो रागद्वेषादिवर्जितः ।।**
**गुरुभक्तो जितक्रोधो गुर्वाज्ञापरिपालकः ।**
**विषयासङ्गनिर्मुक्तो विनिर्जितमदाष्टकः ।।**
**का वा गतिर्ममेत्येवं ध्यायमानो दिवानिशम् ।।**
**एवंगुणान्वितं शिष्यं परीक्ष्य गुरुरादरात् ।**
**शिक्षयेत् तस्य वै चित्तं यथा भवति निर्मलम् ।।**

(सू.आ.,क्रि.पा.,५.३१–३३)

**शासनीयो भवेद्यस्तु परकायेन सर्वदा ।**
**तत्प्रसादात्तु मोक्षार्थी स शिष्य इति कीर्तितः ।।**
**भावो यस्य स्थिरो नित्यं मनोवाक्कायकर्मभिः ।**
**गुरौ निजे गुणोदारे स शिष्य इति गीयते ।।**
**शान्तो दान्तः तपश्शीलः सत्यवाक् समदर्शनः ।**
**गुरौ शिवे समानस्थः स शिष्याणामिहोत्तमः ।।**

(सि.शि.,१७.५८–६०)

**द्विजातिर्वाथ सच्छूद्रः स्वस्योक्ताचारवान् शुचिः ।**
**सत्यवान् गुरुभक्तश्च दम्भाहङ्कारवर्जितः ।।**

**रागद्वेषविनिर्मुक्तः शान्तः सर्वजनप्रियः ।**
**गुर्वाज्ञाचकितः सौम्यः शिष्यः इत्यभिधीयते ।।**
**उक्तलक्षणसम्पन्नो यस्मिन् देशे गुरुः स्थितः ।**
**तत्र शिष्यः स्वयं गत्वा प्रणमेद्दण्डवद्गुरुम् ।।**

(शै.र.,भा-१, ९.२७, २९, पृ.१९४)

**श्रुतं करोति शुश्रूषा कायेन मनसा गिरा ।**
**उक्तं यद्गुरुणा पूर्वं शक्यं वाशक्यमेव वा ।।**
**करोत्येव हि पूतात्मा प्राणैरपि धनैरपि ।**
**तदस्माद्वै शासितुं योग्यः शिष्यः इत्यभिधीयते ।।**
**शिष्यः पुत्र इति प्रोक्तः ..................... ।।**

(क्रि.सा.,भा-३, १७.१४१-१४२, १४४, पृ.२२)

**शिष्यभेदः** - वंश्यः, आगन्तुकश्च इति शिष्यः द्विधा । वंश्यश्च पुनः मुख्यः, सामान्यः इत्येवं द्विविधः । मुख्यश्च ब्रह्मचारी, गृहस्थश्च इति द्विविधः । तत्र ब्रह्मचारी पुनः पट्टाभिषेकवान् चरपतिः निराभारश्चेतिः त्रिविधः । अवंश्यः शिष्यः आगन्तुकशिष्य इति अर्थात् सिद्ध्यति ।

**वंश्य आगन्तुकश्चेति द्विविधः शिष्य उच्यते ।**
**मुख्यः सामान्यः इत्येवं पुनर्वंश्यो द्विधा मतः ।।**
**ब्रह्मचारी गृही चेति द्विधा मुख्यो विभिद्यते ।**
**उक्तलक्षणसम्पन्नो ब्रह्मचारी पुनस्त्रिधा ।**
**पट्टाभिषेकवानाद्यः यः प्रोक्तश्चरपतिस्तथा ।।**
**निराभारस्तृतीयः स्यात्सर्वलोकेषु विश्रुतः ।**

(वी.स.सं.,१४.२-४)

## शिष्यवर्गः

पुत्रवर्गः शिष्यवर्गश्चेति मठस्थले विद्यमानयोः वर्गयोः एकः । द्वावपि वर्गौ वीरनन्द्यादिपञ्चगोत्राधिकारिणां माहेश्वराणां वंशोत्पन्नौ । तत्र शिष्यवर्गमठस्थलं नाम एकवंशस्यैव सन्ततेरभावे तत्तच्छाखासु जातानां वीरमाहेश्वराणां मध्ये स्वगोत्रोत्पन्नानां क्रमेण पट्टाभिषेचनं सम्प्रदाययुक्तम् ।

**तत्सन्ततेरभावे तु शिष्यवर्गः प्रजायते ।**

**शिष्यवर्गमठे तत्र चरपट्टाभिषेचने ।।**

**तत्तच्छाखासु जातानां यत्रकुत्रापि वर्तिनाम् ।**

**वीरमाहेश्वराणां हि स्वस्वगोत्रानुसारतः ।।**

**दीक्षां कृत्वा पट्टबद्धान् कुर्वन्ति चरसंज्ञकान् ।**

(वी.स.सं.,१४.७-९)

## शिष्यस्थलम्

प्रसादिस्थलाश्रितनवविधलिङ्गस्थलेषु सप्तमं स्थलम् । एकोत्तरशतस्थलेषु च नवषष्ठितमम् । यः परकायशिवयोगिना शासनीयः भवति तत्प्रसादात् मोक्षाकांक्षी च, स शिष्यः इति वर्णितः । यस्य भक्तिः गुणोन्नते निजगुरौ नित्यं मनोवाक्कायकर्मभिः स्थिरा भवति स शिष्यः । तत्सम्बन्धिस्थलं शिष्यस्थलम् ।

**शिष्यस्थलं ततः प्रोक्तं शुश्रूषास्थलमेव च ।।**

**शासनीयो भवेद्यस्तु परकायेन सर्वदा ।**

**तत्प्रसादात्तु मोक्षार्थी स शिष्य इति कीर्तितः ।।**

**भावो यस्य स्थिरो नित्यं मनोवाक्कायकर्मभिः ।**

**गुरौ निजे गुणोदारे स शिष्य इति गीयते ।।**

(सि.शि.,१७.४,५८-५९)

(पश्यत – शिष्यः)

## शीलम्

शरणागतानां क्लेशनिवारके परब्रह्मस्वरूपिणि शिवे चित्तस्थिरीकरणम्, शिवैक्यविज्ञानम्, शिवध्याने एकतानता, शिवप्राप्तिसमुत्कण्ठा चेत्येतत्सर्वं शीलमित्युच्यते ।

**जिज्ञासा शिवतत्त्वस्य शीलमित्युच्यते बुधैः ।**
**प्रपन्नार्तिं हरे देवे परमात्मनि शङ्करे ।**
**भावस्य स्थिरतायोगः शीलमित्युच्यते बुधैः ।।**
**शीलं शिवैक्यविज्ञानं शिवध्यानैकतानता ।**
**शिवप्राप्तिसमुत्कण्ठा ................ ।।**

(सि.शि.,१३.३०–३२)

## शीलभाजनः

यस्य शिवादन्यविज्ञाने वैमुख्यं दृढं भवति यस्य च मनोवृत्तिः शिवासक्ता भवति सः शीलभाजनः ।

**शिवादन्यत्र विज्ञाने वैमुख्यं यस्य सुस्थिरम् ।**
**तदासक्तमनोवृत्तिः तमाहुः शीलभाजनम् ।।**

(सि.शि.,१३.३३)

## शीलवान् = शीली

शीलं अस्यास्तीति शीलवान्, शीली ।

**................तद्वान् शीलीति कथ्यते ।।**
**.................तद्योगी शीलवान् स्मृतः ।।**

(सि.शि.,१३.३०, ३२)

(पश्यत – शीलम्)

## शीलसम्पादनस्थलम्

शरणस्थलाश्रितचतुर्विधाङ्गस्थलेषु चतुर्थम् । एकोत्तरशतस्थलेषु च चत्वारिंशत्तमं स्थलम् । शीलस्य लक्षणं दत्तम् । शीलम् अस्यास्तीति शीली । तद्वान् शीलवान् । तत्सम्बन्धिस्थलं शीलसम्पादनस्थलम् ।

**स्थलमेतत् समाख्यातं चतुर्धा धर्मभेदतः ।**
**ततो निर्देशमुद्दिष्टं शीलसम्पादनं ततः ।।**

(सि.शि.,१३.३-४)

## शुद्धप्रसादः

शुद्धः, सिद्धः, प्रसिद्धः इति त्रिविधप्रसादेषु एकः । गुरुभुक्तशेषः शुद्धप्रसादः । स च मुक्त्यैकसाधनः ।

प्राकृतगुणरहितेन कामक्रोधविनिर्मुक्तेन स्वीक्रियमाणः गुरुभुक्तशेषः शुद्धप्रसादः । इष्टलिङ्गार्पितमपि शुद्धप्रसादः इत्येकं मतम् ।

**गुरुलिङ्गजङ्गमानां भुक्तशेषः प्रसादकः ।।**
**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्यैकसाधनः ।**

(चं.आ.,क्रि.पा.,५.२०-२१)

**पूर्वसर्वगुणत्यागः कामक्रोधादिवर्जनम् ।**
**गुरुभुक्तप्रसादो यः स शुद्धः परिकीर्तितः ।।**

(सू.आ.,क्रि.पा., ८.२३)

**इष्टलिङ्गार्पितं शुद्धं ............ ।**

(अ.सू.,७.२२)

**आदौ गुरुत्रयं ज्ञात्वा ततः स्याद्दासभावतः ।**
**तद्भुक्तशेषभोगो यः स शुद्धः परिकीर्तितः ।।**

(क्रि.सा., भा-३, पृ.१२०)

(पश्यत – प्रसादः)

## शुद्धप्रासादः

मन्त्रविशेषः । शुद्धः, मूलम्, तत्त्वम्, आदिः, आत्मा चेति पञ्चप्रासादमन्त्रेष्वेकतमः ।

**पञ्चप्रासादमित्युक्तं शुद्धप्रासाद उच्यते ।**

(वा.शु.आ.,५.२०)

(पश्यत – प्रासादमन्त्राः)

## शुद्धविद्या

१. षट्त्रिंशत्तत्त्वान्यतमम् । यदा शक्तितत्त्वं सागरतरङ्गन्यायेन अहमिदमिति अहङ्कारस्य प्रपञ्चस्य च अभेदज्ञानस्वरूपं प्राप्नोति तदा शुद्धविद्यातत्त्वम् भवति ।

**अथ क्रियाप्रधानेदन्तायाः संविद्रूपाहन्तान्तर्गतत्वेन भासमानत्वात् विभागनिबन्धनभेदघटितसागरतरङ्गन्यायेन अहन्तेदन्तयोरैक्यप्रतिपत्तिः ब्रह्मापरपर्यायशुद्धविद्यातत्त्वं भवति । गुरुशास्त्रलब्धनिर्मलसंवित्तिरिति यावत् ।**

(शि.मं.,पृ.५२)

२. षडध्वानामिदं परमं कारणम् ।

**षण्णामप्यध्वनामेषां परमं कारणं तु यत् ।**
**उच्यते शुद्धविद्येति ब्रह्मकुण्डलिनीति च ।।**

(शि.त.र.,भा-३, ९.३.८९)

३. सप्तकोटिमन्त्राः, कामिकाद्यागमाः, नन्द्यादयः गणाधिपाः, इन्द्रादिलोकपालाः, वज्राद्यायुधानि च शुद्धविद्यातत्त्वे अन्तर्भवन्ति ।

**शुद्धविद्याख्यतत्त्वेऽस्मिन् मन्त्राणां सप्तकोटयः ।**
**अष्टाविंशतिसंख्याकाः कामिकाद्याश्च संहिताः ।।**

**नन्द्यादयोऽष्टौ गणपाः सिद्धास्तैः परिपूजिताः ।**

**इन्द्रादिलोकपालाश्च वज्रादीन्यायुधानि च ।।**

(शि.त.र.,भा-३, ९.३.४२-४३)

## शुद्धशैवः

शैवभेदः । शिव एव परमः, ब्रह्मादयोऽपि शिवभक्ताः - इति धिया शिवलिङ्गैकपूजातत्परः शुद्धशैवः ।

**भस्मरुद्राक्षधारणात्मकपौराणदीक्षया ।।**

**दीक्षिताः शिवलिङ्गैकपूजातत्परचेतसः ।।**

**शिवपारम्यविश्वासः शिवभावानुभाविनः ।**

**शुद्धशैवा इति भुवि निगद्यन्ते बृहस्पते ।।**

(चं.आ.,क्रि.पा.,१०.२३-२४)

## शुद्धशैवम्

शुद्धः शिवः तस्माद् भवं शैवम् । उभयोः समाहारात् शुद्धशैवं भवति। महादेवः, साम्बः, एक एव । अन्ये देवास्तद्भक्ताः, तत्सम्भवाः, तदाश्रिताश्चेति प्रत्यययुक्तस्य शैवस्य मतम् । अस्मिन्मते शिवस्य पूजासमये अन्ये देवाः आवरणत्वेन पूज्यन्ते । गुरुणा दत्तलिङ्गस्य करपीठार्चनं गुरूपदिष्टनियमपालनं चास्मिन्मते अनिवार्ये । प्रमादात् लिङ्गस्य पतने, दहनादिभिः दूषणे प्राप्ते श्रीगुरुद्वारा अन्यल्लिङ्गधारणं न दोषाय । नियमे प्रमादात् लुप्ते सति व्रताचारादि लोपे सति मूलपञ्चाक्षरीजप एव प्रायश्चित्तम् । एवंगुणविशिष्टं शुद्धशैवं भवति ।

**शुद्धः शिव इति प्रोक्तः तद्भवं शैवमुच्यते ।**

**उभयोः सम्पुटीभावात् शुद्धशैवमिति स्मृतम् ।।**

**एक एव महादेवः साम्बः सत्यादिलक्षणः ।**

**तदन्यदेवास्तद्भक्ताः तदुद्भूतास्तदाश्रिताः ।।**

**शिवस्य पूजावेलायां ये चान्ये देवसत्तमाः ।**
**तेषामावरणत्वेन पूजां कुर्यान्न चान्यथा ।।**
**गुरुणा दत्तलिङ्गं तु करपीठेऽपि वा यजेत् ।**
**गुरूपदिष्टनियमान् सावधानं समाचरेत् ।।**
**प्रमादात् पतिते लिङ्गे नष्टे दग्धे हृतेऽपि वा ।**
**विनिर्गते तथा पीठाद्येनकेन च दूषिते ।**
**गुरुपादाम्बुजं स्मृत्वा जप्त्वाऽघोरं तदाज्ञया ।।**
**तल्लिङ्गमेव वाऽन्यद्वा धारयेत्पूजयेत्पुनः ।**
**प्रमादान्नियमे लुप्ते मूलपञ्चाक्षरीं जपेत् ।।**
**प्रायश्चित्तमिदं देवि व्रताचारादिलोपने ।**
**शुद्धशैवमिदं प्रोक्तं .................. ।।**

(सू.आ.,क्रि.पा.,७.२२-२८)

## शुद्धमानुषाः

शुद्धाः (विशुद्धाः), प्राकृता इति द्विविधयोः मानुषयोः अन्यतरः । तत्र शिवसंस्कारयुक्ताः शुद्धाः ।

**विशुद्धा प्राकृताश्चेति द्विविधा मानुषाः स्मृताः ।**
**शिवसंस्कारिणः शुद्धाः .................... ।।**

(सि.शि.,१०.३४)

(पश्यत – प्राकृतमानुषाः)

## शुद्धाध्वा

शिवतत्त्वादारभ्यशुद्धविद्यापर्यन्तं पञ्चतत्त्वयुक्तः शुद्धाध्वा । (शि.त.र.ग्रन्थेऽयं भागः नोपलभ्यते)

## शुद्धोपाधिः

उपाधिर्द्विविधः, शुद्धोपाधिः अशुद्धोपाधिश्चेति । शुद्धोपाधिः महेश्वरः तदाश्रिताऽमोहकारिणी परा माया च । अस्याः ऊर्ध्वमायेति नामान्तरम् ।

**उपाधिः पुनराख्यातः शुद्धाशुद्धविभेदतः ।**
**शुद्धोपाधिः परा माया स्वाश्रयाऽमोहकारिणी ।।**

(सि.शि.,५.४४)

(पश्यत – अशुद्धोपाधिः, उपाधिः)

## शुश्रूषास्थलम्

प्रसादिस्थलस्य नवविधलिङ्गस्थलेष्वष्टमं स्थलम् । एकोत्तरशतस्थलेषु च सप्ततितमम् । परकायेन गुरुणा उपदिश्यमानः सर्वदा तदुपदेशं श्रोतुम् इच्छायां लम्पटः सन् शुश्रूषुः भवति । तत्सम्बन्धिस्थलं शुश्रूषास्थलम् । शुश्रूषोः स्थलमिति शुश्रूषुस्थलमिति नामान्तरम् ।

**शिष्यस्थलं ततः प्रोक्तं शुश्रूषास्थलमेव च ।**
**बोध्यमानः स गुरुणा परकायेन सर्वदा ।**
**तच्छुश्रूषारतः शिष्यः शुश्रूषुरिति कथ्यते ।।**

(सि.शि.,१७.४,६७)

## शून्यलिङ्गम्

निरञ्जनजङ्गमस्य शिखायां सञ्जातं विश्वकारणभूतं लिङ्गं शून्यलिङ्गम्। शून्यलिङ्गाच्च निष्कललिङ्गमुत्पद्यते । अचलमिदम् आदिमध्यान्तरहितम्, तनु - मन–भावनारहितं, कामादिविहीनम् । अत एव एतत् शून्यलिङ्गमुच्यते ।

**तस्मात्स्वयं प्रादुरासीत्स निरञ्जनजङ्गमः ।**
**तच्छिखायां शून्यलिङ्गं सञ्जातं विश्वकारणम् ।।**

**तस्मान्निष्कललिङ्गं तु सञ्जातं स्वेच्छया पुनः ।**
**शून्यलिङ्गमिति ख्यातं सर्वकारणकारणम् ।**
**आदिमध्यान्तशून्यत्वं चिह्नं लिङ्गस्य यस्य तत् ।।**
**शून्यलिङ्गमिति प्रोक्तमागमज्ञैरनामयम् ।**
**तनुश्शून्यं मनश्शून्यं भावनाभोगवर्जितम् ।।**
**कामक्रोधादिशून्यं च शून्यनामेति कीर्तितम् ।**

(शि.त.र.,भा-१, १.३.५-६; १.४.५-७)

**निरञ्जनजङ्गमस्य तटित्कोटिसमप्रख्या या शिखा तस्यामूर्ध्वा सूक्ष्मचिद्रूपपरमा या कला, तस्यान्तःशून्यलिङ्गमभूत् । 'आदिमध्यान्तशून्यत्वं लिङ्गं चिह्नं यस्य तत् तथोक्तं तदुक्तं योगजे "आदिमध्यान्तशून्यत्वम्" इत्यादि ।**

(वी.ध.शि.,१, पृ.२४)

## शून्यलिङ्गस्थलम्

अनादिवीरशैवसारसंग्रहोक्तदिशा सप्तविंशतिस्थलेषु अन्यतमं शून्यलिङ्गस्थलम् । तत्र तत् तृतीयम् । **"अनादिजङ्गम एव स्वकीयलीलाविलासेन शून्यलिङ्गस्वरूपं प्राप्तवान् । तस्य चिन्तनात् शून्यलिङ्गमुत्पन्नम् इति यावत् । निरञ्जनब्रह्मभूतमनादिजङ्गमं स्वलीलाविलासेन चिन्तनात् शून्यलिङ्गमुत्पन्नं तत् कथमिति चेत्, निरञ्जनस्य चिन्तायां निरञ्जनोङ्कारसम्भव इति विद्यमानत्वात् पुरा शून्यलिङ्गस्थलमासीत् ।"**

(अ.वी.सा.सं.,भा-१, ४.१)

## शृङ्गाटकम्

त्रिकूटस्थाननामके भ्रूमध्यस्थाने द्वे शब्दद्वारे (श्रोत्रद्वारे) द्वे च गन्धद्वारे (नासिकाद्वारे) समायोगं प्राप्य चतुष्पीठं रचयन्ति । तदेव नाम्ना शृङ्गाटकम् इति।

**शब्दद्वारे गते यत्र गन्धद्वारे तथैव च ।**

**समायोगे चतुष्पीठं शृङ्गाटकसुसंज्ञितम् ।।**

(शि.यो.प्र., २.३६)

(पश्यत – त्रिकूटम्)

## शैवम्

१. शिवेन सह सम्बद्धम् । शिवतत्त्वप्रतिपादक- मनादिशैवादिमतम्। शैवतन्त्रम्, शैवागमश्च ।

**शिवेन सह सम्बद्धं शैवमित्याहृतं बुधैः ।**

(शै.र.,भा–१, १.२५, पृ.३४)

२. पञ्चाक्षरमहामन्त्रस्य पर्यायनाम ।

**मूलं विद्या शिवं शैवं सूत्रं पञ्चाक्षरं तथा ।**

**षडक्षरं च तस्याहुर्नामानि मुनयो मनोः ।।**

(पार. आ., ११.४४; सि.शि.,८.२३)

## शैवतत्त्वानि

"षट्त्रिंशत्तत्त्वानि प्रसिद्धानि । पारमेश्वरागमोक्तदिशा तत्त्वानि एकपञ्चाशत् । तत्र पञ्चदशतत्त्वान्यत्र अधिकतया दत्तानि, यथा–त्वक्, असृक्, मांसम्, मेदा, अस्थि, मज्जम्, शुक्रश्चेति सप्तधातवः; प्राणः, अपानः, व्यानः, उदानः, समानश्चेति पञ्चवायवः; सत्त्वम्, रजः, तमश्चेति त्रयोगुणा इति ।

**अथ वक्ष्यामि गिरिजे शैवतत्त्वानि वै शृणु ।**

**पञ्चभूतानि तन्मात्राः पञ्चकर्मेन्द्रियाणि च ।।**

**ज्ञानकर्मविभागेन पञ्च पञ्च विभागशः ।**

**त्वगादि धातवः सप्त पञ्चप्राणादि वायवः ।।**

**मनश्चाहङ्कृतिःख्यातिर्गुणाः प्रकृतिपूरुषाः ।**

**रागोऽविद्या कला चैव नियतिः काल एव च ।।**

**माया च शुद्धविद्या च महेश्वरसदाशिवौ ।**

**शक्तिश्च शिवतत्त्वानि प्रोक्तानि क्रमशः शिवे ।।**

(पार.आ.,१७.२९-३३)

(पश्यत – षट्त्रिंशत्तत्त्वानि)

## शैवतन्त्रम्

वेदैकदेशे स्थितेभ्यः सांख्यादिशास्त्रेभ्यः समग्रवेदानुसारि शैवतन्त्रं विशिष्यते । तच्च शिवेन बोधितं सिद्धान्तनामकं समग्रवेदार्थस्य विस्ताररूपत्वात् तत् वेदवत् प्रामाण्यं भजते । शैवतन्त्रं नाम कामिकादि-वातुलान्तं शैवागमसमुदाय एव ।

**वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने ।**

**सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते ।।**

**शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम् ।**

**सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत्सदा ।।**

(सि.शि., ५.७-८)

(पश्यत – तन्त्रम्, महातन्त्रम्)

## शैवपञ्चाक्षरी

'नमः शिवाय' इति पञ्चभिः अक्षरैः संयुक्तो मन्त्रः । अयं च पञ्चाक्षरी, शिवपञ्चाक्षरी इति व्यवह्रियते ।

**शैवपञ्चाक्षरीं गौरि मन्त्राणां मातरं शिवाम् ।**

**उपदिशन्ति ये प्रीत्या ते यान्ति मम सन्निधिम् ।।**

(वी.शै.उ., ३.१५३, पृ.१४१)

(पश्यत – पञ्चाक्षरः, शिवपञ्चाक्षरी)

## शैवलाञ्छनम्

शैवलाञ्छनानि शिवभक्तलाञ्छनानि, त्रिपुण्ड्रादीनि इति यावत्।

**त्रिपुण्ड्रं बिन्दुदीपं च त्रिशूलं चार्धचन्द्रकम् ।**
**सर्वाङ्गोद्धूलनं चैव षडेते शैवलाञ्छनाः ।।**

(शै.र.,भा-१, पृ.१६८)

(पश्यत – शिवलाञ्छनानि, शिवचिह्नानि)

## शैवशास्त्रम्

लिङ्गाङ्गयोरैक्यप्रतिपादकं शक्तिविशिष्टाद्वैतशास्त्रम् । शिवाद्वैतम्, वीरशैवसिद्धान्तः, इत्यादीनि अस्यैव नामान्तराणि ।

**शैवशास्त्रस्थ वक्तारमाक्षिपन्ति विमोहिताः ।**

(सू.आ.,क्रि.पा.,६.६५)

**यश्शैवशास्त्रकथनं प्रकटीकरोति**
**लिङ्गाङ्गसङ्गविषयं परमार्थभूतम् ।।**

(वी.शै.प्र., पृ.५०, श्लो.१७)

## शैवसिद्धान्तः

शिवजीवयोरैक्यप्रतिपादकः वीरशैवसिद्धान्तः । शिवाद्वैतम्, शक्तिविशिष्टाद्वैतम्, शैवशास्त्रम्, वीरशैवसिद्धान्तः इत्यादीन्यस्यैव नामान्तराणि । षट्स्थलमार्गेण ब्रह्मसाक्षात्कारोऽस्य विशेषः ।

**शैवसिद्धान्तमार्गस्य भक्तकायस्थशङ्कर ।**

(सू.आ.,क्रि.पा.,१०.४२)

**शैवसिद्धान्तसर्वस्वं षट्स्थलब्रह्मवेदनम् ।**

(वी.शै.प्र., पृ.४१, श्लो.१३)

## शैवाः

शिवेन सम्बद्धाः । शिवाराधकाः । शिवमतावलम्बिनः । शिवभक्ताः । शिवानुयायिनः । वीरशैवाः ।

**तस्यां रमन्ते ये शैवाः वीरशैवास्तु ते मताः ।**

**शिवाश्रितेषु ते शैवाः .................. ।**

(सि.शि.५.१६, २०)

## शैवभेदः

आचारादिभेदेन भिद्यत्यनेकधा शैवः । तत्प्रतिपादकमतमपि तत्तच्छैवनामभिः व्यवह्रियते । तद्यथा ।

१. **द्विधा** – शैवम् वीरशैवमिति भेदेन शैवं द्विधा ।

**शैवं च वीरशैवं च द्विविधं शैवमीरितम् ।**

(वी.स.सं.,८.२)

श्रौतम् अश्रौतम् इति भेदेनापि शैवं द्विविधम् ।

**शैवं तु द्विविधं प्रोक्तं श्रौतमश्रौतमेव च ।**

(शै.र.,भा-२, २.२३, पृ.१५)

२. **चतुर्धा** । सामान्यशैवम्, मिश्रशैवम्, शुद्धशैवम्, वीरशैवम् इति शैवं चतुर्धा ।

**सामान्यशैवं प्रथमं मिश्रशैवं ततः परम् ।।**

**शुद्धशैवं तथा ज्ञेयं वीरशैवं ततः परम् ।**

(वा.शु.आ., १०.१०-११; सुप्र.आ., प्रकरणं ७; वी.स.सं., ७.३२-३३)

३. **पञ्चधा** - शुद्धशैवम्, मिश्रशैवम्, मार्गशैवम्, वीरशैवम्, अवान्तरशैवं चेति पञ्चधा ।

**शुद्धशैवं मिश्रशैवं मार्गशैवं तृतीयकम् ।**

**चतुर्थं वीरशैवं च पञ्चमोऽवान्तरस्तथा ।।**

(पार.आ., १७.४)

४.(अ) **सप्तधा** – अनादिशैवम्, आदिशैवम्, महाशैवम्, अनुशैवम्, अवान्तरशैवम्, प्रवरशैवम्, अन्त्यशैवम् इति भेदात् सप्तविधम् ।

**शैवाः सप्तविधा ज्ञेयास्तेषां भेदान् शृणु क्रमात् ।।**

**अनादिशैवः प्रथममादिशैवस्ततः परम् ।**

**महाशैवस्ततो ज्ञेयस्त्वनुशैवस्ततः परम् ।।**

**अवान्तरस्ततो ज्ञेयः प्रवरस्तदनन्तरम् ।**

**अन्त्यशैवस्ततो ज्ञेयः .............. ।।**

(सू.आ.,क्रि.पा.,७.४–६)

**शैवं सप्तविधं ज्ञेयं ........................ ।**

**अनादिशैवं प्रथममादिशैवं द्वितीयकम् ।।**

**महाशैवं तृतीयं स्यादनुशैवं चतुर्थकम् ।**

**अवान्तरं पञ्चमं षष्ठं प्रवरशैवकम् ।।**

**अन्त्यशैवमिति प्रोक्तं सप्तमं शृणु मत्प्रिये ।**

(वी.स.सं.,८.२–४)

(आ) वीरशैवम्, अनादिशैवम्, आदिशैवम्, अनुशैवम्, महाशैवम्, योगशैवम्, ज्ञानशैवम् इति सप्तधा । तद्यथा –

**शैवं सप्तविधं पुण्यं वीरशैवादिभेदतः ।।**

**वीरशैवं तथानादिशैवमादिपरं ततः ।**

**अनुशैवं महाशैवं योगशैवं तु षष्ठकम् ।।**

**सप्तमं ज्ञानशैवाख्यं ................. ।।**

(पार.आ., १.१५, १७)

५. **अष्टधा** – चन्द्रज्ञानागमोक्तरीत्या शैवम् – अनादिशैवम्, आदिशैवम्, पूर्वशैवम्, मिश्रशैवम्, शुद्धशैवम्, मार्गशैवम्, सामान्यशैवम्, वीरशैवमित्यष्टधा ।

**अधुना ते प्रवक्ष्यामि शैवभेदमनुत्तमम् ।**

**अनादिशैवं प्रथममादिशैवं द्वितीयकम् ।।**

**पूर्वशैवं तृतीयं स्यान्मिश्रशैवं चतुर्थकम् ।**

**शुद्धशैवं पञ्चमं स्यात् षष्टं वै मार्गशैवकम् ।।**

**सामान्यं सप्तमं ज्ञेयं वीरशैवमथाष्टमम् ।**

(चं.आ.,क्रि.पा.,१०.४–५)

६. **पञ्चदशधा** – आदिशैवम्, महाशैवम्, अनुशैवम्, अवान्तरशैवम्, अन्त्यशैवम्, प्रवरशैवम्, शैवम्, पाशुपतम्, सोमम्, दक्षिणम्, कालामुखम्, लाकुलम्, पूर्वशैवम्, मार्गशैवम्, शुद्धशैवम्– इति शैवं पञ्चदशधा।

**''आदिशैवमहाशैवादिषट्शैवानि भूयोऽपि शैवाः पाशुपता इत्युक्तानि शैवानि षट् पूर्वशैवमार्गशैवशुद्धशैवमिति शैवत्रयम् एवं पञ्चदशविधानि शैवानि।''**

(अ.वी.सा.सं.,भा–१, पृ.११)

## शैवागमाः

१. शिवेन प्रोक्ता आगमाः । शैवम्, पाशुपतम्, सोमम्, लाकुलं चेति चतुर्विधेषु आगमेषु 'शैवम्' इति परिगणितः प्रभेदः । स च वामम्, दक्षिणम्, मिश्रम्, सिद्धान्तम् – इति चतुर्धा ।

**आगमाः बहुधा प्रोक्ताः शिवेन परमात्मना ।**

**शैवं पाशुपतं सोमं लाकुलं चेति भेदतः ।।**

**तत्र शैवागमभेदान्निरूपयति –**

**तेषु शैवं चतुर्भेदं तत्र सर्वं विनिश्चितम् ।**

**वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ।।**

(सि.शि., ५.९.१०)

२. कामिकादिभेदेन शैवागमाः अष्टाविंशतिधा ।

(शि.त.र.,भा-१, १.१५९-१६१)

(पश्यत - शिवागमाः, शैवाः, शैवम्)

## शैवा माहेश्वराश्च

शिवसम्बन्धिनः शैवाः वीरशैवाः इत्यर्थः । माहेश्वरा अपि शिवसम्बन्धिनः वीरमाहेश्वरा इति कथ्यन्ते । तत्र शैवाः ज्ञानयज्ञरताः, माहेश्वराश्च कर्मयज्ञरताः । शैवाः ज्ञानकाण्डप्रतिपादितप्राणलिङ्गि-शरणैक्यस्थलोक्तधर्माचरणं कुर्वन्ति । माहेश्वराः बहिः कर्मकाण्ड-प्रतिपादितभक्तमाहेश्वरप्रसादिस्थलोक्तधर्माचरणं कुर्वन्तीति सम्बन्धः । यद्यपि ज्ञानयज्ञरतत्वकर्मयज्ञरतत्वकारणाभ्यां शैवा माहेश्वराः चेति भेदः क्रियते तथापि ज्ञानकर्मणोः परस्परसापेक्षत्वकारणतः शैवमाहेश्वरोभयोरपि ज्ञान कर्मसमन्वय एव ग्राह्यः ।

**शैवैर्माहेश्वरैश्चैव कार्यमन्तर्बहिः क्रमात् ।**

**शिवो महेश्वरश्चेति नात्यन्तमिह भिद्यते ।।**

**यथा तथा न भिद्यन्ते शैवा माहेश्वरा अपि ।**

**शिवाश्रितेषु ते शैवा ज्ञानयज्ञरता नराः ।।**

**माहेश्वराः समाख्याताः कर्मयज्ञरता भुवि ।**

**तस्मादाभ्यन्तरे कुर्युः शैवा माहेश्वरा बहिः ।।**

(सि.शि., ५.१९-२१)

**ज्ञानं हि परमेशस्य गदितं मुक्तिदं मुने ।**

**तत्कर्मसहितं प्रोक्तं मुक्तिदानक्षमं त्विति ।।**

**अपश्यन्नन्धको दग्धः पश्यन् दहति पङ्गुलः ।**
**अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी ।।**

(चं.आ.,क्रि.पा., १२.५-६)

**ज्ञानं प्रधानं न तु कर्महीनं कर्मप्रधानं न तु चिद्विहीनम् ।**
**तस्माद् द्वयोरेव भवेत्प्रसिद्धिः न ह्येकपक्षो विहगः प्रयाति ।**

(सि.शि.तत्त्व.प्र., ५.२१, इत्यस्य व्याख्याने उद्धृतम्)

**न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया ।**
**अपश्यन्नन्धको दग्धः पश्यन् पङ्गुश्च दह्यते ।।**

(सि.शि.तत्त्व.प्र., ५.२१, इत्यस्य व्याख्याने उद्धृतम्)

## शैवी कला

शिष्यस्य वामकरस्थिते लिङ्गे गुरुणऽऽवाह्य विनिवेशनीया शिष्यशिरसि स्थिता कला शैवी कला इत्युच्यते । सा एव शाम्भवी कला चित्कला चेति नाम्ना ज्ञायते ।

**शैवीं कलां स्वमनसा विभाव्य च ततः परम् ।**

(का.आ.,क्रि.पा.,१.१२०)

(पश्यत – चित्कला)

## शैवी भक्तिः

शिवभक्तिः । शैवी भक्तिः महाघोरसंसारभयं परिहरति । यस्मिन् सा समुत्पन्ना स भक्त इति कथ्यते ।

**शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते ।**
**भक्तिः शैवी महाघोरसंसारभयहारिणी ।**

(सि.शि.,५.२६; ४.४४)

(पश्यत – शिवभक्तिः)

## श्रद्धा

१. शिवविग्रहं हृदयस्थाने संभाव्य प्राणलिङ्गी भाववस्तुभिः पूजयेदिति प्रस्तावे श्रद्धा नाम भावः धूपत्वेन सम्भाव्यते ।

**पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम् ।**

**भावयित्वा सदा कालं पूजयेद्भाववस्तुभिः ।।**

**श्रद्धा धूपो महाज्ञानं जगद्भासिप्रदीपिका ।।**

(सि.शि.,१२.१५, १७)

२. श्रद्धाभक्तिः

**वक्तव्यं हि प्रयत्नेन श्रद्धाभक्तियुताय च ।**

(सू.आ.,क्रि.पा.,७.९०)

(पश्यत – श्रद्धाभक्तिः)

## श्रद्धाभक्तिः

भक्तादिषट्स्थलसम्बद्धासु षड्विधभक्तिषु श्रद्धाभक्तिः एकतमा । शमदमादिसाधनषट्के एकभूतेयं गुरुवेदान्तवाक्यादिषु विश्वासरूपिणी । इयमेव सद्भक्तिः भक्तस्थलसम्बद्धा । अत्र गुरुलिङ्गजङ्गमपूजायां तारतम्यसहितत्वं भक्तस्थलीयायाः अस्याः भक्तेः विशेषता ।

**वक्तव्यं हि प्रयत्नेन श्रद्धाभक्तियुताय च ।**

(सू.आ.,क्रि.पा.,७.९०)

**गुरुवेदान्तवाक्यादिविश्वासरूपः श्रद्धा ।**

**एवं शमादिषट्करूपं तृतीयं साधनम् ।**

(वी.आ.चं.,पृ.४)

**योगेन तु पराभक्तिरिति भक्तेस्तु वैभवम् ।।**

**अस्याः स्वरूपसद्भावात् सद्भक्तिरिति कीर्तिता ।**

**तद्भक्त्यैव तथा चास्य भक्तस्थलमुपागतम् ।।**

(अ.सू., ५.७०-७१)

**गुरौ च जङ्गमे लिङ्गे तारतम्याविशेषतः ।**
**पूजयेत् त्रिविधं रूपं तद्भक्तस्थलमुच्यते ।।**

(पार.आ., ६.९)

## श्रवणभक्तिः

श्रवणम्, कीर्तनम्, स्मरणम्, पादसेवनम्, अर्चनम्, वन्दनम्, दास्यम्, सख्यम्, आत्मनिवेदनं चेति नवविधभक्तिषु एका । शिवकथादिसंश्रवणं श्रवणभक्तिरित्युच्यते ।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**
**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना ।**

(सि.शि.,९.२)

**शम्भोः श्रवणं शिवकथाश्रवणम् ।**

(सि.शि.,तत्त्व.प्र., ९.२-३ इत्यनयोः व्याख्याने)

## श्रीगुरुः

वीरशैवानाम् अष्टावरणेषु एकम् । तत्र त्रिषु पूज्यावरणेषु गुरुलिङ्गजङ्गमेषु प्रथमम् । मोक्षस्य प्राप्त्यै दीक्षा संप्राप्त्यै च गुरुः मूलकारणं भवति । गुरुणा विना मुक्त्यादिसिद्ध्यै साधनानि पर्याप्तानि न भवन्ति । गुरुः शिव एव । यथा शिवः विद्यास्वरूपः तथा गुरुरपि । शिव एव गुरुरूपं धृत्वा भक्तानां पूजां स्वीकरोति । लिङ्गाङ्गस्थलभेदज्ञः शिवसिद्धान्तप्रतिपादको गुरुः श्रीगुरुः ।

**गुरुर्लिङ्गं जङ्गमश्च तीर्थं चैव प्रसादकः ।**
**भस्मरुद्राक्षमन्त्राश्चेत्यष्टावरणसंज्ञिताः ।।**

(चं.आ.,क्रि.पा.,२.२)

**ॐ आत्मा परशिवद्वयो गुरुः शिवः ।**

(रु.उ. उ.सं., भा.२.पृ.३०८)

**मोक्षस्य दीक्षासंप्राप्त्यै गुरुः स्यान्मूलकारणम् ।**
**न विना गुरुणा सिद्ध्यै साधनानि भवन्त्यलम् ।।**
**यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ।**
**गुरुर्वा शिव एवाथ विद्याकारेण संस्थितः ।**

(चं.आ.,क्रि.पा.,२.५, ७)

**शिवसिद्धान्ततत्त्वज्ञं छिन्नसन्देहविभ्रमम् ।**
**सर्वतन्त्रप्रयोगज्ञं धार्मिकं सत्यवादिनम् ।।**
**भस्मोद्धूलननिष्णातं भस्मतत्त्वविवेकिनम् ।।**
**त्रिपुण्ड्रधारणोत्कण्ठं धृतरुद्राक्षमालिकम् ।**
**लिङ्गधारणसंयुक्तं लिङ्गपूजापरायणम् ।।**
**लिङ्गाङ्गयोगतत्त्वज्ञं निरूढाद्वैतवासनम् ।**
**लिङ्गाङ्गस्थलभेदज्ञं श्रीगुरुं शिववादिनम् ।।**

(सि.शि., ६.३, ५-७)

(श्रीगुरुलक्षणानि - पश्यत - सू.आ.,क्रि.पा., ५.४-१९;
चं.आ.,क्रि.पा., समग्रं द्वितीयपटलम्, विशेषतः ४८-५२)

## श्रीरुद्रः

यजुर्वेदीयरुद्राध्याये विद्यमान एकादशानुवाकयुक्तः मन्त्रसमूहः ।

**श्रीरुद्रादींश्च जप्त्वाथ वह्न्यागारं प्रविश्य तु ।**

(चं.आ.,क्रि.पा.,११.४७)

## श्रौतलिङ्गम्

श्रौतलिङ्गमश्रौतलिङ्गं चेति लिङ्गद्वये एकम् । श्रौतधर्मनिष्ठानां लिङ्गं श्रौतमेव हि ।

**श्रौतधर्मैकनिष्ठानां लिङ्गं तु श्रौतमेव हि ।**

(क्रि.सा.,भा-१, ४.२६१)

## श्रौतशैवम्

द्विविधशैवतन्त्रयोरेकम् । श्रुतिसारप्रतिपादकं शैवतन्त्रम् ।

**श्रुतिसारमयं श्रौतम् ।**

(शै.र.,भा-२, २.२३, पृ.१५)

# ष

## षट्कलाः

शान्त्यतीतोत्तरा, शान्त्यतीता, शान्तिः, विद्या, प्रतिष्ठा, निवृत्तिश्चेति कलाः षट् । शान्त्यतीतोत्तरकला चिच्छक्तिः, शान्त्यतीतकला पराशक्तिः, शान्तिकला आदिशक्तिः, विद्याकला इच्छाशक्तिः, प्रतिष्ठाकला ज्ञानशक्तिः, निवृत्तिकला क्रियाशक्तिश्च । एवं षड्विधकला एव षड्विधशक्तयः । अत्र कला शक्तिरिति पर्यायनामनी ।

**शान्त्यतीतोत्तरा नाम चिच्छक्तिरिति कीर्तिता ।।**

**शान्त्यतीता पराशक्तिः शान्तिरेवादिसंज्ञिता ।**

**इच्छाशक्तिश्च विद्या स्यात् प्रतिष्ठा ज्ञानरूपिणी ।।**

**निवृत्तिः स्यात् क्रियाशक्तिरिति पर्यायसङ्गतिः ।**

(अ.सू., ३.२४-२६)

(पश्यत – कला)

## षट्चक्राणि

योगिभिरनुभववशाद् अन्तः सूक्ष्मदेहे भावितानि तानि षट्पङ्कज-युक्तानि । ब्रह्मादिस्थानभूतानि भवन्ति, आधारादि भ्रूमध्यान्तानि ।

**अन्तः षट्चक्ररुढानि पङ्कजानि विभावयेत् ।**

**ब्रह्मादिस्थानभूतानि भ्रूमध्यान्तानि मूलतः ॥**

(सि.शि.,१२.२५)

अन्यत्र सप्तचक्राणि उक्तानि । (पश्यत – सप्तचक्राणि)

## षट्त्रिंशत्तत्त्वानि

जगत्सृष्टिकारणभूतानि तत्त्वानि । तानि च शिवादिपृथिव्यन्तानि षट्त्रिंशत् । तेषामुत्पत्तिर्यथा सृष्टेः प्राक् परशिवब्रह्मणः पराशक्तेश्च सूक्ष्म-स्थूलादिविभागादर्शनदशायाम् इदमाम्नायाते –

**यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।**

**तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥**

(श्वे.उ.,४.१८)

यस्मिन् काले सूर्यचन्द्रादिप्राकाशकवस्तूनामभावेन दिवारात्रिविभाग-रहितं नामरूपविशेषाभावस्थितौ सूक्ष्म-स्थूल-चेतनाचेतन – सदसद्व्यक्ति – व्यवस्थाभाववशात् सर्वमिदं तमसावृतमासीत् । तदा स्वयं तत्त्वातीतोऽपि सर्वतत्त्वजनकः शक्तिविशिष्टः शिवः "सोऽकामयत बहुस्यां प्रजायेय" (तै.उ.,२.६) इति श्रुत्युक्तदिशा-सृष्ट्युन्मुखो भवति । तत्कारणतः बहुप्रपञ्चभावनात्मकविमर्शशक्तिः तदनुगुणत्वेन स्पन्दते । प्रथमं शिवात् इच्छाशक्तिराविर्बभूव । ततः ज्ञानशक्तिक्रियाशक्ती आविर्बभूवतुः । ज्ञानशक्तिरिच्छाशक्तेरन्तरङ्गभूता, क्रियाशक्तिश्चास्या बहिरङ्गभूता । परशिवः इच्छाशक्त्यन्तरङ्गभूतज्ञानशक्तिमनुप्रविश्य "सर्वज्ञोऽहम्" इत्यभिनिवेशेन **शिवतत्त्वं** – (१) भवति । शिवतत्त्वमेव भाविप्रपञ्चस्य निमित्तकारणं भवति । परशिवः इच्छाशक्तिबहिरङ्गभूतक्रियाशक्तिमनुप्रविश्य "सर्वकर्ताऽहम्"

इत्यभिनिवेशेन **शक्तितत्त्वं**-(२) भवति । इदं तत्त्वं भाविप्रपञ्चस्योपादानकारणं भवति । (शिव-शक्त्योरविनाभावात् द्वयोरपि भाविप्रपञ्चस्याभिन्ननिमित्तो-पादानकारणत्वमङ्गीक्रियते) । इदं शक्तितत्त्वम् "अहमिदम्" इत्यङ्कुरायमाणे-दन्तारूपं विश्वस्फुरणं प्राप्य **सदाशिवतत्त्वं** -(३) भवति । तदेव शक्तितत्त्वं "अहमिदम्" त्यङ्कुरिताहङ्काररूपं प्राप्य विश्वस्फूर्तिमयम् **ईश्वरतत्त्वं** -(४) भवति । तदेव शक्तितत्त्वं सागरतरङ्गन्यायेनाहन्तेदन्तयोरैक्यप्रतिपत्तिरूपं सागरतरङ्ग न्यायेन इदन्ताहन्तयोरैक्यप्रतिपत्तिं प्राप्य **शुद्धविद्यातत्त्वं** - (५) भवति । एतानि पञ्चशुद्धतत्त्वानि ।

शुद्धविद्यातत्त्वमेव मयूराण्डरसन्यायेन स्वान्तर्लीनेषु भावेष्वन्योन्या-भावनिबन्धनभेदबुद्धिप्राधान्यमवलम्ब्य **मायातत्त्वं** - (६) भवति । महेश्वराद्विभक्तत्वेन सङ्कुचितकर्तृताशक्तिर्जीवस्य किञ्चित्कर्तृतारूपं **कलातत्त्वं** - (७) भवति । ज्ञातृताशक्तिरेव किञ्चिज्ज्ञत्वलक्षणम् **अविद्या (विद्या)तत्त्वं** - (८) भवति । पूर्णताशक्तिरेवापूर्णतां प्राप्य स्रक्चन्दनवनितादिविषयासक्तिलक्षणं **रागतत्त्वं** - (९) भवति । नित्यताऽनित्यतां प्राप्य भूतभविष्यद्वर्तमानरूपं **कालतत्त्वं** - (१०) भवति। व्यापकता च व्याप्यतां प्राप्य "अस्मात् कारणादिदं कार्यं भवति नान्यत्" इति नियमहेतुभूतं **नियतितत्त्वम्** - (११) । कलातत्त्वादारभ्य नियतितत्त्वपर्यन्तं पञ्चतत्त्वानि पुरुषस्य पञ्चकञ्चुकानि इति कथ्यन्ते । वह्नेः यथा काष्ठयोगेन विस्फुलिङ्गाविर्भावस्तथा परमेश्वरस्येच्छाशक्तिवशात् विभक्तः सन् मायाशक्तौ प्रविष्टः शिवांशः **पुरुषतत्त्वं** - (१२) भवति । अत्र मायातत्त्वादारभ्य पुरुषतत्त्वपर्यन्तं सप्ततत्त्वानि शुद्धाशुद्धतत्त्वानि इति कथ्यन्ते ।

सृष्ट्यादिव्यापारे निरतेयं इच्छाशक्तिरेव प्रतिस्फुरणगत्या स्वगत ज्ञानक्रियाशक्त्योरन्योन्याभावलक्षणमायाप्रतिस्फुरणरूपं सुखदुःखमोह-हेतुभूतानां सत्त्व-रजस्-तमसां साम्यावस्थारूपं बुद्ध्यादि पृथिव्यन्तसर्व-तत्त्वानां मूलकारणं **प्रकृतितत्त्वं** - (१३) भवति । "इदमित्थम्" इति निश्चयकारणं **बुद्धितत्त्वम् (महत्तत्त्वम्)** - (१४) ; "अहं" "ममेदं"

इत्यभिमानकारणभूतम् **अहङ्कारतत्त्वम्** – (१५); ''स्थाणुर्वा पुरुषो वा'' इति सङ्कल्पविकल्पयोः साधनभूतम् **मनस्तत्त्वम्** – (१६) इति त्रीणि तत्त्वानि शरीरान्तर्गतत्वात् ''अन्तःकरणम्'' इति कथ्यन्ते । इदमन्तः-करणमिच्छाशक्तिप्रधानम् ।

पूर्वोक्तं प्रकृतितत्त्वमेव शरीरबाह्यलग्नं सत् पञ्चज्ञानेन्द्रियरूपेण परिणमते । तत्र शब्दज्ञानसाधनं **श्रोत्रतत्त्वम्** – (१७); स्पर्शज्ञानसाधनं **त्वक्तत्त्वम्** – (१८); रूपज्ञानसाधनं **नेत्रतत्त्वम्** – (१९); रसज्ञानसाधनं **जिह्वातत्त्वम्** – (२०); गन्धज्ञानसाधनं च **घ्राणतत्त्वम्** – (२१) । एतानि पञ्चज्ञानशक्तिप्रधानानि बाह्यकरणानि ।

पूर्वोक्तं प्रकृतितत्त्वं क्रियाशक्त्युद्रेकदशां प्राप्य पञ्चकर्मेन्द्रियरूपेण परिणमते । तत्र उच्चारणक्रियासाधनं **वाक्तत्त्वम्** – (२२); दानादानादि क्रियासाधनं **पाणितत्त्वम्** – (२३); गमनागमनादिक्रियासाधनं **पादतत्त्वम्** (२४); मलविसर्जनरूपक्रियासाधनं **पायुतत्त्वम्** – (२५); रेतोमूत्रपरित्यागरूपक्रियासाधनं **उपस्थातत्त्वम्** – (२६) । एतानि क्रियाशक्तिप्रधानानि ।

केवलश्रोत्रेन्द्रियग्रहणविषयीभूतं **शब्दतत्त्वम्** – (२७); केवल-त्वगिन्द्रियग्रहणविषयीभूतं **स्पर्शतत्त्वम्** – (२८); केवलनेत्रेन्द्रियग्रहण-विषयीभूतं **रूपतत्त्वम्** – (२९); केवलजिह्वेन्द्रियग्रहणविषयीभूतं **गन्धतत्त्वम्** (३१) एते शब्दस्पर्शादयः तत्तद्विशेषगुणानामनभिव्यक्तत्वेन तन्मात्राणीत्युच्यन्ते ।

प्रथमं तामसाहङ्कारात् शब्दतन्मात्रम्, ततः शब्दैकगुणम् **आकाश-तत्त्वम्** – (३२); ततः शब्दस्पर्शात्मक गुणद्वययुक्तं **वायुतत्त्वम्** – (३३); ततः शब्दस्पर्शरूपात्मकगुणत्रययुक्तम् **अग्नितत्त्वम्** – (३४); ततः शब्दस्पर्शरूपरसात्मकगुणचतुष्टययुक्तं **जलतत्त्वम्** – (३५); ततः शब्दस्पर्शरूपरसगन्धात्मकगुणपञ्चकयुक्तं **पृथिवीतत्त्वम्** – (३६)

**तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । (तै.उ.,२.१.१)**
"प्रकृतितत्त्वादारभ्यपृथिवीतत्त्वपर्यन्तं चतुर्विंशतितत्त्वानि चाशुद्ध-तत्त्वानीति कथ्यन्ते ।"

(श्री.भा.,भा-१, भूमिका, पृ.५३-५६; सि.शि.,१.५-१०)

## षट्त्रिंशत् लिङ्गस्थलानि

सूक्ष्मागमोक्तरीत्या आचारादिषड्विधलिङ्गस्थलानि तत्सम्बद्धा ङ्गस्थलसंयोगेन षट्त्रिंशत् स्थलानि भवन्ति । तद्यथा - एकैकं लिङ्गस्थलं मोही, भक्तः, पूजकः, वीरः, प्रसादी, प्राणी चेति षड्विधभक्तरूपा - ङ्गस्थलानां योजनेन षड्विधं भवति । एवं षड्विधलिङ्गस्थलानि तत्तदङ्गस्थलषट्कयोगेनाहत्य षट्त्रिंशत् लिङ्गस्थलानि भवन्ति ।

**आदावाचारलिङ्गं स्यात् ततश्च गुरुलिङ्गकम् ।**
**शिवलिङ्गं ततो ज्ञेयं चरलिङ्गमतः परम् ।।**
**ततः प्रसादलिङ्गं स्यान्महालिङ्गमतः परम् ।**
**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**
**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**
**एवं लिङ्गस्थलं देवि तदङ्गस्थलयोगतः ।**
**एकैकं षड्विधं प्रोक्तं तेन षट्त्रिंशतां गतम् ।।**

(सू.आ.,कि.पा.,८.४-५, ३७, ७६)

(पश्यत - लिङ्गस्थलम्)

## षट्सादाख्यानि

शिवसादाख्यम्, अमूर्तसादाख्यम्, मूर्तसादाख्यम्, कर्तृसादाख्यम्, कर्मसादाख्यम्, महासादाख्यं चेति षट्सादाख्यानि । एतानि

षडक्षरमन्त्रस्थितं वर्णानां क्रमेण सङ्केतानि भवन्ति । महासादाख्यं विहाय पञ्चसादाख्यानि प्रसिद्धानि ।

**प्रथमं शिवसादाख्यममूर्तं च ततः परम् ।**
**ततश्च मूर्तसादाख्यं ततो वै कर्तृनामकम् ।।**
**कर्मसादाख्यमपरं महारूपमनन्तरम् ।**
**यदि प्रणवपर्यन्तमेवं ज्ञेयं वरानने ।।**

(सू.आ.,क्रि.पा., ४.४२-४३)

(पश्यत – सादाख्यम्)

## षट्स्थलब्रह्मिणः

षट्स्थलमार्गमवलम्ब्य ब्रह्मत्वं प्राप्तवन्तः षट्स्थलब्रह्मिणः । तत्त्वब्रह्मविद्याविवर्धकाः षट्स्थलब्रह्मिणः ।

**षट्स्थलब्रह्मिणः तत्त्वब्रह्मविद्याविवर्धकाः ।**

(वी.आ.उ.,भा-१, २.२०)

## षट्स्थलानि

वीरशैवानां साधनमार्गः षट्स्थलात्मकः । षट्स्थलानि द्विधा अङ्गषट्स्थलानि, लिङ्गषट्स्थलानि चेति । षडङ्गस्थलानि यथा - भक्तस्थलम्, माहेश्वरस्थलम्, प्रसादिस्थलम्, प्राणलिङ्गिस्थलम्, शरणस्थलम्, ऐक्यस्थलं चेति । षड्लिङ्गस्थलानि यथा - आचारलिङ्गस्थलम्, गुरुलिङ्गस्थलम्, शिवलिङ्गस्थलम्, चरलिङ्गस्थलम्, प्रसादलिङ्गस्थलम्, महालिङ्गस्थलं चेति ।

**भक्तो माहेश्वरश्चैव प्रसादी प्राणलिङ्गकः ।**
**शरणः शिवलिङ्गैक्यः षट्स्थलानि हि पार्वति ।।**
**आदावाचारलिङ्गं स्यत् ततश्च गुरुलिङ्गकम् ।**

**शिवलिङ्गं ततो ज्ञेयं चरलिङ्गमतः परम् ।**

**ततः प्रसादलिङ्गं स्यान्महालिङ्गमतः परम् ।।**

(सू.आ.,क्रि.पा., ८.३२, ४-५)

**आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम् ।**

**प्रसादिस्थलमन्यत्तु प्राणलिङ्गस्थलं ततः ।।**

**शरणस्थलमाख्यातं षष्ठमैक्यस्थलं मतम् ।।**

(सि.शि., ५.२४)

## षट्स्थलपूजाविधानम्

सामरस्ययुक्तेनाङ्गषट्स्थलयोगेन यत् पूजा विधानमुक्तं तदेव वीरशैवानां षट्स्थलपूजाविधानम् । तेन विधानेन क्रियमाणायाः महापूजायाः क्रमः कारणागमे क्रियापादे सप्तमपटले सम्यक् प्रपञ्चितः । सूक्ष्मागमे तावत् तस्य संक्षिप्तस्वरूपं षट्स्थलात्मकरहस्यत्वेन निरूप्यते । तत्र भक्तस्थलान्तर्गतत्वेन भस्मरुद्राक्षधारणं कृत्वा समासीनः सन्, माहेश्वरस्थलान्तर्गतत्वेन षडक्षरविद्यायाः मानसजपात्मकं ध्यानं करोति । पश्चात्प्रसादिस्थलमाश्रित्य हस्ते लिङ्गमूर्तिं संस्थाप्य दृष्टियोगं समासाधयति। अनेन क्रमेण प्राणलिङ्गिस्थलमाश्रित्य लिङ्गं अर्थात् प्राणलिङ्गानुसन्धानपूर्वकमिष्टलिङ्गं सम्पूजयति । पुनः शरणस्थलान्तर्ग-तत्वेनानन्दमनुभवन् गन्धादिविषयान् समर्प्य ऐक्यस्थलमाश्रित्य समर्पितगन्धादिपदार्थान् प्रसादरूपेणोपभुज्य तृप्तिमवाप्नोति। इदमेव षट्स्थलपूजाविधानम् । अस्मिन् विधाने परिणत एव वीरशैवः ।

**षट्स्थलोक्तविधानेन महापूजां समाचरेत् ।।**

(मकुट.,क्रि.पा.,२.४१)

**इदमत्र रहस्यं वै श्रूयतां षट्स्थलात्मकम् ।।**

**भक्तस्थले समासीनो भूतिरुद्राक्षसंयुतः ।**

षडक्षरजपं कृत्वा ततो माहेश्वरस्थले ।।
हस्ते कृत्वा लिङ्गमूर्तिं प्रसादिस्थलमाश्रितः ।
लिङ्गं च भक्त्या सम्पूज्य प्राणलिङ्गस्थले ततः ।।
कृत्वा शिवार्पणं देवि सानन्दं शरणस्थले ।
ऐक्यस्थले प्रसादोपभोगतृप्तिमवाप्नुयात् ।।
एवं समरसाद्भावादङ्गषट्स्थलयोगतः ।
यः पूजयति मां देवि वीरशैवः स उच्यते ।।

(सू.आ.,क्रि.पा.,६.५४–५७)

(पश्यत – महापूजाविधिक्रमः, वीरशैवार्चनक्रमः, शिवलिङ्गार्चनक्रमः)

## षडक्षरम् (:)

षडक्षरीमन्त्रः । सर्वसिद्धिकरोऽयं मन्त्रः विद्यानाम् आदिभूतः । वेदसारभूतः सूक्ष्मश्चायं मन्त्रः वटबीजवत् महार्थवान् । अत्रत्यानि षडक्षराणि षट्स्थलादीनां प्रतिनिधिभूतानि –

प्रणवेन समायुक्तं षडक्षरमिति स्मृतम् ।
सर्वसिद्धिकरं शान्तं सर्वमन्त्रेषु गोपितम् ।
विद्यानामादिभूतं च षडक्षरमिदं परम् ।।

(सू.आ.,क्रि.पा.,३.१३; ४.५६)

मन्त्रः सुखमुखोच्चार्यश्चाशेषार्थप्रसाधकः ।
तदल्पं वेदसाराख्यं भक्तिदं च विमुक्तिदम् ।।
तद्बीजं सर्वविद्यानां मन्त्रमाद्यं षडक्षरम् ।
अतिसूक्ष्मं महार्थं च ज्ञेयं तद्वटबीजवत् ।।

(पार.आ.,११.९–१०)

**ॐकारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः ।**

**शैवागमेषु वेदेषु षडक्षर इति स्मृतः ।।**

(सि.शि.,८.१७)

**षडक्षरार्थः**

अत्रत्यमेकैकमप्यक्षरम् अर्थवत् । तद्यथा ॐकारः शिवशरीरात्मकः । नकारादीनि पञ्चाक्षराणि शिवस्य सद्योजातादिपञ्चवक्त्राणां वाचकानि ।

**ॐकारो मम देहः स्यान्नकाराद्यं मम प्रिये ।।**

**सद्यादिपञ्चवक्त्राणि क्रमादेवं वरानने ।**

**पञ्चब्रह्मात्मको मन्त्रः प्रणवाद्यः षडक्षरः ।।**

(सू.आ.,क्रि.पा., ४.३६-३७)

षडक्षराणीमानि पूर्णत्वादि षट्तत्त्वरूपानि । तद्यथा –

**यकारः पूर्णतायुक्तो वकारः नित्यवाचकः ।**

**आनन्दः स्याच्छिकारस्तु चिद्रूपो हि मकारकः ।।**

**सत्यरूपो नकारः स्यान्मिश्रात्मा प्रणवो भवेत् ।**

(सू.आ.,क्रि.पा., ४.३८-३९)

षडक्षराणीमानि संज्ञावाचकानि ।

**यकारः परसंज्ञः स्याद्वाकारो गूढरूपकः ।।**

**शरीरस्थः शिकारश्च लिङ्गक्षेत्रं मकारकः ।**

**अनादिरूपवान् नश्च प्रणवो हि महान् स्मृतः ।।**

(सू.आ.,क्रि.पा.,४.४०)

षडक्षराणि षट्शक्तिवाचकानि ।

**यकारस्तु पराशक्ति आदिशक्तिश्च वाक्षरः ।**

**इच्छाशक्तिः शिकारः स्यात् ज्ञानशक्तिर्मकारकः ।।**

**क्रियाशक्तिर्नकारः स्यात् प्रणवो हि चिदात्मकः ।**

(सू.आ.,क्रि.पा.,४.४१)

षडक्षराणि षट्सादाख्यरूपाणि ।

**प्रथवं शिवसादाख्यममूर्तं च ततः परम् ॥**

**ततश्च मूर्तसादाख्यं ततो वै कर्तृनामकम् ।**

**कर्तृसादाख्यमपरं महारूपमनन्तरम् ॥**

**यादिप्रणवपर्यन्तमेवं ज्ञेयं वरानने ॥**

(सू.आ.,क्रि.पा.,४.४२-४३)

षडक्षराणि ऐक्यादिषट्स्थलात्मकानि ।

**ऐक्यश्चशरणश्चैव प्राणलिङ्गी प्रसादकः ॥**

**माहेश्वरोऽपि भक्तश्च षट्स्थलात्मा षडक्षरः ।**

(सू.आ.,क्रि.पा.,४.४५)

षडक्षराणि भावादिषड्विधहस्तरूपाणि ।

**भावो ज्ञानं च सुमनो निरहङ्कार एव च ॥**

**बुद्धिश्चित्तं च भावादिहस्तरूपः षडक्षरः ।**

(सू.आ.,क्रि.पा.,४.४६)

षडक्षराणि षड्विधब्रह्मवाचकानि ।

**ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः ॥**

**तथा परशिवश्चैव षडेवात्मा षडक्षरः ।**

(सू.आ.,क्रि.पा.,४.४७)

षडक्षराणि षड्विधवर्णवाचकानि ।

**स्फटिकाभो यकारश्च वाकारः श्वेतवर्णकः ॥**

**नीलद्युतिः शिकारः स्याद्रक्तकान्तिर्मकारकः ।**

**नकारः पीतवर्णः स्यात्तारोवर्णाद्बहिः परः ॥**

(सू.आ.,क्रि.पा.,४.४८-४९)

षडक्षराणि ईशादिवाचकानि ।

**ईशो महेश्वरश्चैव शिवो विद्या तथैव च ।।**

**आत्मा परशिवश्चैव यादीनां तत्त्वतः क्रमात् ।**

(सू.आ.,क्रि.पा.,४.५१)

षडक्षराणि वेदज्ञानवाचकानि ।

**यार्णं वेदसहस्राढ्यं वार्णं चाथर्वणः स्मृतम् ।।**

**शिकारो सामवेदः स्यान्नकारो यजुरुच्यते ।**

**ऋग्वेदो हि नकारश्च ज्ञानात्मा प्रणवः स्मृतः ।।**

(सू.आ.,क्रि.पा.,४.५२)

## षडक्षरी

षडक्षरमन्त्रः ।

**पञ्चाक्षरीमिमां विद्यां प्रणवेन षडक्षरीम् ।**

**जपेत् समाहितो भूत्वा शिवपूजापरायणः ।।**

(सि.शि.,८.२४)

(पश्यत – षडक्षरम् (:)

## षडक्षरीविद्या

ॐनमः शिवाय इति षडक्षरीमन्त्रः ।

**पञ्चाक्षरीमिमां विद्यां प्रणवेन षडक्षरीम् ।**

**जपेत् समाहितो भूत्वा शिवपूजापरायणः ।।**

(सि.शि.,८.२४)

**जपेत् षडक्षरीविद्यां शिवतत्त्वप्रबोधिनीम् ।**

(वी.शै.उ., पृ.१३, श्लो–३)

## षडङ्गन्यासः

न्यासविधौ षडङ्गन्यासविधिरेकतमः । तत्र 'अनन्तशक्तिधाम्ने' इत्यादीनि चतुर्थन्तानि महेश्वरस्य षडङ्गानि यथाक्रमं षडक्षरमन्त्राक्षरपूर्वकं हृदयशिरश्शिखाकवचनेत्रत्रयास्त्रेषु नम आदि पल्लवैस्सह न्यसेत् । अयमेव षडङ्गन्यासः । स्पष्टार्थं अयं षडङ्गन्यास एवं लिख्यते ।

**ॐ अनन्तशक्तिधाम्ने हृदयाय नमः ।**
**नं सर्वज्ञशक्तिधाम्ने शिरसे स्वाहा ।**
**मं नित्यतृप्तिधाम्ने शिखायै वषट् ।**
**शिं अनादिभेदशक्तिधाम्ने कवचाय हुम् ।**
**वां स्वतन्त्रशक्तिधाम्ने नेत्रत्रयाय वौषट् ।**
**यं अलुप्तशक्तिधाम्ने अस्त्राय फट् ।**
**चतुर्थ्यन्तैरनन्तादिशक्तिधामादिभिः सह ।**
**षड्वर्गपूर्वकैर्न्यसेत् षडङ्गानि यथाक्रमम् ॥**

(सू.आ.,क्रि.पा., ३.३३)

अत्र हृदयं मूलविद्या (ॐकारः), नकारः शङ्करः शिरः, शिखा मकारः, कवचम् शिकारः । वाकारः नेत्रत्रयम्, यकारश्च अस्त्रम् । नमः, स्वाहा, वषट्, हुं, वौषट्, फट् इत्येते षट्पल्लवाः ।

**हृदयं मूलविद्येयं नकारः शङ्करः शिरः ।**
**शिखा मकारः कवचं शिकारो वापि दृक्त्रयम् ॥**
**यकरोऽस्त्रं नमः स्वाहा वषड् हुं च यथाक्रमम् ।**
**वौषट् फडिति देवेशी पल्लवाः षट् प्रकीर्तिताः ॥**

(पार.आ.,११.४५-४६)

**षडङ्गब्रह्म = षडक्षरमन्त्रः ।**

तत्रस्थषडक्षरेषु ॐकारः परमात्मनः अङ्गम् । अवशिष्टानि पञ्चाक्षराणि सद्योजातादि पञ्चब्रह्ममयानि ।

**ॐकारो मम देहःस्यान्नकाराद्यं मम प्रिये ।**
**सद्यादिपञ्चवक्त्राणि क्रमादेवं वरानने ।।**

(सू.आ., क्रि.पा., ४.३६)

**ओमित्यङ्गं महेशस्य महतः परमात्मनः ।।**
**वर्णान्यस्य तु सद्यादिमुखानीत्यभिवर्णितम् ।**
**पञ्चब्रह्ममयान्येतान्युच्यन्ते स्वयमेव च ।।**
**अत ओङ्कार एवोक्तं षडङ्गब्रह्मलक्षणम् ।**

(शि.त.र.,भा-२, १.५.३५, ३७)

**षडङ्गमन्त्राः**

शिवाङ्गम्, भूताङ्गम्, कूटाङ्गम्, विद्याङ्गम्, शक्त्यङ्गम्, सामान्याङ्गं चेति षडङ्गानि प्रत्येकतया उक्तानि तेषां मन्त्राः

१. **शिवाङ्गमन्त्रः–हां–हीं–हूं–हैं–हौं–हः (तान्त्रिकशिवाङ्गमन्त्रः।)**
हां–ही–हूं–हैं–हौं–हः (वैदिकशिवाङ्गमन्त्रः)

२. **भूताङ्गमन्त्रः**
**ह्लां–ह्लीं – ह्लूं– ह्लैं – ह्लौं – ह्लह् ।**

३. **कूटाङ्गमन्त्रः**
**क्षां–क्षीं–क्षूं–क्षैं–क्षौं–क्षः ।**

४. **विद्याङ्गमन्त्रः** – शिवादि षडस्त्रमन्त्रा एव विद्याङ्गमन्त्राः ।
**शिवास्त्रमन्त्रः – ओं शिवास्त्राय फट् ।**
**पाशुपतास्त्रमन्त्रः – ओं–श्रीं–पशु–हुं–फट् ।**

**ब्रह्मास्त्रमन्त्रः – ओं ब्रह्मास्त्राय फट् ।**

**क्षुरिकास्त्रमन्त्रः – ओं क्षुरिकास्त्राय फट् ।**

**व्यामोस्त्रमन्त्रः – ओं–मां–मीं–मूं–व्योमव्यपिने–ओं ।**

**अघोरास्त्रमन्त्रः – ओं–ह्लां–ह्लीं–प्रस्फुर–स्फुर–घोर–घोरतर–तनुरूप–चटचट–प्रचट–प्रचट–कह–कह–वम–वम–घातय–घातय–हुं–फट्–स्वाहा ।**

५. **शक्त्यङ्गमन्त्रः**

**सां–सीं–सूं–सैं–सौं–सः (तान्त्रिकशक्त्यङ्गमन्त्रः)**

**स्रां–स्रीं–स्रूं–स्रैं–स्रौं–स्रः (वैदिकशक्त्यङ्गमन्त्रः)**

६. **सामान्याङ्गमन्त्रः**

**आ–ई–ऊ–ऐ–औ–अः ।**

(पश्यत – शिवाङ्गमन्त्रादयः प्रत्येकतया सविवरं दत्ताः)

## षडङ्गानि

१. एतानि महेश्वरस्य षडङ्गानि – सर्वज्ञता, तृप्तिः, अनादिबोधः, स्वतन्त्रता, अलुप्तशाक्तिः, अनन्तशक्तिश्चेति । एतानि एव भक्तादि षट्स्थलानि । तथा हि – महेश्वरस्य सर्वज्ञत्वाङ्गं भक्तस्थलम्, तृप्त्यङ्गं महेश्वरस्थलम्, अनादिबोधाङ्गं प्रसादिस्थलम्, स्वतन्त्रताख्याङ्गं प्राणलिङ्गिस्थलम्, अलुप्तशक्त्यङ्गं शरणस्थलम्, अनन्तशक्त्यङ्गं च ऐक्यस्थलम् । एतानि चक्षुरादीनि महेश्वरस्य पञ्चज्ञानेन्द्रियाणि ।

**सर्वज्ञतातृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।।**
**यद्भक्तस्थलमित्याहुस्तत्सर्वज्ञत्वमुच्यते ।**
**यन्महेश्वरकं नाम सा तृप्तिर्मम शाङ्करी ।।**
**यत्प्रसादाभिधं स्थानं तद्बोधो मे निरङ्कुशः ।**

**यत्प्राणलिङ्गकं नाम तत्स्वातन्त्र्यमुदाहृतम् ।।**

**यदस्तिशरणज्ञानमलुप्ताशक्तिरुच्यते ।**

**यदैक्यस्थानमूर्ध्वस्थं शक्त्यनन्तेशिता मम ।।**

**एतानि मम चाङ्गानि चक्षुरादीन्यसंशयम् ।।**

(पार.आ.,६.३३-३७)

२. शमदमादिषट्कं लिङ्गधारिणः वीरशैवस्य षडङ्गानीति कथ्यन्ते । (शमः, दमः, तितिक्षा, उपरतिः, श्रद्धा, शमादिश्च)

**शमो दमस्तितिक्षोपरति श्रद्धासमाधयः ।**

(पार.आ., १०.७२)

३. षडङ्गन्यासे परमेश्वरस्य षडङ्गनामानि सर्वज्ञतादीनि प्रयुक्तानि भवन्ति । करन्यासः, देहन्यासः, अङ्गन्यास इति त्रिषु अङ्गन्यास एव षडङ्गन्यासशब्देन व्यवह्रियते । एष न्यासः सृष्टि-स्थिति-संहारक्रमेषु भिन्नभिन्नरीत्या प्रवर्तते ।

पूर्वोक्तः षडङ्गन्यासक्रमः सृष्टिन्यासक्रमः ब्रह्मचारिणाम् इत्यवगम्यताम् । स्थितिन्यासक्रमः संहारन्यासक्रमश्च षडङ्गन्यासस्य अत्राधस्ताद् विलिख्यते-

**स्थितिन्यासक्रमः (गृहस्थानाम्)**

**शिं अनादिबोधशक्तिधाम्ने कवचाय हुम् ।**

**वां नित्यतृप्तिशक्तिधाम्ने नैत्रत्रयाय वौषट् ।**

**यं सर्वज्ञशक्तिधाम्ने अस्त्राय फट् ।**

**नं अलुप्तशक्तिधाम्ने हृदयाय नमः ।**

**मं स्वतन्त्रशक्तिधाम्ने शिरसे स्वाहा ।**

**ॐ अनन्तशक्तिधाम्ने शिखायै वषट् ।**

**संहारन्यासक्रमः (वानप्रस्थसंन्यासिनाम्)**

**नं अलुप्तशक्तिधाम्ने अस्त्राय फट् ।**

**मं स्वतन्त्रशक्तिधाम्ने नेत्रत्रयाय वौषट् ।**

**शिं अनादिबोधशक्तिधाम्ने कवचाय हुम् ।**

**वां नित्यतृप्तिशक्तिधाम्ने शिखायै वषट् ।**

**यं सर्वज्ञशक्तिधाम्ने शिरसे स्वाहा ।**

**ॐ अनन्तशक्तिधाम्ने हृदयाय नमः ।**

(पश्यत – सू.आ., अनुबन्धः)

## षडध्वम्

मन्त्राध्वा, पदाध्वा, वर्णाध्वा, भुवनाध्वा, तत्त्वाध्वा, कलाध्वा – इति षण्णाम् अध्वनाम् समाहारः षडध्वम् ।

**ततः शिवकलावाहनार्थं कुर्याद्यथाविधि ।**

**अध्वन्यासान् षडप्यत्र लिङ्गे सङ्कल्पपूर्वकम् ।।**

(का.आ.,क्रि.पा.,१.६६)

(पश्यत – अध्वा)

## षडध्वन्यासः

दीक्षासमये लिङ्गसंस्कारे शिवकलाया आवाहनार्थं षडध्वन्यास सङ्कल्पपूर्वकं कुर्यादिति विधिः । लिङ्गस्य अधस्ताद् विद्यमानायाः पट्टिकायाः अधः भुवनाध्वानम्, तस्यां पट्टिकायां पदाध्वानम्, तस्यां मध्ये वर्णाध्वानम्, उपरितनपट्टिकायां कलाध्वानम्, ततः तत्त्वाध्वानम् घृतपात्रे मन्त्राध्वानम् न्यसेदिति अध्वन्यासविधिः । अध्वन्यासानन्तरं लिङ्गं गन्धादिभिः पूजयेदिति नियमः ।

**ततः शिवकलावाहनार्थं कुर्याद्यथाविधि ।**

**अध्वन्यासान्षडप्यत्र लिङ्गे संकल्पपूर्वकम् ।।**

**भुवनाभिख्यमध्वानं पट्टिकायामधो न्यसेत् ।**

**तत्कञ्जे तु पदाध्वानं वर्णाध्वानं च मध्यके ।।**

**उर्ध्वकञ्जे कलाध्वानं पट्टिकायां तथा पुनः ।**

तत्वाध्व नं च विन्यस्येत् तत आज्यप्रघारिके ।।
मन्त्राध्वानं च विन्यस्य गन्धाद्यैरभिपूजयेत् ।
(का.आ.,क्रि.पा.,१.६६–६८)

(पश्यत – अध्वा)

## षडध्वशोधनम्

षडध्वशोधनद्वारा मांसपिण्डनिवृत्तिः भवति । तदर्थं विधिपूर्वकं स्वस्तिकारोहणदीक्षां शिष्याय दद्यात् । शब्दार्थरूपाणां षडध्वनां न्यासः संहारक्रमेण शिष्यस्य पादाद्यङ्गेषु कुर्यात् । तत्र शब्दरूपं वर्णाध्वानं पादयोः, अर्थरूपं कलाध्वानं मेढ्रे (जननेन्द्रिये), शब्दरूपं पदाध्वानं नाभौ, अर्थरूपं तत्त्वाध्वानं हृदये, शब्दरूपं मन्त्राध्वानं मुखे, अर्थरूपं भुवनाध्वानं च शिरसि इत्येवं क्रमेण न्यासं कुर्यात् । एतदेव षडध्वशोधनम् ।

षडध्वशोधनद्वारा मांसपिण्डनिवृत्तये ।
स्वस्तिकारोहणाभिख्यां दीक्षां दद्याद्यथाविधि ।।
संहारक्रमतो विद्वान् शब्दार्थात्मषडध्वनः ।
पादादिषु तु विन्यस्येच्छिष्यस्य नियतात्मनः ।।
वर्णाध्वानं शब्दरूपं विन्यस्येत्पादयोर्बुधः ।
अर्थरूपं कलाध्वानं मेढ्रे न्यसेदनन्तरम् ।।
शब्दरूपं पदाध्वानं नाभौ विन्यस्य देशिकः ।
तत्त्वाध्वानं त्वर्थरूपं हृदि न्यसेदतन्द्रितः ।।
मन्त्राध्वानं शब्दरूपं विन्यस्यैवं मुखे तथा ।
अर्थरूपं च भुवनाध्वानं न्यसेच्छिरस्यपि ।।
(का.आ., क्रि.पा.,१.७७–८१)

## षडर्थाः

ज्ञानम्, ज्ञेयम्, अनुष्ठेयम्, अधिकारः, साधनम्, साध्यम् - इति षडर्थाः । तत्र गुरोः सकाशात् अधिगतं ज्ञानम् । पशुः, पाशः, पतिश्चेति त्रिविधं ज्ञेयम् । लिङ्गार्चनादिकम् अनुष्ठेयम् । भस्म अधिकारः । शिवमन्त्रादिकं साधनम् । शिवस्वरूपप्राप्तिः साध्यम् ।

**ज्ञानं ज्ञेयमनुष्ठेयमधिकारोऽथ साधनम् ।**
**साध्यं चेति षडर्थानां संग्रहस्तेषु संग्रहः ।।**
**गुरोरधिगतं ज्ञानं ज्ञेयं पाशः पशुः पतिः ।**
**लिङ्गार्चनाद्यनुष्ठेयं भस्मैवाधिकृतं द्विजैः ।।**
**साधनं शिवमन्त्राद्यं साध्यं शिवसमानता ।**
**षडर्थसंग्रहस्यास्य ज्ञानात् सर्वज्ञतोच्यते ।।**

(शै.र.,भा-१, १.१०२-१०५, पृ.२६)

## षडवस्थाः

जाग्रदवस्था, स्वप्नावस्था, सुषुप्त्यवस्था, तुरीयावस्था, तुर्यातीतावस्था चेति षडवस्थाः ।

**जाग्रत् स्वप्नसुषुप्तिश्च तुरीयं च षडेव च ।**
**तुर्यातीतं च सहजं न किञ्चित् चिन्तयेत्ततः ।।**

(शि.यो.प्र.,५.३०)

## षडूर्मयः

क्षुत्, पिपासा, शोकः, मोहः, जननम्, मरणं चेति संसारसागरस्य तरङ्गभूताः षडूर्मयः । तत्र क्षुत्, पिपासा च प्राणधर्मौ । शोकश्च मोहश्च मनोधर्मौ । जननं मरणं चेति देहधर्मौ ।

**क्षुत्पिपासे महेशानि शोकमोहौ जनिर्मृतिः ।**
**संसाराब्ध्यूर्मयश्चैता यथाब्धावूर्मयस्तथा ।।**

**क्षुत्पिपासे प्राणधर्मौ शोकमोहौ मनोगतौ ।**
**जननं मरणं चेति देहधर्मौ षडूर्मयः ।।**

(पार.आ., ६.६७–६८)

## षड्दर्शनानि

वीरशैवदर्शनम्, शाक्तदर्शनम्. वैष्णवदर्शनम्, सौरदर्शनम्, विनायकदर्शनम्, कापालदर्शनमिति षट्वैदिकदर्शनानि ।

**तन्त्रं तु षड्विधं प्रोक्तं षड्दर्शनविभेदतः ।**
**वीरशैवं वैष्णवं च शाक्तं सौरं विनायकम् ।।**
**कापालमिति विज्ञेयं दर्शनानि षडेव हि ।**

(पार.आ., १.२२–२३; वी.ध.शि.,१.४, पृ.६४)

## षड्लिङ्गानि

भावलिङ्गम्, प्राणलिङ्गम्, इष्टलिङ्गम् इत्येतानि त्रीणि लिङ्गानि एकैकशः द्विधा द्विधा भिद्यन्ते । तत्र भावलिङ्गम् महालिङ्गं, प्रसादलिङ्गम् इति द्विधा । प्राणलिङ्गं चरलिङ्गम्, शिवलिङ्गम् इति द्विधा । इष्टलिङ्गं गुरुलिङ्गम्, आचारलिङ्गमिति द्विधा ।

**भावादिलिङ्गत्रितयं द्विविधं द्विविधं भवेत् ।**
**भावलिङ्गं महालिङ्गप्रसादाभिख्यकं द्वयम् ।।**
**प्राणलिङ्गं तथा चरशिवलिङ्गद्वयं भवेत् ।**
**इष्टं तु गुरुलिङ्गाख्यमाचाराख्यं द्वयं भवेत् ।।**

(चं.आ.,क्रि.पा.,३.२६–२७; क्रि.सा., भाग–३, पृ.११९;
अ.सू.,३.१६–२२; शि.त.र.,भा–३, ९.९.७–८)

## षड्लिङ्गार्पणम्

**षड्लिङ्गार्पणसद्भावे विशेषोऽस्ति श्रृणु प्रिये ।।**
**एवमङ्गं च लिङ्गं च भक्तिं शक्तिं तथा स्थलम् ।**

**मुखं हस्तं प्रसादं च ज्ञात्वा वै सम्यगर्चयेत् ।।**

**एवमर्पणसद्भावं सर्वदैव समभ्यसेत् ।।**

(का.आ.,क्रि.पा., ७.५९, ६८)

**पञ्चवक्त्रेषु नैवेद्यस्यार्पणं तद्विशिष्यते ।**

**सद्योजातः किलाचारो वामदेवो गुरुः स्मृतः ।।**

**अघोरस्तु शिवः प्रोक्तश्चरस्तत्पुरुषो भवेत् ।**

**ईशानस्तु प्रसादः स्याद्विशिष्टस्तु महानहम् ।।**

**तस्मादनुदिनं भक्तः सर्वं भोज्यं च सर्वदा ।**

**षड्लिङ्गेभ्यः समर्प्यैव गृह्णीयादवधानतः ।।**

(आचारः = आचारलिङ्गम्, गुरुः = गुरुलिङ्गम्,
शिवः = शिवलिङ्गम्, चरः = चरलिङ्गम्,
प्रसादः = प्रसादलिङ्गम्, महान् = महालिङ्गम्)

(मकुट., क्रि.पा., ५.१३–१५)

(पश्यत – अर्पणम्)

## षड्वक्त्ररुद्राक्षः

षड्वक्त्रं रुद्राक्षं कार्तिकेयस्वरूपं दक्षिणे करे धारयेत् इति नियमः । यः षड्वक्त्रं रुद्राक्षं तथा धारयति सः ब्रह्महत्यादिपापान्निर्मुक्तो भवति ।

**षड्वक्त्रमपि रुद्राक्षं कार्तिकेयाधिदैवतम् ।**

**तद्धारणान्महाश्रीः स्यान्महदारोग्यममुत्तमम् ।।**

(रु.जा.उ., ३२)

**षड्वक्त्रं तु रुद्राक्षं कार्तिकेयाधिदैवतम् ।**

**विनायकाधिदेवं च दत्तेऽविघ्नं श्रियं वरान् ।।**

(चं.आ.,क्रि.पा.,७.३०)

**षड्वक्त्रं कार्तिकेयस्तु धारयेद्दक्षिणे करे ।।**

**ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः ।**

(शि.त.र.,भा-३, ८.६.२४-२५)

## षड्विधगुरुः

किरणागमोक्तदिशा गुरुः षड्विधः - हितः, काम्यः, निषिद्धः, वाचकः, सूचकः, कारकश्चेति । तत्र दयापरः सात्त्विकः निरपेक्षणश्च सन् यः मोक्षसुखदं ज्ञानं अनुगृह्णाति सः **हितगुरुः** । इहलोके अभीष्टप्रदम्, परलोके स्वर्गभोगदं ज्ञानं यः ददाति स **काम्यगुरुः** । इहेष्टकामदं परस्मिन् नरकप्रदं च ज्ञानं यः प्रयच्छति सः **निषिद्धगुरुः** । संसारविषये सदा विरक्तिम् अध्यात्मविषये भक्तिं यः वदति सः **वाचकगुरुः** । यः उपदेशसहितं सूक्ष्मार्थान् सूचयति, यमादिसद्गुणसम्पादकविषयान् बोधयति, सः **सूचकगुरुः** । परब्रह्मपरं ज्ञानं यथाविधि उपदिश्य शिष्यं ब्रह्मैक्यं करोति, सः **कारकगुरुः** । तत्र कारकगुरुणा कृतस्य लिङ्गधारणस्य मुक्त्युपायत्वं इतरगुरुकर्तृकस्य परम्परया मुक्त्युपायत्वमिति विशेषः। तथोक्तं किरणागमे-

**हितःकाम्योनिषिद्धश्च वाचकस्सूचकस्तथा ।**

**कारकश्चेति भेदेन षोढा विद्वद्भिरीरिताः ।।**

**यन्मोक्षसुखदं ज्ञानं ददाति च दयापरः ।**

**गुरुं हिताख्यं तं प्राहुः सात्त्विकं निरपेक्षणम् ।।**

**इहाभीष्टप्रदं यद्वा परत्र स्वर्गभोगदम् ।**

**स काम्यगुरु इत्युक्तस्तज्ज्ञानं यः प्रयच्छति ।।**

**इहेष्टकामदं यस्तु परस्मिन्नरकप्रदम् ।**

**यः प्रयच्छति तज्ज्ञानं स निषिद्धगुरुर्भवेत् ।।**

**संसारविषयेऽत्यन्तं विरक्तिं वक्ति सर्वदा ।**

**भक्तिमध्यात्मविषयं स गुरुर्वाचकस्स्मृतः ।।**

**उपदिष्टविशिष्टान्यसूक्ष्मार्थान् सूचयत्यलम् ।**

**यमादि सद्गुणकरान् स भवेद् सूचको गुरुः ।।**

**परब्रह्मपरं ज्ञानमुपदिश्य यथाविधि ।**

**करोति शिष्यं ब्रह्मैक्यं स कारकगुरुर्भवेत् ।।**

**इति वचनैः कारकगुरुकर्तृकस्य लिङ्गधारणस्य ।**

**मुक्त्युपायत्वम् इतरगुरुकर्तृकस्य परम्परयेति दिक् ।**

(वी.ध.शि.,२,पृ.१३७)

## षड्विधतन्त्रम्

षड्दर्शनभेदमवलम्ब्य तन्त्रं वीरशैवम्, वैष्णवम्, शाक्तम्, सौरम्, वैनायकम्, कापालं चेति षड्विधं पारमेश्वरागमोक्तदिशा ।

**तन्त्रं तु षड्विधं प्रोक्तं षड्दर्शनविभेदतः ।**

(पार. आ., १.२२)

(पश्यत – षड्दर्शनानि)

## षड्विधभक्तः

मोही, भक्तः, पूजकः, वीरः, प्रसादी, प्राणी चेति आचारादि षड्लिङ्गानां भक्तः षड्विधः ।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**

**प्राणी चाचारलिङ्गादेः स वै भक्तोऽपि षड्विधः ।।**

(सू.आ.,क्रि.पा.,८.३७)

## षड्विधभक्तिः

भक्तादिषट्स्थलसम्बद्धत्वेन भक्तयः षड्विधाः भवन्ति । तत्र सद्भक्तिर्भक्तस्थलस्य । इयमेव श्रद्धाभक्तिरित्युच्यते । निष्ठाभक्तिः (नैष्ठिकीभक्तिः) माहेश्वरस्थलस्य । अवधानभक्तिः प्रसादिस्थलस्य। अनुभवभक्तिः प्राणलिङ्गिस्थलस्य । इयं भक्तिः अनुभावभक्तिरित्युच्यते ।

आनन्दभक्तिः शरणस्थलस्य । समरसभक्तिश्चैक्यस्थलस्य । एवं षट्स्थलानां षड्विधाः भक्तयः ।

**षट्स्थलेषु प्रविष्यैषा भक्तिः षड्विधरूपिणी ।**

(अ.सू.,४.२१; का.आ.,क्रि.पा., ७.६०)

(पश्यत – भक्तिः)

## षड्विधव्रतम्

गौरवम्, लैङ्गिकम्, चारम्, प्रसादम्, चरणाम्बुकम्, भक्तिकं चेति व्रतं षड्विधम् ।

**गौरवं लैङ्गिकं चारं प्रसादं चरणाम्बुकम् ।**
**भक्तिकं च मया प्रोक्तं षड्विधव्रतमाचरेत् ।।**

(श.त्र.,पृ.४. श्लो.२३)

## षड्विधशक्तयः

शक्तयः षड्विधाः । एताः शक्तयः षट्स्थलेषु समाहिताः । तद्यथा– भक्तस्थले क्रियाशक्तिः आचारलिङ्गं च, माहेश्वरस्थले ज्ञानशक्तिः गुरुलिङ्गं च, प्रसादिस्थले इच्छाशक्तिः शिवलिङ्गं च, प्राणलिङ्गिस्थले आदिशक्तिः चरलिङ्गं च, शरणस्थले पराशक्तिः प्रसादलिङ्गं च, ऐक्यस्थले चिच्छक्तिः महालिङ्गं च । तत्र क्रियाशक्तिः निवृत्तिकला, ज्ञानशक्तिः प्रतिष्ठाकला, इच्छाशक्तिः विद्याकला, आदिशक्तिः शान्तिकला, पराशक्तिः शान्त्यतीताकला, चिच्छक्तिः शान्त्यतीतोत्तराकला च।

**शक्तयः षड्विधाज्ञेयाः षट्स्थलेषु समाहिताः ।**

(क्रि.सा., भा–३,पृ.११६)

(पश्यत – शक्तिः)

**शान्त्यतीतोत्तरा नाम चिच्छक्तिरिति कीर्तिता ।।**
**शान्त्यतीता पराशक्तिः शन्तिरेवादिसंज्ञिता ।**

**इच्छाशक्तिश्च विद्या स्यात् प्रतिष्ठा ज्ञानरूपिणी ।।**
**निवृत्तिः स्यात् क्रियाशक्तिरिति पर्यायसङ्गतिः ।**
**चिच्छक्तिश्च पराशक्तिरादिशक्तिस्तथैव च ।।**
**इच्छाज्ञानक्रियारूपाः शक्तयः षड्विधा मताः ।**

(अ.सू.,३.२४-२७; क्रि.सा., भा-३, पृ.११७)

(अयं विषयः अ.सू., ३.२८-३४ इत्यत्र बहुधा प्रपञ्चितः)

## षड्विधसज्जनः

सज्जनः षड्विधः-दासः, वीरदासः, भृत्यः, वीरभृत्यः, समयः, सकलावस्थश्चेति ।

**दासत्वं वीरदासत्वं भृत्यत्वं वीरभृत्यता ।**
**समयः सकलावस्थः सज्जनः षड्विधस्तथा ।।**

(अ.वी.सा.सं.,भा-२, २२.२५)

(पश्यत - दाससज्जन इत्यादि)

## षोडशशक्तयः

अन्तःकण्ठस्थानगतविशुद्धचक्रस्थितषोडशदलकमले षोडशदलेषु षोडशशक्तीः भावयेत्, इति प्रस्तावे षोडशशक्तयः उक्ताः ।

**अथ षोडशपत्रेषु शक्तीः षोडश भावयेत् ।**

(पार.आ.,१०.४५)

(पश्यत - शक्तिः)

## षोडशशुद्धयः

पञ्चाचारेष्वेकतमस्य शिवाचारस्यान्तर्गतत्वेन षोडशशद्धय उक्ताः । द्रव्यशुद्धिः, क्षेत्रशुद्धिः, गृहशुद्धिः, भाण्डशुद्धिः, तृणशुद्धिः, काष्ठशुद्धिः, वीटिकाशुद्धिः, पाकशुद्धिः, रसशुद्धिः, भवशुद्धिः, भूतशुद्धिः, भावशुद्धिः, मार्गशुद्धिः, कालशुद्धिः, वाक्शुद्धिः, जनशुद्धिश्चेति षोडशशुद्धयः ।

**द्रव्यक्षेत्रगृहादीनां षोडशानां विशोधनम् ।**

**शिवशास्त्रोक्तमार्गेण शिवाचार इति स्मृतः ।।**

(चं.आ.,क्रि.पा.,९.३२)

१. **द्रव्यशुद्धिः** – भक्तहस्तगतम् अथवा भस्मना परिशोधितं फलमूलादिकमेव स्वीकर्तव्यम् इति द्रव्यशुद्धिः ।

**भक्तहस्तगतं वापि भस्मना वा विशोधितम् ।**

**फलमूलादिकं ग्राह्यं द्रव्यशुद्धिरियं मता ।।**

(चं.आ.,क्रि.पा.,९.३३)

२. **क्षेत्रशुद्धिः** – नन्दिमुद्रयाङ्कितैः शिलावृक्षादिभिः परिशोधितं क्षेत्रं भक्तैः ग्राह्यम् इति क्षेत्रशुद्धिः ।

**नन्दिमुद्राङ्कितशिलादार्वादिपरिशोधितम् ।**

**क्षेत्रं भक्तिपरैर्ग्राह्यं क्षेत्रशुद्धिः प्रकीर्तिता ।।**

(चं.आ.,क्रि.पा., ९.३४)

३. **गृहशुद्धिः** – भक्तैः निर्मितमथवा लिङ्गमुद्राङ्कितं गृहं भक्तैः परिग्राह्यमिति गृहशुद्धिः ।

**भक्तेन निर्मितं वापि शिवलिङ्गाङ्कितं तु वा ।**

**वेश्म भक्तैः परिग्राह्यं गृहशुद्धिः समीरिता ।।**

(चं.आ.,क्रि.पा.,९.३५)

४. **भाण्डशुद्धिः** – भक्तेन रचितमथवा शिवलिङ्गमुद्राङ्कितं भाण्डजातं परिग्राह्यमिति भाण्डशुद्धिः ।

**भक्तेन निर्मितं वापि शिवलिङ्गाङ्कितं तु वा ।**

**भाण्डजातं परिग्राह्यं भाण्डशुद्धिः प्रकीर्तिता ।।**

(चं.आ.,क्रि.पा.,९.३६)

५. **तृणशुद्धिः** – भक्तजनैरानीतमथवा भस्मना परिशोधितं तृणादिकमेव परिग्राह्यमिति तृणशुद्धिः ।

**भक्तलोकसमानीतं भस्मना संस्कृतं तु वा ।**
**तृणादिकं परिग्राह्यं तृणशुद्धिरितीरिता ।।**

(चं.आ.,क्रि.पा., ९.३७)

६. **काष्ठशुद्धिः** – भक्तेनानीतं भस्मना संशोधितं वा काष्ठं परिग्राह्यमिति काष्ठशुद्धिः ।

**भक्तियुक्तसमानीतं विभूत्या संस्कृतं तु वा ।**
**काष्ठं व्रतस्थैः संग्राह्यं काष्ठशुद्धिः समीरिता ।।**

(चं.आ.,क्रि.पा.,९.३८)

७. **वीटिकाशुद्धिः** – भक्तोद्याने समुत्पन्नैर्विभूत्या संस्कृतैर्वा नागवल्लीदलैः पूगैश्च तथा भक्तैः साधितेन विभूत्या संस्कृतेन वा चूर्णेन च समन्वितं ताम्बूलं हि ग्राह्यमिति वीटिकाशुद्धिः ।

**भक्तारामे समुत्पन्नैर्भस्मना संस्कृतैस्तु वा ।**
**भक्तैस्तु साधितेनाऽपि विभूत्या संस्कृतेन वा ।।**
**नागवल्लीदलैः पूगैश्चूर्णेन च समन्वितम् ।**
**ग्राह्यं भक्तैर्हि ताम्बूलं वीटिकाशुद्धिरीरिता ।।**

(चं.आ.,क्रि.पा., ९.३९-४०)

८. **पाकशुद्धिः** – शिवदीक्षान्वितैः पक्तं अभक्तैरनवलोकितं भोज्यमेव भक्तैर्परिग्राह्यमिति पाकशुद्धिः ।

**शिवदीक्षान्वितैः पक्तमभक्तानवलोकितम् ।**
**भोज्यं भक्तैः परिग्राह्यं पाकशुद्धिरियं मता ।।**

(चं.आ.,क्रि.पा.,९.४१)

९. **रसशुद्धिः** – घृतम्, दधि, पयः, तक्रं च माहिषं वा आविकं वा त्यक्त्वा गव्यमेव सर्वदा ग्राह्यमिति रसशुद्धिः ।

**घृतं दधि पयस्तक्रं माहिषं चाविकं त्यजेत् ।**
**गव्यं तु सर्वदा गप्रह्यं रसशुद्धिरियं मता ।।**

(चं.आ.,क्रि.पा.,९.४२)

१०. **भवशुद्धिः** – पुनर्जन्मकारणीभूतं काम्यकर्मत्यागपूर्वकं पुनर्जन्मरहितत्वसम्पादनं भवशुद्धिः ।

**पुनर्भवनिदानोक्तकाम्यकर्मविवर्जनात् ।**
**जन्मराहित्यसम्पत्तिर्भवशुद्धिर्निगद्यते ।।**

(चं.आ.,क्रि.पा.,९.४३)

११. **भूतशुद्धिः** – सर्वप्राणिषु दया पञ्चभूतशुद्धीकरणं भूतदूषणरहितत्वं च भूतशुद्धिः ।

**सर्वभूतदयालुत्वं पाञ्चभौतिकसंस्कृतिः ।**
**भूतदूषणराहित्यं भूतशुद्धिः समीरिता ।।**

(चं.आ., क्रि.पा.,९.४४)

१२. **भावशुद्धिः** – सर्वकामान् विहाय सर्वदा मनसा शिवभावानुसन्धानं भावशुद्धिः ।

**सर्वकामान् समुज्झित्य शिवभावानुभावनम् ।**
**चेतसा यत् सर्वकालं भावशुद्धिः समीरिता ।।**

(चं.आ.,क्रि.पा.,९.४५)

१३. **मार्गशुद्धिः** – यथा पिपीलिकादीनां पद्भ्यां हिंसा न भवेत् तथा गमनागमनं क्रियते चेत् मार्गशुद्धिः ।

**पद्भ्यां पिपीलिकादीनां न यथा हिंसनं भवेत् ।**
**गमनं हि परिग्राह्यं मार्गशुद्धिरियं मता ।।**

(चं.आ.,क्रि.पा.,९.४६)

१४. **कालशुद्धिः** – शास्त्रोक्ते शब्दरहिते मनोहरे च काले यत् शिवलिङ्गार्चनं क्रियते तत् कालशुद्धिः ।

**शास्त्रसञ्चोदितेकाले निश्शब्दे च मनोरमे ।**
**शिवलिङ्गाराधनं यत् कालशुद्धिरिहोदिता ।।**

(चं.आ.,क्रि.पा.,९.४७)

१५. **वाक्शुद्धिः** – अनृतम्, परुषम्, कुत्सितम्, बीभत्सम् च दाम्भिकं च यद् वचः तत् त्याज्यम् इति वाक्शुद्धिः ।

**अनृतं परुषं कुत्सं बीभत्सं दाम्भिकं च यत् ।**
**विसर्जनं तद् वचसो वाक्शुद्धिरिति कथ्यते ।।**

(चं.आ.,क्रि.पा.,९.४८)

१६. **जनशुद्धिः** – आसने, शयने, याने, गोष्ठ्यां सर्वत्र सर्वदा सद्भक्तजनसाङ्गत्यं जनशुद्धिः ।

**आसने शयने याने गोष्ठ्यां सर्वत्र सर्वदा ।**
**सद्भक्तजनसाङ्गत्यं जनशुद्धिः समीरिता ।।**

(चं.आ.,क्रि.पा.,९.४९)

## षोडशाराधनानि

वीरशैवस्य अन्त्येष्टिविधौ षोडशाराधनानि भवन्ति । तेषां नामानि – एकादशाहः (१), ऊनमासिकम् (१), त्रैपक्षिकम् (१), ऊनषाण्मासिकम् (१), मासिकम् मृतदिने (११), ऊनाब्दम् (१) एकादशेऽह्नि प्रथममाराधनम्, ऊनेमासि ऊनमासिकम्, त्रिपक्षे त्रैपक्षिकम् ; ऊनेषण्मासि षाण्मासिकम्, मृतदिने प्रतिमासं मासिकम्, ऊनाब्दौ ऊनाब्दम् इति षोडश । षोडशाराधनसमाप्तिपूर्वं जीवभावो न निवर्तते ।

द्वादशेऽह्नि तत्त्वसंयोजनविधिः अनुष्ठीयते । तत्र नियमः षोडशविधिमकृत्वा तत्त्वयोजनं न कार्यमिति । अतः एकादशेऽह्नि

एकादशाहाराधनेन सह एकोद्दिष्टविधानेन विश्वेदेवावाहनादि कार्यं प्रदक्षिणादि कार्यं चेत्युभयमपि विहाय सङ्केतरूपेण षोडशाराधनानि कुर्यात् । अनन्तरं तत्तत्कालानुरोधेन षोडशाराधनानि पुनः कुर्यादिति नियमः ।

**आद्यमासिकमुख्यानि षोडशाराधनानि च ।**
**आद्यमेकादशेऽह्नि स्यादूने मास्यूनमासिकम् ।**
**त्रैपक्षिकं त्रिपक्षे स्यादूनषाण्मासिकं तथा ।।**
**मासि षष्ठे किञ्चिदूने कर्तव्यं संप्रकीर्तितम् ।**
**प्रतिमासं मृताहस्सु ऊनाब्दं चेति षोडश ।।**
**आषोडशाह्न वै तस्य जीवभावो निवर्तते ।**
**षोडशाराधनं कार्यमेकोद्दिष्टविधानतः ।।**
**अकृत्वा षोडशविधिं न कार्यं तत्त्वयोजनम् ।**
**द्वादशेऽह्नि पितुस्तत्त्वसंयोजनचिकीर्षुणा ।**
**अवश्यं हि विधेयानि षोडशाराधनान्यपि ।।**

(चं.आ.,च.पा., ४.२२, २४-२७; मकुट., च.पा., ६.४, ६-७)

## षोडशोपचाराः

उपचारभेदाः । आवाहनम्, आसनम्, स्नानम्, पाद्यम्, अर्घ्यम्, आचमनम्, वस्त्रम्, उपवीतम्, गन्धः, पुष्पम्, धूपः, दीपः, नैवेद्यम्, प्रदक्षिणम्, नमस्कारः, आत्मार्पणम् इति षोडशोपचाराः ।

**उपचाराः षोडशोक्ताः स्कन्देनैते महात्मना ।।**

(शि.त.र.,भा-३, ८.७.४६-४८)

(पश्यत – उपचारः)

# स

## संयोगः

लिङ्गाङ्गसामरस्यरूपः संयोगः । शिव एव लिङ्गम्, आत्मा एव अङ्गम्। शिवश्च आत्मनश्च सम्यग् योगः संयोगः । अयमेव सायुज्यमुक्तिरित्युच्यते ।

**शिव एव स्वयं लिङ्गमात्मैवाङ्गस्थलं भवेत् ।**
**तयोः शिवात्मनोः सम्यग्योगः संयोग एव हि ।।**
**सम्यग्योगो हि संयोगः भवेल्लिङ्गाङ्गयोः सदा ।**
**संयोग एव सायुज्यरूपा मुक्तिर्न चापरा ।।**

(अ.सू.,५.२,१५)

## संसारहेयभाक्स्थलम्

अनादिवीरशैवसारसंग्रहोक्तदिशा सप्तविंशतिस्थलेषु एकादशतमं स्थलम् ।

**संसारहेयभागेकादशस्थलमुदाहृतम् ।**

(अ.वी.सा.सं.,भा–१.१.५१)

(पश्यत – संसारहेयस्थलम्, सप्तविंशतिस्थलानि)

## संसारहेयस्थलम्

भक्तस्थलाश्रितेषु पञ्चदशाङ्गस्थलप्रभेदेष्वेकम् । एकोत्तरशतस्थलेषु तृतीयम् । अनेकजन्मार्जित सुकृतवशात् प्रक्षीणपापत्वेन शुद्धान्तःकरणस्य नित्यानित्यविवेकिनः पुण्याधिक्येन सत्संस्कारबलात्, सकलनिष्कलतत्त्व–

विचारणाच्च संसारे त्यागबुद्धिरुत्पद्यते । साधकस्य सैषा स्थितिः संसारहेयस्थलमिति कथ्यते ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**

**पिण्डता पिण्डविज्ञानं संसारगुणहेयता ।।**

**निरस्तहृत्कलङ्कस्य नित्यानित्यविवेकिनः ।**

**संसारहेयताबुद्धिर्जायते वासनाबलात् ।।**

(सि.शि.,५.२७, ६१)

## संसारी

आणवम्, कार्मम्, मायीयम्, बैन्दवम्, रोधः इत्येवं पञ्चभिः पाशैः बद्धः जीवः संसारी । जननमरणचक्रे संसरतीति संसारी ।

**एवंविधमलत्रयशृङ्खलितत्वादेव संसारीत्युच्यते ।**

(शि.मं.,पृ.५३)

**अणुताकार्ममायेयबिन्दुरोधाख्यशक्तिभिः ।**

**पञ्चभिर्बध्यमानस्तु संसारी पुरुषो मतः ।।**

(शि.त.र.,भा-३, ९.३.९)

## संस्कारः

सम्यक् क्रियते, सम्यक्कृत इति वा संस्कारः । सर्वपापविशोधनं परमपुण्यदायि पूजादिष्वधिकारप्रापकं शिवोक्तं कर्म संस्कारः ।

**हन्त ते कथयिष्यामि सर्वपापविशोधनम् ।**

**संस्कारं परमं पुण्यं शिवेन परिभाषितम् ।**

**सम्यक्कृताधिकारः स्यात्पूजादिषु नरो यतः ।।**

(क्रि.सा., भा-३, १६.१०-१२)

## संस्थापनम् = स्थापनम्

इष्टलिङ्गं विहाय स्थावरलिङ्गगणेशाद्यन्यदेवतापूजावसरे क्रियमाणेषु तत्तद्देवता नामावाहनम्, संस्थापनम्, सन्निधानम्, संरोधनम्, अवगुण्ठनम्, सकलीकरणम्, अमृतीकरणं चेति सप्तोपचारेष्वेकतमः ।

तत्र संस्थापनं नाम लिङ्गप्रतिमादिरूपे सदाशिवहृदयकमले शिवस्य स्थापनं यत् तत् संस्थापनमिति कथ्यते ।

**लिङ्गबेराद्यभिमतसदाशिवहृदम्बुजे ।**
**ममावस्थापनं यत्तत् संस्थापनमितीर्यते ।।**

(मकुट.,क्रि.पा., ५.५)

**तत्र स्थितिः स्थापनमीश्वरस्य ।**

(वा.शु.आ.,१.१२१)

## संहारः

परमात्मनः परशिवस्य पञ्चकृत्येषु तृतीयम् । संहारो नाम सृष्टस्य जगतः मर्दनं ध्वंसः ।

**सृष्टिस्थितिश्च संहारतिरोभावोऽप्यनुग्रहः ।।**
**पञ्चैव मे जगत्कृत्यं ....................... ।।**
**संहारो मर्दनं तस्य (जगतः) ................. ।**

(क्रि.सा.,भा-३, पृ.७७)

## सकलः

कलासहितः सकलः । केवलः परमात्मा निष्कलः । स च कार्यरूपशुद्धमायाविशिष्टः चेत् सकलः ।

**मायासमेतस्सकलः निष्कलः केवलः परः ।**

(शि.यो.प्र.,१.१९)

## सकलम्

१. इष्टलिङ्गादिषु त्रिषु लिङ्गेषु इष्टलिङ्गं सकलमित्युच्यते, दृक्कलाग्राह्यत्वात् । कलासहितं अर्थाद् अवयवयुक्तं सकलम् ।

**सकलं दृक्कलाग्राह्यम् ।**

(चं.आ.,क्रि.पा.,३.२५)

२. कलासहितं तत्त्वं सकलम् । अवयवयुक्तमिति यावत् । तच्च शिवम्, सदाशिवम्, महेशम् इति त्रिविधतत्त्वैकीभूतं महेशतत्त्वम् ।

**शिवं सदाशिवं चैव महेशं त्रिविधं स्मृतम् ।**

**शिवतत्त्वं महासेन निष्कलं चेति कीर्तितम् ।।**

**महेशं सकलं विद्यात् ।**

(शि.त.र.,भा-१,१.६.१०-११)

## सकलनिष्कलम्

१. त्रिषु लिङ्गेषु प्राणलिङ्गं सकलनिष्कलं मनोग्राह्यत्वात् ।

**प्राणलिङ्गं मनोग्राह्यं भवेत् सकलनिष्कलम् ।।**

(चं.आ.,क्रि.पा., ३.२४)

२. कलासहितं सकलम् । कलारहितं निष्कलम् । कलासहितं कलारहितं च तत्त्वं सकलनिष्कलम् । तच्च सदाशिवतत्त्वम् ।

**सकलं निष्कलं चैव सदाशिवमिहोच्यते ।**

(शि.त.र.,भा-१,१.६.१०-११)

## सकलावस्थः

दासः, वीरदासः, भृत्यः, वीरभृत्यः, समयः, सकलावस्थः इत्येवं षड्विधेषु सज्जनेषु एकः । अणिमाद्यष्टगुणात्मकैश्वर्यम् ईषणत्रयं विहाय निर्मलः निरहङ्कारश्च सज्जनः सकलावस्थ इत्युच्यते

**दासत्वं वीरदासत्वं भृत्यत्वं वीरभृत्यता ।**
**समयः सकलावस्थः सज्जनः षड्विधस्तथा ।।**
**अणिमादिगुणैश्वर्यमीषणत्रयवर्जितम् ।**
**निर्मलं निरहङ्कारं सकलावस्थसज्जनः ।।**

(अ.वी.सा.सं.,भा-२, २२.२५, ३१)

## सकलीकरणम्

स्थावरजङ्गमात्मकमिदं जगत्सर्वं बिन्दुनादात्मकम् । तत्र बिन्दुः शक्तिः, शिवो नादः । अतो जगच्छिवशक्त्यात्मकम् । बिन्दोः नाद आधारः । अस्य जगतः बिन्दुराधारः । एवं जगदाधारभूतत्वेन बिन्दुनादौ व्यवस्थितौ । बिन्दुनादयुक्तत्वेन सर्वं सकलीकरणं प्राप्नोति । सकलीकरणात् जगतो जन्म । सकलीकरणं नाम विविधानां मन्त्राणां द्वारा साधकेन स्वदेहस्य विद्यामयकरणम्। हृदयादारभ्यकरपर्यन्तम्, कनिष्ठा-ङ्गुलित आरभ्य सर्वाङ्गुलीषु हृदयादिमन्त्राणां विन्यासः सकलीकरणनाम्ना ज्ञायते । इयं सकलीकरणप्रक्रिया अङ्गन्यास - देहन्यास -करन्यासानां द्वारा प्रचलति । इयमेव प्रक्रिया जगत्सृष्टेः मूलम् ।

**बिन्दुनादात्मकं सर्वं जगत् स्थावरजङ्गमम् ।**
**बिन्दुः शक्तिः शिवो नादः शिवशक्त्यात्मकं जगत् ।।**
**नादाधारमयं बिन्दुर्बिन्द्वाधारमिदं जगत् ।**
**जगदाधारभूतौ हि बिन्दुनादौ व्यवस्थितौ ।।**

(चं.आ.,क्रि.पा.,३.१३-१५)

**हृदयादिन्यास एव सकलीकरणं मतम् ।**

(मकुट., क्रि.पा.,५.७)

**हृदयादिकरान्तेषु कनिष्ठाद्यङ्गुलीषु च ।**
**हृदादिमन्त्रविन्यासः सकलीकरणं मतम् ।।**

(सो.शं.प.,श्लो.१४५)

## सकायस्थलम्

माहेश्वरस्थलाश्रितनवविधलिङ्गस्थलेष्वेकम् । एकोत्तरशतस्थलेषु सप्तपञ्चाशत्तमम् । शरीरस्य सकलसिद्धिसाधनभूतत्वात् न तत् परित्याज्यमिति निरूपकं स्थलं सकायस्थलम् । सर्वाः क्रियाः भावनाश्च सर्वाः कायमेवावलम्बन्ते। ज्ञानसम्पादनायापि शिवयोगी कायवानेव स्यात्। ब्रह्माद्याः सर्वे देवाः मोक्षकांक्षिणः मुनयोऽपि सर्वार्थसाधकं तपः कर्तुं कायवन्त एव स्यात् ।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस ।।**

**ज्ञानागमस्थलं चाथ सकायस्थलमीरितम् ।।**

(सि.शि.,१६.२)

**कायं विना समस्तानां न क्रिया न च भावना ।**

**न ज्ञानं यत्ततो योगी कायवानेव सञ्चरेत् ।**

**ब्रह्माद्या देवताः सर्वाः मुनयोऽपि मुमुक्षवः ।**

**कायवन्तो हि कुर्वन्ति तपः सर्वार्थसाधकम् ।।**

**तपो हि मूलं सर्वासां सिद्धीनां यज्जगत्त्रये ।**

**तपस्तत्कायमूलं हि तस्मात् कायं न सन्त्यजेत् ।।**

(सि.शि.,१६.४१-४२)

## सख्यभक्तिः

अर्चनादिषु नवविधभक्तिष्वेका । परमस्नेहपुरस्सरं क्रियमाणा भगवत्सेवा सख्यभक्तिरित्युच्यते ।सख्यं मित्रत्वं भक्तस्य शिवेन सह ।

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**

**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना ।**

(सि.शि.,९.२-३)

**सख्यं मित्रत्वं.................... ।।**

(सि.शि.,तत्त्व.प्र., ९.२-३)

इयमेव सख्यभक्तिः शरणस्थले सतीपतिभावं प्राप्य आनन्दभक्तिरूपेण परिणमति ।

**सतीव रमणे यस्तु शिवे शक्तिं विभावयन् ।**

**तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान् ।।**

(सि.शि.,१३.५)

(पश्यत – नवविधभक्तिः)

## सगर्भजपः

प्रथमं वाचिकः, उपांशुः, मानसश्चेति जपः त्रिविधः । एकैकोऽपि जपः पुनः सगर्भः, अगर्भः, सध्यान इति त्रिविधः । तत्र प्राणायाम सहितः जपः सगर्भजपः । अस्य अन्यदपि स्वरूपमस्ति । कुम्भकेन सहितः जपः सगर्भ इत्यप्युच्यते । सगर्भागर्भयोः सगर्भः प्रशस्ततरः ।

**प्राणायामसमायुक्तः सगर्भो जप उच्यते ।**

(चं.आ.,क्रि.पा., ८.६१, ६३)

**अगर्भं वा सगर्भं वा सगर्भस्तु प्रशस्यते ।।**

**कुम्भकेन समायुक्तः सगर्भो जप उच्यते ।**

**अगर्भं वा सगर्भं वा सगर्भस्तत्र शिष्यते ।**

(पार.आ., ११.८९, ९१)

## सगुणध्यानम्

सगुणध्यानम्, निर्गुणध्यानम् इति द्विविधशिवध्यानयोः एकम् । तत्र बाह्याभ्यन्तरगोचरं ध्यानं सगुणध्यानम् । तच्च अनेकधा । प्रथमं सगुणध्यानमाश्रित्य ततः निर्गुणध्यानमनुष्ठेयम् ।

**शिवध्यानं द्विधा ज्ञेयं सगुणं निर्गुणं तथा ।**

**आदौ सगुणमाश्रित्य पश्चान्निर्गुणमाश्रयेत् ।।**

**सगुणं बहुधा प्रोक्तं बाह्याभ्यन्तरगोचरम् ।**

(शि.यो.प्र., १.३१-३२)

## सङ्करः

शिवः, रुद्रः, महेशानः, ब्रह्म, ईशानः इत्यादिभिः शिववाचकशब्दैः सह विष्णुः इत्यादिशब्दान् यः समत्वेन जानाति सः सङ्करः ।

**शिवरुद्रमहेशान्ब्रह्मेशानादिनामभिः ।।**

**समं विष्ण्वादिशब्दं यो मनुते स हि सङ्करः ।**

(क्रि.सा.,भा-१, ४.२८३-२८४)

## सङ्गीतम्

आवाहनादिषु द्वात्रिंशदुपचारेषु एकः उपचारः, सर्वयज्ञफलदायकश्च ।

**शय्यासङ्गीतनृत्ते च वाद्यानि च ततः परम् ।।**

**सङ्गीतनृत्ते यः कुर्यात् सर्वयज्ञफलं भजेत् ।**

(शि.त.र.,भा-३, ८.७.५४,६७)

(पश्यत – उपचारः)

## सज्जनः

दासोहमिति भावविशिष्टः सज्जनः । स च दासः, वीरदासः, भृत्यः, वीरभृत्यः, समयः, सकलावस्थ इति षड्विधः ।

**दासत्वं वीरदासत्वं भृत्यत्वं वीरभृत्यता ।**

**समयः सकलावस्थः सज्जनं षड्विधस्तथा ।।**

(अ.वी.सा.सं.,भा-२, २२.२५)

## सज्जिका

इष्टलिङ्गस्थापनार्थं उपयुज्यमानं करण्डकम् । तन्तुपटौ विहाय सम्भावितेनान्येन द्रव्येण निर्मिता कर्कटाद्याकृतियुक्ता वाञ्छितफलप्रदा पञ्चसूत्रप्रमाणसहिता लिङ्गरूपिणी भवति सज्जिका ।

**सम्भावितेन द्रव्येण विना तन्तुपटोद्भवम् ।**

**कर्कटाद्याकृतिश्चान्या यथाकामफलप्रदा ।।**

**पञ्चसूत्रप्रमाणेन सज्जिका लिङ्गरूपिणी ।**

(पार.आ., २.३७-३८)

नन्दीश्वराकृतिः, अर्कफलाकृतिः, चूतफलाकृतिः, मोदकाकृतिः, बिल्वफलाकृतिः, शिवलिङ्गाकृतिश्चेति सज्जिका विविधाकृतियुक्ता । तत्र नन्दीश्वराकृतिः भोगस्वर्गापवर्गप्रदायिनी । अर्कफलाकृतिः भोगमोक्षफलदा । चूतफलाकृतिः अयुरारोग्यदायिनी । मोदकाकृतिः आयुष्मत्पुत्रसौभाग्यादि- फलप्रदा । शिवलिङ्गाकृतिश्च भोगमोक्षसाधनभूता ।

**भोगस्वर्गापवर्गाय मम नन्दीश्वराकृतिः ।।**

**भोगमोक्षैकफलदा सज्जिकार्कफलाकृतिः ।**

**अयुरारोग्यफलदा याऽसौ चूतफलाकृतिः ।।**

**आयुष्मत्पुत्रसौभाग्यफलदा मोदकाकृतिः ।**

**ऐश्वर्यविजयायुष्यतेजः प्रज्ञाविलासकृत् ।।**

**सजिका शिवलिङ्गस्य बिल्वीफलसमाकृतिः ।**

**शिवलिङ्गाकृतिः सज्जा भोगमौक्षैकसाधनी ।।**

(पार.आ., २.३९-४२)

## सज्जिकागुणः

इष्टलिङ्गं सज्जिकायां संस्थाप्य देहे धारणार्थम् उपयुज्यमानो गुणः सज्जिकागुणः। शिवसूत्रमिति नामान्तरम् । स च विविधैः लोहादिभिः सज्जीक्रियते । तत्तल्लोहनिर्मितः गुणः तत्तत्फलं ददाति । तथा हि सुवर्णनिर्मितः सर्वसौभाग्यदायकः । रजतनिर्मितः पुत्रात् कीर्तिप्रदः । ताम्रनिर्मितश्चेत् धनधान्यसमृद्धिदायकः । पैतलः सर्वभोगप्रदः । कांस्यः कल्मशनाशनः । त्रपुसीसनिर्मितः सर्वाभीष्टप्रदः । पटजः सर्वदुःख-कृत्दारिद्र्यप्रदः । कार्पटः सर्वभोगाय कल्पते । तान्तवश्च सर्वकामदः । वर्णभेदेनापि फलभेदः दृश्यते । शुक्लः ज्ञानप्रदः, रक्तः वश्यकरः, श्यामः शत्रुभयकरः, पीतः पुत्रफलदायकः । चित्रः विचित्रफलदः । पुनः स च सुदृढः, छेदरहितः, ग्रन्थिरहितः, ऋजुरूपः स्यात्, कण्ठमध्यात् नाभिपर्यन्तं ये शिवभक्ताः धारयन्ति, तेषामिच्छानुसारेण यः गुण उत्तमः भवति, तत्प्रमाणानुसारेण स गुणः निर्मितव्यः ।

**सौवर्णः स्याद्यदि गुणः सर्वसौभाग्यदायकः ।**
**राजतः पुत्रकीर्तिः स्यात्ताम्रश्चेद्धनधान्यकृत् ।।**
**पैतलः सर्वभोगाय कांस्यः कल्मषनाशनः ।**
**त्रपुसीसमयो वापि सर्वाभीष्टफलप्रदः ।।**
**दारिद्र्याय च संविद्धि पटजः सर्वदुःखकृत् ।**
**कार्पटः सर्वभोगाय तान्तवः सर्वकामदः ।।**
**शुक्लो ज्ञानप्रदस्तत्र रक्तो वश्यकरो गुणः ।**
**श्यामः शत्रुभयकरः पीतः पुत्रप्रदायकः ।।**
**चित्रो विचित्रफलदः सुदृढश्छेदवर्जितः ।**
**अग्रन्थिरृजुरूपः स्यादानाभ्याकण्ठमध्यतः ।।**

**यावदिच्छं भवेद्देवि सज्जिकागुण उत्तमः ।**

**तावदेव प्रकुर्वीत सज्जिकागुणमीश्वरि ।।**

(पार.आ.,२.४६-५१)

## सत्

सत्, चित्, आनन्दः, नित्यः, परिपूर्णश्चेति परशिवस्य पञ्चलक्षणेषु एकम् । त्रिकालाबाध्यत्वं सतः लक्षणम् ।

**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः ।**

(सि.शि.,१.१)

## सत्यम्

भूतभविष्यद्वर्तमानरूपेषु त्रिषु कालेषु परिवर्तनाराहित्येन विद्यमानं वस्तु सत्यम् । तच्च ब्रह्मतत्त्वम्, शिवतत्त्वम् इत्यादिना व्यवह्रियते ।

**तत्र सत्यं नाम यद्वस्तु येन रूपेण निर्धारितं कालान्तरेऽपि तद्रूपं न जहाति तदुच्यते ।**

(क्रि.सा.,भा.-१, ४, पृ.२११)

१. ब्रह्मतत्त्वम् । तच्च परं ब्रह्म, परशिवः ।

**सत्यं ज्ञानमनन्तं ब्रह्म ।**

(तै.उ., २.२.२)

**ऋतगं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।**

(म.ना.उ., १०.११)

२. सत्यभेदः -

**तच्च सत्यं द्विविधम् । आपेक्षिकमनापेक्षिकं चेति । मृदादिस्वरूपमापेक्षिकं सत्यम् । प्रलयकाले तस्याप्यभावात् । ब्रह्मस्वरूपमनापेक्षिकम् । तस्य सदा सत्वात् ।**

(क्रि.सा.,भा-१, ४, पृ.२११)

## सदसद्व्यक्तिहेतुः

सत्–असद्–वस्तुनोः हेतूभूतः परशिवः ।

**सच्चिदानन्दरूपाय सदसद्व्यक्तिहेतवे ।**

**नमः शिवाय साम्बाय सगणाय स्वयम्भुवे ॥**

(सि.शि., २.१)

## सदसस्पतिः = सदसत्पतिः

सदसतोः जीवजगतोः पतिः, शिवः ।

**सदसस्पतिमद्भुतं प्रियमित्रस्य काम्यं सनिं मेदामयासिषम् ।**

(म.ना.उ., १.१८, पृ.१५)

**सत् जीवः । असत् प्रकृतिः । तयोः पतिं प्रभुम् ।**

(म.ना.उ., १.१८, भाष्यम्, पृ.१५)

**सच्चासच्च जगद्विश्वं शरीरं परमेष्ठिनः ॥**

**यदिदं सदिति प्रोक्तं यच्चासदिति कथ्यते ।**

**तयोः पतित्वात्तु शिवः सदसत्पतिरुच्यते ॥**

(क्रि.सा., भा–१, २.५३–५४)

## सदाचारः

१. वीरशैवानां पञ्चाचारेष्वेकतमः । धर्ममार्गेण सम्पादितया सम्पदा प्रतिदिनं गुरुलिङ्गजङ्गमसन्तर्पणं सदाचारः । सदाचारे चाष्टविधं शीलमन्तर्भूतम् । अङ्कुरम्, उत्पन्नम्, द्विदलम्, प्रवृद्धम्, सप्रकाण्डम्, सशाखम्, सपुष्पम्, सफलं चेति अष्ट शीलानां नामानि । तत्र गुरुकारुण्यवशात् षडध्वन्यासशोभितं स्वकीयं शरीरं प्राकृतमिति भावः **अङ्कुरं** नाम शीलम् । दीक्षितैरेव दारापुत्रादिभिः सहवास **उत्पन्नं** नाम शीलम् । शिवलाञ्छनानां भस्मादीनां सर्वदा धारणं **द्विदलं** शीलम् । शिवधर्माणां माहात्म्यभावनं **प्रवृद्धं** शीलम् । तच्च भक्तिवृद्धिकरम् ।

इष्टलिङ्गपूजामकृत्वा भोजनं न क्रियते इत्येतच्छीलं भक्तिसाधनभूतं **सप्रकाण्डम्** । इष्टलिङ्गानर्पितस्य द्रव्यस्याग्रहणं **सशाखं** नाम शीलम् । शिवार्पितप्रसाद-स्यापरित्यागः **सपुष्पं** नाम शीलम् । गुरुलिङ्गजङ्गमानामेकत्वेन भावनं सद्यः सिद्धिकरं **सफलं** नाम शीलम् ।

**धर्मार्जितेन द्रव्येण यत्सन्तर्पणमन्वहम् ।**
**गुरुलिङ्गजङ्गमानां सदाचार इति स्मृतः ।।**
**अङ्कुरं प्रथमं ज्ञेयमुत्पन्नं च द्वितीयकम् ।**
**द्विदलं च तृतीयं स्यात् प्रवृद्धं च चतुर्थकम् ।।**
**सप्रकाण्डं पञ्चमं स्यात् सशाखं षष्ठमुच्यते ।**
**सपुष्पं सप्तमं ज्ञेयं सफलं चाष्टमं भवेत् ।।**
**सदाचारोऽष्टशीलाढ्यः सेवितः कल्पपादपः ।**
**सद्भक्तानां सुमनसां ददातीष्टफलं महत् ।।**
**अङ्कुराख्यं प्रवक्ष्यामि बीजभूतं समासतः ।**
**गुरुकारुण्यकलितषडध्वन्यासशोभिता ।**
**तनुः स्वीया प्राकृतेऽपि भावोऽङ्कुर इतीर्यते ।।**
**दीक्षितैरेव दाराद्यैः सहवासो य आत्मनः ।**
**शीलमुत्पन्नमित्युक्तं ग्राह्यमेतद्विचक्षणैः ।।**
**लाञ्छनानां हि शैवानां भस्मादीनामनारतम् ।**
**धारणं त्वप्रमादेन द्विदलं शीलमुच्यते ।।**
**यन्नित्यं शिवधर्माणं माहात्म्यस्य विभावनम् ।**
**प्रवृद्धं शीलमित्युक्तं भक्तेर्वृद्धिकरं श्रुतम् ।।**
**इष्टलिङ्गमनभ्यर्च्य स्थीयते यदभोजनम् ।**
**सप्रकाण्डमिदं शीलं विज्ञेयं भक्तिसाधनम् ।।**

इष्टलिङ्गानर्पितस्य द्रव्यस्याग्रहणं हि यत् ।
शीलं सशाखमित्युक्तमवर्ज्यं भक्तितत्परैः ।।
शिवार्पितप्रसादस्य यत्परित्यागवर्जनम् ।
सपुष्पं शीलमित्युक्तं विज्ञेयं चैतदुत्तमम् ।।
गुरुलिङ्गजङ्गमानां यदेकत्वेन भावनम् ।
सफलं शीलमित्युक्तं सद्यः सिद्धिकरं परम् ।
यः सदाचारमष्टाङ्गं भक्तिनिष्ठो निषेवते ।
स सद्यः सिद्धिमाप्नोति परां शम्भोरनुग्रहात् ।।

(चं.आ.,क्रि.पा.,९.६,२०-३१)

(पश्यत – पञ्चाचाराः)

२. क्रियासारोक्तदिशा सदाचारः नित्यम्, नैमित्तिकम्, काम्यम्, नित्यनैमित्तिकम्, नित्यकाम्य इति पञ्चधा ।

सदाचाराः बहुविधाः प्रमाणैरुपवर्णिताः ।
सङ्क्षेपतः पञ्चविधा आचाराः निर्विशेषकाः ।।
नित्यं नैमित्तिकं काम्यं नित्यनैमित्तिकं तथा ।
नित्यकाम्यमिति प्राहुः पञ्चधा शास्त्रकोविदः ।।

(क्रि.सा.,भा-२, ५.९-१०)

३. त्रिषु आचारलिङ्गस्थलेषु सदाचार एकः, (नियताचारः गणाचारश्च अवशिष्टौ आचारौ)। सज्जनः शिवभक्तः येन मार्गेण तुष्टः तोषयते च स सदाचार इति कथ्यते ।

स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात् ।
सदाचारस्तु नियतो गणाचारस्ततः परम् ।।

**सज्जनः शिवभक्तश्च येन मार्गेण सर्वदा ।**

**तुष्टस्तोषयते देवि सदाचारः स वै स्मृतः ।।**

(सू.आ.,क्रि.पा., ८.६-७; क्रि.सा., भा-३, २४, पृ.१२० ;
शि.त.र.,भा-३,९.९.१५)

## सदाशिवः

१. षट्त्रिंशत्तत्त्वेष्वेकतमम् । शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या चेति पञ्चशुद्धतत्त्वेष्वेकम् ।

**सदाशिवमुखाशेषतत्त्वोन्मेषविधायिने ।**

**निष्कलङ्कस्वभावाय नमः शान्ताय शम्भवे ।।**

(सि.शि., १.५)

**सदाशिवादिभूम्यन्त षट्त्रिंशत्तत्त्वविकासरूपिणे विश्वदोषरहितस्वरूपाय सुखभोक्त्रे सुखधात्रे शम्भवे नमः ।**

(सि.शि., तत्त्व.प्र., १.५, पृ.६)

(पश्यत – षट्त्रिंशत्तत्त्वानि)

२. शिवम्, सदाशिवम्, महेशम् इति त्रिविधतत्त्वेषु एकम् । इदं च सकलनिष्कलम् ।

**तत्त्वं तु त्रिविधं ज्ञेयं तस्य भेदं श्रृणुष्व च ।**

**शिवं सदाशिवं चैव महेशं त्रिविधं स्मृतम् ।।**

**सकलं निष्कलं चैव सदाशिवमिहोच्यते ।।**

(शि.त.र.,भा-१, १.६.९-११)

(पश्यत – तत्त्वम्, सकलम्, निष्कलम् ।)

३. जगत्सृष्टिकारणभूतं नादतत्त्वात्मकं शिवतत्त्वम् ।

**तस्मान्नादात्मतत्त्वं च सर्वकारणकारणम् ।**

**सदाशिव इति प्रोक्तं सर्वशास्त्रेषु निश्चितम् ।।**

(वा.शु.आ., १.११७)

४. सगुणः शिवः सदाशिवः । मायोपाधिकः सः वशीकृतमाया-विशिष्टत्वात् पाशमुक्तः । ब्रह्मादिदेवताभ्य अधिकतमोऽयं द्विमुखः, एकहृदयः, चतुःश्रोत्रः, द्विनासिकः, षण्णेत्रः इत्यादिना उपवर्णितः लिङ्गपुराणे।

**निर्गुणः शिव इत्युक्तः सगुणस्तु सदाशिवः ।**

(सू.आ.,क्रि.पा.,१.२९)

**ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधि-पतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।।**

(म.ना.उ.,१९, पृ.८१)

**पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः ।**

(कै.सा.,वि.सं.५६७)

तथा चोक्तं लैङ्ग्ये -

**द्विमुखं त्वेकहृदयं चतुश्श्रोत्रं द्विनासिकम् ।**
**आस्यद्वये च षण्णेत्रं पिङ्गलं सप्तहस्तकम् ।।**
**त्रिमेखलं त्रिपादं च सप्तजिह्वाभिरावृतम् ।**
**चतुःशृङ्गं वृषारूढं बालादित्यसमप्रभम् ।।**
**उपवीतसमायुक्तं जटामुकुटमण्डितम् ।**
**सव्यभागे चतुर्हस्तास्त्रिहस्तश्चापसव्यके ।।**
**सृक्सृवौ चाक्षमालां च शक्तिं दक्षिणके करे ।**
**तोमरं व्यजनं चैव घृतपात्रं तु वामके ।।**
**सर्वसिद्धिप्रदं मध्ये वह्नेर्ध्यायेत्सदाशिवम् ।।**

(श्रु.सा.भा.,६३, पृ.४५)

५. सदाशिवः, ईश्वरः, रुद्रः, विष्णुः, ब्रह्मा इत्येवं पञ्चमूर्तिषु एकः । अयं च आकाशतत्त्वस्थः ।

**आदौ व्योम्नि स्थितो भाति साक्षाद्देवः सदाशिवः ।**

(शि.यो. प्र., १.२३)

(पश्यत – पञ्चमूर्तयः)

६. सदाशिवः, ईशः, ब्रह्मा, ईश्वरः, ईशान इति पञ्चतत्त्वेषु एकं तत्त्वम् । तत्र सदाशिव एव शिवसादाख्यमित्युच्यते ।

**सदाशिवस्तथेशश्च ब्रह्मेशश्चेश्वरः स्मृतः ।।**

**ईशानश्चेति पञ्चैव तत्त्वभेदाः प्रकीर्तिताः ।**

**शिवं सदाशिवं ज्ञेयममूर्तं चेश उच्यते ।।**

(शि.त.र.,भा–१, १.६.१७–१८)

(पश्यत – सादाख्यम्)

७. भोग्यभोक्तृभोगेभ्यः विलक्षणः साक्षी ।

**त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।**

**तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः ।।**

(कै.उ., १.१८)

## सद्गुरुः

१. विहितादिषड्विधेषु गुरुषु एकः । तत्र तत्त्वज्ञानी, सदाचारसम्पन्नः सन् उपदेशात् नानाविकल्पराहित्यरूपमुक्तेः जनकः सद्गुरुः ।

वातुलागमे –

**नानाविकल्पविश्रान्तिमुपदेशात्करोति यः ।**

**सद्गुरुस्स तु विज्ञेयो न तु मिथ्या विजल्पतः ।।**

**गुरुश्च गुणवान् प्राज्ञः परमानन्दभासकः ।**

**तत्त्वविच्छिवसंसक्तो मुक्तिदो न तु चापरः ।।**

(वे.वी.चिं.,भा–२, ६.६४–६५)

**क्षणेन लभ्यते ब्रह्म सद्गुरोरवलोकनात् ।।**

(शि.यो.प्र.,४.१३)

२. शाम्भवीदीक्षाप्रदाता ।

योगसारे –

**शुद्धां यः शाम्भवीं दीक्षां करोति गुरुरुत्तमः ।**

**तस्मै दद्यात् स्वमात्मानं पूज्यो वन्द्यः स सद्गुरुः ।।**

(कै.सा.,वि.सं.३८१)

## सद्भक्तः

लौकिकान् बान्धवान् विहाय गुरुलिङ्गजङ्गमान् एव बांधवा इति सम्भावितः स सद्भक्त इत्युच्यते ।

**लौकिकान्बान्धवान् त्यक्त्वा गुरुलिङ्गैकबान्धवः ।**

**हर्षपूर्णो महादेवि स सद्भक्त इति स्मृतः ।।**

(सू.आ.,क्रि.पा., ८४६; क्रि.सा.,भा–३, पृ.१२२)

(पश्यत – भक्तः)

## सद्भक्तिः

१. ऐक्यस्थलादारभ्य भक्तस्थलपर्यन्तं प्रवृत्तिक्रमे षट् स्थलाश्रितासु समरसादिनीषु षट्सु भक्तिष्वेका । तत्र इयं भक्तस्थलाश्रिता । एषा एव श्रद्धाभक्तिः ।

**...........षष्ठी सद्भक्तिरीरिता ।**

(अ.सू.,४.२७; वे.वी.चिं., ३.१००; अ.वी.सा.सं., १.१६९)

२. शिव–लिङ्ग–गुरु–प्राण–शास्त्रादिषु विद्यमान एकाकारः अभिमानः ।

**यथा शिवे तथा लिङ्गे यथा लिङ्गे तथा गुरौ ।**

**यथा गुरौ तथा प्राणे तथा प्राणेऽनुशासने ।।**

**यथा यथैव तच्छात्रे मते चापि तथा भवेत् ।**

**एकाभिमानः सद्भक्तिर्वीरशैवमते मम ।।**

(पार.आ.,३.८८-८९)

३. ईश्वरे विद्यमानः विषयसम्पर्करहितः मोहः ।

**अस्पृष्टविषयस्नेहो यो मोहः शुद्धसात्त्विकः ।**

**मयीश्वरे महादेवि सद्भक्तिरभिधीयते ।।**

(पार.आ.,६.४३)

## सद्योजातम्

ईश्वरस्य पञ्चमुखेषु एकतमभूतं पश्चिमं मुखम् । सद्योजातमुखोत्पन्नया नन्दया गवा विभूतिरुत्पद्यते । सद्योजातमुखात् पञ्चाचार्येष्वेकतमो रेणुक उत्पन्नः ।

**नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा ।।**

**पञ्चगावो विभोर्जाताः सद्योजातादिवक्त्रतः ।**

**सद्योजाताद्विभूतिश्च ...................... ।**

(सि.शि.,७.७,९)

**सद्योजातं च प्रथमं वामदेवं द्वितीयकम् ।**

**वीरो नन्दी वृषश्चैव भृङ्गी स्कन्दस्तथैव च ।**

**मत्स्वरूपाः समुत्पन्नाः पञ्चगोत्राधिकारिणः ।**

**रेणुको दारुकश्चैव शङ्खुकर्णश्च धेनुकः ।**

**विश्वकर्णश्च पञ्चैते पञ्चगोत्रसमुद्भवाः ।**

(वी.स.सं.,१.२६, २८-२९)

## सद्योजातः

महेश्वरस्य पञ्चमूर्तिषु प्रथमा। गोक्षीरशङ्खसदृशशुक्लपर्णः, जटामुकुटालङ्कृतः, चतुर्मुख-चतुर्बाहुयुक्तः, द्वादशनेत्रः, वामहस्तेः टङ्कशूलायुधधारी, दक्षिणहस्तयो अभयवरदमुद्रासहितः, श्वेतवस्त्रो-त्तरीयकः, श्वेतवस्त्रधरः सर्वाभरणभूषितश्च सद्योजातः ।

**गोक्षीरशङ्खवर्णाभं जटामकुटमण्डितम् ।।**

**चतुर्वक्त्रं चतुर्बाहुनेत्रद्वादशभिर्युक्तम् ।**

**सव्ये तु टङ्कशूले चाभयं वरदमन्यके ।।**

**शुक्लवस्त्रधरं चैव शुक्लवस्त्रोत्तरीयकम् ।**

**सर्वाभरणसंयुक्तमेवं सद्यमुदाहृतम् ।।**

(वा.शु.आ.,७.४२-४४)

## सद्योजातमन्त्रः

ईश्वरस्य पञ्चमुखेषु एकतमभूतस्य सद्योजातमुखस्य प्रतिपादकः सद्योजातमन्त्रः । अयं च सद्य इत्यपि व्यवह्रियते । एषः सद्योजातमन्त्रः -

**सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।**

**भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ।। इति ।**

(म.ना.उ., ४)

विभूत्युत्पादनादिषु कर्मसु अयं मन्त्रः पिष्ठीकरणे वामदेवमन्त्रेण सहोपयुज्यते ।

**यथा शास्त्रोक्तविधिना गृहीत्वा गोमयं नवम् ।।**

**सद्येन वामदेवेन कुर्यात् पिण्डमनुत्तमम् ।**

**पादौ सद्येन सर्वाङ्गं प्रणवेन सेचयेत् ।।**

(सि.शि.,७.१५, २२)

**आग्नेयं भस्म सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्य ।**

(पं.च., १.१७, पृ.२८)

## सद्योमुक्तिदीक्षा = सद्योनिर्वाणदा दीक्षा

दीक्षाभेदः । मन्त्रदीक्षायाः सप्तप्रकारेषु एकतमा । लिङ्गरूपं सर्वदा स्मरन् सङ्कल्पविकल्पराहित्येनामनस्को भव इत्येवंरूपः गुर्वनुग्रहः सद्योमुक्तिरित्यभिधीयते । इयमेव सद्योनिर्वाणदा दीक्षेति शिवतत्त्वरत्नाकरे वर्णिता । तत्रोक्तदिशा इयं निर्बीजदीक्षाया एकः प्रकारः (चिरनिर्वाणदा दीक्षेति निर्बीजदीक्षायाः द्वितीयप्रकारः) प्रारब्धसञ्चितागामिकर्मजातं समूल-मुत्पाट्यमाणा दीक्षेयं दीयते गुरुणा ।

**सप्तमी तु समाख्याता सद्योमुक्तिसमाह्वया ।।**

**लिङ्गरूपमभिध्यायन्नमनस्कश्चिरं भव ।**

**इत्यादिश्य पुनर्दद्यात् सद्योमुक्तिसमाह्वयाम् ।।**

(का.आ.,क्रि.पा.,१.१११, ११७)

**प्रारब्धसञ्चितागामिकर्मजालं विशोध्यते ।**

**अतितीव्रेण पातेन शरीरादिजुगुप्सया ।।**

**यात्यत्यन्तविरक्तानां सद्योनिर्वाणदा तु सा ।**

(शि.त.र.,भा-३, ९.७.११-१२)

(पश्यत – दीक्षा)

## सद्योमुक्तः

जीवन्मुक्तः । षट्स्थलब्रह्माङ्गलिङ्गसङ्गसुखी ।

**षट्स्थलब्रह्मलिङ्गसङ्गसुखी भूत्वा सद्यो मुक्तो भवाम्यहम् ।**

(अ.वी.सा.सं.,भा-१, १,पृ.१०)

## सध्यानः

वाचिकः, उपांशुः, मानसः, अगर्भः, सगर्भः, सध्यान इति षड्विधजपान्यतमः । ध्यानपुरस्सरमनुष्ठेयः जपः । सगर्भादपि सध्यानजपः श्रेष्ठः ।

**सगर्भादपि साहस्रं सध्यानो जप उच्यते ।**

(चं.आ.,क्रि.पा., ८.६४; पार.आ., ११.९२)

(पश्यत – जपः)

## सन्ध्यावन्दनम्

१. अन्तःहृदये विराजमानस्य संवित्सूर्यस्य निरन्तरं मनसा ध्यानमेव सन्ध्यावन्दनम् । सन्ध्यावन्दनमित्यस्य सान्ध्यकोपास्तिः, सन्ध्योपास्तिः, सन्ध्योपासनं चेति नामान्तराणि । अत्र सावित्रीमन्त्रः पञ्चाक्षरीमन्त्रश्चेत्यु-भयमन्त्रद्वारा क्रियमाणं सन्ध्योपासनं शैवागमेषु वीरशैवानां कृते विहितमस्ति। सावित्रीमन्त्रश्चेति नामान्तरमस्ति । अयं च देवतादृष्ट्या सावित्रीमन्त्रः । सवितृदेवताकमन्त्रत्वात् । छन्दोदृष्ट्या गायत्रीमन्त्रः, गायत्री छन्दोघटितत्वात् । मन्त्रस्तु – ''तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।। (ऋ.वे.,३.६२.१०) । अस्य मन्त्रस्य अर्थः – तत् = वेदागमोक्तं परशिवब्रह्म, सवितुः = सवितृदेवतायाः, वरेण्यम् = वन्दनीयम्, भर्गः = देवस्य तेजः, धीमहि = ध्यायामः, यत् तेजः नः = अस्माकम्, धियः = बुद्धिम्, प्रचोदयात् = परमपदं प्रति प्रेरयतु । एवं उभयात्मकमपि सन्ध्योपासनं नाम शिवसन्ध्योपासनमेव नत्वन्योपासनम्, यतः सवितृमण्डलस्य स्वामी अधिदेवता शिव एव । वीरशैवानामाह्निकविधौ सन्ध्याद्वयमपि आचरणीयम् । प्रथमं सावित्रीमन्त्रद्वारा सन्ध्यां निर्वर्त्य पश्चात् अरुणोदयकाले प्रसिद्धां मन्त्रमातरमिमां सावित्रीं जपित्वा महादेवं परशिवं भानुमण्डलमध्ये स्थितं षडक्षरीमन्त्रद्वारा पूजयेत् । तं देवं देवीसहितं प्राङ्मुखो वा उदङ्मुखो वा उपविश्य ध्यायेत् । अनन्तरं स्वगुरुं ध्यात्वा शिवस्य नामाष्टकं जपेत् ।

अन्तः प्रकाशमानस्य संवित्सूर्यस्य सन्ततम् ।
मनसा यदुपस्थानं तत्सन्ध्यावन्दनं विदुः ।।

(सुप्र.आ.,७.१०)

ततः सन्ध्यामुपासीत प्राणायामपुरस्सरम् ।
मदीय सान्ध्यकोपास्तिः सन्ध्योपास्तिः प्रकीर्तिता ।
सवितुर्मण्डलस्वामी सावित्री देवताऽस्म्यहम् ।।
जपेद् भानूदयान्तं च सावित्रीं यतमानसः ।
उपतिष्ठेच्च सवितुरन्तरं मामनन्यधीः ।।

(का.आ.,क्रि.पा.,३.५५-६०)

सन्ध्याद्वयमुपासीत सावित्रीमूलमन्त्रगम् ।
अर्चां निर्वर्तयेत् पश्चादरुणोदयकालिकीम् ।।
जपित्वाथ च सावित्रीं प्रसिद्धां मन्त्रमातरम् ।
उपतिष्ठेन्महादेवं भानुमण्डलमध्यगम् ।।
षडक्षरीं जपेच्चापि समाहितमना यथा ।
ध्यायेद्देवं च देवीं च प्राङ्मुखो वाप्युदङ्मुखः ।
स्वगुरुं च पुनर्देवं ततो नामाष्टकं जपेत् ।।

(चं.आ.,क्रि.पा., ११.१६-१८)

२. अन्तरङ्गे प्रकाशमानस्य ज्ञानरूपसूर्यस्य मनसा क्रियमाणं निरन्तरं ध्यानम् ।

अन्तःप्रकाशमानस्य संवित्सूर्यस्य सन्ततम् ।
भावेन यदुपस्थानं तत् सन्ध्यावन्दनं विदुः ।।

(सि.शि.,१६-७१)

## सन्निधानम्

आवाहनाद्युपचारेष्वेकतमः । आत्मन ईश्वराभिमुखीकरणं सन्निधानमिति प्रोक्तम् ।

**सन्निधानमिति प्रोक्तमात्मनोऽभिमुखीकृतिः ।**

(मकुट.,क्रि.पा.,६.५–६)

**सान्निध्यमात्मेश्वरसन्निधानम् ।**

(वा.शु.आ.,१.१२१)

## सन्निरोधनम् = संरोधनम्

आवाहनाद्युपचारेष्वेकतमः । पूजासमाप्तिपर्यन्तं देवतायाः सन्निधानप्रार्थनं यत् तत् सन्निरोधनम् ।

**आपूजान्तं सन्निधानप्रार्थनं सन्निरोधनम् ।**

(मकुट.,क्रि.पा.,५.६)

**संरोधनं स्वस्य शिवे निरोधः ।।**

(वा.शु.आ.,१.१२१)

## संन्यासी

अत्याश्रमिणां वीरशैवानां मध्ये विद्यमानस्य योगिनः पर्यायनाम ।

**अवधूतश्च संन्यासी योगी पाशुपतः शिवः ।**

**लिङ्गी वीरो वीरशैवो महामाहेश्वरो यतिः ।।**

**पर्यायनामान्येतानि वीरशैवस्य योगिनः ।।**

(पार.आ., १०.६७–६८)

## सपुष्पशीलम्

सदाचारान्तर्गतत्वेन विद्यमानेष्वष्टशीलेष्वेकतमम् । शिवेऽर्पित-प्रसादस्यावर्जनमेव सपुष्पशीलमित्युच्यते । एतदुत्तममिति विज्ञेयम् ।

**शिवार्पितप्रसादस्य यत् परित्यागवर्जनम् ।**

**सपुष्पं शीलमित्युक्तं विज्ञेयं चैतदुत्तमम् ।।**

(चं.आ.,क्रि.पा.,९.२९)

(पश्यत – सदाचारः)

## सप्तचक्राणि

आधारचक्रम्, स्वादिष्ठानचक्रम्, मणिपूरकचक्रम्, अनाहतचक्रम्, विशुद्धिचक्रम्, आज्ञाचक्रं चेति षट्चक्राणि । तदतीतं चक्रं सहस्रारचक्रम् । एवमाहत्य सप्तचक्राणि ।

१. **आधारचक्रम्** – आधारचक्रं गुदस्थाने, पृथिवी तस्य महाभूतम्, चतुष्कोणाकारः, चतुर्दलकमलम्, तेषु चतुर्दलेषु व – श–ष–स इति चतुरक्षराणि, तस्य वर्णः सुवर्णवर्णः, अधिदेवता च ब्रह्म ।

२. **स्वाधिष्ठानचक्रम्** – स्वाधिष्ठानचक्रं लिङ्गस्थाने, आपः तस्य महाभूतम्, धनुराकारः, षड्दलकमलम्, तत्रस्थदलेषु ब–भ–म –य–र–ल इति षडक्षराणि, हरिद्वर्णः, तस्याधिदेवता विष्णुः ।

३. **मणिपूरकचक्रम्** – मणिपूरकचक्रं नाभिस्थाने, तेजो तस्य महाभूतम्, त्रिकोणाकारः, दशदलकमलम्, दशदलेषु ड–ढ–ण–त–थ–द–ध–न–प–फ इति दशाक्षराणि । तस्य वर्णः कृष्णवर्णः, अधिदेवता च रुद्रः ।

४. **अनाहतचक्रम्** – अनाहतचक्रं हृदयस्थाने, वायुस्तस्य महाभूतम्, षट्कोणाकारः, द्वादशदलकमलम्, तेषु दलेषु क–ख–ग–घ–ङ–च–छ–ज–झ–ञ–ट–ठ इति द्वादशाक्षराणि, तस्य वर्णः कुङ्कुमवर्णः, अधिदेवता च ईश्वरः।

५. **विशुद्धिचक्रम्** – विशुद्धिचक्रं कण्ठस्थाने, आकाशः तस्य महाभूतम्, वर्तुलाकारः, षोडशदलकमलम्, तेषु दलेषु अ–आ–इ–ई–उ–ऊ–ऋ–ॠ–लृ–ॡ–ए–ऐ–ओ–औ–अं–अः इति षोडशाक्षराणि, तस्यवर्णः श्वेतवर्णः, अधिदेवता च सदाशिवः ।

६. **आज्ञाचक्रम्** – आज्ञाचक्रं भ्रूमध्यस्थाने, मनः तस्य महाभूतम्, तमन्धाकारः, द्विदलकमलम्, तयोर्दलयोः हं–क्षम् इत्यक्षरद्वयम्, तस्य वर्णः माणिक्यवर्णः, अधिदेवता च शक्तिः ।

**७. सहस्रारचक्रम्** – सहस्रारचक्रं ब्रह्मरन्ध्रे, उन्मनीज्योतिः स्वरूपम्, सहस्रदलकमलम्, तत्र अमृतं विद्यते । ओंकारस्वरूपं शिवतत्त्वमेव अधिदेवता।

**आधारे लिङ्गनाभ्यां प्रकटित हृदये कण्ठमूले ललाटे**
**द्वे दले षोडश–द्वादशदशदल–षट्चक्र – चत्वारि तेषु ।**
**वासान्ताबालमध्याडफकठ सहिताकारभिन्नाः स्वराः स्युः**
**हं क्षं तस्योपरिपरिष्ठाद्दशशतदलमध्ये स्वयं ज्योतिरास्ते ।।**
**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।**
**शक्तिश्च शिवतत्त्वं च सप्तचक्राधिदेवताः ।।**

(प्र.गी.,३०७–३०८)

**प्रोक्तः षडङ्गविन्यासः वक्ष्याम्याधारषट् क्रमात् ।**
**कञ्जस्य चाध आधारं वादिसान्तं चतुर्दले ।।**
**स्वाधिष्ठाने च षट्पत्रे बादिलान्तं क्रमान्न्यसेत् ।**
**ततो मणौ दशदले डादिफान्तं न्यसेत्ततः ।।**
**हृदये द्वादशदले कादिठान्तं न्यसेत्ततः ।**
**पट्यां कण्ठे षोडशक आदिवर्गं न्यसेत्ततः ।।**
**आज्ञायां द्विदले चोर्ध्वं ळक्षयुग्मं न्यसेत्ततः ।**
**इत्येकपञ्चाशद्वर्णाः रुद्रबीजानि मुख्यतः ।।**
**एतानि शिवचक्राणि ............... ।**

(वा.शु.आ.,९.१८–२२)

(अत्र षट् चक्राण्येवोक्तानि । अन्यत्र सप्तचक्राणि निरूपितानि । तत्र शिष्टं चक्रं सहस्रारचक्रमिति ।)

(पश्यत – षट्चक्राणि, नवचक्राणि)

## सप्तचक्राणि

| स्थानम्च | क्रम्प्र | णवांशः | देवता | व्याहृतिः | दलाक्षराणि | कोशः |
|---|---|---|---|---|---|---|
| गुदस्थानम्म | ूलाधारचक्रम्अ | कारः | ब्रह्मा | भूः | व श ष स (४) | अन्नमयकोशः |
| लिङ्गस्थानम्स् | वाधिष्ठानचक्रम्अ | कारः | विष्णुः | भुवः | ब भ म य र ल (६) | अन्नमयकोशः |
| नाभिस्थानम्म | णिपूरकचक्रम्अ | कारः | रुद्रः | सुवः | द ध ण त थ द ध न प फ (१०) | अन्नमयकोशः |
| हृदयस्थानम्अ | नाहतचक्रम्उ | कारः | ईश्वरः | महः | क ख ग घ ङ च छ ज झ ञ ट ठ (१२) | प्राणमयकोशः |
| कण्ठस्थानम्[ | वशुद्धिचक्रम्उ | कारः | सदाशिवः | जनः | अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः (१६) | मनोमयकोशः |
| भ्रूमध्यस्थानम्अ | ाज्ञाचक्रम्म | कारः | श्रीगुरुः | तपः | ह क्ष (२) | विज्ञानमयकोशः |
| ब्रह्मरन्ध्रः | सहस्रारकमलम्अ (सहस्रदलपद्म) | ोंकारः | ओंकाररूपी – सत्यम् – अन्तःकरणम् (१) ब्रह्म | | | आनन्दमयकोशः |

## सप्तजिह्वा

कालो, कराली, मनोजवा, सुलोहिता, सुधूम्रवर्णा, स्फुलिङ्गिनी, विश्वरूपी इत्येवम् अग्नेः सप्तजिह्वाः ।

**काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।**

**स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्तजिह्वा ।।**

(मुं.उ.,१.२.४)

मकुटागमे एवं विवृतम् – अग्निः शिवस्य घोरं स्वरूपम् । तमेकाग्र–चित्तेनोपासयेत् । तस्य च शिवाग्नेः सप्तजिह्वा विद्यन्ते – सुवर्णा, कनका, रक्ता, कृष्णा, सुप्रभा, बहुरूपा, अतिरक्ता चेति । तत्र पश्चिमदिशायां सुवर्णा, मध्येभागे कनका, उत्तरदिशायां रक्ता, दक्षिणस्यां दिशि कृष्णा, पूर्वदिशायां सुप्रभा, ईशान्यदिशायां बहुरूपा, आग्नेय्याम् अतिरक्ता चेति क्रमेण जिह्वास्थानानि ।

**घोरां मम तनुं वह्निं समुपासीत संयतः ।**

**सुवर्णा कनका रक्ता कृष्णा चैव तु सुप्रभा ।**

**बहुरूपाऽतिरक्ता च सप्तजिह्वाः प्रकीर्तिताः ।**

**सुवर्णा वारुणी जिह्वा कनका मध्यमा स्मृता ।**

**रक्ता चैवोत्तरा जिह्वा कृष्णा याम्यदिशि स्थिता ।।**

**सुप्रभा पूर्वदिग्जिह्वा अतिरक्ताऽग्निगोचरा ।**

**ऐशानी बहुरूपा च जिह्वा स्थानान्यनुक्रमात् ।।**

(मकुट.,क्रि.पा.,२.२४–२६)

## सप्तवक्त्ररुद्राक्षः

रुद्राक्षभेदः । सप्तमातृकाधिदैवतं सप्तवक्त्रं रुद्राक्षं धार्यते चेत् सुप्रीताः सप्तमातरः जयं यच्छन्ति ।

**सप्तवक्त्रं तु रुद्राक्षं सप्तमात्रधिदैवत ।**

**तद्धारणेन सुप्रीता जयं ददति मातरः ।।**

(चं.आ.,क्रि.पा.,७.३१)

## सप्तविंशतिस्थलानि

अनादिवीरशैवसारसंग्रहकारमते स्थलानि सप्तविंशति । तानि यथा –

१. पीठिकासूत्रस्थलम्, २. अनादिभक्तलक्षणस्थलम्, ३. आदिरहितजङ्गमस्थलम्, ४. शून्यलिङ्गस्थलम्, ५. निष्कललिङ्गस्थलम्, ६. महालिङ्गस्थलम्, ७. प्रणवाकृतिलिङ्गस्थलम्, ८. विश्वजननस्थलम्, ९. पिण्डस्थलम्, १०. पिण्डचित्स्थलम्, ११. संसारहेयभागस्थलम्, १२. गुरुकारुण्यस्थलम्, १३. लिङ्गधारणस्थलम्, १४. देशिकमहत्त्वस्थलम्, १५. स्वेष्टलिङ्गमाहात्म्यस्थलम्, १६. चरलिङ्गमाहात्म्यस्थलम्, १७. प्रसाद-माहात्म्यस्थलम्, १८. पादोदकमहत्त्वस्थलम्, १९. भस्ममाहात्म्यस्थलम्, २०. रुद्राक्षमहत्त्वस्थलम्, २१. पञ्चाक्षरमहत्त्वस्थलम्, २२. भक्तस्थलम्, २३. माहेश्वरस्थलम्, २४. प्रसादिस्थलम्, २५. प्राणलिङ्गिस्थलम्, २६. शरणस्थलम्, २७. ऐक्यस्थलम् , इति ।

**अथातश्चानादिवीरशैवसारसुसंग्रहे ।**

**स्थलान्यत्र निगद्यन्ते सप्तविंशतिभेदतः ।।**

**प्रथमं पीठिकासूत्रमनादिभक्तलक्षणम् ।**

**द्वितीयमादिरहितजङ्गमस्थलमुत्तमम् ।।**

**तृतीयं शून्यलिङ्गस्य स्थलं विद्याच्चतुर्थकम् ।**

**पञ्चमं निष्कलाख्यस्य लिङ्गस्य स्थलमुच्यते ।।**

**महालिङ्गस्थलं षष्ठं प्रणवाकृतिलिङ्गकम् ।**

**सप्तमं विश्वजननस्थलमष्टममुच्यते ।।**

**पिण्डस्थलं तु नवमं दशमं पिण्डचित्स्थलम् ।**

**संसारहेयभागेकादशस्थलमुदाहृतम् ।।**
**गुरुकारुण्यकं ज्ञेयं द्वादशं लिङ्गधारणम् ।**
**त्रयोदशं देशिकस्य महत्त्वं तु चतुर्दशम् ।।**
**पञ्चदशं स्वेष्टलिङ्गमाहात्म्यं षोडशं भवेत् ।**
**चरलिङ्गस्य माहात्म्ययुतं सप्तदशं भवेत् ।।**
**प्रसादस्य च माहात्म्यमष्टादशकमुच्यते ।**
**पादोदकमहत्त्वं च नवदशमुदीर्यते ।।**
**भस्ममाहात्म्यरुद्राक्षमहत्त्वं विंशति स्मृतम् ।**
**एकविंशति विख्यातं पञ्चाक्षरमहत्त्वकम् ।।**
**द्वाविंशतिर्भवेद्भक्तस्थलं माहेश्वरस्थलम् ।**
**त्रयोविंशतिसंख्यातं चतुर्विंशतिसंयुतम् ।।**
**प्रसादिस्थलमत्रैव पञ्चविंशतिकीर्तितम् ।**
**प्राणलिङ्गिस्थलं षड्विंशतिरत्र निगद्यते ।।**
**शरणस्थलमैक्यस्य स्थलं स्यात्सप्तविंशतिः ।।**

(अ.वी.सा.सं.,भा-१, १.४७-५८)

## सप्तशैवाः

अनादिशैवः, आदिशैवः, महाशैवः, अनुशैवः, अवान्तरशैवः, प्रवरशैवः, अन्त्यशैवः चेति सप्तधा ।

**शैवाः सप्तविधा ज्ञेयास्तेषां भेदान् श्रृणु क्रमात् ।।**
**अनादिशैवः प्रथममादिशैवस्ततः परम् ।**
**महाशैवस्ततो ज्ञेयस्त्वनुशैवस्ततः परम् ।।**
**अवान्तरस्ततो ज्ञेयः प्रवरस्तदनन्तरम् ।**
**अन्त्यशैवस्ततो ज्ञेयस्तेषां लक्षणमुच्यते ।**

(सू.आ.,क्रि.पा.,७.४-६)

**वीरशैवादिभेदेन शैवं सप्तविधं त्विति ।**

(पार.आ.,७.२)

(पश्यत – शैवाः)

## सप्रकाण्डशीलम्

पञ्चाचारेषु सदाचार एकतमः । सदाचारान्तर्गतत्वेन विद्यमानेषु अष्टशीलेषु एकतमम् । इष्टलिङ्गपूजामकृत्वा भोजनं न स्वीक्रियते इत्येवं शीलं यत् तत्सप्रकाण्डशीलम् । तच्च भक्तिसाधनम् ।

**इष्टलिङ्गमनभ्यर्च्य स्थीयते यदभोजनम् ।**
**सप्रकाण्डमिदं शीलं विज्ञेयं भक्तिसाधनम् ।**

(चं.आ.,क्रि.पा.,९.२७)

(पश्यत – सदाचारः)

## सफलशीलम्

सदाचारान्तर्गतत्वे न विद्यमानेषु अष्टशीलेषु एकतमम् । एतच्च सद्यः परं सिद्धिकरम् ।

गुरुलिङ्गजङ्गमानाम् एकत्वभावनमेव सफलशीलम् ।

**गुरुलिङ्गजङ्गमानां यदेकत्वेन भावनम् ।**
**सफलं शीलमित्युक्तं सद्यः सिद्धिकरं परम् ।**

(चं.आ.,क्रि.पा.,९.३०)

(पश्यत – सदाचारः)

## सबीजा दीक्षा

दीक्षाप्रभेदः ।

१. क्रियावतीदीक्षायाः सबीजा निर्बीजा इति द्विविधप्रभेदयोः एका । इयं च साधकाचार्ययोः सम्बद्धा । विदुषां समर्थानां च सम्बद्धा इति कारणात् इयं सबीजा इति कथ्यते । एषा च शिवधर्मिणी लोकधर्मिणी इति द्विधा । तत्र धर्माधर्मात्मकानां सञ्चितम्, आगामि, प्रारब्धम् इति त्रिविधकर्मणां

शोधिका शिवधर्मिणी दीक्षा । सा च भौतिकी नैष्ठिकी इति द्विधा । तत्र व्रतमोक्षसमायुक्ता भौतिकी, शरीरपातपर्यन्तवृता नैष्ठिकीति कथ्यते। अधर्मात्मकस्य सञ्चितकर्मणः सर्वप्रकारकस्य आगामिकर्मणश्च शोधिका दीक्षा लोकधर्मिणी इत्युच्यते ।

**क्रियावत्यथ साऽनेका निर्बीजाथ सबीजिका ।**
**सबीजा च भवेद्दीक्षा साधकाचार्ययोरपि ।।**
**विदुषां च समर्थानां सबीजा परिकीर्तिता ।**
**सबीजा च द्विधा भिन्ना प्रथमा शिवधर्मिणी ।।**
**आचार्यगोचरा प्रोक्ता साधिका लोकधर्मिणी ।**
**धर्माधर्मात्मकं कर्म प्रागागामि विचित्रकम् ।।**
**संस्कृत्य शोध्यते यत्र सैवोक्ता शिवधर्मिणी ।।**
**अधर्मं सञ्चितं सर्वं कर्मागामि विशोध्यते ।**
**धर्मावशेषतो यत्र सा दीक्षा लोकधर्मिणी ।।**
**भौतिकी नैष्ठिकी चेति द्विधा सा शिवधर्मिणी ।**
**व्रतमोक्षसमायुक्ता भौतिकीति निगद्यते ।।**
**भौतिका काम्य इत्युक्तास्तत्सन्तानिक एव वा ।**
**शरीरपातपर्यन्तवृता सा नैष्ठिकी मता ।।**

(वे.वी.चिं.,भा-२, ६.२२-३१, पृ.१२७-२८; शि.त.र.,भा-३, ९.७.१७-१८, २१, २३)

२. साधारदीक्षायाः सबीजा, अबीजा, चिन्मया इति त्रिविधप्रभेदेषु एकतमा । कर्मशुद्धौ उपयुक्ता दीक्षा ।

**सा दीक्षा त्रिविधा प्रोक्ता सबीजाबीजचिन्मया ।**
**यथाक्रमं कर्मभक्तिज्ञानकाण्डेषु ताः स्फुटाः ।।**

(शि.त.र.,भा-३, ९.७.९)

(पश्यत – दीक्षा)

## समयः

समयः धर्मः । स च शैवम्, पाशुपतम्, कालामुखम्, कापालिकम्, बौद्धम्, आर्हतकम् इति षोढा ।

**शैवं पाशुपतं कालामुखं कापालिकं तथा ।।**

**बौद्धमार्हतकं चैव समयाष्षड्डुदीरिताः ।**

(शि.त.र.,भा-३, ९.४.७-८)

## समयदीक्षा

वेधादीक्षान्तर्गतसप्तदीक्षाष्वेकतमा । बन्धुजने प्रीतिमकुर्वन् भक्तेषु तां स्थिरीकुरु इति गुरोरादेशः समयदीक्षा इत्युच्यते ।

**अद्या समयसंज्ञा स्यात् ......वेधादीक्षान्तरा इमाः ।।**

**हित्वा बन्धुजनेप्रीतिं तां भक्तेषु स्थिरां कुरु ।**

**एवं समयमादिश्य ........................ ।।**

(का.आ.,क्रि.पा., १.९६,१०१)

## समयसज्जनः

दासत्वादिषु षट्सु सज्जनेषु एकः । गृहम्, धनम्, देहं च जङ्गमलिङ्गे स्थावरलिङ्गे च यः भक्त्या समर्पयति सः समय इत्युच्यते । अयमेव समयाचार इति कथ्यते ।

**दासत्वं वीरदासत्वं भृत्यत्वं वीरभृत्यता ।**

**समयः सकलावस्थः सज्जनं षड्विधं तथा ।।**

**स्वगृहं स्वधनञ्चैव स्वदेहं भक्तिसंयुतम् ।**

**जङ्गमे स्थावरे क्षिप्रं समयाचारसज्जनम् ।।**

(शै.र.,भा-२, १७.१९६, २०१)

(पश्यत – सज्जनः)

## समरसभक्तिः

षड्विधभक्तिषु एका । तत्र च इयं प्रथमा ऐक्यथलाश्रिता च ।

**भक्तिस्समरसाकारा प्रथमा परिगीयते ।**

**ऐक्याङ्गं भाजि लिङ्गे महति हृदि मुखे चिन्महाशक्तियुक्ते ।**

**नित्यं भावेन हस्तेन च समरसभक्तिप्रसक्तः स्वयं सन् ।।**

(अ.सू.,४.२५; ७.५०)

## समर्पणम्

अर्चाङ्गं सार्वकालिकं चेति द्विविधं समर्पणं रुचिभावनया पूजाङ्गत्वेन उत्पन्नम् । एतत् समर्पणं विशेषतया षट्स्थलेषु एकैकस्थले विधीयते । तत्र अङ्गम्, लिङ्गम्, भक्तिम्, शक्तिम्, स्थलम्, मुखम्, हस्तम्, प्रसादं च ज्ञात्वा समर्पणं कृत्वा लिङ्गं सम्यगर्च्यते । पुनः चन्द्रज्ञानागमोक्तदिशा स्थूलं सूक्ष्मं चेति द्विधा विभक्तं समर्पणं भक्तादिस्थलेषु तत्तदङ्गादिप्रकारं ज्ञात्वा क्रियते । यत् कारणागमे अर्चाङ्गं समर्पणमिति कथ्यते । तदेवात्र स्थूलसमर्पणम् । यच्च शब्दादिविषयानां भावनाद्वारा समर्प्यते तत् सूक्ष्ममिति गृह्यते ।

**समर्पणं द्विधा प्रोक्तमर्चाङ्गं सार्वकालिकम् ।**

**समर्पणे समर्चाङ्गे रुचिं भावेन नान्यथा ।।**

**एवमङ्गं च लिङ्गं च भक्तिं शक्तिं तथा स्थलम् ।**

**मुखं हस्तं प्रसादं च ज्ञात्वा वै सम्यगर्चयेत् ।।**

**एवमर्पणसद्भावं सर्वदैव समभ्यसेत् ।**

(का.आ.,क्रि.पा.,७.६७, ६६)

**समर्पणं द्विधा प्रोक्तं स्थूलसूक्ष्मविभेदतः ।**

**यच्छब्दाद्यविभागेनैवेष्टलिङ्गे समर्प्यते ।।**

**द्रव्यं तत् स्थूलमित्युक्तमर्चाङ्गं तत्प्रकीर्तितम् ।।**

**शब्दादिविषया यत्र भावेनैव न चान्यथा ।**

**समर्प्यन्ते रूपमेव तद्धि सूक्ष्मं प्रकीर्तितम् ।।**

(चं.आ.,क्रि.पा., ५.२८-२९)

(पश्यत – अर्पणम्, षड्लिङ्गार्पणम्।)

## समाधिः

१. समाधिः नाम शिवयोगसमाधिः ।

**शिवात्मध्यानसम्पत्तिः समाधिरिति कथ्यते ।**

(सि.शि.,१२.२१)

(पश्यत – शिवयोगसमाधिस्थलम्)

२. यमनियमादिषु योगाङ्गेषु अष्टममङ्गम् । शिवजीवयोः एकाकारभूता ध्यानस्यान्तिमस्थितिः समाधि इत्युच्यते ।

**अन्तःक्रियारतस्यास्य प्राणलिङ्गार्चनक्रमैः ।**

**शिवात्मध्यानसम्पत्तिः समाधिरिति कथ्यते ।।**

**हंसरूपं परात्मानं सोऽहंभावेन भावयेत् ।**

**तदेकतानतासिद्धिः समाधिः परमो मतः ।।**

(सि.शि.,१२.२१, २३; शि.त.र.,भा-३, ८.७.७९-८०)

**समाधिर्नाम योगाङ्गमष्टमं परिकीर्त्यते ।**

**यदत्रामुत्र निर्भासं स्तिमितोदधिवत् स्थितम् ।**

**स्वरूपशून्यवद् ध्यानं तत्समाधिर्विधीयते ।।**

(क्रि.सा.,भा-३, २७.९-१०; शि.यो.प्र., ३.४७-४८; ४.११)

**अर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ।**

(वी.आ.चं.,पृ.६, श्लो.१)

३. वीरशैवानां अन्त्यसंस्कारः 'समाधिः' शब्देन व्यवह्रियते। अयं च प्रेतधर्मापवादत्वेन मोक्षधर्मः । अस्मिन् समाधिसंस्कारे न कापि शङ्का धर्मलोपस्य । मोक्षापेक्षिणां शाम्भवानां पितृमेधे समाधिविधिरेवोत्तमः । गृहस्थो वा संन्यासी वा लिङ्गधारी तु शरीरं यदा त्यजति तस्य दहनं नास्ति । समाधिगोपनमेव विधिः ।

**शाम्भवानां मुमुक्षूणां संस्कारायैव चोदितः ।**
**पितृमेधे श्रूयतेऽसौ समाधिविधिरुत्तमः ।।**
**गृही वाऽथ यतिर्वापि लिङ्गधारी तनुं त्यजेत् ।**
**न दहेत् तस्य देहं तु समाधौ गोपयेत्तदा ।।**
**समाधिर्मोक्षधर्मोऽयं प्रेतधर्मापवादकः ।**
**समाधिसंस्कृतेष्वस्माद् धर्मलोपो न शङ्क्यते ।।**

(चं.आ.,च.पा.,१.११, १३-१४; मकुट.,च.पा.,१.१८-२२; पश्यत - लिं.धा.चं., पृ.२४१-२८४)

## समिदग्निजम्

भस्मभेदः । समिदग्निजन्यं भस्म । ब्रह्मचारिभिः धार्यम् ।

**समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणाम् ।।**

(क्रि.सा.,भा-२, ६.३५, पृ.२०)

## सम्मिश्रोपाधिः

भोक्ता । पशुः ।

**सम्मिश्रोपाधयः सर्वे भोक्तारः पशवः स्मृताः ।।**

(सि.शि.,५.४२)

## सम्यग्ज्ञानम्

उपाङ्गषट्के एकम् । दर्पसम्बन्धरहितः, शिवज्ञानेऽनुरक्तः शिवयोगी सम्यग्ज्ञानं प्राप्नोति । तेन सम्यग्ज्ञानेन सर्वप्राणिनः स्वात्मनि स्वात्मा च

परमात्मनि इत्येवं रूपं ऐक्यमेव परामृशति । स च चराचरजगद्रूपं परमात्मस्वरूपम्, तच्च स्वस्वरूपमिति भावयति ।

**निरस्तदर्पसम्बद्धः शिवज्ञानरतो भवेत् ।**

**तेन शीघ्रं गिरिसुते सम्यग्ज्ञानं ततो भवेत् ।।**

**येन भूतान्यशेषेण द्रक्षत्यात्मन्यथो मयि ।**

**प्रत्ययत्रितयैक्येन सम्यग्ज्ञानी स चास्म्यहम् ।।**

**चराचरात्मकं सर्वं भावयन् परमात्मनः ।**

**ममरूपं महेशानि सम्यग्ज्ञानी स उच्यते ।।**

(पार.आ.,६.५७–५९)

**सम्यग्ज्ञानमिति प्राज्ञैस्स्थलषट्कमुदाहृतम् ।**

(वी.प्र.,पृ.४०, श्लो.३)

(पश्यत – उपाङ्गषट्कम्)

## सर्वगत्वनिरसनस्थलम्

माहेश्वरस्थलस्य नवविधाङ्गस्थलेष्वेकम् । एकोत्तरशतस्थलेषु च द्वाविंशतितमम् । महेशस्य सर्वगतत्वेऽपि, लिङ्गनिष्ठस्य लिङ्गमात्रे आराधनं स्यात् इति हेतुना 'अन्यत्र विमुखो भूत्वा लिङ्गमात्रे शिवम् आराधयेत्' इति प्रतिपादकं स्थलम् ।

**माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पुरा ।**

**सर्वगत्वनिरासश्च शिवत्वं शिवभक्तयोः ।**

**एवं नवविधं प्रोक्तं माहेश्वरस्थलम् ।।**

**सर्वगत्वे महेशस्य सर्वत्राराधनं भवेत् ।**

**न लिङ्गमात्रे तन्निष्ठो न शिवं सर्वगं स्मरेत् ।।**

**सर्वगोऽपि स्थितः शम्भुः स्वाधारे हि विशेषतः ।**

**तस्मादन्यत्र विमुखः स्वेष्टलिङ्गे यजेच्छिवम् ।।**

(सि.शि.,१०.४, ६, ५५-५६)

## सर्वाङ्गलिङ्गसाहित्यम्

सर्वेष्वङ्गेषु गुरूपदेशेन सुप्रतिष्ठितानि सर्वतोमुखानि लिङ्गानि विद्यन्ते। एतदेव सर्वाङ्गलिङ्गसाहित्यम् । आदौ एकमेव परं लिङ्गं भक्तस्यास्मिन्नङ्गे (आत्मनि) सुप्रतिष्ठितं सर्वतोमुखं नामरूपक्रियात्मना प्रकाशते । तदेव लिङ्गं इष्टप्राणभावरूपेण विभक्तं सत् बाह्याद्यङ्गे (स्थूलाद्यङ्गे) गुरुणा प्रतिष्ठापितं वर्तते । एवं बाह्याङ्गे इष्टलिङ्गम्, अन्तरङ्गे (सूक्ष्माङ्गे) प्राणलिङ्गम्, आत्माङ्गे (कारणाङ्गे) च भावलिङ्गमित्युक्तं भवति । भावलिङ्गादीनि एकैकमपि महालिङ्गादिरूपेण षड्विधत्वं प्राप्तानि हृदयाद्यङ्गेषु तिष्ठन्ति । तथाहि–महालिङ्गं हृदयाङ्गे, प्रसादलिङ्गं श्रोत्राङ्गे, चरलिङ्गं त्वगङ्गे, शिवलिङ्गं नेत्राङ्गे, गुरुलिङ्गं जिह्वाङ्गे, आचारलिङ्गं नासिकाङ्गे तिष्ठन्ति । यथा ज्ञानेन्द्रियाङ्गेषु षड्लिङ्गानि प्रतिष्ठितानि तथैव कर्मेन्द्रियाङ्गेषु तान्येव लिङ्गानि प्रतिष्ठितानि । तथाहि वागङ्गे प्रसादलिङ्गम्, पाण्यङ्गे चरलिङ्गम्, पादाङ्गे शिवलिङ्गम्, पाय्वङ्गे गुरुलिङ्गम्, उपस्थाङ्गे आचारलिङ्गमिति ।

**आयुषः प्राणमित्यादिमन्त्रान् सम्यगनुस्मरन् ।**

**सर्वाङ्गलिङ्गसाहित्यं ततः कुर्यात् प्रयत्नतः ।।**

**इष्टलिङ्गं तु बाह्याङ्गे प्राणलिङ्गं तथान्तरे ।**

**भावलिङ्गं तथैवास्मिन्नात्माङ्गे सुप्रतिष्ठितम् ।।**

**हृदयाङ्गे महालिङ्गं श्रोत्राङ्गे तु प्रसादकम् ।**

**त्वगङ्गे चरलिङ्गं तु दृगङ्गे शिवलिङ्गकम् ।।**

**जिह्वाङ्गे गुरुलिङ्गं तु नासिकाङ्गे तथैव च ।**

**आचारलिङ्गमश्रान्तं सुप्रतिष्ठितमेव हि ।।**

**यथा ज्ञानेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।**

**तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।।**

(चं.आ.,च.पा.,२.१२-१८; अ.सू.,६.५-८)

## सर्वाद्वैतनिरसनस्थलम्

माहेश्वरस्थलस्य नवविधाङ्गस्थलेष्वेकतमम् । एकोत्तरशतस्थलेषु च नवदशम् । अद्वैतनिरसनस्थलमिति अस्य नामान्तरम् ।

लिङ्गजीवयोः अभेदकल्पनायां पूज्यपूजकभावः निरस्यते । तदा पूजाकर्माद्यनुपपन्नं भवति । तत्र लिङ्गनिष्ठाविरोधोऽपि सम्पद्यते । सर्वाद्वैतविचारे सति भेदज्ञानमेव निरस्तं भवति । अतः कर्मयोगरतः माहेश्वरः सर्वाद्वैतं निराकरोति । एतादृशस्य माहेश्वरस्येदं स्थलं सर्वाद्वैतनिरसन-स्थलम् । अद्वैतनिराकृतिरेव रूढ़ौ सर्वाद्वैतनिरसनमिति ज्ञायते ।

**माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पुरा ।**

**पूर्वाश्रयनिरासश्च तथाद्वैतनिराकृतिः ।**

**पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।**

**पूजाकर्माद्यसम्पत्तेर्लिङ्गनिष्ठाविरोधतः ।।**

**सर्वाद्वैतविचारस्य ज्ञानाभावे व्यवस्थितेः ।**

**भवेन्माहेश्वरः कर्मी सर्वाद्वैतनिरासकः ।।**

(सि.शि.,१०.४-५, ३७-३८)

(पश्यत - अद्वैतनिरसनस्थलम्)

## सर्वाद्वैतनिरासकः

सर्वाद्वैतविचार ज्ञानाभावे पर्यवस्यति । अतो माहेश्वरः तं निरस्य सर्वाद्वैतनिरासको भवति ।

**सर्वाद्वैतविचारस्य ज्ञानाभावे व्यवस्थितेः ।**

**भवेन्माहेश्वरोः कर्मी सर्वाद्वैतनिरासकः ।।**

(सि.शि.,१०.३८)

(पश्यत – सर्वाद्वैतनिरसनस्थलम्)

## सविशेषाः

सविशेषाः निर्विशेषका इति द्विविधसदाचारेषु एकः प्रकारः । तत्र आगमोक्ताः वीरशैवैः सादरं स्वीकृताः लिङ्गाचारादयः पञ्चाचाराः सविशेषसदाचारा इत्युच्यन्ते । एते पञ्चाचाराः शरीरपातपर्यन्तं अपेक्षिताः सन्तः तेषां विच्छेदे प्राणसंशयः जायते । तत्र प्रायश्चित्तं नास्ति । अत एव ते सविशेषाः ।

**सविशेषाः सदाचारा आगमैरुपपादिताः ।**

**पञ्चाचारा वीरशैवैः सादरं स्वीकृताः सदा ।।**

**अपेक्ष्यैव शरीरान्तं विच्छेदे प्राणसंशयम् ।**

**प्रायश्चित्तेन रहितं सविशेषं विदुर्बुधाः ।।**

(क्रि.सा.,भा–२, ५.११, १३, पृ.२)

(पश्यत – पञ्चाचाराः)

## सशाखशीलम्

सदाचारान्तर्गतेषु अष्टशीलेषु एकतमम् ।

**इष्टलिङ्गानर्पितस्य द्रव्यस्याग्रहणं हि यत् ।**

**शीलं सशाखमित्युक्तमवर्ज्यं भक्तितत्परैः ।**

(चं.आ.,क्रि.पा.,९.२८)

(पश्यत – सदाचारः)

## सहजजङ्गमम्

जङ्गमभेदः । शिवस्वरूपम् । सहजम्, मान्त्रिकम् इति द्विविधयोर्जङ्गमयोरन्यतरम् । तत्र वीरशैवः माहेश्वरः सहजजङ्गमम् इत्युच्यते।

**जङ्गमं द्विविधं प्रोक्तं मान्त्रिकं सहजं त्विति ।**

**सहजं जङ्गमं माहेश्वर इत्यभिधीयते ।**

(चं.आ.,क्रि.पा.,४.६–७)

**सहजं जङ्गमं वीरशैवशब्देन शब्दितम् ।।**

(क्रि.सा.,भा–३, १७–३)

(पश्यत – जङ्गमम्)

## सहजजङ्गमः

मान्त्रिकः सहजश्चेति द्वयोः जङ्गमयोरेकतरम् । तत्र सहजजङ्गमः माहेश्वर एव । चरः, भक्तः, शैवः, जङ्गमः इति सहजस्य नामानि । ते च त्रिविधाः । ब्रह्मचारी, गृही, निराभारी चेति । उत्तरोत्तरम् एते विशिष्यन्ते । यथाविधि ते पूजनीयाः ।

**माहेश्वरश्चरो भक्तः शैवो जङ्गम इत्यपि ।।**

**सहजस्याभिधानानि भवन्तीश्वरशसनात् ।**

**ब्रह्मचारी गृही चैव निराभारीति ते त्रयः ।।**

**यथोत्तरं विशिष्यन्ते पूजनीया यथाविधि ।**

(चं.आ.,क्रि.पा.,४.६–८)

## सहजदानम्

सोपाधिकनिरुपाधिकसहजदानेष्वेकतमम् । यत्रादातृदातृदेयानां शिवभावचिन्तनपूर्वकं दीयमानं दानं सहजदानम् । इदं दानं सर्वदानेषु

उत्कृष्टम् । शिवज्ञानप्रदम्, जन्मरोगनिवारकं च । यत्किञ्चित् शिवाय शिवभक्ताय वा दीयते तदपि सहजदानम् ।

**दानं च त्रिविधं प्रोक्तं सोपाधिनिरुपाधिकम् ।**
**सहजं चेति सर्वेषां सर्वतन्त्रविशारदैः ।।**
**आदातृदातृदेयानां शिवभावं विचिन्तयन् ।**
**आत्मनोऽकर्तृभावं च यद्दत्तं सहजं भवेत् ।।**
**सहजं दानमुत्कृष्टं सर्वदानोत्तमोत्तमम् ।**
**शिवज्ञानप्रदं पुंसां जन्मरोगनिवर्तकम् ।।**
**शिवाय शिवभक्ताय दीयते यदि किञ्चन ।**
**भक्त्या तदपि विख्यातं सहजं दानमुत्तमम् ।।**

(सि.शि.,९.८०, ८३-८५)

(पश्यत – त्रिविधदानम्)

## सहजदानस्थलम्

भक्तस्थलान्तर्गतपञ्चदशाङ्गस्थलेष्वेकतमम् । एकोत्तरशतस्थलेषु पञ्चदशतमस्थलम् । आदातृदातृदेयानां सिवभावचिन्तनपूर्वकं दीयमानं दानं सहजदानम् । तत्सम्बद्धस्थलं सहजदानस्तलम् ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**
**अत्र दानत्रयं प्रोक्तं सोपाधिनिरुपाधिकम् ।**
**सहजं चेति निर्दिष्टं समस्तागमपारगैः ।।**

(सि.शि.,५.२७, ३०)

(पश्यत – सहजदानम्)

## सहजावस्था

सर्वेन्द्रियगुणैरस्पृष्टा, रूपातीता, निर्लिप्ता, शान्ता, भावाभावरहिता अवस्था ।

**सर्वेन्द्रियगुणरहिता रूपातीता निरञ्जना शान्ता ।**
**भावाभावविदूरा सहजावस्थेति सा कथिता ।।**

(शि.यो.प्र.,५.२९)

## सहभाजनम्

दर्शनस्पर्शनादीनां व्यवहाराणां लिङ्गात्मभावनया क्रियमाणा स्थितिः।

**लिङ्गदृष्ट्या निरीक्षणं स्यात् लिङ्गहस्तेन स्पर्शनम् ।**
**लिङ्गजिह्वारसास्वादो लिङ्गघ्राणेन घ्रातिते ।।**
**लिङ्गश्रोत्रेण श्रवणं लिङ्गास्येनोक्तिरुच्यते ।**
**लिङ्गेनानुगतं सर्वम् इत्येतत्सहभाजनम् ।।**

(लिं.पु., ६.३६५)

## सहभोजनम्

साक्षाच्चिदाकारे आत्मनि शिवं गुरुं विश्वं च अस्मद्रूपानतिरिक्तत्वेन परामर्शनं सहभोजनम् ।

**गुरोः शिवस्य शिष्यस्य स्वस्वरूपतया स्मृतिः ।**
**सहभोजनमाख्यातं सर्वग्रासात्मभावतः ।।**
**शिवं विश्वं गुरुं साक्षात् योजयेन्नित्यमात्मनि ।**
**एकत्वेन चिदाकारे तदिदं सहभोजनम् ।।**

(सि.शि.,१४.३४-३५)

## सहभोजनस्थलम्

ऐक्यस्थलाश्रिता चतुर्विधाङ्गस्थलेष्वेकतमम् । एकोत्तरशतस्थलेषु चतुश्चत्त्वारिंशत्तमम् । गुरोः शिवस्य स्वस्वरूपतया स्मरणम्, शिवम्, विश्वम्, गुरुम् आत्मन्येकत्वेन योजनं च सहभोजनमित्युच्यते । तादृशस्य साधकस्य स्थलं सहभोजनस्थलम् ।

**ऐक्यस्थलमिदं प्रोक्तं चतुर्धा मुनिपुङ्गव ।**
**सहभोजनमित्येषां क्रमाल्लक्षणमुच्यते ।।**

(सि.शि.,१४.३)

(पश्यत – सहभोजनम्)

## सहस्रपत्रचक्रम्

चक्रभेदः । सहस्रारचक्रम् । ब्रह्मरन्ध्रे स्थितमिदम् अमृतात्मकम् । सुधासाराभिः तनुम् अभिवर्धते ।

**चक्रं सहस्रपत्रं तु ब्रह्मरन्ध्रे सुधामयम् ।।**
**तत्सुधासारधाराभिरभिवर्धते तनुम् ।**

(शि.त.र.,भा–३, ९.१.१५०–१५१)

## साकल्यप्रणवः

साकल्यम्, शाम्भवम्, सौख्यम्, सावश्यम्, सायुज्यं चेति प्रणवः पञ्चविधः । तत्र साकल्यम् अकार – उकार – मकारश्चेति त्रिभिः सह हकारे योजिते सति साकल्यं नाम प्रणवः (अ–उ–म–ह)। तच्च पूर्ववक्त्र-(सद्योजातवक्त्र) – समुद्भवम् । तस्य वर्णः रक्तः, छन्दः अनुष्टुप्, ऋषिः सनत्कुमारः, पृथिवी भूतम्, तत्त्वं कर्म, ईशानः अधिदैवतम्, बीजं चतुर्मात्रात्मकम्, फलं सर्वार्थसिद्धिः ।

**सोऽयं पञ्चविधः प्रोक्तः साकल्यादि प्रभेदतः ।**
**साकल्यं प्रथमं प्रोक्तं शाम्भवं तु द्वितीयकम् ।।**
**सौख्यं तृतीयमित्युक्तं सावश्यं तु चतुर्थकम् ।**
**सायुज्यं पञ्चमं प्रोक्तं भेदमेषां शृणु क्रमात् ।।**
**आद्यं पञ्चमसंयुक्तं नादे मान्तेन संयुतः ।**
**साकल्यं प्रणवो ज्ञेयः पूर्ववक्त्रसमुद्भवः ।।**
**साकल्यं रक्तवर्णं च छन्दोऽनुष्टुप् तथा ऋषिः ।**

**सनत्कुमारो भूतं च पार्थिवं समुदीरितम् ।।**

**कर्मतत्त्वं तथेशानः प्रोक्तमस्याधिदैवतम् ।**

**मात्रा चतुष्कसहितं बीजं सर्वार्थसिद्धिदम् ।।**

(सू.आ.,क्रि.पा.,४.५-६, १९, २४-२५; वा.शु.आ., ६.५-६, १०-११, १५-१७)

(पश्यत – प्रणवपञ्चकम्, सायुज्यम्)

## साकारयोगशैवः

शैवभेदः । योगशैवस्य साकारनिराकारभेदयोरन्यतरः । ध्यातृ-ध्येयादिविवर्जितः, ज्ञानज्ञेयज्ञातृभेदत्रयरहितः निराकारो योगशैवः । तद्भिन्नः साकारयोगशैवः ।

**शैवभेदस्य यद्योगपूर्वत्वं योगपाठवत् ।**

**स चापि द्विविधो योगः साकारश्च निराकृतिः ।।**

**निराकृतिर्निराकारो ध्यातृध्येयविवर्जितः ।**

**ज्ञानज्ञेयज्ञातृभेदप्रत्ययत्रयवर्जितः ।।**

(पार.आ.,१०.१३-१४)

(पश्यत – निराकारयोगशैवः)

## सात्त्विकयोगी

सात्त्विकः, राजसः, तामस इति त्रिविधपुरुषेशु सात्त्विकः पुरुषः महायोगीति कथ्यते । तथा चोक्तानि सात्त्विकलक्षणानि –

**शमो दमो विवेकश्च वैराग्यं पूर्णभावना ।**

**शान्तिः कारुण्यसंपत्तिः श्रद्धासत्यसमुद्भवा ।।**

**शिवभक्तिः परो धर्मः शिवज्ञानस्य बान्धवाः ।**

**एतैर्युक्तो महायोगी सत्त्विकः परिकीर्तितः ।।**

(सि.शि.,१३.१५-१६)

## सादाख्यम्

सच्चिदानन्दलक्षणः निर्गुणः परमेश्वरः पूज्यपूजकभावेन यदा सगुणो भवति तदा सादाख्यादिप्रभेदं प्राप्नोति । सादाख्यं नाम बिन्दुनादस्वरूपयोः पराशक्त्यादिशक्त्योः मेलनेन शिवतत्त्वं सृष्ट्यर्थं सादाख्यरूपेण परिणामं प्राप्नोति । सादाख्यं पञ्चविधम् - शिवसादाख्यम्, अमूर्तसादाख्यम्, मूर्तसादाख्यम्, कर्तृसादाख्यम्, कर्मसादाख्यं चेति । एतानि सादाख्यानि सदाशिवः, ईशः, ब्रह्मा, ईश्वरः, ईशानश्चेति पञ्चमूर्तित्वेन प्रकीर्तितानि । सदाशिवादिजगत्सृष्टिकारणभूतेषु षट्त्रिंशत् तत्त्वेषु पञ्चतत्त्वानि ।

**शिवस्तु सच्चिदानन्दलक्षणः परमेश्वरः ।**
**पूज्यपूजकभावेन निर्गुणः सगुणो भवेत् ।।**
**स च पञ्चविधः प्रोक्तः सादाख्यादिप्रभेदतः ।**
**पराशक्त्यादिशक्त्योश्च बिन्दुनादस्वरूपयोः ।**
**मेलने शिवतत्त्वस्य सादाख्यं समजायत ।।**
**प्रथमं शिवसादाख्यममूर्तं तु ततो भवेत् ।**
**ततः समूर्तसादाख्यं ततो वै कर्तृनामकम् ।।**
**कर्मसादाख्यमपरं पञ्चसादाख्यमीरितम् ।।**
**सदाशिवेशब्रह्मेश ईश्वरेशानभेदतः ।**
**मूर्तयो वै महादेवि सादाख्यापरनामकाः ।।**

(सू.आ.,क्रि.पा., १.२३-२६; वा.शु.आ.,१.३१-३७)

## साधनम्

१. ज्ञानादिषु षडर्थेषु एकः । तत्र शिवमन्त्रादिकं साधनम् ।

**ज्ञानं ज्ञेयमनुष्ठेयमधिकारोऽथ साधनम् ।।**
**साध्यं चेति षडर्थानां संग्रहस्तेषु सग्रहः ।**
**साधनं शिवमन्त्राद्यं साध्यं शिवसमानता ।।**

(शै.र.,भा-१, १.१०२, १०४, पृ.२६)

२. भक्तादिषट्सु स्थलेषु उत्तरोत्तरं स्थलं साध्यम् । पूर्वपूर्वं तु साधनम् ।

**भक्तादिसम्यग्ज्ञानपर्यन्तमुत्तरोत्तरमुत्तमम् ।**

**साधनं पूर्वपूर्वं स्यात् साध्यं स्यादुत्तरोत्तरम् ।।**

(पार.आ., ६.७३)

## साधारदीक्षा

साधारदीक्षा, साधारवर्जितदीक्षा इति द्विविधदीक्षयोरन्यतरा । गुरुमूर्तिं समाश्रित्य मन्दशक्तिनिपातनात् ईशेन क्रियमाणा दीक्षा साधारदीक्षा ।

**सेयं दीक्षा द्विधा भिन्ना साधाराधारवर्जिता ।**

**गुरुमूर्तिं समाश्रित्य मन्दशक्तिनिपातनात् ।**

**कुरुते सकलस्येशः साधारां तामिमां विदुः ।।**

(शि.त.र., भा-३, ९.७.६, ८)

इयं च सबीजदीक्षा, अबीजदीक्षा, चिन्मयदीक्षा इति त्रिधा ।

**सा दीक्षा त्रिधा प्रोक्ता सबीजाबीजचिन्मया ।**

**यथाक्रमं कर्मभक्तिज्ञानकाण्डेषु ताः स्फुटाः ।।**

(शि.त.र., भा-३, ९.७.९)

(पश्यत – दीक्षा)

## साधारवर्जितदीक्षा

साधारदीक्षा साधारवर्जितदीक्षा इति द्विविधदीक्षयोरन्यतरा । आचार्यं विना ईश्वरेण तीव्रशक्तिनिपातनेन क्रियमाणा दीक्षा ।

**सेयं दीक्षा द्विधा भिन्ना साधाराधारवर्जिता ।**

**आचार्यमन्तरेणैव क्रियते शङ्करेण या ।।**

**विज्ञानाकलनाम्नश्च प्रलयाकलकस्य च ।**

**तीव्रशक्तिनिपातेन दीक्षा साधारवर्जिता ।।**

(क्रि.सा., भा-३, १५.२-३, पृ.१२९)

## साध्यम्

१. ज्ञानादिषु षडर्थेषु एकः । तत्र शिवसमानताप्राप्तिः साध्यम् ।

**साध्यं शिवसमानता ।**

(शै.र.,भा-१, १.१०४, पृ.२६)

(पश्यत – षडर्थाः)

२. भक्तादिषु षट्स्थलेषु उत्तरोत्तरस्थलं पूर्वपूर्वं प्रति साध्यम्।

**भक्तादिसम्यग्ज्ञानपर्यन्तमुत्तरोत्तरमुत्तमम् ।**

**साधनं पूर्वपूर्वं स्यात् साध्यं स्यादुत्तरोत्तरम् ।।**

(पार.आ.,६.७३)

## साध्यमन्त्रः

सिद्धः, सुसिद्धः, साध्य इति त्रिविधमन्त्रेषु एकः । गुरूपदेशं विना स्वयमनुष्ठीयमानः मन्त्रः साध्यमन्त्रः । स च साध्यः साधितो वा न वा स निस्संशयं शिवे मन्त्रे गुरौ च श्रद्धायुक्तस्य सिध्यति ।

**न कदाचन कस्यापि रिपुरेष महामनुः ।।**

**सिद्धो वाऽथ सुसिद्धो वा साध्यो वाऽथ भविष्यति ।।**

**असिद्धेनाऽपि वा दत्तः साध्यस्तु केवलम् ।**

**असाधितः साधितो वा सिध्यत्येष न संशयः ।**

**श्रद्धातिशययुक्तस्य शिवे मन्त्रे तथा गुरौ ।।**

(चं.आ.,क्रि.पा.,८.८९)

अत्र जपस्य कर्मभूतस्य मन्त्रस्य दृष्ट्या सिद्धादिभेदः दत्तः । अन्यत्र कर्तृदृष्ट्या शुद्धाशुद्धभेद उक्तः ।

**शान्तो वा कुपितो वाऽपि शुद्धो वाऽशुद्ध एव वा ।**

**विधिनाऽपि विना वाऽपि शैवं पञ्चाक्षरं जपेत् ।।**

(पार.आ., १०.८७)

अत्र शान्तो वा कुपितो वापि कर्तृभेद उक्तः। एवमेव विधिनापि विना वापि इत्यनेन क्रमोऽपि बोधितः ।

## सामान्यवीरशैवम्

इष्टादिलिङ्गत्रयस्य समानभावेनार्चनम् । गुरौ शिवे इष्टलिङ्गे च समभावः । त्रिकालं उपलब्धाभिः वस्तुभिः लिङ्गार्चनमित्यादिधर्मविशिष्टं वीरशैवं सामान्यवीरशैवमिति कथ्यते ।

**इष्टादिलिङ्गत्रितयस्यैकीभावेन चार्चनम् ।।**

**गुरौ माहेश्वरे स्वेष्टलिङ्गे च समभावना ।**

**त्रिकालं लिङ्गपूजा च सम्भवद्भिः पदार्थकैः ।।**

**सामान्यवीरशैवस्य धर्मोऽयं परिकीर्तितः ।**

(चं.आ.,क्रि.पा.,१०.३६-३७; सू.आ.,क्रि.पा.,७.३०-३८; वा.शु.आ.,१०.३४-३७; पार.आ.,१५.३१-४१)

## सामान्यवीरशैवः

सामान्य - विशेष - निराभारीति त्रिविधवीरशैवेषु एकतमः । विभूतिरुदाक्षधारी, पञ्चाक्षरजपशीलः, इष्टप्राणभावलिङ्गानाम् एकीकृत्यार्चने निरतः, गुरुजङ्गमयोः निर्मलभक्तिमान्, शिवभक्तानां मनोवाक्कायकर्मपूर्वकं सेवाकार्ये निष्ठः, गोत्रसूत्रभाक्, शिवभक्तेषु बन्धुभावयुक्तः, करपीठे शिवपूजनम्, सज्जिकायां लिङ्गधारणमित्युभयकार्ये निष्ठः ।

**सामान्यं प्रथमं प्रोक्तं................**

(पश्यत - सामान्यवीरशैवम्)

(सू.आ.,क्रि.पा.,७.३०)

## सामान्यशिष्यः

शिष्यभेदः । वंश्यशिष्यप्रभेदः । (उपसूत्रसम्बद्धः शिष्यः ।)

**वंश्य आगन्तुकश्चेति द्विविधः शिष्य उच्यते ।**

**मुख्यः सामान्य इत्येवं पुनर्वंश्यो द्विधा मतः ।।**

(वी.स.सं., १४.२)

## सामान्यशैवम्

सामान्यशैवस्य मतम् ।

**सामान्यं मिश्रकं चैव शुद्धं वीरं यथाक्रमम् ।**

(वा.शु.आ.,१०.११)

(पश्यत – सामान्यशैवः)

## सामान्यशैवः

१. सामान्यशैवः, मिश्रशैवः, शुद्धशैवः, वीरशैव इत्यादि शैवप्रभेदेष्वेकः । तत्र शिवपूजा, शिवभावः, शिवलिङ्गदर्शनम्, तत्पूजाप्रदक्षिणादिकम्, भस्मरुद्राक्षधारणेन शुद्धः; भक्तशिवकार्येषु त्रिकरणपूर्वकगौरवप्रदर्शनमित्येतत्सामान्यशैवलक्षणम् ।

**तत्रादौ संप्रवक्ष्यामि शैवसामान्यलक्षणम् ।।**

**शिवलिङ्गं यदा पश्येत् तदा कुर्यात् समर्चनम् ।**

**प्रदक्षिणं प्रणामं वा दर्शनं वाऽत्र कारयेत् ।।**

**भस्मधारणमात्रेण शुद्धो भवति सर्वदा ।**

**शिवकीर्तौ तदालापे प्रीतिमान् शिवभक्तके ।।**

**एतेषां नियतिर्नास्ति यथालाभं समाचरेत् ।**

(वा.शु.आ., १०.११-१४)

२. अनादिशैवाद्यष्टविधशैवेषु एकः । शाक्तादिपञ्चमतवर्ती, अध्वशोधनप्रक्रियाद्वारा सुसंस्कृतः, गायत्रीमन्त्रग्राहकश्च सामान्यशैवः ।

**शाक्ताद्याः सर्व एवैते मतपञ्चकवर्तिनः ।।**

**अध्वशोधनसंस्काराद् गायत्रीग्रहणादपि ।**

**सामान्यशैवा इति हि निगद्यन्ते धरातले ।।**

(चं.आ.,क्रि.पा.,१०.२८-२९)

## सामान्याङ्गम्

चराचरात्मकं जगत् परमेश्वरस्याङ्गम् । अङ्गेश्वेरस्य तस्याङ्गभेदः षडात्मकः । तत्र समान्याङ्गं षष्ठम् ।

**शक्त्यङ्गं पञ्चमं विद्यात् सामान्याङ्गं च षष्ठकम् ।**

(वा.शु.आ.,८.७)

## सामान्याङ्गमन्त्रः

आ-ई-ऊ-ऐ-औ-अः । अयं सर्वदेवतासाधारणः मन्त्रः । वातुलशुद्धागमे त्रुटितोऽयं भागः ।

(पश्यत - शिवा.सौ., पृ.२२४)

## सामान्यार्घ्यम्

अर्घ्यप्रभेदः । शिवं विहाय अन्यानि यानि अङ्गदैवतानि, तेभ्यो दत्तमर्घ्यम् ।

**अङ्गदैवत्यमर्घ्यं यत्सामान्यार्घ्यमुदीरितम् ।**

(क्रि.सा.,भा-३, १५.५, पृ.४)

## सामीप्यम्

सालोक्यादिचतुर्विधमुक्तिषु सामीप्यमुक्तिरेका । तस्याः स्वरूपम् च यदा साधकस्य गन्धादितन्मात्ररूपसूक्ष्मशरीरं परमात्मनः सान्निध्यमाप्नोति तदा शिवस्यैव प्रसादेन या मुक्तिः लभ्यते सा सामीप्यमुक्तिः । अत्र पञ्चयज्ञत्वेन परिगृहीतेषु एकतमेन शिवतपसा शिवस्यार्चनं कारणम् ।

**समीपं याति साम्बस्य तन्मात्रे च वशं गते ।**
**तत्सामीप्यमिति प्रोक्तं शिवस्यैव प्रसादतः ।।**

(क्रि.सा.,भा-१, ३.३३३)

## साम्बः

अम्बया पार्वत्या सहितः साम्बः शिवः ।

**सच्चिदानन्दरूपाय सदसद्व्यक्तिहेतवे ।**
**नमः शिवाय साम्बाय सगणाय स्वयम्भुवे ।।**

(सि.शि.,२.१)

## सायुज्यम्

१. सामीप्यम्, सायुज्यम्, सारूप्यम्, सालोक्यम् इति चतुर्विधमुक्तिषु अन्यतमा । बन्धमुक्तस्य जीवस्य परमात्मनि लिङ्गाङ्गसामरस्यस्थितिः सायुज्यम् इत्युच्यते । लिङ्गाङ्गसामरस्यस्थित्या सायुज्यरूपा मुक्तिरुक्ता । सायुज्यमेव उत्तमोत्तमं पदम्।

**सा याति मम सायुज्यं सत्यं सत्यं वरानने ।**

(वीर.उ., ३.२७)

**प्रवाहात् सञ्चितागामिप्रारब्धपरिपाकतः ।**
**विदुषां ब्रह्मभावेन मुक्तः सायुज्यरूपिणी ।।**

(क्रि.सा.,भा-२, ५.५)

शिवस्य महाप्रसादेन प्रकृतिः देहेन्द्रियविषयादि सर्वं वशं भवति । तदा शिवस्यैवा परिमितमैश्वर्यं लभ्यते । तदा जीवात्मा सर्वज्ञत्वादि शिवैश्वर्यं लब्ध्वा स्वात्मनि विराजते । एतत्स्वरूपं सायुज्यमुक्तिः । अत्र शिवपञ्चयज्ञेषु एकेन शिवध्यानयज्ञेन शिवपूजनं कारणम् ।

**पुनर्महाप्रसादेन प्रकृतिर्वशमेष्यति ।।**
**शिवस्यामानमैश्वर्यं तदा लब्धं भवेत् स्वतः ।**

**सावग्ज्ञाद्यं शिवैश्वर्यं लब्ध्वा स्वात्मनि राजते ।।**

**तत्सायुज्यमिति प्राहुर्वेदागमपरायणाः ।**

(क्रि.सा.,भा-१, ३.३३६-३४०)

(पश्यत - मुक्तिः, शिवसायुज्यम्)

२. प्रणवपञ्चके सायुज्यं पञ्चमम् । अकारः, उकारः, मकारः, हकारः (नादः) एतैस्सह यादि चतुर्दशस्वरभूतः औकारः संयोज्यते तदा सायुज्यं नाम प्रणवः । (अ-उ-म-ह-औ) (चतुर्दशस्वर औकारेत्युक्तम् । परन्तु लृकारस्य दीर्घाभावात् औकारस्तु त्रयोदशस्वरः ।) पञ्चप्रणवाः पञ्चवक्त्रोद्भवा इत्युक्तरीत्या सायुज्यमूर्ध्ववक्त्रभूतादीशानात् समुत्पन्नम् । सायुज्यं स्फटिकप्रकाशयुक्तम् । तस्य छन्दः गायत्री, ऋषिरगस्त्यः, भूतमाकाशः । तत्त्वं शिवतत्त्वम्, सदाशिव अधिदैवम्, बीजं पञ्चमात्रात्मकम्, फलं सायुज्यम् । (वातुलशुद्धागमोक्तदिशा सायुज्यप्रणवस्य छन्दः जगती) ।

**साकल्यं प्रथमं प्रोक्तं शाम्भवं तु द्वितीयकम् ।**

**सौख्यं तृतीयमित्युक्तं सावश्यं तु चतुर्थकम् ।।**

**सायुज्यं पञ्चमं प्रोक्तं भेदमेषां श्रृणु क्रमात् ।**

**सद्यादिपञ्चवक्त्रेषु जातं प्रणवपञ्चकम् ।**

**अकारः पञ्चमोपेतो वर्गान्तो नादसंयुतः ।**

**चतुर्दशस्वरोपेतं सायुज्यं चोर्ध्वसम्भवम् ।।**

**सायुज्यं स्फटिकप्रख्यं गायत्री छन्द ईरितम् ।**

**अगस्त्यो हि ऋषिश्चैव वियद्भूतमुदीरितम् ।।**

**शिवतत्त्वं समाख्यातमधिदैवं सदाशिवः ।**

**पञ्चमात्रात्मकं बीजं सायुज्यफलसाधकम् ।।**

(सू.आ.,क्रि.पा.,४.५-७, २३, ३२-३३; वा.शु.आ.,६.४-५, १४-१५, २३-२५)

## सारूप्यम्

सालोक्यादिचतुर्विधमुक्तिष्वेका । शिवप्रसादेन आत्मनोऽहङ्कारे वशंगते आयुधाद्यैः क्रियादिभिश्च शिवरूपप्राप्तिरेव सारूप्यमुक्तिः । इयं च (पञ्चयज्ञान्तर्भूत) शिवमन्त्रजपपूर्वकेन शिवार्चनेन प्राप्यते ।

**पुनश्शिवप्रसादेन स्वाहङ्कारे वशं गते ।**

**तदा तु शिवसारूप्यमायुश्चाद्यैः क्रियादिभिः ।।**

(क्रि.सा.,भा-१, ३.३३४, ३३८-४०)

## सार्ष्टिमुक्तिः

सालोक्यादिचतुर्विधमुक्तीः अतिरिक्ता मुक्तिः सार्ष्टिमुक्तिः । शिवस्य महाप्रसादलाभेन बुद्धिर्यदा वशं गच्छति तदा सार्ष्टिमुक्तिः लभ्यते । अस्याः मुक्तेः स्पष्टरूपं यत्र कुत्रापि न लभ्यते ।

**महाप्रसादलाभेन बुद्धिश्चापि वशे भवेत् ।।**

**बुद्धिस्तु कार्यप्रकृतिः तत् सार्ष्टिरिति कथ्यते ।**

(क्रि.सा.,भा-१, ३.३३५-३३६, ३३८-३४०)

## सालोक्यम्

सालोक्यादिचतुर्विधमुक्तिष्वेकतमा । परमेश्वरस्य प्रसादेन कर्मदेहे वशंगते शिवलोके यः वासं करोति तस्य सालोक्यमुक्तिः ।

**प्रसादात् परमेशस्य कर्मदेहं यदा वशम् ।।**

**तदा वै शिवलोके तु वासः सालोक्यमुच्यते ।**

(क्रि.सा., भा-१,३.३३२-३३३, ३३८-३४०)

## सावश्यप्रणवः

अकारः, उकारः, मकारश्चेति त्रिभिः हकारः एकारश्चेत्युभयोः योजने सावश्यं नाम प्रणवः । (अ-उ-म-ह-ए) । सावश्यं तत्पुरुषमुखोद्भूतम्,

कुङ्कुमवर्णम्, जगती छन्दः, ऋषिः गौतमः, वायुः भूतम्, अमूर्तं तत्त्वम्, ईशः अधिदेवता, बीजं पञ्चमात्रात्मकम्, फलं सर्ववश्यकरत्वम् ।

**आद्यं पञ्चमयुक्तं च नादो वर्गान्तसंयुतः ।**
**एकादशयुतं प्रोक्तं सावश्यं चोत्तरोद्भवम् ।।**
**कुङ्कुमाभं तु सावश्यं जगती छन्द उच्यते ।**
**ऋषिर्गौतम इत्युक्तो वायुर्भूतमुदीरितम् ।।**
**अमूर्तं तत्त्वमाख्यातमीशस्तस्याधिदेवता ।**
**पञ्चमात्रासमायुक्तं सर्ववश्यकरं शुभम् ।।**

(सू.आ.,क्रि.पा.,४.२२, ३०-३१; वा.शु.आ.,६.१३-१४, २१-२३)

(पश्यत – प्रणवपञ्चकम्, सायुज्यम्)

## सिद्धप्रसादः

शुद्धप्रसादः, सिद्धप्रसादः, प्रसिद्धप्रसाद इति त्रिविधप्रसादेष्वेकः । लिङ्गत्रयार्पितः प्रसादः सिद्धप्रसादः । इष्टप्राणभावलिङ्गार्पितप्रसादाः क्रमेण शुद्ध-सिद्ध-प्रसिद्धाख्या इति मतान्तरम् ।

**गुरुलिङ्गजङ्गमानां भुक्तशेषः प्रसादकः ।।**
**शुद्धसिद्धप्रसिद्धाख्यः स हि मुक्त्यैकसाधनः ।**

(चं.आ.,क्रि.पा.,५.२०-२१)

**ज्ञात्वा लिङ्गत्रयं सम्यक् तथैक्यं च वरानने ।**
**लिङ्गार्पितप्रसादोऽयं सिद्ध इत्याहुरास्तिकाः ।।**

(क्रि.सा.,भा-३, २४. पृ.१२०;शि.त.र.,भा-३, ९.९.२०; पं.च.,२०.७९. पृ.२०४)

**इष्टलिङ्गार्पितं शुद्धं प्राणलिङ्गमुखार्पितम् ।**
**सिद्धं ततः प्रसिद्धं हि भावलिङ्गार्पितं विदुः ।।**

(अ.सू.,७.२२-२३)

**शुद्धं लिङ्गमुखात्यक्तं सिद्धं चरविसर्जितम् ।**

(शै.र.,भा-२, १६.२९, पृ.१७२)

शरणस्थलसम्बद्धप्रसादलिङ्गत्रैविध्यत्वेनापि शुद्धादिप्रसादागृह्यन्ते । तत्र शुद्धप्रसादलिङ्गादिनामानि भवन्ति ।

**प्रसादलिङ्गत्रैविध्यमपि शृणु वरानने ।**

**शुद्धं सिद्धं प्रसिद्धं च भेदश्चैषामथोच्यते ।।**

(पश्यत – प्रसादः)

(सू.आ.क्रि.पा.,८.२२)

## सिद्धमन्त्रः

सिद्धः, सुसिद्धः, साध्य इति त्रिविधमन्त्रेषु एकः । असिद्धेन गुरुणा दत्तः मन्त्रः सिद्धमन्त्रः ।

**न कदापि न कस्यापि रिपुरेष महामनुः ।**

**असिद्धेनापि वा दत्तः सिद्धः साध्यस्तु केवलम् ।**

(चं.आ.,क्रि.पा.,८.८९)

(पश्यत – साध्यमन्त्रः)

## सिद्धाणवम्

आणवमलभेदः । आत्मन्यनात्मताबुद्धिः ।

**आत्मन्यनात्मताबुद्धिः सिद्धाणवमिति स्मृतम् ।**

(वी.आ.चं.,१.१८)

(पश्यत – आणवम्)

## सिद्धान्तः

शैवः, पाशुपतः, सोमः, लाकुलश्चेति चतुर्विध आगमेषु शैवागमः एकः । तत्र शैवागमेषु पुनः वामः, दक्षिणः, मिश्रः, सिद्धान्तश्चेति

चातुर्विध्यमुक्तम् । सिद्धान्तसंज्ञकाः शैवागमाः कामिकादिवातुलान्ताः । ते च वेदसम्मताः ।

**आगमा बहुधा प्रोक्ताः शिवेन परमात्मना ।**
**शैवं पाशुपतं सोमं लाकुलं चेति भेदतः ।।**
**तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।**
**वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ।।**
**शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।**
**सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम् ।।**

(सि.शि.,५.९-११)

ईश्वरस्य ईशानवक्त्रात् उदितः शिवागमः । सिद्धान्तम्, शैवतन्त्रम् इत्यपि व्यवहारः । वेदधर्मप्रतिपादनात् सिद्धान्त इति उच्यते । अयं च कामिकादिवातुलान्ताष्टाविंशतिविभागयुक्तः ।

**वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः ।**
**वेदबाह्यविरोधित्वात् वेदसम्मत उच्यते ।।**
**शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम् ।**

(सि.शि.,५.१२, ८)

कामिकतन्त्रे -

**ईशानवक्त्रादूर्ध्वस्थाज्जातं यत्कामिकादिकम् ।**
**सिद्धान्तात्परमं शास्त्रं नेति शास्त्रस्य निश्चयः ।।**

वीरतन्त्रे -

**कामिकिं योगजं चिन्त्यं कारणं त्वजितं तथा ।**
**दीप्तं सूक्ष्मं सहस्रं च अंशुमत्सुप्रभेदकम् ।।**
**विजयं चैव निश्वासं स्वायम्भुवमथानलम् ।**
**वीरं च रौरवं चैव मकुटं विमलं तथा ।।**
**चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा ।**

**सिद्धं सन्तानसर्वोक्ते पारमेश्वरमेव च ।।**
**किरणं वातुलं चैतास्त्वष्टाविंशतिसंहिताः ।**
**कामिकाद्या वातुलान्ताश्शिवेनोक्ताश्शिवागमाः ।।**
**सिद्धान्तमिति विज्ञेया उपभेदसमन्विताः ।।**

(शि.व.शि.,भा–१, पृ.२९)

## सुवर्णलिङ्गम्

दशविधलिङ्गान्यतमभूतम् इष्टलिङ्गम् ।
**सुवर्णलिङ्गाय नमः इतीष्टलिङ्गार्थवादः ।**

(लिं.घा.चं.,पृ.७४)

(पश्यत – दशविधलिङ्गानि)

## सुषुप्तिः

१. अवस्थासु अन्यतमा । तृतीया अवस्था । जाग्रत्, स्वप्नः, सुषुप्तिः, तुरीयम्, तुरीयातीतम् इति पञ्चसु स्वप्नादिरहिता निद्रावस्था । अवस्थायाम् अस्यां मनः बुद्धौ, बुद्धिः हृदयान्तर्वर्तिनि लिङ्गरूपे शिवे विलीनं भवति । कारणशरीरमाश्रितः प्राज्ञो नाम जीव अत्र हृदयस्थाने स्थित्वा दिव्यमानन्दम् अनुभवति ।

**जाग्रत्स्वप्नसुषुप्त्याख्या तुरीयं तदतीतकम् ।**
**अवस्थापञ्चकं ज्ञेयं सदाचार्योपदेशतः ।।**
**विंशतिं च विसर्ज्याथ मन आदीन्विमर्शयेत् ।**
**मनोबुद्धिरहङ्कारं विसृजेच्च सुषुप्तिके ।।**

(वी.ध.शि.,४.९०, पृ.२५३)

**गते द्वैतभावे स्थिते शान्तदेशे प्रकाशस्वभावे चिदानन्दभासौ ।**
**बहिर्युक्तियुक्तोऽपि हृत्पद्मवृत्तः सुषुप्तिस्थितश्चित्रवद्भाति योगी ।।**

(शि.यो.प्र., ५.३६)

**लिङ्गे सुषुप्तिः ।**

(हं.उ.,२)

**अत्र लिङ्गे सुषुप्तिरिति हृदयान्तर्वर्तिनः शिवस्य लिङ्गरूपत्वं स्पष्टम् ।**

(लिं.धा.चं.पृ-३३)

२. अङ्गस्थलस्य योगाङ्गम्, भोगाङ्गम्, त्यागाङ्गम् इति त्रिविधाङ्गेषु एकम्, योगाङ्गम् । ऐक्यम् शरणम् इति उभयस्थलात्मकम् । शिवयोगसुखमत्र अनुभूयते ।

**अङ्गस्थलं त्रिधा ज्ञेयम् आचार्यैस्सूक्ष्मदर्शिभिः ।**

**योगाङ्गं प्रथमं प्रोक्तं ...................... ।**

**शिवयोगसुखावाप्त्या योगाङ्गमिति गीयते ।**

**योगाङ्गमैक्यं शरणस्थलमित्युभयं भवेत् ।**

**योगाङ्गं कारणं प्रोक्तं ................**

**सुषुप्त्यवस्था योगाङ्गम् ............ ।**

(अ.सू.,४.५-११)

**(पश्यत – अङ्गस्थलम्, अवस्था, योगाङ्गम्)**

## सुसिद्धमन्त्रः

सिद्धः, सुसिद्धः, साध्य इति त्रिविधमन्त्रेष्वेकः । सिद्धेन गुरुणा उपदिष्टः मन्त्रः सुसिद्धमन्त्रः ।

**न कदाचन कस्यापि रिपुरेष महामनुः ।**

**सिद्धो वाऽथ सुसिद्धो वा साध्यो वाऽथ भविष्यति ।।**

**सिद्धेन गुरुणाऽदिष्टः सुसिद्ध इति कथ्यते ।**

(चं.आ.,क्रि.पा.,८.८९)

**(पश्यत – साध्यमन्त्रः)**

## सूक्ष्मतनुः

१. स्थूलम्, सूक्ष्मम्, कारणं चेति त्रिविधशरीरेष्वेकम् । सूक्ष्मतनुः सूक्ष्मशरीरम् । अस्य सूक्ष्मदेहः, सूक्ष्माङ्गम् इति नामान्तरे । भोगाङ्गमिति सूक्ष्मतनोः नामान्तरम्। स्वप्नावस्था एव भोगाङ्गम् । त्रिविधलिङ्गेषु प्राणलिङ्गस्याश्रयस्थानम् । तत्र मायीयमलः व्याप्नोति । अस्य मायीयमलस्य निर्मूलनद्वारा गुरुः मान्त्रीदीक्षया प्राणलिङ्गं स्थापयति ।

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम् ।**
**प्राणलिङ्गं तु तत्सूक्ष्मं ...................... ।**

(सि.शि.,६.४९-५०)

**...................... भोगाङ्गं सूक्ष्ममुच्यते ।**
**शिवेन सहभोगेन भोगाङ्गमिति कथ्यते ॥**
**......................... भोगाङ्गं स्वापनाभिधा ।**

(अ.सू.,४.७-९)

**इष्टं स्थूलतनोः प्रोक्तं प्राणं सूक्ष्मतनोः स्मृतम् ।**
**भावाख्यं कारणस्यैवं तनुत्रयगतं त्रयम् ॥**
**आणवं मायिकं चैव कार्मिकं च यथाक्रमम् ।**
**मलत्रयमनादीदं तनुत्रयगतं भवेत् ॥**
**तनुत्रयगतानादिमलत्रयमिदं गुरुः ।**
**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत् ॥**

(अघोरशिवाचार्यः, त.प्र.१.१२-इत्यत्रोल्लिखितः)

२. पृथिव्यादिकलान्तत्रिंशत्तत्त्वात्मकं शरीरम् । पुर्यष्टकम् ।

**स्यात्पुर्यष्टकमन्तःकरणं धीकर्मकरणानि ।**

(त.प्र.,१.१२)

**"पुर्यष्टकं नाम प्रतिपुरुषं नियतं सर्गादारभ्य कल्पान्तं मोक्षान्तं वाऽवस्थितं पृथिव्यादिकलापर्यन्तत्रिंशत्तत्त्वात्मकं सूक्ष्मदेहः ।"**

(त.प्र.व्या.अघोरशिवाचार्यः)

(पश्यत – पुर्यष्टकम्)

## सूक्ष्मपञ्चाक्षरः

स्थूलपञ्चाक्षरः सूक्ष्मपञ्चाक्षरः इति द्विविधपञ्चाक्षरमन्त्रयोरेकः । अकार–उकार–मकाराः–नादः–कला इत्येवं पञ्चभिरंशैः विशिष्टः मन्त्रः सूक्ष्मपञ्चाक्षरः ।

**अउमाश्चैव नादश्च कला चेत्यंशपञ्चकम् ।**
**मिलित्वा प्रणवो जज्ञे सूक्ष्मपञ्चाक्षरात्मकः ।।**

(चं.आ.,क्रि.पा., ११.४३)

(पश्यत – पञ्चाक्षरमन्त्रः)

## सूक्ष्मपञ्चाक्षरी

पञ्चपञ्चाक्षरीमन्त्रेष्वेकतमा । एकोरामाराध्यसम्बद्धभृङ्गिगोत्रोत्पन्नानां मन्त्रः ।

**सूक्ष्मपञ्चाक्षरीमन्त्रस्त्वष्टाक्षर समन्वितः ।**
**ओं ह्रां ह्रीं ह्रूं नमः शिवाय ।।**

(वी.स.सं.,५.२७)

(पश्यत – पञ्चाक्षरीमन्त्रः)

## सूक्ष्मलिङ्गम्

१. स्थूललिङ्गम्, सूक्ष्मलिङ्गम्, परात्परलिङ्गम् इति त्रिविधलिङ्गेष्वेकम्। अन्तरङ्गे स्थापितं भावनात्मकं प्राणलिङ्गं सूक्ष्मलिङ्गमित्युच्यते । इदं सकलनिष्कलमुच्यते ।

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम् ।**
**प्राणलिङ्गमिदं यत्सूक्ष्मं यदन्तर्भावनामयम् ।**

(सि.शि.,६.४९-५०;वी.स.सं.,७.७०-७१, पृ.६८)

**प्राणलिङ्गं मनोग्राह्यं भवेत् सकलनिष्कलम् ।।**

(चं.आ.क्रि.पा.३.२४; अ.सू.,३.७)

२. स्थूललिङ्गम्, सूक्ष्मलिङ्गम्, परात्परं चेति त्रिविधलिङ्गेष्वेकम् । तत्र प्रणवरूपं लिङ्गं सूक्ष्मलिङ्गम् सकलनिष्कलम् । क्रियासारे निष्कलमित्युक्तम्, एतच्च प्रणवस्वरूपम् ।

**प्राणलिङ्गं मनोग्राह्यं भवेत् सकलनिष्कलम् ।।**

(अ.सू.,३.७)

**सूक्ष्मं प्रणवरूपं हि सूक्ष्मरूपं तु निष्कलम् ।।**

(क्रि.सा.,भा-१, ३.३४३, पृ.१५८)

(पश्यत – लिङ्गम्)

## सूक्ष्मसमर्पणम्

स्थूलम्, सूक्ष्मं चेति समर्पणं द्विधा ।

**समर्पणं द्विधा प्रोक्तं स्थूलसूक्ष्मविभेदतः ।**

(चं.आ.,क्रि.पा.,५.२८)

(पश्यत – अर्पणम्, समर्पणम्)

## सूक्ष्मा भक्तिः

बाह्याभ्यन्तरभक्त्योः प्रथमा स्थूला, द्वितीया च सूक्ष्मा । एषा वीरमाहेश्वरैः स्वीक्रियते ।

**सा भक्तिर्द्विधा ज्ञेया बाह्याभ्यन्तरभेदतः ।**
**बाह्या स्थूलान्तरा सूक्ष्मा वीरमाहेश्वरादृता ।।**

(सि.शि.,९.६)

(पश्यत – आभ्यन्तरभक्तिः, स्थूला भक्तिः)

## सूचकगुरुः

हितः, काम्यः, निषिद्धः, वाचकः, सूचकः, कारक इति षड्विधेषु गुरुषु एकः । यमादिसद्गुणकरान् सूक्ष्मान् अर्थान् यः सूचयति सः सूचकगुरुः ।

**किरणागमे –**

**उपदेशविशिष्टान्यस्सूक्ष्मार्थान् सूचयत्यलम् ।**
**यमादिसद्गुणकरान् स भवेत्सूचको गुरुः ।।**

(वी.ध.शि., २.२३, पृ.१३७)

(पश्यत – षड्विधगुरुः)

## सूतकम्

लिङ्गाङ्गसङ्गिनां वीरशैवानां मते नास्ति जन्मसूतकम्, न वा मरणसूतकम्, नापि रजस्सूतकम् (प्रसूतिसूतकम्), नैव च जातिसूतकम्, उच्छिष्टसूतकं चेति । शिवपूजालब्धेन शिवपादाम्बुना संस्पर्शत् सर्वमपि पापं विनश्यति ।

**न तस्य सूतकं किञ्चित्प्राणलिङ्गाङ्गसङ्गिनः ।**
**जन्मनोत्थं मृतोत्थं च विद्यते परमार्थतः ।।**
**लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम् ।**
**तथा प्रसूतिकायाश्च सूतकं नैव विद्यते ।।**
**गृहे यस्मिन् प्रसूता स्त्री सूतकं नात्र विद्यते ।**
**शिवपादाम्बुसंस्पर्शात् सर्वपापं प्रणश्यति ।।**

(सि.शि., ९.४३-४५)

'लिङ्गार्चनरतायाश्च' इत्यादिश्लोके विद्यमानस्य 'परमार्थतः' इत्यस्य शब्दस्य बलात् वीरशैवानां केवलं लिङ्गपूजादिनित्यविधीनामाचरणे नास्ति सूतकम् । परन्तु अन्यत्र स्पर्शादिषु अस्ति इति वदन्ति श्रीकरभाष्यकाराः श्रीपतिपण्डिताराध्याः । श्रीकरभाष्ये 'अथातो ब्रह्मजिज्ञासा' इत्यस्य सूत्रस्य भाष्ये मतमिदं विशदीक्रियते । यथा दीर्घकालपर्यन्तं निर्वाह्यमाणे पौण्डरीके

यागे स्वाग्निहोत्रे वा रजःस्त्रीणां सूतकं नैव परिगण्यते, यथा च करेण स्प्रष्टुम् अयोग्यापि जिह्वा मन्त्रोच्चारणमात्रे सुनिर्मला, एवमेव सूतकिनः शैवाः पूजामात्रे शुद्धाः, अन्यस्पर्शे अशुद्धा इति वेदानुशासनम् । अनेन आधारेण सिद्धान्तागमादिषु शिवपूजामात्रयोग्यता श्रूयते ।

**पौण्डरीके रजःस्त्रीणां स्वाग्निहोत्रे यथा तथा ।**
**अकरस्पर्शयोग्यापि यथा जिह्वा महेश्वरी ।।**
**मन्त्रोच्चारणमात्रस्य पूता भवति भूतले ।**
**तथा सूतकिनः शैवाः पूजामात्रसुनिर्मलाः ।।**
**नान्यस्पर्शानुकूलाः स्युरिति वेदानुशासनम् ।।**
**इति सिद्धान्तागमादिषु शिवपूजामात्रयोग्यता श्रवणात् ।।**

(श्री.भा.,भा–१, पृ.२२–२३)

लिङ्गधारणचन्द्रिकोक्तदिशा यथा पूजादिषु सूतकिनां परिशुद्धत्वं तथा अन्येषु कार्येष्वपि परिशुद्धत्वम् एव ।

**रजःस्वलानां धारणाद्यंशे परिशुद्धत्वे कर्मान्तरेऽपि परिशुद्धिः स्यादिति तुल्यम् ।**

(लिं.धा. चं.,पृ.१९८)

**यथा ह्यग्निसमावेशान्नायो भवति केवलम् ।**
**तथैव मम सान्निध्यान्न ते प्रकृतिमानुषाः ।।**
**तैलयुक्तं तु कार्पासं ज्योतिस्स्पर्शात् तथैव तत् ।**
**स्नेहयुक्तस्य सद्भक्तेर्लिङ्गस्पर्शेन लिङ्गता ।।**

(लिं.धा.चं.,पृ.१९४)

(यथा अग्निसम्पर्केणायः सामान्यं अयः न भवति, एवमेव लिङ्गसम्पर्कात् मानुषाः प्राकृता न भवन्ति । तैलयुक्तं कार्पासं यथा दीपसम्पर्केण दीपमेव भवति एवमेव सद्भक्तिरूपस्नेहयुक्तस्य लिङ्गसम्पर्केण लिङ्गता एव स्यात्।)

## सूत्रम्

१. वीरशैवदर्शने प्रसिद्धभूतानां पञ्चाचार्याणां नाम, गोत्रम्, सूत्रम्, दण्डः, कमण्डलुः, मन्त्रबीजम्, प्रवरः, शाखा, कन्था, वर्णः– इत्येतेषु अन्यतमम्। एकैकस्य आचार्यस्य एकैकं सूत्रमिति आहत्य पञ्चसूत्राणि । तानि च पड्विडिः, वृष्टिः, लम्बकम्, मुक्तगुच्छः, पञ्चवर्णम् इति । इमान्येव महासूत्राणि इत्युच्यन्ते । एकैकस्य महासूत्रस्य प्रत्येकं द्वादश द्वादश उपसूत्राणि भवन्ति । एवमाहत्य उपसूत्राणि षष्ठि। सूचनात् सूत्रम् । अक्षरं परं ब्रह्म । ब्रह्मोपनिषदि –

**यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ।**
**सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम् ।।**
**धारणात् तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।**

(कै.सा.,वि.सं.७७, पृ.१७)

(पश्यत – महासूत्राणि, उपसूत्राणि)

## सृष्टिः

सृष्टिः, स्थितिः, संहारः, तिरोभावः, अनुग्रहः इति ईश्वरस्य पञ्चसु कृत्येषु अन्यतमम् । जगदुत्पादनम् । सर्गः । संसारारम्भः ।

**सर्गादि पञ्चकृत्यस्य लक्षणं ब्रूहि नः प्रभो ।।**
**मत्कृत्यबोधनं गुह्यं कृपया प्रब्रवीमि वाम् ।**
**सृष्टिः स्थितिश्च संहारस्तिरोभावोऽप्यनुग्रहः ।।**
**पञ्चैव मे जगत्कृत्यं नित्यसिद्धमजाच्युतौ ।**
**सर्गः संसारसंरम्भः ..................... ।।**

(क्रि.सा.,भा–३, पृ.७६–७७)

(पश्यत – पञ्चकृत्यम्)

## सृष्टिक्रमः

शिवतत्त्वरत्नाकरे सृष्टिक्रमः शिवतत्त्वादारभ्य पृथिव्यन्तषट्त्रिंशत्तत्त्व विकासरूपेण वर्ण्यते ।

**शिवप्रभृतिपृथिव्यन्तसृष्टिक्रम उदीर्यते ॥**
**शिवतत्त्वाच्छक्तितत्त्वं शक्तितत्त्वात्सदाशिवः ।**
**सदाशिवादीश्वरश्च शुद्धविद्या तथेश्वरात् ॥**
**माया च शुद्धविद्याख्यात्कलामायाख्यतत्त्वतः ।**
**कालतत्त्वं कलातत्त्वान्नियतिः कालतत्त्वतः ॥**
**विद्यातत्त्वं नियत्याख्याद्रागो विद्याख्यतत्त्वतः ।**
**रागतत्त्वाच्च पुरुषः पुरुषात्प्रकृतिस्ततः ॥**
**प्रकृतेश्च गुणस्तस्माद् बुद्धिर्बुद्धेरहङ्कृतिः ।**
**अहङ्कारश्च चित्ताख्यं चित्ताज्ज्ञानेन्द्रियाणि तु ॥**
**तेभ्यः कर्मेन्द्रियाणि स्युस्तेभ्यस्तन्मात्रपञ्चकम् ।**
**तन्मात्रेभ्यश्च भूतानि क्रमेणैव प्रजज्ञिरे ॥**
**पञ्चीकृतैस्तु तैर्भूतैः ब्रह्माणं समजायत ।**

(शि.त.र.,भा-३, ९.३.११०-११६)

(पश्यत - षट्त्रिंशत्तत्त्वानि, पञ्चीकरणम्)

## सेवा

सेवनं सेवा । परिचर्या । भक्तिविशेषः । मनोवचनकायरूपत्रिविध-करणैः विधीयमाना भक्तिः सेवा । नवविधाङ्गविशिष्टा तु सेवा पूर्णा भक्तिः । सा च नवधा । सेवा तु मानसी, वाचिकी, कायिकी इति त्रिधा ।

**साङ्गा न्यूना या सेवा सा भक्तिरिति कथ्यते ॥**
**सा पुनर्भिद्यते त्रेधा मनोवाक्कायसाधनैः ।**

**शिवरूपादिचिन्ता या सा सेवा मानसी स्मृता ।**

**जपादिर्वाचिकी सेवा कर्मपूजा तु कायिकी ।**

(सि.शि.,९.१५-१७)

## सेव्यप्रसादिस्थलम्

एकोत्तरशतस्थलेष्वेकम् । लिङ्गस्थलगतप्राणलिङ्गिस्थलस्य नवसु प्रभेदेषु एकम् । समस्तानां सेव्यः श्रीगुरुः शिव एव इत्यत्र नास्ति सन्देहः । श्रीगुरुरूपशिवप्रसाद एव परानन्दप्रकाशक इति सम्भावितस्य सेव्यप्रसादिनः स्थलम् ।

**स्थलानां नवकं प्रोक्तं प्राणलिङ्गिस्थलाश्रितम् ।**

**सेव्यप्रसादकं चाथ शृणु तेषां च लक्षणम् ।।**

**सेव्यो गुरुः समस्तानां शिव एव न संशयः ।**

**प्रसादोऽस्य परानन्दप्रकाशः परिकीर्त्यते ।।**

**सेव्यो गुरुः स्मृतो ह्यस्य प्रसादोऽनुभवो मतः ।**

**तदेकावेशरूपेण तद्वान् सेव्यप्रसादवान् ।।**

(सि.शि.,१८.२, ४, ६९-७०)

## सेव्यप्रसादी

समस्तानां सेव्यः श्रीगुरुः शिवः एव, श्रीगुरुप्रसाद एव परानन्दप्रकाशक इति सम्भाव्य श्रीगुरुप्रसादवान् सेव्यप्रसादी ।

**सेव्यो गुरुः स्मृतो ह्यस्य प्रसादोऽनुभवो मतः ।**

**तदेकावेशरूपेण तद्वान् सेव्यप्रसादवान् ।।**

(सि.शि., १८.७०)

(पश्यत – सेव्यप्रसादिस्थलम्)

## सेव्यस्थलम्

एकोत्तरशतस्थलेष्वेकम् । लिङ्गस्थलान्तर्गतप्रसादिस्थलस्य नवसु प्रभेदेषु अन्यतमम्। गुरुवाक्यामृतस्य आस्वादनात् आत्मज्ञानं सम्प्राप्य शिष्यः गुरुवत् पूज्यतां भजते । सः सेव्य इत्युच्यते । तस्य स्थलं सेव्यस्थलम् ।

**स्थलभेदा नव प्रोक्ताः प्रसादिस्थलसंश्रिताः ।**
**ततः सेव्यस्थलं चैषां कमशः शृणु लक्षणम् ।।**
**गुरुवाक्यामृतास्वादात् प्राप्तबोधमहाफलः ।**
**शुश्रूषुरेव सर्वेषां सेव्यत्वात् सेव्य उच्यते ।।**
**गुरूपदिष्टे विज्ञाने चेतसि स्थिरतां गते ।**
**साक्षात्कृतशिवः शिष्यो गुरुवत्पूज्यते सदा ।।**

(सि.शि.,१७.२, ४,८१-८२)

## सोऽहम्

प्रणवेन परब्रह्मप्रकाशते इत्यत्र परमात्मवाचकः मन्त्रः। 'सोऽहं' रूप इति यावत् । तत्र सकार हकारयोर्लोपे 'ओम्' इत्येवावशिष्यते मन्त्रः ।

**परमात्ममनुर्ज्ञेयः सोऽहंरूपः सानातनः ।**

(सि.शि.,८.२०)

(पश्यत – हंसः)

## सोऽहंभावः

सनातनः परमात्मा परशिव एव अहमस्मीति अवबोधः ।

**सोऽहं भावेन विश्वेशं ध्यायन् कृत्यानि सर्वशः ।**

(चं.आ.,क्रि.पा.,९.१२०)

## सोपाधिकदानम्

सोपाधिकम्, निरुपाधिकम्, सहजम् इति त्रिविधदानेषु एकम् । फलापेक्षया दीयमानं दानम् । इदं च मुमुक्षुभिः नाद्रियते ।

**दानं च त्रिविधं प्रोक्तं सोपाधिनिरुपाधिकम् ।**
**सहजं चेति सर्वेषां सर्वतन्त्रविशारदैः ।।**
**फलाभिसन्धिसंयुक्तं दानं यद्विहितं भवेत् ।**
**तत् सोपाधिकमाख्यातं मुमुक्षुभिरनादृतम् ।।**

(सि.शि., ९.८०-८१)

## सोपाधिदानस्थलम्

स्थलभेदः । भक्तस्थलान्तर्गतपञ्चदशाङ्गस्थलेष्वेकतमम् । एकोत्तरशतस्थलेषु त्रयोदशतमम् । सोपाधिदानसम्पन्नस्य भक्तस्य स्थलम् । इदमेवोपाधिदानस्थलम् ।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।**
**अत्र दानत्रयं प्रोक्तं सोपाधिनिरुपाधिकम् ।।**

(सि.शि.,५.२७-३०)

(पश्यत – सोपाधिदानम्)

## सोपादिकभस्म

निरूपाधिकभस्म, सोपादिकभस्म चेति द्विविधभस्मनोरेकतरम् ।
**शिवागमप्रवीणाः उपाधिकं भस्म, सोपाधिकभस्मेत्याहुः ।**

(सि.शि.,तत्त्व.प्र.,७.३)

(पश्यत – निरूपाधिकभस्म, उपाधिकभस्म)

## सोमम्

शैवम्, पाशुपतम्, सोमम्, लाकुलम् इति चतुर्विधेषु शिवागमेषु अन्यतमः शिवागमप्रकारः ।

**आगमा बहुधा प्रोक्ताः शिवेन परमात्मना ।**
**शैवं पाशुपतं सोमं लाकुलं चेति भेदतः ।।**

(सि.शि.,५.९)

(पश्यत – शिवागमः)

## सोमः

उमया सहितः शिवः सोमः । उभयोरविनाभावः। शक्तिः उमा । उमासहितः शिवः । शक्तिविशिष्टं लिङ्गतत्त्वम् । अयं च सर्वस्यापि कारणम्।

आदित्यपुराणे –

**उमया सहितो देवः सोम इत्युच्यते बुधैः ।**
**स एव कारणं नान्यो विष्णोरपि च वै श्रुतिः ।।**

(शिव.शि.,७.२,पृ.९२)

**उमासहायतां प्राप्तस्तेन सोमः शिवः स्मृतः ।**

(सू.आ.,क्रि.पा.,२.१३)

**त्रियम्बक विरूपाक्ष सोम सोमार्धभूषण ।।**
**त्रेतानेत्र त्रयीनेत्र सोमसूर्याग्निलोचन ।।**

(अ.वी.सा.सं.,१.२५. पृ.५)

(पश्यत – शक्तिविशिष्टाद्वैतम्)

## सौख्यप्रणवः

अकारः, उकारः, मकारश्चेति त्रिभिः वर्णैः सह हकारः, इकारश्चेत्युभयं योज्यते चेत् सौख्यं नाम प्रणवः । (अ–उ–म–ह–इ) । सौख्यं पश्चिमाननात् (अघोरवक्त्रात्) उद्भूतम् । तच्च गोक्षीरवर्णम्, छन्दः बृहती, ऋषिः विश्वामित्रः, तेजः भूतम्, तत्त्वं समूर्तम्, अधिदैवतम् ब्रह्मा, बीजं पञ्चमात्रात्मकम्, फलं सकलार्थप्रसादः ।

**वर्गान्तं स्वरवर्णादिपञ्चमं नादसंयुतम् ।**

**तथा स्वरयुतं सौख्यं पश्चिमाननसम्भवम् ।।**

**सौख्यं गोक्षीरसदृशं बृहती छन्द ईरितम् ।**

**विश्वामित्र ऋषिश्चैव भूतं तेज उदीरितम् ।।**

**तत्त्वं समूर्तमाख्यातं ब्रह्मा चास्याधिदैवतम् ।**

**पञ्चमात्रात्मकं बीजमूलार्थप्रसादकम् ।।**

(सू.आ.,क्रि.पा.,४.२१, २८-२९;
वा.शु.आ.,६.१२-१३, १९-२१)

(पश्यत – प्रणवपञ्चकम्, सायुज्यम्, सावश्यम्)

## स्तावरार्यः

कौमार्यः, स्तावरार्यः, मठार्यः, गणार्यः, मालार्यः, इति पञ्चसु उपाचार्येष्वेकः । ईश्वरस्य दक्षिणपादात् जातः आचार्यः स्तावरार्यः ।

**कौमार्यस्तावरार्यश्च मठार्यश्च गणार्यकः ।**

**मालार्यश्चेति विख्याताः पञ्चोपाचार्यनामकाः ।**

**तथा दक्षिणपादाच्च जातः स्तावरसंज्ञकः ।**

(वी.स.सं.,४.२-३, १६)

(पश्यत – उपाचार्याः)

## स्थलम्

जगतः सृष्टिस्थितिलयकारणभूतं शिवतत्त्वम् । लिङ्गतत्वम् । परं ब्रह्म । महदादीनि तत्त्वानि । सर्वशक्तीनाम् आधारः ।

**एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ।**

**शिवतत्त्वं शिवाचार्याः स्थलमित्याहुरादरात् ।।**

**सर्वेषां स्थानभूतत्वाल्लयभूतत्वात्ततस्तथा ।**

**तत्त्वानां महदादीनां स्थलमित्यभिधीयते ।।**
**यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं तथा ।**
**लीयते पुनरन्ते च स्थलं तत् प्रोच्यते ततः ।।**
**स्थकारः स्थानवाची स्यात् लकारो लयवाचकः ।**
**तयोः कारणभूतं यत् तदेव स्थलमुच्यते ।।**
**परनिर्वाणनिष्ठानां यद्भवेत्परमं पदम् ।**
**तदाहुः स्थलमद्वैतं शिवयोगैकतत्पराः ।।**

(अ.सू.,२.२-५, ९; वी.ध.शि.,१, पृ.२९; शि.मं.,पृ.३७; वे.वी.चिं.२.४६)

**स्थितिसंहारसापेक्षं जन्म चेति त्रयं स्थलम् ।।**

(क्रि.सा.,भा-१,१.१९७)

**स्थलभेदः -**

१. **द्विधा** - स्थलं द्विविधम् - अङ्गस्थलम्, लिङ्गस्थलम् इति । उपास्यं लिङ्गस्थलम् उपासकं चाङ्गस्थलम् । चिन्मात्रं लिङ्गं शिवः, अङ्गं च जीवः, इत्येषा शिवस्य परा स्थितिः ।

**स्वशक्तिक्षोभमात्रेण स्थलं तद्द्विविधं भवेत् ।**
**एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम् ।।**
**लिङ्गस्थलमुपास्यं स्यादङ्गस्थलमुपासकम् ।**
**स्थलं चिन्मात्रमेव स्याल्लिङ्गं स्याच्छिव एव हि ।।**
**तथाङ्गं जीव एव स्यादिति शैवी परा स्थितिः ।।**

(अ.सू.,२.१०,१३, १८-१९)

२. **षोढा-**

अ. तत्र अङ्गस्थलम् भक्तस्थलम्, माहेश्वरस्थलम्, प्रसादिस्थलम्, प्राणलिङ्गस्थलम्, शरणस्थलम्, ऐक्यस्थलम् इति षोढा ।

**अङ्गस्थलं समासेन वक्ष्ये षड्विधमादितः ।**

**भक्तो माहेश्वरश्चैव प्रसादी प्राणलिङ्गकः ।**

**शरणः शिवलिङ्गैक्यः षट्स्थलानि हि पार्वति ।।**

(सू.आ.,क्रि.पा.,८.३१-३२)

आ. लिङ्गस्थलमपि आचारलिङ्गस्थलम्, गुरुलिङ्गस्थलम्, जङ्गमलिङ्गस्थलम्, प्रसादलिङ्गस्थलम्, महालिङ्गिस्थलम् इति षोढा ।

**षट्स्थलात्मकमेतत्तु श्रूयतां सावधानतः ।।**

**आदावाचरलिङ्गं स्यात्ततश्च गुरुलिङ्गकम् ।**

**शिवलिङ्गं ततो ज्ञेयं चरलिङ्गमतःपरम् ।।**

**ततः प्रसादलिङ्गं स्यान्महालिङ्गमतः परम् ।**

(सू.आ.,क्रि.पा.,३.५)

३. भिन्नक्रमेणापि षट्प्रकारत्वमङ्गस्थलानां लिङ्गस्थलानां च निरूप्यते ।

४. **सप्तविंशतिधा –**

पीठिकासूत्रस्थलादिभेदेन स्थलानि सप्तविंशतिः ।

**स्थलान्यत्र निगद्यन्ते सप्तविंशतिभेदतः ।**

(अ.वी.सा.सं.,भा-१.१.४.८)

(पश्यत – सप्तविंशतिस्थलानि)

५. **षट्त्रिंशधा** – आचारादि षड्लिङ्गस्थलसम्बद्धानि पुनः एकैकमपि भक्तभेदेन षोडा – मोही, भक्तः, पूजकः, वीरः, प्रसादवान्, प्राणी चेति। एतेन क्रमेण आहत्य स्थलानि (६×६) षट्त्रिंशद्धा ।

**मोही भक्तः पूजकश्च तथा वीरः प्रसादवान् ।**

**प्राणी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ।।**

**एकैकं षड्विधं प्रोक्तं तेन षट्त्रिंशतां गतम् ।**

(सू.आ.,क्रि.पा.,८.३७, ७६)

६. **एकोत्तरशतधा**

**पिण्डादिज्ञानशून्यान्तमेकोत्तरशतस्थलम् ।**

(क्रि.सा.,भा-१,पृ.११)

(पश्यत - एकोत्तरशतस्थलम्)

**अ. लिङ्गस्थलानि**

लिङ्गस्थलं प्रथमं भावलिङ्गम्, प्राणलिङ्गम्, इष्टलिङ्गम् इति त्रिधा। तदनन्तरं एकैकस्य द्वैविध्येन षड्लिङ्गस्थलं भवति । भावलिङ्गं महालिङ्गम्, प्रसादलिङ्गं चेति; प्राणलिङ्गं चरलिङ्गम्, शिवलिङ्गं चेति; इष्टलिङ्गं च गुरुलिङ्गम्, आचारलिङ्गं चेत्येतेन क्रमेण ।

**लिङ्गस्थलं त्रिधा ज्ञेयं तद्भेदो वर्ण्यते क्रमात् ।**
**प्रथमं भावलिङ्गं स्याद् द्वितीयं प्राणलिङ्गकम् ।।**
**तृतीयमिष्टलिङ्गं स्याद्येतत् त्रिविधं स्मृतम् ।**
**भावलिङ्गस्थलं द्वेधा प्राणलिङ्गस्थलं द्विधा ।**
**इष्टलिङ्गस्थलं चैव द्विधा प्रोक्तं महात्मभिः ।।**
**महालिङ्गं प्रसादाख्यं लिङ्गमित्युभयस्थलम् ।**
**भावलिङ्गं भवत्येव स्वानुभूतिप्रमाणतः ।।**
**तथा च चरलिङ्गं च शिवलिङ्गमिति द्वयम् ।**
**प्राणलिङ्गं भवत्येव तात्पर्यार्थो न संशयः ।।**
**गुरुलिङ्गं तथाऽऽचारलिङ्गमित्युभयस्थलम् ।**
**इष्टलिङ्गं भवत्येव सत्यमुक्तमिदं मया ।।**

(अ.सू.,३.५-६, १७-२०; चं.आ.,क्रि.पा.,३.२३, २६-२७)

**आ. अङ्गस्थलानि**

अङ्गस्थलं त्रिधा । योगाङ्गम्, भोगाङ्गम्, त्यागाङ्गं चेति । एतेषु एकैकमपि द्विधा । तत्रापि - योगाङ्गम् ऐक्यस्थलम्, शरणस्थलं चेति;

भोगाङ्गं प्राणलिङ्गिस्थलम्, प्रसादिस्थलं चेति ; त्यागाङ्गं च माहेश्वरस्थलम्, भक्तस्थलम् चेति ।

**अङ्गस्थलं त्रिधा ज्ञेयमाचार्यैः सूक्ष्मदर्शिभिः ।**
**योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं तु द्वितीयकम् ।।**
**त्यागाङ्गं तु तृतीयं स्यादेवमेव त्रिधा भवेत् ।।**
**योगाङ्गमैक्यं शरणस्थलमित्युभयं भवेत् ।**
**प्राणलिङ्गिप्रसादीति द्वयं भोगाङ्गमिष्यते ।।**
**माहेश्वरस्थलं भक्तस्थलमित्युभयं तथा ।**
**त्यागाङ्गं भवतीत्येवं प्रोच्यते पारमार्थिकैः ।।**

(अ.सू.,४.५-६, १२-१३)

## स्थलषट्कम्

भक्तिः, कर्मनाशः, बुद्धिः, विचारः, दर्पनाशः, सम्यग्ज्ञानम्, इति स्थलषट्कमित्युच्यन्ते ।

**अथ वक्ष्ये विशेषं ते श्रृणुष्वैकमनाः शिवे ।।**
**उपाङ्गषट्कमपरं भक्त्यादिपरमं पदम् ।।**
**भक्तिः कर्मक्षयो बुद्धिर्विचारो दर्पसंक्षयः ।**
**सम्यग्ज्ञानमिति प्रोक्तं स्थलषट्कं मम प्रियम् ।।**

(पार.आ.,६.४०-४१)

(पश्यत – उपाङ्गषट्कम्, षट्स्थलानि)

## स्थाणुः

सर्वम् अधिष्ठाय च्युतिराहित्येन स्थितः शिवः ।

**स शिवः सर्वमेवेदमधिष्ठाय स्वशक्तिभिः ।**
**अप्रच्युतस्वतो भावात् स्थितः स्थाणुरतः स्मृतः ।।**

(क्रि.सा.,भा-१, २.९१, पृ.६८)

**स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ।**

(का.वि.,१.१)

## स्थावरम्

१. अचरं जडात्मकं स्थूलं जगत् । चैतन्यकल्पात् जङ्गमात् अस्य उत्पत्तिः ।

**पावनानां पवित्राङ्गं विद्यानां विदुषां किल ।**
**युगानां युगसन्धानं स्थावराणां स्थिरप्रदम् ।।**

(वीर.उ.,२.१३५)

**यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ।।**

(भ.गी.,१३.२६)

**यावत्किञ्चित् यत्किञ्चित् स्थावरं वृक्षादिकम् ।**
**जङ्गमं पशुपक्ष्यादिकम् ..................**

(भ.गी.भा.,१३.२६)

**वृक्षस्य वदनं भूमिः स्थावरस्य च जङ्गमः ।**

(अ.वी.सा.सं.,११.१०२)

२. स्थावरम् जङ्गमम् इति द्विविधलिङ्गयोः एकम् । स्थावरं जङ्गमं चेति शिवस्य रूपद्वयम् । स्थावरं पुनः स्वयं व्यक्तम्, प्रतिष्ठितमिति द्विधा । काशीविश्वेश्वरादि लिङ्गं स्वयं व्यक्तम् । मानुषैः निर्माय ससंस्कारं स्थापितं लिङ्गं प्रतिष्ठितमिति कथ्यते ।

**जङ्गमं स्थावरं चेति शम्भो रूपद्वयं स्मृतम् ।**
**स्थावरं च स्वयं व्यक्तं प्रतिष्ठितमिति द्विधा ।।**
**स्वयं व्यक्तं तत्र भवेत् काशीविश्वेश्वरादिकम् ।**
**प्रतिष्ठितं कर्षणाद्यैः संस्कृतं मानुषैर्भवेत् ।।**

(चं.आ.,क्रि.पा., ४.४-५)

काश्यादिषु व्यक्तं विश्वेश्वरादिकं लिङ्गं स्थावरं लिङ्गम् । जङ्गमलिङ्गात् स्थावरलिङ्गं कनीयः । तथापि स्थावरलिङ्गस्य अपाये सति सर्वथा यत्नेन तत्संरक्षणीयम् ।

**शिवधर्मे –**

**स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते ।**

(वे.चिं.,१.२६९)

**सदा शिवैकनिष्ठानां वीरशैवाध्ववर्तिनाम् ।**
**नहि स्थावरलिङ्गानां निर्माल्याद्युपयुज्यते ।।**
**यत्र स्थावरलिङ्गानामापायः परिवर्तते ।**
**तत्र प्राणान् विहायापि परिहारं समाचरेत् ।**
**शिवार्थं मुक्तजीवश्चेच्छिवसायुज्यमाप्नुयात् ।।**

(सि.शि.,९.३३-३५)

## स्थावरलिङ्गम्

भूमौ प्रतिष्ठापितं लिङ्गम् । वीरशैवैः स्थावरलिङ्गानां निर्माल्यादीन् न स्वीकरणीयमिति नियमः ।

**नहि स्थावरलिङ्गानां निर्माल्याद्युपयुज्यते ।**

(सि.शि.,९.३३)

(पश्यत – स्थावरम्)

## स्थितिः

सृष्ट्यादिषु परमात्मनः पञ्चकृत्येषु एकतमम् । सृष्टस्य जगतः प्रतिष्ठापनम्, धारणम्, रक्षणम् स्थितिः ।

**पञ्चैव मे जगत्कृत्यं नित्यसिद्धमजाच्युतौ ।**
**सर्गः संसारसंरम्भस्तत्प्रतिष्ठा स्थितिर्मता ।।**

(विद्ये.सं.,१०; उल्लेखः – क्रि.सा.,भा-३, पृ.७७)

(पश्यत – पञ्चकृत्यम्)

## स्थिरचरलिङ्गम्

स्थिरम्, चरम्, स्थिरचरम्, चरस्थिरम्, स्थिरस्थिरम्, चरचरं चेति षड्विधलिङ्गेष्वेकतमम् । यल्लिङ्गं भक्ततनौ धृतं तत् स्थिरचरलिङ्गम् ।

**स्थिरं चरं स्थिरचरं चरस्थिरमथाम्बिके ।**
**स्थिरस्थिरं चरचरं षड्विधं लिङ्गलक्षणम् ।।**
**लिङ्गं भवेत् स्थिरचरं यन्मद्भक्ततनौ धृतम् ।**

(पार.आ.,१६.९, १५)

(पश्यत – लिङ्गम्)

## स्थिरलिङ्गम्

सालयं निरालयं वा संस्थापितं लिङ्गं स्थिरलिङ्गम् । स्थावरलिङ्गम् ।

**देवालये पाणिपीठे संविधायाष्टबन्धनम् ।**
**प्रतिष्ठितं शिलालिङ्गं स्थिरलिङ्गं तदुच्यते ।।**

(पार.आ.,१६.११)

**ब्रह्मविष्णुकपर्द्यंशैः चतुरष्टाश्रवर्तुलैः ।**
**सद्ब्रह्मसूत्रसहितं लिङ्गं यत्तत्स्थिरं स्मृतम् ।।**
**स्थिरलिङ्गं स्थिरं यत्र सालयं वाप्यनालयम् ।**
**तत्रैव पूजकः पूजां कुर्वीत चतुरानन ।।**

(शै.र.,४.४१-४२, पृ.५८)

(पश्यत – लिङ्गम्)

## स्थिरस्थिरलिङ्गम्

स्थिरादिषड्विधलिङ्गेष्वेकतमम् । अस्य लिङ्गस्य लक्षणं पारमेश्वरागमे नोपलभ्यते प्रायः त्रुटितोऽयं ग्रन्थभागः ।

(पार.आ.,१६.९-२२)

(पश्यत – लिङ्गम्)

## स्थूलतनुः

१. स्थूलम्, सूक्ष्मम्, कारणम् इति त्रिविधशरीरेषु एकम् । स्थूलदेहः । स्थूलशरीरम् । स्थूलाङ्गम् । विश्वनामकजीवाश्रयम्, जाग्रदवस्थाविशिष्टं शरीरम् । स्थूलदेहस्य यथार्थस्वरूपे ज्ञाते सति संसारस्य भ्रान्तिरपगता भवति इत्यत इदं शरीरं त्यागाङ्गमित्युच्यते । एतच्च माहेश्वरभक्तस्थलात्मकम् ।

**संसारभ्रान्तिसन्त्यागात् त्यागाङ्गमिति पठ्यते ।**
**त्यागाङ्गं स्थूलमित्युक्तमेवं भेदोपभेदतः ।**
**जाग्रदित्युदितावस्था त्यागाङ्गमिति लक्ष्यते ॥**
**त्यागाङ्गं विश्व एव स्यात् परमार्थनिरूपणे ।**
**माहेश्वरस्थलं भक्तस्थलमित्युभयं भवेत् ।**

(अ.सू.,४.७-१०,१३)

(पश्यत – अङ्गस्थलम्)

२. भोगसाधनभूतं शरीरम् ।

**स्थूलं तु भोगदं प्रोक्तम् ।**

(क्रि.सा.,भा-१,३.३२०)

३. जात्याद्यभिमानास्पदं पञ्चीकरणजन्यं पञ्चविंशतितत्त्वात्मकं शरीरम् ।

**देहःस्थूलो जातिवंशाद्यभिमानास्पदं तु यः ।**
**पृथिव्यप्तेजसां वायोर्व्योम्नश्च समवायजः ॥**

(शि.त.र.,भा-३, ९.३.३)

४. स्थूलतनुः इष्टलिङ्गस्याश्रयः । श्रीगुरुः स्थूलतनुगतं कार्मिकमलं क्रियादीक्षया संदह्य तत्र इष्टलिङ्गं स्थापयति ।

**इष्टं स्थूलतनोः प्रोक्तं .............. ।**
**तनुत्रयगतानादिमलत्रयमिदं गुरुः ।**
**दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशेत् ॥**

(चं.आ.,क्रि.पा.,३.४५, ४७)

## स्थूलद्रव्यम्

स्थूलम्, प्रविविक्तम्, आनन्दं चेति त्रिविधद्रव्येष्वेकतमम् । एतानि द्रव्याणि आत्मोपभोगार्थानि । तत्र रूपमेव स्थूलद्रव्यम् ।

**आत्मोपभोगजातानि द्रव्याणि त्रिविधानि हि ।।**
**स्थूलाख्यं प्रविविक्ताख्यमानन्दाख्यमिति त्रिधा ।**
**स्थूलद्रव्यं भवेद्रूपं ........................ ।।**

(अ.सू.,७.९-१०)

## स्थूलपञ्चाक्षरः

'नमः शिवाय' इत्येवं पञ्चभिः अक्षरैः विशिष्टः पञ्चाक्षरीमन्त्रः ।

**तथा नमः शिवायेति स्थूलपञ्चाक्षरो भवेत् ।**

(चं.आ.,क्रि.पा.,११.४४)

(पश्यत – पञ्चाक्षरी मन्त्रः)

## स्थूलपञ्चाक्षरी

पञ्चपञ्चाक्षरीमन्त्रेष्वेकतमा । पण्डिताराध्यसम्बद्धवृषभगोत्रोत्पन्नानां मन्त्रः ।

**स्थूलपञ्चाक्षरी मन्त्रः सप्तवर्णसमन्वितः ।**
**ओं ह्रां ह्रीं नमः शिवाय ।**

(वी.स.सं.,५.३४)

(पश्यत – पञ्चाक्षरीमन्त्रः)

## स्थूललिङ्गम्

१. स्थूलम्, सूक्ष्मम्, परात्परं चेति त्रिविधलिङ्गेष्वेकतमम्। इदं स्थूलशरीरगतम् इष्टलिङ्गम् । एतच्च बाह्ये शरीरे धार्यते । एतत् पुनः सकलं लिङ्गम् ।

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम् ।**

**इष्टलिङ्गमिदं स्थूलं यद्बाह्यो धार्यते तनौ ।।**

(सि.शि.,६.४९)

**भावलिङ्गं परं तत्त्वं प्राणलिङ्गं तु सूक्ष्मकम् ।।**

**इष्टलिङ्गं भवेत् स्थूलं एतल्लिङ्गत्रयं स्मृतम् ।**

(अ.सू., ३.१३-१४)

(पश्यत – इष्टलिङ्गम्)

२. स्थूललिङ्गं सकलम् । तत् दृष्टिग्राह्यम् 'पञ्चाक्षरम्' इयुच्यते ।

**सकलं दृक्कलाग्राह्यमिष्टलिङ्गस्थलं महत् ।**

(अ.सू.,३.८)

**स्थूललिङ्गं तु सकलं तत्पञ्चाक्षरमुच्यते ।**

(क्रि.सा.,भा-१, ३.३४४., पृ.१५८)

## स्थूलसमर्पणम्

स्थूल-सूक्ष्मसमर्पणयोरेकतरम् । यच्च शब्दस्पर्शादिविभागराहित्येन इष्टलिङ्गे समर्प्यते द्रव्यं तत् स्थूलं समर्पणम् । तत् अर्चाङ्गत्वेन परिगण्यते ।

**समर्पणं द्विधा प्रोक्तं स्थूलसूक्ष्मविभेदतः ।**

**यच्छाब्दाद्यविभागेनैवेष्टलिङ्गे समर्प्यते ।।**

**द्रव्यं तत् स्थूलमित्युक्तम् अर्चाङ्गं तत्प्रकीर्तितम् ।।**

(चं.आ.,क्रि.पा.,५.२८)

(पश्यत – अर्पणम्, समर्पणम्)

## स्थूला भक्तिः

बाह्याभ्यन्तरभक्त्योः प्रथमा स्थूला, द्वितीया च सूक्ष्मा ।

**सा भक्तिर्द्विधा ज्ञेया बाह्याभ्यन्तरभेदतः ।**

**बाह्या स्थूलान्तरा सूक्ष्मा वीरमाहेश्वरादृता ।।**

(सि.शि.,९.६)

(पश्यत – बाह्यभक्तिः)

## स्नानानि

शुद्ध्यर्थं क्रियमाणं स्नानं पञ्चधा । तद्यथा – वारुणस्नानम्, आग्नेयस्नानम्, दिव्यस्नानम्, वायव्यस्नानम्, मानसस्नानम् इति । तत्र वारुणस्नानं वारिणा, आग्नेयं भस्मना, दिव्यं वृष्ट्या, वायव्यं गवां रजसा, ब्रह्मतादात्म्यं च मानसम् । अन्यत्र मान्त्रम्, भौमं चेति स्नानद्वयमपरमुक्तम् । आहत्य स्नानं सप्तविधम् ।

**वारुणं वारिणा स्नानमाग्नेयं भस्मना भवेत् ।**

**वृष्ट्या वा तपसा दिव्यं वायव्यं रजसा गवाम् ।।**

**मानसं ब्रह्मतादात्म्यं स्नानान्येतानि वै विदुः ।**

(शि.त.र.,भा–३, ८.५.६३–६४)

**आपोहिष्ठेति वै मान्त्रं मृदालम्भस्तु पार्थिवम् ।**

(श.कौ., भा–६, पृ.२८४३)

आग्नेयस्नानं नाम भस्मस्नाम् इत्युक्तम् । एतच्च सर्वस्नानेषु मुख्यम् । कल्पादिभस्मभेदेन कल्पादिस्नानभेदः । एवं कल्पस्नानम्, अनुकल्पस्नानम्, उपकल्पस्नानम्, अकल्पस्नामिति भेदेन स्नानं चतुर्विधम्। स्नानमिदं यमभयमपि वारयति ।

**भक्तिमुक्तिदमाग्नेयं स्नानं शुद्धेन भस्मना ।**

(शि.त.र.,भा–३, ८.५.३८)

**भस्मना विहितं स्नानमिदमाग्नेयमुत्तमम् ।**

**स्नानेषु वारुणाद्येषु मुख्यमेतन्मलापहम् ।।**

(सि.शि.,७.२३)

**स्नानं चतुर्विधं तत्र भवेत्कल्पादि भेदतः ।।**

**कल्पं चैवानुकल्पं च उपकल्पमकल्पकम् ।**

**स्नानं विधिभयं हन्यात् ............. ।**

(शि.त.र.,भा–३,८.५.३८–३९;८.७.५७)

## स्नानपञ्चाङ्गम्

सङ्कल्पः, सूक्तपठनम्, मार्जनम्, अघमर्षणम्, देवतातर्पणम्, इत्येतानि स्तानपञ्चाङ्गनि इत्युच्यन्ते ।

**सङ्कल्पः सूक्तपठनं मार्जनं चाघमर्षणम् ।**

**देवतातर्पणं चैव स्नानपञ्चाङ्गमुच्यते ।।**

(मकुट.,क्रि.पा., २.१०)

## स्पर्शदीक्षा

चाक्षुष्यादिषु दीक्षासु अन्यतमा । पाशबन्धविमोक्षाभिप्रायेण दक्षिणे इस्ते सर्वाङ्गसंयतं शिवं निधाय तेन हस्तेन शिष्यमूर्धादि संस्पर्शनं स्पर्शदीक्षा ।

**निधाय दक्षिणे हस्ते शिवं सर्वाङ्गसंयुतम् ।**

**संस्पृशेच्छिष्यमूर्धादि स्पर्शदीक्षा भवेदियम् ।।**

(शि.त.र.,भा–३, ९.७.२८; शै.प.,५.पृ.१३६)

(पश्यत – दीक्षा)

## स्पर्शप्रसादः

प्राणलिङ्गी मनोरूपत्वचा स्प्रष्टव्यं चरलिङ्गे समर्प्य भुङ्क्ते । एवं रूप–भोग एव स्पर्शप्रसादः ।

**स्पर्शं समादाय बहुप्रकारं समर्पितं यच्चरलिङ्गवक्त्रे ।**

**भुङ्क्ते प्रसादात्मतयोपलब्धं यः प्राणलिङ्गी स्वयमेवमात्मा ।।**

**संसक्ते प्राणलिङ्गिस्थलनिहितनिजाङ्गे मनःपाणिनाऽसौ ।**

**लिङ्गे साक्षाच्चराख्ये त्वचि जगति मुखे ह्यादिशक्तिप्रयुक्ते ।**
**स्प्रष्टव्यं चार्पयित्वा स्वयमनुभवभक्तिप्रभावोपपन्नो ।**
**नित्यं स्पर्शप्रसादं निरतिशयसुखं तत्त्ववेत्ता भजेत ।।**

(अ.सू.,७.४०, ४८)

(पश्यत – अर्पणम्, समर्पणम्)

## स्मरणभक्तिः

नवविधभक्तिष्वेका । सदा भगवच्चिन्तनं स्मरणभक्तिः ।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**

(सि.शि.,९.२-३)

**स्मरणं ध्यानम् ।**

(सि.शि.,तत्त्व.प्र.,९.२-३)

## स्मरारिः

मखारिः, कालारिः, पुरारिः, स्मरारिः, वेदारिः - इति पञ्चमानाम् एकः । तस्य श्रीशैलपीठसम्बद्धवृषभगोत्रम् । पण्डिताराध्यः मूलगुरुः । सूत्रं मुक्तागुच्छम् । स्थूलपञ्चाक्षरीमन्त्रः (ओम्-ह्रां-ह्रीं-नमः शिवाय) । अत्याश्रमी गृहस्थो भूत्वा इष्टलिङ्गयुक्तः स्मरारिः ।

**मखारिश्चैव कालारिः पुरारिस्तु स्मरारि वै ।**

(वी.स.सं.,५.८)

**स्मरारिपञ्चमस्याथ गोत्रं वै (भृंगिनामकम्) ?**
**तच्छाखा धेनुकर्णाख्या प्रवरश्चतुरक्षरः ।।**
**तत्सूत्रं मुक्तागुच्छाख्यं ................ ।**

**....................... आराध्यः पण्डितस्तथा ॥**

**स्थूलपञ्चाक्षरीमन्त्रः सप्तवर्णसमन्वितः ।**

**ॐ ह्रां ह्रीं नमश्शिवाय सर्वोत्कृष्टोऽयमीरितः ॥**

(ॐकारं विहायायं मन्त्रः सप्तवर्णात्मकः)

**एतादृशमहामन्त्र उपदेशाधिकारकः ।**

**अत्याश्रमी गृहस्थः स्यादिष्टलिङ्गार्चको भवेत् ।**

**एतैश्च लक्षणैर्युक्तः स्मरारिः पञ्चमस्तथा ।**

(वी.स.सं.,५.३२-३५)

## स्वतन्त्रनिराभारी

शैवभेदभूतवीरशैवस्य त्रिविधप्रभेदेषु निराभारी एकः । निराभारिणः पुनः स्वतन्त्रो वैदिकश्चेति द्वैविध्यम् । तत्र द्विविधप्रभेदयोरेकः स्वतन्त्रनिराभारी। त्यक्तदारादिः, मुण्डी, जटिलः, दण्डकाषायसंयुतः। इष्टलिङ्गवान् च स्वतन्त्रनिराभारीवीरशैवः । अस्य वैदिकनिराभारिणश्चेत्युभयोऽपि स्वेष्टलिङ्गवियोगे प्राणत्याग एव समानो धर्मः ।

**स्वतन्त्रो त्यक्तदारादिर्निराभारीति कथ्यते ॥**

**मुण्डी वा जटिलो वापि दण्डकाषायसंयुतः ।**

**स्वतन्त्रे वीरशैवे तु निराभारी चरेन्महीम् ॥**

(चं.आ.,क्रि.पा.,१०.४२-४४)

(पश्यत – शैवः)

## स्वपराज्ञस्थलम्

ऐक्यस्थलान्तर्गतनवविधलिङ्गस्थलेषु सप्तमम् । एकोत्तरशतस्थलेषु एकोनशततमस्थलम् । देशकालाद्यनवच्छिन्ने तेजोरूपे विलीनस्य स्वश्च परश्चेति भेदज्ञानविरहात् स्वपरज्ञानराहित्यस्थितिः ।

स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते ।।

अङ्गालेपस्थलं पश्चात् स्वपराज्ञस्थलं ततः ।।

देशकालानवच्छिन्नतेजोरूपसमाश्रयात् ।

स्वपरज्ञानविरहात् स्वपराज्ञस्थलं विदुः ।।

(सि.शि.,२०.२, ४, ५४)

## स्वप्नः

१. जाग्रत्, स्वप्नः, सुषुप्तिः, तुरीयम्, तुरीयातीतम् इति पञ्चसु अवस्थासु अन्यतमा । द्वितीयावस्था । सूक्ष्मशरीरमाश्रितः तैजसो नाम जीवः अत्र कण्ठस्थाने स्थित्वा मनोव्यापारजन्यं स्वप्नव्यवहारम् ईक्षते ।

जाग्रत्स्वप्नसुषुप्त्याख्या तुरीयं तदतीतकम् ।

अवस्थापञ्चकं ज्ञेयं सदाचार्योपदेशतः ।।

(वी.ध .शि.,४.९०.पृ.२५३)

............ स्वप्नाख्यायां तु तैजसः ।।

(अ.सू.,५.६२)

२. ज्ञानी सर्वमपि लोकं स्वप्नवत् पश्यति । स्वप्नवदखिलं लोकं पश्यन् शरदभ्ररूपमिव चित्ते तिष्ठति । सत्तामात्रे स्वप्नावस्थान्वितश्चरति ।।

स्वप्नवदखिलं लोकं पश्यन् शरदभ्ररूपमिव चित्ते ।

तिष्ठति सत्तामात्रे स्वप्नावस्थान्वितश्चरति ।।

(शि.यो.प्र., ५.३५)

३. अङ्गस्थलस्य योगाङ्गम्, भोगाङ्गम्, त्यागाङ्गम् इति त्रिविधाङ्गेषु एकम् भोगाङ्गम् । इदं च प्राणलिङ्गी, प्रसादी इत्युभयात्मकम् ।

भोगाङ्गमेव स्वप्नवस्था इति कथ्यते ।

........... भोगाङ्गं सूक्ष्ममुच्यते ।

**............ भोगाङ्गं स्वापनाभिधा ।**

**प्राणलिङ्गिप्रसादीति द्वयं भोगाङ्गमिष्यते ।।**

(अ.सू.,४.८-९,१२)

(पश्यत – अङ्गस्थलम्, अवस्था, भोगाङ्गम्)

## स्वयम्भुलिङ्गम्

स्थावरजङ्गमलिङ्गयोर्मध्ये जङ्गमलिङ्गं (चरलिङ्गम्) स्वयम्भुलिङ्गम्, कृतलिङ्गम् (प्रतिष्ठितम्) इति द्विविधम्। तत्र स्वयम्भुलिङ्गं नर्मदाजनितम्, शिवनाभ्याह्वयम्, महानदीजातम्, श्रीशैलादितीर्थेषु सम्भूतं वा लिङ्गम् । तच्च भुक्तिमुक्तिफलप्रदम् ।

**स्वयम्भु च कृतं लिङ्गं चरेऽपि द्विविधं स्मृतम् ।**

**नर्मदाजनितं श्रेष्ठं शिवनाभ्याह्वयं तथा ।।**

**महानदीजं श्रीशैले तीर्थेष्वपि च सम्भवम् ।**

**स्वयंभुलिङ्गमित्युक्तं भुक्तिमुक्तिफलप्रदम् ।।**

(शै.र.,भा-१,४.४३-४४)

## स्वयम्भूः

स्वयं भवतीति स्वयम्भूः । लीलारहितः शिवः ।

**लीलया रहितः साक्षात्स्वयम्भूरिति कथ्यते ।**

(शि.त.र.,भा-१,४.४८)

**कविर्मनीषी परिभूः स्वयम्भूः ।**

(ई.उ.,८)

**नमः शिवाय साम्बाय सगणाय स्वयम्भवे ।।**

(सि.शि., २.१)

## स्वयलिङ्गम्

लिङ्गलाञ्छानयुक्तं बाह्यकृत्यविवर्जितं केवलम् आनन्दस्वरूपेण संस्थितं । इदं च चरलिङ्गस्थलस्य स्वयंलिङ्गम्, चरलिङ्गम्, परलिङ्गम् स्वयलिङ्गम् इति त्रिविधलिङ्गेषु एकम् ।

**चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते ।**

**स्वयं चरं परं चेति त्रैविध्यं समुपागतम् ।।**

**लिङ्गलाञ्छनसंयुक्तं बहिः कृत्यविवर्जितः ।**

**केवलानन्दरूपो यः स स्वयं लिङ्गमीरितम् ।।**

(सू.आ.,क्रि.पा.,८.१८-१९; क्रि.सा.,भा-३, २४, पृ.१२०)

(पश्यत - चरलिङ्गस्थलम्)

## स्वयस्थलम्

भक्तस्थलान्तर्गतनवविधलिङ्गस्थलेष्वेकम् । एकपञ्चाशत्तमं स्थलम्, एकोत्तरशतस्थलेष्वेकम् । ज्ञानलिङ्गस्वरूपज्ञानज्ञापकज्ञानलयस्थानं यस्यास्ति सः ज्ञानलिङ्गी एव स्वयनामभाक् जङ्गमः, तस्य स्थलम् ।

**आदौ नवस्थलानीह भक्तस्थलसमाश्रयात् ।**

**स्वयं परं चरं चेति तेषां लक्षणमुच्यते ।**

**तद्भावज्ञापकज्ञानं यत्र ज्ञाने लयं व्रजेत् ।**

**तद्वानेष समाख्यातः स्वाभिधानो मनीषिभिः ।।**

**"बाह्यकर्म परित्यागी स स्वयं लिङ्गमुच्यते ।। इति**

**वातुलोत्तरवचनाच्च ज्ञानलिङ्गमेव स्वयस्थलसम्पन्नः ।"**

(सि.शि.,तत्त्व.प्र.,१५.४, ६, ५१)

## स्वस्तिकारोहणदीक्षा

सप्तविधक्रियादीक्षासु अन्यतमा । शिष्यस्य संहारक्रमेण पादादि-मस्तकपर्यन्तेष्वङ्गेषु वर्णपदमन्त्रकलातत्त्वभुवनाख्यान् षडध्वनः संशोध्य मांसपिण्डत्वनिवारणमेव स्वस्तिकारोहणदीक्षा ।

**षडध्वशोधनद्वारा मांसपिण्डनिवृत्तये ।**
**स्वस्तिकारोहणाभिख्यां दीक्षां दद्यात् यथाविधि ।।**
**संहारक्रमतो विद्वान् शब्दार्थात्माषडध्वनः ।**
**पादादिषु तु विन्यस्येच्छिष्यस्य नियतात्मनः ।।**

(का.आ.,क्रि.पा.,१.७७-७८)

## स्वात्मशुद्धिः

यमनियमादिसाधनैः एकाग्रतां सम्प्राप्तस्य मनसः स्थितिः ।

**यमाश्च नियमास्सम्यगेवं विंशतिसंख्यया ।**
**स्थिरधीर्नियतो भूत्वा स्वात्मशुद्धिं समाचरेत् ।।**

(शि.यो.प.,२.१२)

## स्वाधिष्ठानचक्रम्

षट्चक्रेषु सप्तचक्रेषु वा एकतमम् । लिङ्गमूले विद्यमानं षट्पत्रात्मकं चक्रम् ।

आधारचक्रम्, स्वाधिष्ठानम्, मणिपूरकम्, अनाहतम्, विशुद्धिः, ललना, आज्ञा, मनः, सोमः, सहस्रपत्रम् इति दशविधचक्रेषु एकम् । तत्र द्वितीयम् । गुह्यस्थलस्य मूलप्रदेशे स्थितमेतत् षट्पत्रात्मकम् । तत्र एकैकस्य दलस्य फलं तु प्रश्रयः, क्रूरता, गर्वः, नाशः, मूर्छा, अवज्ञा इति । चक्रमिदं कामशक्तेः निलयः ।

**स्वाधिष्ठाने च षट्पत्रे ............ ।**

(वा.शु.आ.,९.१९)

**स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रमस्य च ।**
**पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात् ।।**
**प्रश्रयः क्रूरता गर्वो नाशो मूर्छा ततः परम् ।**
**अवज्ञा स्यादविश्वासः कामशक्तेरिदं गृहम् ।।**

(शि.त.र.,भा-३,९.१.१३४-१३५)

चक्रमिदं चतुर्दलयुक्तम् इति शिवयोगप्रदीपिकायामुक्तम् ।

**स्वाधिष्ठानं ततश्चक्रं तत्र चातुर्दलाम्बुजम् ।**
**तदेवोड्डीयणं ध्यायेत् पश्चिमाभिमुखं शिवम् ।।**

(शि.यो.प्र.,३.९)

(पश्यत – षट्चक्राणि, सप्तचक्राणि, नवचक्राणि, दशचक्राणि)

## स्वानुभावः

स्वस्य आत्मचैतन्यस्य अनुभावः साक्षात्कारः स्वानुभावः । पूर्वजन्मकृतसत्कर्मवासनाबलात् स्वयं चित्ते उदिता शिवार्चना, शिवभक्तिः स्वानुभाव इत्युच्यते ।

वीरागमे –

**स्वपूर्वजन्मसत्कर्मवासनाभिः शिवार्चना ।**
**शिवभक्तिः स्वयं चित्ते स्वानुभाव इति स्मृतः ।।**

(कै.सा.,२.१, पृ.८३)

## स्वानुभूतिः

स्वात्मविषयकं ज्ञानम् ।

**तस्मै सर्वानुभावेन शिवलिङ्गान्तरे द्वयम् ।**
**स्वानुभूतौ निविष्टाय प्रसन्नः स्यात् सदाशिवः ।।**

(शै.र.,भा-२,२.२३०)

## स्वायत्तदीक्षा

सप्तविधक्रियादीक्षासु एकतमा । गुरुणा शिष्यहस्ते इष्टलिङ्गस्थापनमेव स्वायत्तदीक्षा ।

**स्वायत्तमिति सप्तैताः क्रियादीक्षान्तरा मताः ।**

**सप्तवारं सुसंपूज्य स्ववामकरसंस्थितम् ।**

**निक्षिपेत्तत्र तल्लिङ्गं त्रियम्बकमनुं स्मरन् ।।**

(का.आ.,क्रि.पा.,१.४३, ९५)

(पश्यत – दीक्षा)

## स्वीकृतप्रसादिस्थलम्

ऐक्यस्थलगतनवविधलिङ्गस्थलेष्वेकम् । एकोत्तरशतस्थलेषु त्रिनवतितमं स्थलम् । ज्ञानप्रकाशसम्पन्नस्य शिवयोगिनः स्थलम् । ज्ञानप्रकाशभाजि शिवयोगिनि जीवेश्वरभेदरूपमुख्यार्थो नास्ति । निरुपाधिकशिवात्मनः नित्यमैक्यरूपलक्षणार्थोऽपि नास्ति । तस्य शिवयोगिनः निरङ्कुशत्वेन पूर्णज्ञानप्रसादः स्वीकृतो भवेत् ।

**स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते ।।**

**तत्स्वीकृतप्रसादैक्यस्थलमादौ प्रकीर्तितम् ।**

**मुख्यार्थो लक्षणार्थं च यत्र नास्ति चिदात्मनि ।**

**विशृङ्खलतया तस्य प्रसादः स्वीकृतो भवेत् ।।**

(सि.शि.,२०.२-३,६)

(पश्यत – स्थलम्)

# ह

## हंसः

"प्रणवेनैव परब्रह्म प्रकाशते" इत्यस्मिन्नेव प्रस्तावे परमात्मनः रूपद्वयमुक्तं "सोऽहं" इति, 'हंसः' इति च। सोऽहमित्यत्र सकारहकारयोर्लोपे 'ओं' इत्येकाक्षरः 'मन्त्रः' परशिवब्रह्मप्रकाशकः । सोऽहंभावेन परमात्मनः भावनायां हंसरूपं मूलम् । 'सोऽहं' इति, 'हंसः' इति रूपद्वयस्य एकतानता प्राप्तिरेव समाधिरिति कीर्त्यते ।

**तद्यो हंसोऽसौ योऽसौ सोऽहम् ।**

(ऐ.आ.,३.२.४.३)

**प्रणवेनैकवर्णेन परब्रह्मप्रकाशते ।**
**अद्वितीयं परानन्दं शिवाख्यं निष्प्रपञ्चकम् ।।**
**परमात्मा मनुर्ज्ञेयः सोऽहंरूपः सनातनः ।**
**जायते हंसयोर्लोपाद् ॐ इत्येकाक्षरो मनुः ।।**
**हंसरूपं परात्मानं सोऽहंभावेन भावयेत् ।**
**तदेकतानता सिद्धिः समाधिः परमो मतः ।।**

(सि.शि.,८.१९-२०; १२.२३)

**अव्यक्तलक्षणं हंसं ज्वालामाला समाकुलम् ।**
**हेयोपादानरहितं लिङ्गस्थं प्रणमाम्यहम् ।।**

(वी.मा.सं.,१०.४.१)

## हंसन्यासः

लिङ्गपूजायाः पूर्वं देहस्य विद्यामयत्वसम्पादनाय क्रियमाणेषु पञ्चविधन्यासेषु एकतमः । हंसः ब्रह्म । नमोऽन्तं हंस नामोल्लेखपूर्वकं (हंसाय नमः) क्रियमाणः न्यासः हंसन्यासः ।

**................ हंसन्यासस्तदुत्तरः ।**

(चं.आ.,क्रि.पा.,११.३६)

## हठयोगः

मन्त्रादिचतुर्षु पञ्चसु वा योगेष्वन्यतमः । यमनियमासनप्राणायामेति चत्वारि बाह्यानि प्रत्याहारध्यानधारणसमाधीति चत्वार्यान्तराणीत्यष्टान्यस्य अङ्गानि । योगादस्माच्छरीरारोग्यमात्मनः सुस्थितिश्चाभिवर्धेते । अत एव शिवयोगसाधकानामयं योगः साधनम् । केवलकुम्भकप्राणायामेन हठयोगसिद्धिः ।

**शरीरं कफनाशेन सुस्थिरं याति निश्चितम् ।**

**तत्कफं हठयोगेन विनश्यति शरीरिणाम् ।।**

**शिवयोगस्साधकानां साध्यस्तत्साधनं हठः ।**

**अङ्गान्यष्ट हठस्यापि बाह्यान्यभ्यन्तराणि च ।।**

**यमादिभिरतोऽष्टाङ्गैर्देवपूजां समाचरेत् ।।**

**हठः केवलकुम्भाख्यो .............. ।**

(शि.यो.प्र., २.३-५, २६)

(पश्यत - योगः)

## हठयोगी

हठयोगस्य साधकस्सिद्धो वा । यमादिभिरष्टभिरङ्गैः मुद्राणां करणानां च बन्धनैः केवलकुम्भके वा यः प्राणान् वशीकरोति सः हठयोगी ।

**भवेदष्टाङ्गमार्गेण मुद्राकरणबन्धनैः ।**

**तथा केवलकुम्भे वा हठयोगी वशानिलः ।।**

(शि.यो.प्र.,१.६)

## हरभुक्तशेषः

पितॄणां श्राद्धकाले पुण्यस्मृतिदिने इति यावत् ; तेभ्यः निवेद्यमानः शिवप्रसादः हरभुक्तशेष इति उच्यते ।

**यः श्राद्धकाले हरभुक्तशेषं ददाति काले पितृदेवतानाम् ।**

**तेनैव पिण्डैश्च तिलैर्विमिश्रै आकल्पकोट्या पितरः सुतृप्ताः ।।**

(कूर्मपुराणे – अ.वी.सा.सं.,भा–२, १७.४६)

## हस्तपीठम्

पूजनार्थम् इष्टलिङ्गसंस्थापनस्थलम् । तच्च वामहस्तस्य करतलम् ।

**यो हस्तपीठे निजमिष्टलिङ्गं विन्यस्य तल्लीनमनःप्रचारः ।**

**बाह्यक्रियासङ्कुलनिस्पृहात्मा सम्पूजयत्यङ्ग स वीरशैवः ।।**

(स्कान्दे शङ्करसंहितायाम् – वी.आ.चं.,४.८, पृ.८३)

## हस्ताः

परमात्मनः भावार्पणे साधनभूताः भौतिकभिन्नाः भावहस्ताः । हस्ता इव प्रमुखसाधनभूताः भावाः । ऐकैकस्यापि स्थलस्य एकैकः हस्तः इत्याहत्य षट्स्थलानां हस्ताः षट् । ते च –

(१) चित्तहस्तः, (२) बुद्धिहस्तः, (३) अहङ्कारहस्तः, (४) मनोहस्तः, (५) ज्ञानहस्तः (सुज्ञानहस्तः), (६) भावहस्तः (सद्भावहस्तः) इति ।

भक्ताद्येकैकस्थले गन्धादिप्रसादानां नासिकाद्यङ्गद्वारा आचारादिलिङ्गेभ्यः समर्प्यमाणे विनियुक्ताः हस्ताः । तत्र भावहस्ताज्ज्ञानहस्तः इत्येवमेतेषां हस्तानां समुद्भवः ।

**एवमङ्गं च लिङ्गं च भक्तिं शक्तिं तथा स्थलम् ।**
**मुखं हस्तं प्रसादं च ज्ञात्वा वै सम्यगर्चयेत् ।**
**एवमर्पणसद्भावं सर्वदैव समभ्यसेत् ।।**

(का.आ.,क्रि.पा.,७.६६)

**..................... भावाज्ज्ञानसमुद्भवः ।**
**ज्ञानान्मनस्समुत्पन्नं मनसोऽहङ्कृतिस्तथा ।।**
**अहङ्कारात्ततो बुद्धिः बुद्धेश्चित्तस्य सम्भवः ।**

(अ.सू.,६.२८-२९)

## हितगुरुः

हितः, काम्यः, निषिद्धः, वाचकः, सूचकः, कारकः – इति षड्विधेषु गुरुषु एकः। मोक्षैकसाधनभूतस्य आत्मज्ञानस्य प्रदाता हितगुरुः ।

**किरणागमे –**

**यन्मोक्षसुखदं ज्ञानं ददाति च दयापरः ।**
**गुरुं हिताख्यं तं प्राहुस्सात्त्विकं निरपेक्षणम् ।।**

(वी.ध.शि.,२.२३, पृ.१३७)

(पश्यत – षड्विध गुरुः)

## हिरण्यलिङ्गम्

दशविधलिङ्गान्यतमप्राणलिङ्गवाचकम् । हिरण्यलिङ्गाय नम इत्यनेन प्राणलिङ्गं स्तूयते ।

**तप्तकाञ्चनसंकाशं कन्दस्थानसमाश्रितम् ।**

**योगिभिश्च सदा ध्येयं प्राणलिङ्गं विदुर्बुधाः ।।**

**इति सिद्धान्तसारावलीवचनेन तस्य काञ्चनमयत्वनिश्चयात् ।**

(लिं.धा.चं.,पृ.७४)

**ॐ हिरण्याय नमः, ॐ हिरण्यलिङ्गाय नमः ।**

(म.ना.उ., ३.२)

(पश्यत – दशविधलिङ्गानि)

## हृच्छुश्रूषा

मनसा सततं गुरोः स्वरूपचिन्तनम् गुरुशुश्रूषायाः उपायस्य चिन्तनं च हृच्छुश्रूषा इत्युच्यते ।

क्रियासारे –

**मनस्यनारतं सम्यग्गुरोराकारचिन्तनम् ।**

**शुश्रूषोपायचिन्ता च हृच्छुश्रूषेत्युदाहृता ।।**

(वी.मा.सं.,७.२)

(पश्यत – शुश्रूषा)

## होमकर्म

अन्तर्मुखो स्थित्वा मनसा सर्वेषां विषयाणाम् आत्माग्नौ समर्पणम् होमकर्म इत्युच्यते ।

**आत्मज्योतिषि सर्वेषां विषयाणां समर्पणम् ।**

**अन्तर्मुखेन भावेन होमकर्मेति गीयते ।।**

(सि.शि.,१६.७२)

## हौत्रीदीक्षा

दीक्षाभेदः । यज्ञपुरस्सरं गुरुणा शिष्याय दीयमाना दीक्षा । इयं च शक्तिपातदीक्षा, पाशदीक्षा इति द्विधा ।

**शास्त्री च यो दीक्षा च होत्रीत्यादिरनेकधा ।।**

**इज्या कुण्डवती होत्री सा द्विभेदा किलोदिता ।।**

**शक्तिपातविभेदेन पाशभेदेन सा भवेत् ।**

(शि.त.र.,भा-३,९.७.२६, ३१-३२)

**कुण्डमण्डपादियुक्ता हौत्री ।**

(शै.प.,५.पृ.१३६)

(पश्यत – दीक्षा)

# अनुबन्धः – १

## इतरपदकोशः

[कन्नडग्रन्थेषु लब्धानां केषाञ्चन प्रमुखशब्दानां कोशः अनुबन्धरूपेण आयोजितः । तत्र मूल– आकरः बेङ्गलूरु बसवसमिति द्वारा प्रकाशितः "वीरशैवपारिभाषिकपदकोशः" इति ग्रन्थः । प्रत्येकस्य पदस्य अर्थः पदरूपं च तद्ग्रन्थानुसारेण दत्तौ । एतेषां पदानां प्रयोगादिप्रपञ्चाय स एव ग्रन्थः द्रष्टव्यः ।]

### कायक

१. समर्पणभावेन क्रियमाणं कर्म । गुरुलिङ्गजङ्गमार्पणायैव क्रियमाणं नित्यकर्म इति यावत् धर्मार्जितेन द्रव्येण यत् प्रतिदिनं गुरुलिङ्गजङ्गमानां तृप्त्यर्थं कार्यं क्रियते तत् सदाचार इति कथ्यते । "कायक" परिकल्पनं सदाचारे एव अन्तर्भावमर्हति ।

(पश्यत – सदाचारः)

२. कर्मणा यत् सम्पाद्यते तदपि "कायक" शब्देन गीयते ।

### क्रियासमाधिः

अष्टविधसमाधिषु एकः । निर्वाणसमाधिः, "बयलु" (शून्य) समाधिः, गोलकसमाधिः, गोमुखसमाधिः, क्रियासमाधिश्चेत्यष्टौ समाधयः । तत्र शिवयोगिनाम्, गुरुपीठस्थानाम्, शरणानां च अन्त्यसंस्कारे विशिष्टरीत्या शास्त्रोक्तक्रमेण विधीयमानः शिवसमाधिः ।

## गणाराधन

जङ्गमानां तृप्त्यर्थं आयोज्यमानः भोजनसमारम्भः । इदं च मृतानां स्वर्गप्राप्त्यर्थं वीरशैवैः विधीयते । अन्येष्वपि सन्दर्भेषु गणाराधनं प्रवर्तते ।

## जीवपञ्चक

जीवस्य अवस्थापञ्चकमेव जीवपञ्चकम् । भूतात्मा, इन्द्रियात्मा अहङ्करणात्मा, विज्ञानात्मा, अन्तरात्मा चेति पञ्चावस्थाः । पञ्चभूतात्मकशरीरमेव निजस्वरूपम् इति भाव्यते चेत् भूतात्मा, कर्मज्ञानेन्द्रियाणां कर्माणि ज्ञानानि च स्वकीयानीति भाव्यते चेत् इन्द्रियात्मा, मनोव्यापारजन्यं सर्वं मदीयमेव साधनमिति भाव्यते चेत् अहङ्करणात्मा, अज्ञोऽहम् इति ज्ञायते चेत् विज्ञानात्मा, स्वकीयाज्ञाननिवारणमेवान्तरात्मा चेति ।

## दशनाद

ध्यानस्थैः श्रूयमाणः दशप्रकारकः नादः । भ्रमरनादः, शङ्खनादः, मृदङ्गनादः, तालनादः, घण्टानादः, वीणानादः, भेरीनादः, दुन्दुभिनादः, समुद्रनादः, मेघनादश्चेति दश नादाः ।

## दशवायवः

योगप्रक्रियायां प्रमुखाः दशवायवः । ते च प्राणः, अपानः, व्यानः, उदानः, समानः, नागः, कूर्मः, क्रुकरः, देवदत्तः, धनञ्जयश्चेति । तत्र प्रथमपञ्चवायवः प्राणवायव इति प्रसिद्धाः । नागादिपञ्चवायव उपवायव

इति कथ्यन्ते । नेत्रनालस्थितः प्राणवायुः श्वासोच्छ्वासक्रियां करोति । जिह्वानालस्थितः अपानवायुः शरीरगतकल्मशविसर्जनाय भवति । अधमनालगतः व्यानवायुः चर्मद्वारा स्पर्शज्ञानं ददाति । कमलनालगत उदानवायुरन्नरसस्थापनं करोति । मुखनालस्थितः समानवायुरन्नरसं विस्तारयति । श्रोत्रनालस्थितः नागवायुः वमनादिक्रियोपयोगी भवति । कण्ठनालस्थितः कूर्मवायुरक्षिनिमीलनोन्मीलने हसितं इत्यादिकं कारयति । चन्द्रनालस्थितः कृकरवायुः पचनक्रियोपयोगी भवति । सूर्यनालस्थित देवदत्तवायुरुपवेशनम्, उत्थानम्, सम्भाषणम् इत्यादिकं कारयति । ब्रह्मनालस्थितः धनञ्जयवायुः ज्ञानेन्द्रियं प्रति शब्दं प्रेषयति ।

## दशविधपादोदक

गुरुपादोदकम्, लिङ्गपादोदकम्, जङ्गमपादोदकम्, स्पर्शनोदकम्, अवधानोदकम्, आप्यायनोदकम्, हस्तोदकम्, परिणामोदकम्, निर्नामोदकम्, सत्योदकं चेति पादोदकं दशधा । एतेषां दशपादोदकानां विभागं तात्त्विकदृष्ट्या क्रियादृष्ट्या च कर्तुं शक्यते । तात्त्विकदृष्ट्या तु स्पर्शनगुणयुक्तं गुरुपादोदकम्, अङ्गगुणनास्तित्वे लिङ्गपादोदकम्, महागणानां ज्ञाने सति जङ्गमपादोदकम्, चतुर्दलपद्मविकासे स्पर्शनोदकम्, परमतृप्तिं लिङ्गे समर्पणम् अवधानोदकम्, लिङ्गनैवेद्ये कृते आप्यायनोदकम्, लिङ्गस्य हस्ते स्थापनं हस्तोदकम्, शिवयोगप्राप्तौ परिणामोदकम्, नामसीमारहितत्वम् निर्नामोदकम्, शून्ये लीनतां प्राप्ते सत्योदकं च । क्रिया दृष्ट्या च पादयोः सम्बद्धं गुरुपादोदकम्, तस्य तीर्थभूतस्य लिङ्गसम्बन्धे कृते लिङ्गोदकम्, मज्जने कृते जङ्गमपादोदकम् अथवा मज्जनोदकम्, जिह्वया सेवनं स्पर्शनोदकम्, तदेव सावधानं चेत् अवधानोदकम्, तत्स्वीकारात्

तृप्तिप्रापणे आप्यायनोदकम्, हस्ततीर्थस्वीकारे हस्तोदकम्, पात्रे स्थितं तीर्थं त्रिवारं स्वीकृतं चेत् परिणामोदकम्, नामातीतत्वात् निर्नामोदकम्, ब्रह्मरन्ध्रे चिदमृतभावनं सत्योदकं च ।

## दासोह

(१) गुरुलिङ्गजङ्गमेषु दासोऽहंभावेन (अहं तव दासः इति भावेन) क्रियमाणं कैङ्कर्यम्। त्यक्ताहङ्कारः तनु-मन-धनानि गुरुलिङ्ग-जङ्गमेभ्यः समर्प्य विधीयमाना सेवा ।

(२) सेवामनोभावेन जनानां तृप्त्यर्थं क्रियामाणमन्नसन्तर्पणम् । तदेव जङ्गमसमाराधनम् ।

## निःशून्य

(१) शून्यादतीतं सर्वशून्यम्, महाशून्यम्, सर्वशून्यनिरालम्बं चेति चतुर्षु विभागेषु एकम् । एतदेव कर्नाटभाषायां ''निर्बयलु, निर्वयलु'' इति कथ्यते।

(२) परशिवः, परतत्त्वम्, निःशून्यः, निरालम्बः, निराभारी, निर्व्यसनी, मुक्तिसाम्राज्याधिपतिः परशिव एव परतत्त्वम् ।

## निर्बयलु

(पश्यत – निःशून्य)

## पञ्चप्रसाद

प्रसिद्धः, सिद्धः, शुद्धः, आदिः, महाप्रसादश्चेति पञ्चप्रसादाः ।

## लिङ्गायत, लिङ्गस्वायत, लिङ्गसन्निहित

देहे इष्टलिङ्गधारणमेव "लिङ्गायत" शब्देन कथ्यते । लिङ्गस्य मनसि स्थापनं "लिङ्गस्वायत" शब्देनोच्यते । तस्यैव भावे समावेशनं "लिङ्गसन्निहित" शब्देनोच्यते ।

## शून्य

(१) जगतः सृष्टिपूर्वं या स्थिति आसीत् सा स्थितिः । सा एव कर्णाटभाषायां "बयलु" इति शब्देन व्यवह्रियते ।

(२) शून्यमेव स्वरूपं यस्य तत् परतत्त्वम् अथवा परवस्तु । तदेव निरवयवपरब्रह्मवस्तु । वेदान्तिनां निर्गुणब्रह्म ।

## षट्स्थलब्रह्मी

षट्स्थलज्ञानेन परशिवस्य (परब्रह्मणः) साक्षात्कारं यो प्राप्तवान् सः षट्स्थलब्रह्मी । परात्परमहालिङ्गं वीरशैवसम्पन्नेन गुरुणा प्राप्य यस्य अङ्गम् अन्तरङ्गं भवति अर्थात् लिङ्गाङ्गसामरस्यवद्भवति, सः षट्स्थलब्रह्मी इति कथ्यते । गुरुपीठानां तच्छाखामठानां गुरूणां विशेषणमिदम् । तेषां नाम्नः पूर्वं तत्प्रयुज्यते ।

# अनुबन्धः – २

## संक्षिप्ताक्षरसूची

| | |
|---|---|
| अं. | अङ्कः |
| अ. | अध्यायः |
| अ.को. | अमरकोशः |
| अक्ष.मा.उ. | अक्षमालिकोपनिषत् |
| अजि.आ. | अजितागमः |
| अथ.शिखा. | अथर्वशिखोपनिषत् |
| अथ. शिरस्. | अथर्वशिरोपनिषत् |
| अनु. | अनुवाकः |
| अ.ब. | अनुबन्धः |
| अभि.शा. | अभिज्ञानशाकुन्तलम् |
| अमृ.बि. | अमृतबिन्दूपनिषत् |
| अ.वी.सा.सं. | अनादिवीरशैवसारसंग्रहः |
| अ.सा. | अनुभवसारः |
| अ.सू. | अनुभवसूत्रः |
| अष्टा. | अष्टाध्यायी |
| आ.प. | आदिपर्वः |
| ई.उ. | ईशावास्योपनिषत् |
| उ.खं. | उत्तरखण्डः |
| उ.भा. | उत्तरभागः |

| | |
|---|---|
| उ.वा.आ. | उत्तरवातुलागमः |
| ऋ.वे. | ऋग्वेदः |
| ऐ.उ. | ऐतरेयोपनिषत् |
| कठ.उ. | कठोपनिषत् |
| का.आ. | कारणागमः |
| कामिक. | कामिकागमः |
| का.रू.उ. | कालाग्निरुद्रोपनिषत् |
| का.वि. | कालिदासस्य विक्रमोर्वशीयम् |
| कि.आ. | किरणागमः |
| कू.पु. | कूर्मपुराणम् |
| कै.उ. | कैवल्योपनिषत् |
| कै.सा. | कैवल्यसारः |
| क्रि.पा. | क्रियापादः |
| क्रि.सा. | क्रियासारः |
| क्षे.रा. | प्रत्याभिज्ञाहृदयम्, क्षेमराजव्याख्यानम् |
| खं | खण्डः |
| गौ.का. | गौडपादकारिका |
| चं.आ. | चन्द्रज्ञानागमः |
| च.पा. | चर्यापादः |
| च.ब.व. | चन्नबसवण्णनवरवचनगळु |
| छां.उ. | छान्दोग्योपनिषत् |
| जा.उ. | जाबाल्युपनिषत् |
| ज्ञा.आ. | ज्ञानोत्तरागमः |

| | |
|---|---|
| ज्ञा.पा. | ज्ञानपादः |
| त.प्र. | तत्त्वप्रकाशिका |
| तत्त्व.प्र. | तत्त्वप्रदीपिका |
| ते.बि.उ. | तेजोबिन्दूपनिषत् |
| तै.आ. | तैत्तिरीयारण्यकः |
| तै.उ. | तैत्तिरीयोपनिषत् |
| तै.सं. | तैत्तिरीयसंहिता |
| द.मू.उ. | दक्षिणामूर्त्युपनिषत् |
| दी.प्र. | दीक्षाप्रकरणम् |
| द्वा.शि.क्रि. | द्वादशशिवलिङ्गार्चनक्रिया |
| देवी.आ. | देवीकालोत्तरागमः |
| नाद.उ. | नादबिन्दूपनिषत् |
| नी.रु.उ. | नीलरुद्रोपनिषत् |
| पं.च. | पण्डिताराध्यचरितम् |
| पं.ब्र.उ. | पञ्चब्रह्मोपनिषत् |
| पार.आ. | पारमेश्वरागमः |
| पाशु.आ. | पाशुपतागमः |
| पू.भा. | पूर्वभागः |
| पृ. | पृष्टम् |
| पै.उ. | पैङ्गलोपनिषत् |
| पौ.आ. | पौष्करागमः |
| प्र.उ. | प्रश्नोपनिषत् |
| प्र.गी. | प्रभुगीता |

| | |
|---|---|
| प्र.जा.उ. | प्रसादजाबालोपनिषत् |
| प्र.हृ. | प्रत्यभिज्ञाहृदयम् |
| ब.पु. | बसवपुराणम् |
| ब.व. | बसवण्णनवरवचनगळु |
| बृ.उ. | बृहदारण्यकोपनिषत् |
| बृ.जा.उ. | बृहज्जाबालोपनिषत् |
| ब्र.उ. | ब्रह्मोपनिषत् |
| ब्र.पु. | ब्रह्माण्डपुराणम् |
| ब्र.सू. | ब्रह्मसूत्रम् |
| भ.गी. | भगवद्गीता |
| भ.जा.उ. | भस्मजाबालोपनिषत् |
| भ.वी.भा. | भगवद्गीता वीरशैवभाष्यम् |
| भा. | भागः |
| भाग. | भागवतम् |
| मकुट. | मकुटागमः |
| म.ना.उ. | महानारायणोपनिषत् |
| म.भा. | महाभारतम् |
| म.स्मृ. | मनुस्मृतिः |
| महा.उ. | महोपनिषत् |
| मां.उ. | माण्डूक्योपनिषत् |
| मां.का. | माण्डूक्यकारिका |
| मा.सं. | माध्यन्दिनसंहिता |
| मुं.उ. | मुण्डकोपनिषत् |

| | |
|---|---|
| मृ.आ. | मृगेन्द्रागमः |
| मैत्रेय. | मैत्रेयोपनिषत् |
| मैत्रेयी. | मैत्रेय्युपनिषत् |
| यो.आ. | योगजागमः |
| यो.रा.उ. | योगराजोपनिषत् |
| यो.शिखा. | योगशिखोपनिषत् |
| यो.सू. | योगसूत्रम् |
| यो.पा. | योगपादः |
| र.वं. | रघुवंशम् |
| रु.उ. | रुद्रोपनिषत् |
| रुद्र. | रुद्राध्यायः |
| रुद्र.जा.उ. | रुद्राक्षजाबालोपनिषत् |
| रु.हृ.उ. | रुद्रहृदयोपनिषत् |
| लिं.उ. | लिङ्गोपनिषत् |
| लिं.धा.चं. | लिङ्गधारणचन्द्रिका |
| लिं.पु. | लिङ्गपुराणम् |
| लै.पु. | लैङ्ग्यपुराणम् |
| व.सं. | वचनसङ्ग्रहः |
| वा.आ. | वातुलागमः |
| वा.कां | वादकाण्डः |
| वच.सं. | वचनसंख्या |
| वाज.सं. | वाजसनेयी संहिता |
| वा.शु.आ. | वातुलशुद्धागमः |

| | |
|---|---|
| वा.सं. | वायवीयसंहिता |
| विद्ये.सं. | विद्येश्वरसंहिता |
| वि.सं. | विभागसंख्या |
| विशे.प्र. | विशेषार्थप्रकाशिका |
| वी.आ.उ. | वीरागमोत्तरम् |
| वी.आ.कौ. | वीरशैवाचारकौस्तुभः |
| वी.आ.चं. | वीरशैवानन्दचन्द्रिका |
| वी.आ.चिं. | वीरशैवाचारचिन्तामणि |
| वी.आ.प्र. | वीरशैवाचारप्रदीपिका |
| वी.उ.प्र. | वीरशैवोत्कर्षदीपिका |
| वीर.उ. | वीरागमोपनिषत् |
| वी.ध.शि. | वीरशैवधर्मशिरोमणिः |
| वी.पा. | विद्यापादः |
| वी.पु. | वीरभद्रपुराणम् |
| वी.प्र. | वीरशैवप्रदीपिका |
| वी.भा. | वीरशैवभाष्यम् |
| वी.मा.सं. | वीरमाहेश्वराचारसंग्रहः |
| वी.आ.उ. | वीरागमोत्तरम् |
| वीर.उ. | वीरोपनिषत् |
| वी.शै.उ. | वीरशैवोपनिषत् |
| वी.स.सं. | वीरशैवसदाचारसंग्रहः |
| वे.चिं. | वेदान्तचिन्तामणिः |
| वे.सा.उ. | वेदान्तसारोपनिषत् |

| | |
|---|---|
| वे.सा.वी.चिं. | वेदान्तसारवीरशैवचिन्तामणिः |
| शं.सं. | शङ्करसंहिता |
| श.उ. | शरभोपनिषत् |
| श.कौ. | शब्दार्थकौस्तुभः |
| श.वि.द. | शक्तिविशिष्टाद्वैतदर्शनम् |
| श.त्र. | शतकत्रयम् |
| शां.व्या. | शाङ्करीव्याख्या |
| शा.भा. | शाङ्करभाष्यम् |
| शि.त.र. | शिवतत्त्वरत्नाकरः |
| शि.द. | शिवाद्वैतदर्पणः |
| शि.मं. | शिवाद्वैतमञ्जरी |
| शि.मा.पू. | शिवमानसपूजास्तोत्रम् |
| शि.यो.प्र. | शिवयोगप्रदीपिका |
| शि.र. | शिवरहस्यम् |
| शिव.शि. | शिवाधिक्यशिखामणिः |
| शिवा.सौ. | शिवागमसौरभम् |
| शि.सू. | शिवसूत्रम् |
| शु.य.वे. | शुक्लयजुर्वेदः |
| शै.उ. | शैवोपनिषत् |
| शै.प. | शैवपरिभाषा |
| शै.र. | शैवरत्नाकरः |
| शै.सि.दी. | शैवसिद्धान्तदीपिका |
| श्रुति.सा. | श्रुतिसारभाष्यम् |

| | |
|---|---|
| श्री.भा. | श्रीकरभाष्यम् |
| श्लो. | श्लोकः |
| श्वे.उ. | श्वेताश्वतरोपनिषत् |
| सं. | संख्या |
| स. | सर्गः |
| स.उ. | सदानन्दोपनिषत् |
| स.द.सं. | सर्वदर्शनसंग्रहः |
| सदा.उ. | सदाशिवोपनिषत् |
| स.प.श्लो. | सव्याख्यापञ्चश्लोकी |
| सर्व.आ. | सर्वज्ञानोत्तरागमः |
| सि.आ. | सिद्धान्तागमः |
| सि.शि. | सिद्धान्तशिखामणिः |
| सि.शिखा.उ. | सिद्धान्तशिखोपनिषत् |
| सि.शि.प्र. | सिद्धान्तशिखामणिप्रवचन प्रभे |
| सि.सारा. | सिद्धान्तसारावली |
| सि.शे. | सिद्धान्तशेखरः |
| सुप्र.आ. | सुप्रभेदागमः |
| सू.आ. | सूक्ष्मागमः |
| सूत.सं. | सूतसंहिता |
| सो.शं.प. | सोमशम्भुपद्धतिः |
| स्कं.पु. | स्कन्दपुराणम् |
| स्वा.आ. | स्वायंभुवागमः |
| ह.को. | हलायुधकोशः |

# अनुबन्धः – ३

## आकरग्रन्थसूची


| | |
|---|---|
| अनादिवीरशैवसारसंग्रहः (भा-१) - (सम्पादनसिद्धवीरणशिवयोगी) | (सं) जि.ए.शिवलिङ्गय्यः, बसवसमितिः, बेङ्गलूरु, १९९९ |
| अनादिवीरशैवसारसङ्ग्रहः (भा-१) (मराठीतात्पर्यसहितः) | वेदमूर्ति मणूर मठाध्यक्षमल्लिकार्जुन शास्त्री, वीरशैवलिंगी ब्रह्मणधर्मग्रंथमाला, सोलापुर, १९०५ |
| अनादिवीरशैवसारसंग्रहः (भा-२) (सम्पादनसिद्धवीरणशिवयोगी) | (प्र.सं) डा.सि.शिवकुमारस्वामी, वीरशैव साहित्य प्रतिष्ठानम्, विभूतिपुरमठम्, बेङ्गलूरु, २००५ |
| अनुभवसूत्रम् (श्री मायिदेवः) | (हिन्दीभाषानुवादसहितम्) (सं) पं. व्रजवल्लभद्विवेदी, शैवभारती शोधप्रतिष्ठानम्, जङ्गमवाडीमठम्, वारणासी, १९९८ |
| अमरकोशः (सुधाव्याख्योपेतः) (अमरसिंहः) | (व्या) विद्वद्वर श्रीभानुजीदीक्षितः, चौखाम्बा संस्कृतप्रतिष्ठानम्, देहली, (द्वितीय मुद्रणम्), १९८७ |
| आत्मार्पणस्तुतिः (बालबोधिनीव्याख्या सहिता) (अप्पय्यदीक्षितः) | (व्या) श्रीशिवानन्दयतिः श्रीशिवानन्दयतिः श्रीमदप्पय्यदीक्षितग्रन्थावलि प्रकाशन समितिः, सिकन्दराबाद्, १९८० |

| | |
|---|---|
| अथर्वशिखोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, दिल्ली, १९८० |
| अथर्वशिरोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, दिल्ली, १९८० |
| अभिज्ञानशाकुन्तलम् – कालिदासः (कन्नडानुवादसहितः) | (सं)प्रो.के.टि. पाण्डुरङ्गी, बेङ्गलूरु विश्वविद्यालयः, १९७८ |
| अष्टाद्यायीसूत्रपाठः (पणिनिः) | संस्कर्ता – स्वामी प्रह्लादगिरिवेदान्त–केसरी, कृष्णदास अकादमी, देहली, (द्वितीय मुद्रणम्) १९८७. |
| अमृतबिन्दूपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, दिल्ली, १९८० |
| अक्षमालिकोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, दिल्ली, १९८० |
| ईशावस्योपनिषत् | रामकृष्णमठः, मद्रास् (चेन्नै), १९४८ |
| उपनिषद्वाक्यमहाकोषः | श्री गजाननशम्भु साधले, चौखाम्बा विद्याभवनम्, वाराणसी, १९९० |
| उपनिषत्संग्रहः | (सं) पण्डितजगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, दिल्ली, १९८० |

| | |
|---|---|
| ऋग्वेदः | वैदिकसंशोधनमण्डली, पुणे<br>(पश्यत – काचन आवृत्तिः) |
| ऐतरेयोपनिषत् | श्रीरामकृष्णाश्रमः, मैसूरु, १९५४<br>(चतुर्थं मुद्रणम्, १९८४) |
| कठोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री,<br>मोतीलाल बनारसीदास पब्लिशर्स,<br>देहली, १९७० (पुनर्मुद्रणम्, १९९८) |
| कारणागमः (क्रियापादः)<br>(हिन्दीभाषानुवादसहितः) | (सं) प्रो. रामचन्द्रपाण्डेयः<br>शैवभारती शोध प्रतिष्ठानम्,<br>जङ्गमवाडीमठम्, वाराणसी, १९९४ |
| कामिकागमः | (सं) एम्.जि. नञ्जुण्डाराध्यः<br>जचनि अध्ययन पीठम् एवं संशोधना<br>संस्था, बेङ्गलूरु, १९८५ |
| कालाग्निरुद्रोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री,<br>मोतीलाल बनारसीदास पब्लिशर्स,<br>देहली, १९७०, (पुनर्मुद्रणम्, १९९८) |
| किरणागमः | तन्त्रसङ्ग्रहः<br>हूटगीमठम्, सोलापुर, १९१४ |
| केनोपनिषत् (उपतिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री,<br>मोतीलाल बनारसीदास पब्लिशर्स,<br>देहली, १९८०. (पुनर्मुद्रणम् १९९८) |

| | |
|---|---|
| कैवल्यसारः (श्री मरितोण्टदार्यः) | प्राच्यविद्या संशोधनालयः, मैसूरु, १९८८ |
| कैवलल्योपनिषत् (सदाशिवभाष्योपेता) | श्रीसदाशिवशिवाचार्यः, प्रबोधपुस्तकमाला, बेङ्गलूरु, १९५१ |
| क्रियासारः (नीलकण्ठशिवाचार्यः) (भा-१,२,३) | प्राच्यविद्यासंशोधनालयः, मैसूरु, प्रथम १९५४, १९५७, १९५८ |
| चन्द्रज्ञानागमः (क्रियापाद चर्यापादौ) आंग्लभाषानुवादसहितः) | (सं) डा. रमा घोष्, शैवभारती शोधप्रतिष्ठानम्, जङ्गमवाडीमठः, वाराणसी, १९९५ |
| छान्दोग्योपनिषत् | (सं) स्वामी आदिदेवानन्दः, श्रीरामकृष्णाश्रमः, मैसूरु, १९९५ (पञ्चममुद्रणम्) |
| जाबाल्युपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० |
| तेजोबिन्दूपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० |
| तत्त्वप्रकाशिका (अघोरशिवाचार्यः) (भोजकृतव्याख्यानम्) | (कन्नडानुवाद) विद्वान् बि. राजशेखरय्यः, वीरशैव अनुसन्धान संस्था, बेङ्गलूरु, २०१० |

तैत्तिरीयोपनिषत् — स्वामी आदिदेवानन्दः, श्रीरामकृष्णाश्रमः, मैसूरु, (पञ्चममुद्रणम्), १९९३

दक्षिणामूर्त्युपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८०

देवीकालोत्तरागमः — (सं) श्रीव्रजवल्लभद्विवेदी, शैवभारती शोधप्रतिष्ठानम्, जङ्गमवाडी मठः, वाराणसी, २०००

नादबिन्दूपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८०

निरुक्तम् (निघण्टुसमन्वितम्) (यास्काचार्यः) — (सं) डा. लक्ष्मणस्वरूपः, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८४

नीलरुद्रोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८०

पञ्चब्रह्मोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८०

पण्डिताराध्यचरितम् (भाग-१-२) (गुरुराजकविः) (कन्नडानुवादसहितः) — (अनु) एन्.आर्. करिबसवशास्त्री, वीरशैवग्रन्थप्रकाशिका, मैसूरु, १९०८. (भाग-१), १९१३ (भाग-२)

| | |
|---|---|
| पारमेश्वरागमः (हिन्दीभाषानुवादसहितम्) | (सं) पं. व्रजवल्लभद्विवेदी, शैवभारती, शोधप्रतिष्ठानम्, जङ्गमवाडीमठम्, वाराणसी, १९९५ |
| पाशुपतागमः (शिवागमसौरभान्तर्गतः) | विद्वान् एम्. जि. नञ्जुण्डाराध्यः श्री.ज.च.नि.अध्ययनपीठम्, बेङ्गलूरु, १९८६ |
| पैङ्गलोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० |
| पौष्करागमः (सिद्धान्त शेखरः) | के. सीताराम सोमयाजी, मैसूरु, १९०१ |
| प्रत्यभिज्ञाहृदयम् | काश्मीर संस्कृतग्रन्थावलिः, श्रीनगरम्, १९११ |
| प्रश्नोपनिषत् | (सं) स्वामी आदिदेवानन्दः, श्रीरामकृष्णमठः, मैसूरु, १९९३ |
| प्रसादजाबालोपनिषत् | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० |
| प्रभुगीता (मायिदेवकृता) | (सं) सि.महादेवप्पः, बेङ्गलूरु संशोधनकोटिः, बेङ्गलूरु, २००१ |
| बृहदारण्यकोपनिषत् (उपनिषत्संग्रहः) | पण्डित जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९७० (पुनर्मुद्रणम्, १९९८) |

बृहज्जाबालोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, हली, १९८०

ब्रह्मोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० (पुनर्मुद्रणम्, १९९८)

भगवद्गीता — गीता प्रेस्, गोरखपुर्, २००८

भगवद्गीतावीरशैवभाष्यम् — डा.टि.जि.सिद्धप्पाराध्यः, बृहन्मठम्, चित्रदुर्गम्, १९३५.

भारतीयदर्शन परिभाषाकोशः (भा–१) — वैज्ञानिक तथा तकनीकी शब्दावली आयोग, भारतसर्वकारः, देहली, १९९९

मकुटागमः (क्रियाचर्यापादौ) (हिन्दीभाषानुवादसहितः) — पं. व्रजवल्लभद्विवेदी, शैवबारती शोधप्रतिष्ठानम्, जङ्गमवाडीमठम्, वारणासी, १९९५

महानारायणोपनिषत् (शैवभाष्योपेता) — भाष्यकारः – श्रीवृषभेन्द्र पण्डितशिवाचार्यः, विश्वाराध्यगुरुकुलम्, काशी, १९२९

महोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८०

| | |
|---|---|
| माण्डूक्योपनिषत् (गौडपादकारिकोपेता) | स्वामी आदिदेवानन्दः, श्रीरामकृष्णाश्रमः, मैसूरु, १९८४ (चतुर्थमुद्रणम्) |
| मुण्डकोपनिषत् | स्वामी आदिदेवानन्दः, श्रीरामकृष्णाश्रमः, मैसूरु, १९५७. |
| मृगोन्द्रागमः (शिवागमसौरभः) | सं. एम्. जि. नञ्जुण्डाराध्यः जचनि अध्ययनपीठं एवं संशोधना संस्था, बेङ्गलूरु, १९८५ |
| मैत्रेयोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतिलाल बनारसीदास पब्लिशर्स, देहली, १९८० |
| मैत्रेय्युपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० |
| योगशिखोपनिषत् (उपनिषत्यंग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० |
| रघुवंशम् (कालिदासकृतम्) | निर्णयसागरमुद्रणालयः, मुम्बयी, १९३२ |
| रुद्राक्षजाबालोपनिषत् (उपनिषत्संग्रहः) | (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८० |

रुद्रोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८०

रुद्रहृदयोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९८०

लिङ्गधारणचन्द्रिका (नन्दिकेश्वरशिवाचार्यविरचितम्) — (सं).पं.व्रजवल्लभद्विवेदी शैवभारतीभवनम्, जङ्गमवाडीमठम्, वाराणसी, १९८८

लिङ्गोपनिषत् (उपनिषत्संग्रहः) — (सं) पं. जगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९७०

वातुलागमः (शिवागमसौरभान्तर्गतः) — (सं) एम्.जि. नञ्जुण्डाराध्यः, जचनि अध्ययन पीठं एवं संशोधना संस्था, बेङ्गलूरु, १९८६

वातुलशुद्धागमः — (सं) डा. एच्.पि. मल्लेदेवरु, प्राच्यविद्यासंशोधनालयः, मैसूरु, १९८८

विशेषार्थप्रकाशिका (कन्नडटीकासहिता) (मायिदेवकृता) — आस्थानविद्वान् वै. नागेशशास्त्री, श्रीमुरुघामठम्, धारवाडः, १९६१.

वीरमाहेश्वराचारसंग्रहः (भा-१) (नीलकण्ठनागनाथाचार्यकृतः) — (सं). एम्. एस्. बसवराजय्यः प्राच्यविद्यासंशोधनालयः, मैसूरु, १९९१

| | |
|---|---|
| वीरशैवधर्मशिरोमणिः (कन्नडव्याख्योपेतः) | (व्या) एम्. बसवलिङ्गशास्त्री वीरशैवग्रन्थप्रकाशिकाग्रन्यावलिः, मैसूरु, १९०८ |
| वीरशैवसदाचारसंग्रहः | सं. वे.म.म.मल्लिकार्जुनशास्त्री, लिङ्गिब्राह्मणग्रन्थमाला, सोलापुर, १९०५ |
| वीरशैवसदाचारसंग्रहः (कन्नडानुवादसहितः) | (अनु). पं.बसवराजशास्त्री पगडदिन्निमठः, श्री जगद्गुरुग्रन्थप्रकासिकाग्रन्थावलिः, मूरुसाविरमठः, हुब्बल्लि, १९६४. |
| वीरशैवानन्दचन्द्रिका (वादकाण्डः) (श्री मरितोण्टदार्यः) | (सं) श्री सोमेश्वरशास्त्री, श्री जगद्गुरुगङ्गाधरसंस्कृत महापाठशाला, हुब्बल्ली, १९३६ |
| वीरशैवोत्कर्षप्रदीपिका | हालपत्तनस्य चेन्नबसवस्वामी, श्री दुरदुण्डीश्वरमठम्, अरभावि, बेलगांव् मण्डलम्, १९३६ |
| वीरशैवप्रदीपिका | श्रीजयचामराजेन्द्रग्रन्थमाला, मैसूरु, १९१८ |
| वीरशैवपारिभाषिकपदकोशः(कन्नड) | (सं) डा.एस्. विद्याशङ्करः, प्रो.बि.विरुपाक्षप्पः, बसवसमितिः, बेङ्गलूरु, २००० |
| वीरागमोत्तरम् (भा-१) | (सं) डा.एच्. पि. मल्लेदेवरु, प्राच्यविद्यासंशोधनालयः, मैसूरु, १९८८ |

वीरागमः (कन्नडव्याख्योपेतः) — (सं) डा.ज.च.नि., श्री जगद्गुरु पञ्चाचार्य सेवा संघः, गदग-बेटगेरि, १९९२

वीरशैवोपनिषत् — पं. काशीनाथशास्त्री, पञ्चाचार्य प्रेस्, सप्तमी आवृत्तिः, मैसूरु, १९८१

वेदान्तसारवीरशैवचिन्तामणिः (उत्तरखण्डम्) निट्टूरु नञ्जणार्यः (मराठी अनुवादसमेतः) — (सं) श्री मल्लिकार्जुनशास्त्री, श्रीदत्तप्रसादस्टीम् प्रेस्, सोलापुर, १९०८

वैदिकशिवपूजाविधिः — पण्डित काशीनाथशास्त्री, पञ्चाचार्य मुद्रणालयः, अष्टमी आवृत्तिः, मैसूरु १९८०

शतकत्रयम् (मायिदेवकृतम्) — पं. वै. नागेशशास्त्री मुरुघामठः, धारवाड, १९६४

शरभोपनिषत् (उपनिषत्संग्रहः) — (सं) पण्डित जगदीश शास्त्री, मोतीलाल बनारसीदास् पब्लिशर्स, देहली १९७०, (पुनर्मुद्रण, १९९८)

शब्दार्थकौस्तुभः (संस्कृत – कन्नड निघण्टुः) (भा-१-६) — चक्रवर्ति श्रीनिवास राजगोपालाचार्यः, बाप्को प्रकाशनम्, बेङ्गलूरु, १९९९ (द्वितीयमुद्रणम्)

शक्तिविशिष्टाद्वैतदर्शनम् — डा.टि.जि. सिद्धप्पाराध्यः, गुब्बी श्रीचन्नबसवेश्वरग्रन्थमाला, मैसूरु, १९७४ (द्वितीयमुद्रणम्)

| | |
|---|---|
| शक्तिविशिष्टाद्वैततत्त्वत्रयविमर्शः (कन्नडानुवादसहितः) | डा. चन्द्रशेखरशिवाचार्य महास्वामी, (अनु) डा.सि.शिवकुमार स्वामी, राज्य पत्रागार विभागः, (कर्णाटक सर्वकारः), बेङ्गलूरु, २००९. |
| शिवतत्त्वरत्नाकरः (केळदि बसवभूपालः) | प्राच्यविद्यासंशोधनालयः, मैसूरु, १९६४ (भाग-१), १९६९ (भाग-२), १९८५ (भाग-३) |
| शिवयोगप्रदीपिका (चेन्नसदाशिवयोगी) (कन्नडटीकासमेता) | (टीका) बसवाराध्यः, कन्नडअध्यनपीठम्, कर्णाटकविश्वविद्यालयः, धारवाड, १९७६ |
| शिवाद्वैतमञ्जरी (कन्नडव्याख्योपेता) (स्वप्रभानन्दशिवाचार्यः) | (व्या) श्री रामानुज अय्यङ्गार, पञ्चाचार्य मुद्रणालयः, मैसूरु, १९२९ |
| शिवाधिक्यशिखामणिः (सोसले रेवणाराध्यः) | (सं) श्री सोमशेखरस्वामी, नमः शिवायमठः, मैसूरु, १९२९ |
| शिवागमसौरभ (कन्नड) | सं. विद्वान् एम्.जि. नञ्जुण्डाराध्यः, जचनि अध्ययन पीठं एवं संशोधना संस्था, बेङ्गलूरु, १९८५ |
| शिवानुभवशब्दकोशः (कन्नडभाषायाः) | फ.गु.हळकट्टिः, समाजपुस्तकालयः, धारवाड, १९७२ |
| शैवदर्शन इतिहास मत्तु तत्त्वप्रकाश (भोजदेव नृपति विरचित) (कन्नड) | सं. विद्वान एम्. जि. नञ्जुण्डाराध्यः प्रबोध ग्रन्थमाला, मैसूरु, १९७४ |

| | |
|---|---|
| शैवोपनिषत् | सं. पं. महादेव शास्त्री, अड्यार लाइब्ररी एवं संशोधना केन्द्रः, मद्रास, १९२५ |
| शैवपरिभाषा (शिवाग्रयोगीन्द्रज्ञानशिवाचार्य विरचिता) | सं. एच्. आर. रङ्गस्वामी अयङ्गार, सर्वकारी मुद्रणालयम्, मैसूरु, १९५० |
| शैवरत्नाकरः (ज्योतिर्नाथः) (भाग-१) | (सं) डा.सि.एन्. बसवराजुः, प्राच्यविद्यसंशोधनालयः, मैसूरु, १९९२ |
| शैवरत्नाकरः (ज्योतिर्नाथः) (भाग-२) | (सं) मल्लिकार्जुनशास्त्री, लिङ्गिब्राह्मणग्रन्थमाला, सोलापुर, १९०९ |
| शैवसिद्धान्तदीपिका (माहेश्वरः) | (सं) पि.आर्.करिबसवशास्त्री, शङ्करविलासमुद्रणालयः, मैसूरु, १९०७ |
| श्रुतिसारभाष्यम् (श्री शिवपूजाशिवलिङ्गशिवयोगीन्द्रः) | (सं) श्री बसवलिङ्गस्वामी, होसमठः, मैसूरु, १९१३ |
| श्रीकरभाष्यम् (श्रीपतिपण्डितः) | (सं) डा.टि.जि. सिद्धप्पाराध्यः, प्राच्यविद्यासंशोधनालयः, मैसूरु, १९७७ (भा-१), १९७८ (भा-२) |
| श्वेताश्वतरोपनिषत् (वीरशैवभाष्योपेता) | भाष्यकारः - डा.टि.जि.सिद्धप्पाराध्यः, श्रीमुरुघामठम्, चित्रदुर्गः, १९६५ |

सदानन्दोपनिषत् (उपनिषत्संग्रहः) — पण्डितजगदीशशास्त्री, मोतीलाल बनारसीदास पब्लिशर्स, देहली, १९७० (पुनर्मुद्रणम्, १९९८)

सर्वदर्शनसंग्रहः (माधवाचार्यप्रणीतः) — (सं) डा. इम्मडि शिवबसवस्वामी, कन्नड अध्ययनपीठम्, कर्णाटक विश्वविद्यालयम्, धारवाड, १९७६

सव्याख्यापञ्चश्लोकी (केलदि बसवराजकृता) — सं. एम्. बसवलिङ्गशास्त्री, एन्.आर. करिबसवशास्त्री पब्लिकेशन्स्, मैसूरु, १९१२

सिद्धान्तशिखामणिः (मरितोण्टदार्यस्यतत्त्वप्रदीपिकासहितः) (शिवयोगी शिवाचार्यः) — (सं) डा.चन्द्रशेखरशिवाचार्य महास्वामीजी, वीरशैव साहित्य संशोधन मण्डलम्, सोलापुर, १९९०

सिद्धान्तशिखामणिः (आंग्लानुवाद – टिप्पणीसहितः) — (सं) डा. एम्. शिवकुमारस्वामी, शैवभारती शोध प्रतिष्ठानम्, वाराणसी, २००७

सिद्धान्तशिखामणिः (सोसले रेवणाराध्यविरचितः सिद्धान्तबोधिनी व्याख्योपेतः) — (सं) – डि. सिद्धगङ्गय्यः, विजय प्रकाशनम्, लक्केनहल्लि, तुमकूरु, २००४

सूक्ष्मागमः (क्रियापादः) (आङ्ग्लभाषानुवादः) — (सं) पं. व्रजवल्लभद्विवेदी, शैवभारती शोधप्रतिष्ठानम्, जङ्गमवाडीमठः, वाराणसी, १९९४

एतादृशस्य वीरशैवधर्मस्य सदाचारसद्विचारयोः निश्चित-तात्त्विकाधारनिर्माणपूर्वकं निर्वचनाय ग्रन्थः कश्चनापेक्ष्यत इति मत्वा विद्वांसः केचन वीरशैवपारिभाषिकपदकोशान् कन्नडभाषायां रचयामासुः । एतादृश एव सैद्धान्तिकग्रन्थः कश्चन संस्कृतभाषायामपि निर्मीयते चेदन्ताराष्ट्रीयस्तरेऽपि वीरशैव-स्याध्ययनं, संशोधनं, प्रसार-प्रचारकार्यं च साधयितुं शक्यत इत्येवं विचार्य वीरशैवाकरभूतान् संस्कृतग्रन्थानवलम्ब्य निर्मितोऽयं **वीरशैवपारिभाषिकपदकोशो** जे एस् एस् ग्रन्थमालाद्वारा प्रकाशतां नीयते ।



**जे एस् एस् ग्रन्थमाला**

मैसूरु